चैत्रकृष्ण-अमावस्या २००३ वैक्रमाब्दः त्र्योदशांके प्रथमांकः

# सुप्रभातम्

भारतवर्षस्य सर्वोत्कृष्टा काशीस्थ-विद्वत्समाजानुमोदिता

## संस्कृत-मासिकी-लेखमाला

तिमिरततिमुदस्यद्, भेदतारा विलुम्पद्,
नयदधिसुरभाषाभापि जागर्तिभावम् ।
विबुध-विहग-वादैराह्वयद् भाग्य-भानुम्
विलसतु भुवनेऽस्मिन् सर्वतः




प्रधान-सम्पादकः—

श्रीकेदारनाथ शर्मा सारस्वतः

व्यवस्थापकः प्रकाशकश्च—

रामलाल शास्त्री, सारस्वतः



प्राप्तिस्थानम्—

सुप्रभातम्, बनारस सिटी

वार्षिकम्मूल्यम् ४) | छात्रेभ्यः पुस्तकालयेभ्यश्च ३)

श्रीकाशी-जङ्गमवाटिकामहामठाधिष्ठित
श्रीजगद्गुरुविश्वाराध्य-भगवत्पादज्ञान-
सिंहासनाधीश्वर—
श्री १००८ जगद्गुरु-वीरभद्रशिवाचार्य महा-
स्वामिनां दिव्यसन्निधानात्

## सुप्रभातं पुनः पुनः

द्विजव्रातप्रबोधार्हं
विबुधानन्द-वर्द्धनं
भारते तु पुनश्शीघ्रं
सुप्रभातं भविष्यति ॥१॥

नैराश्यनिद्रामुद्रेऽपि
धर्मभद्र गुणाकरे
भारते भविता शीघ्रं
सुप्रभातं महोज्ज्वलम् ॥२॥

सारस्वत-सुधा-सार
सम्पादन-कलाधरे
केदारनाथे सन्नद्धे
सुप्रभातं पुनः पुनः ॥३॥

काशी-नगरीतः प्रकाश्यमानं 'सुप्रभातम्' संस्कृत-मासिक-पत्रम्, यदद्यावधि केनापि कारणेन-अन्धकाराच्छन्नमासीत्, तदस्माकं चिराय खेदास्पदमभूत् । सम्प्रति तस्य पुनराविर्भाव-सूचनामुपलभ्य समुल्लसित-हृदयोऽहं तदीयं हार्दिकं स्वागतं करोमि ।

संस्कृतभाषायां समुज्वल-राष्ट्रीयता-प्रतिपादकं भारतीय संस्कृतेः परमं समर्थकं भारतीय-स्वतन्त्रता-संग्रामस्थविचलं योद्धृ पत्रमिदम्, भारतीयताया अरुणाभां समासादयत् देशस्यास्य सांस्कृतिकान्तरिक्षोपरि समुदीयमानं स्यात्तथास्य प्राचीनराष्ट्रस्य पथप्रदर्शनं कुर्य्यादित्येवास्माकमभिलाषः ।

'संसार'-कार्यालय. } कमलापतिः शास्त्री, एम. एल. ए.
दैनिक-'संसार'-सम्पादकः

× × ×

श्रीमद्भगवतो विराट्स्वरूपस्यास्य विश्वस्य हृदयस्थानीयमिदं भारतं वाभाति । तच्चेदमज्ञानतिमिरावृतमिव पाश्चात्य प्रभावात् सुप्रभातं विना कतिपयैरहोभिः । सुप्रभातस्य पुनरुदयेनावश्यं सः प्रभावोपयातः स्यादभूतपूर्वश्च कश्चनास्य प्रकाशः स्याद्येन चकितचकितमखिलं भूमण्डलमदसीय-शिक्षा-दीक्षा-सभ्यता-संस्कृत्यनुरोधि भवेदिति ध्रुवं विश्वसिमः ।

लक्ष्मणनारायण गर्दे
दैनिक-'सन्मार्ग'-सम्पादकः

× × ×

## सुप्रभात-सम्पादन-समितिः ।

१ महामहोपाध्याय नारायणशास्त्री खिस्ते साहित्याचार्यः
२ दैवज्ञवाचस्पतिः दाऊजी दीक्षितः
३ गोपाल शास्त्री, दर्शनकेसरी
४ देवीनारायण एडवोकेट, विद्यासागरः
५ केदारनाथ शर्म्मा सारस्वतः ( संयोजकः )

[ अष्टम पृष्ठादग्रे पठनीयम् ]

यदि नाम वयमिदानीमपि तथैव तूष्णीं स्थास्यामस्तदा शनैः शनैरार्यजातेरस्तित्वं पुरातन-चिह्नानि, पवित्रतीर्थानि, मन्दिराणि—सर्वमपि क्रमशो व्यपगतं स्यादिति नास्त्यत्र लेशतोऽपि सन्देहावसरः । आश्रयनाशात् आश्रयिणां विनाशः सुतरां सिद्ध एव ।

यद्येतादृशेषु—आवश्यक-विषयेषु पण्डिता दत्तावधाना भवेयुस्तदा तेषां कियत्सम्मानं गौरवञ्च स्यादित्यनुमातुमपि न शक्यते । वयन्तु क्षुद्रतमस्वार्थेषु घृणितविषयेषु वा परस्परमेव विवदमानाः व्यर्थशक्तिव्ययं कुर्मः । अद्यापि नैतदनुभवामो यत् प्रबुद्धाः प्रबलाः, कुटिल-नीति-कुशलाः विधर्माणः समूलघातं हन्तुं शनैः शनैः प्रवर्त्तन्ते । सति मूले धर्मस्य, संस्कृतेः, सभ्यतायाश्च संरक्षणं कर्तुं शक्यते । 'छिन्ने मूले नैव शाखा न पत्रम्' इति भारतस्याखण्डता-मण्डनाय प्रबलं प्रयतन्ताम् । अस्माकं परिवर्द्धमानां शक्तिमालोच्य, शासकाः विरोधिनः, परिपन्थिनश्च स्वयमेव नम्राः भविष्यन्ति । भयं विना प्रीतिर्न भवतीति पुनः पुनरालोचनीयम् ।

× × ×

# सुप्रभातम्

मासिकी संस्कृत-लेखमाला

त्रयोदशोऽब्दे | चैत्रमासः, २००३ विक्रमाब्दः | प्रथमा

## शुभाशिषः



"सुप्रभातम्" नाम मासिकं पत्रं कारणवशात् किञ्चित् कालं विश्रामं गृह्णन्नासीत्। संस्कृत-समाजस्य अनुपमं रत्नमिदं साम्प्रतं पुनः संस्कृत—सेवायै प्रयतमानमास्ते—इति ज्ञात्वा परां प्रसन्नतां प्राप्नोमि। अस्य देश-सेवा समाज-सेवा च सर्व–विदिताऽस्ति। अहमस्योत्तरोत्तरमुन्नत्यै भगवन्तं प्रार्थये। आशासे च यत् प्रत्येकः संस्कृतज्ञः—स्वीकृत्यैनं स्वीयं जीवनं समयञ्च सफलीकरिष्यति।

काशी-हिन्दू विश्वविद्यालयः<br>
२२-२-४६

मदनमोहन मालवीयः

× × × × ×

श्रीमद्वाग्देवतायाः परिचरण-परैः<br>
काशिकैः शास्त्रविद्भिः<br>
प्राकाश्यं नेष्यमाणं पुनरपि न चिरान्<br>
कोविदैः कीर्तिवित्तैः।<br>
धिन्वन् सूक्तैरुदारैर्मधु-मधुरतरैः—<br>
र्मानसं मादृशानाम्<br>
पत्रं चित्र-प्रकारं जन-हृदय-मुदे<br>
जृम्भतां सुप्रभातम्।

वसन्त-पंचमी<br>
२००२

लक्ष्मणशास्त्री तैलङ्गः<br>
महामहोपाध्यायः

# शुभाशंसनानि

सुप्रभातं विजयतां धियो यत्पुष्टिवर्धनम् ।
पथः सत्यस्य सातये ॥ ( मन्त्रपद्धतिः )

देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पर्धिरे । ते दण्डैर्धनुर्भिर्न व्यजयन्त । ते हाविजयमानाः प्रजापतिं पितरमुपतस्थुरस्माकमयं भविष्यत्यस्माकमयं भविष्यतीति । प्रजापतिर्वै ज्योतिर्देवेभ्यः प्रददा एतद्वो विजित्यै भविष्यति, तमोऽसुरेभ्यः प्रददा एतद्वो विजित्यै भविष्यतीति । तस्माद्देवा ज्योतिषा विजयन्ते, असुरास्तमसा । तस्मादाहुर्ज्योतिर्जुषो वै देवाः, असुरास्तमोजुषः । अथ प्रभात एव प्रथमं देवा ज्योतिरपश्यन् । प्रभात एवोषबुध्योऽग्निस्तायते । अग्निमुखा वै देवाः । तस्मात्प्रभातमेव ज्योतिषां ज्योतिः । सुप्रभातमु ह तस्य भवति, तमसः पारं याति य एवं विद्वान् ज्योतिर्जुषो देवान वेद । ज्योतिर्वै सत्यम् । ज्योतिरमृतम् ॥ ( ब्राह्मणपद्धतिः )

तमोऽपसारकं बुद्धेर्देवकर्म-प्रवर्तकम् ।
ज्योतिषामुत्तमं ज्योतिः सुप्रभातं विदुर्बुधाः ॥
( स्मृतिपद्धतिः )

भारत्या भुवनेऽखिले पृथु यशस्तन्वद् बुधानां मनः-
स्वाशावल्लरिकासुमानि विकचीकुर्वत्तमो वारयत् ।
नूत्न-ज्ञानरवेः प्रकाशकिरणैर्विस्तीर्यमाणं पुरो
ह्य तत्खलु सुप्रभातमभितः संवर्धतां भारते ॥
( काव्यपद्धतिः)

सरस्वती-भवनम् } मङ्गलदेवशास्त्री ( मेधातिथिः )
काशी } काशिक-राजकीय-संस्कृत-महाविद्यालयाध्यक्षः

× × ×

कैवल्ये चात्मरूपा जगदुदयविधौ स्फूर्तिरूपा पराख्या
पश्यन्तीच्छाऽक्षरानुक्रमविधिरहिता वामयाऽभिन्नदेहा ॥
मध्या सङ्कल्परूपाऽक्षरविधिसहिता वैखरी शब्दरूपा
वाणीरूपेण साऽव्याद्व्यवहृतिकरणा यत्प्रभा सुप्रभातम्
औदासीन्य-निशा-लुप्तं शब्दांशुं ज्ञान-भास्करम् ॥
सुप्रभाते समुद्यन्तं समुपाध्वं विपश्चितः ॥ २ ॥

काशी } भाऊशास्त्री वझे,
वसन्त-पञ्चमी } ( महामहोपाध्यायः )

× × ×

चन्द्रार्काग्नित्रितेजः प्रसरविरहितं चोल्लसत्सुप्रभातं
वातेनाद्यापि नाप्तं श्रुतिभिरपि न च प्राप्त-सम्यक् प्रवृत्ति॥
शुद्धान्तं शूलपाणेः सरस-सुरगवी-सार-सिद्धान्त-रूपं
कुर्वद्भः सुप्रभातं प्रथयतु सततं सुप्रभात-प्रभातम् ॥ १ ॥
कवि-विहङ्गम-चुंकृति-कोमलं बटु-जनोदितवेदनिनादितम्
भरतभूम्यलिके तिलकायितं भवतु पत्रमिदं चिरजीवनम् २
अज्ञानमिन्धनं यत्र मद-मोहौ महापशू ॥
तं ज्ञान-यज्ञमनिशं सुप्रभातं प्रवर्त्तयेत ॥ ३ ॥
चन्द्रापीडोपम-प्राप्त पुनर्जन्म-मनोरम ।
सुप्रभात ! समेधस्व कीर्तिकादम्बरी-वृत ! ॥ ४ ॥
सुप्रभातं सुप्रभातमासीदेवाधिकाशि नः ॥
अधुना प्रतिभोद्भात-सुप्रभातं प्रवर्त्तताम् ॥ ५ ॥
इत्याकाङ्क्षति मङ्गलमङ्कासीनस्य सुप्रभातस्य ।
गुरुपाद-पद्म-निरतो ममता-महितः कविः कश्चित ॥ ६ ॥

सरस्वती-भवनम् } नारायणशास्त्री खिस्ते
काशी } ( महामहोपाध्यायः )

× × ×

अयोगिदृग् वृत्तिनिरूपकत्वं निरूपितत्वं नहि याति यस्य।
ज्ञानं विहायापि च यो विशेष्यो युक्तः प्रकारैस्तु भुजैश्चतुर्भिः
यमुदयन-हृदयकमलमकलयदैशं शरीरम विभाशि ।
चर-नचर-मूलभूतः परमाणुः सुप्रभातम् तनुतात् ॥३॥

शिवदत्त मिश्रः, न्यायाचार्यः
राजकीय-संस्कृत-महापाठशालाध्यापकः

× × ×

सुप्रभातं पुरैवास्मानताप्सील्लेखसौष्ठवैः ।
सममंस्त च बन्धून् स्वान् व्यजेष्टाखिलपत्रिकाः ॥१॥
नूत्नेन विग्रहेणाद्याऽवतीर्णमधिकाशि तत् ।
मुनित्रयानुग्रहेण त्रिलोकीं क्रामतु क्रमात् ॥२॥
इत्थमाशंसते राज-पाठशालीयपण्डितः ॥
नेनेवंशसमुद्भूतः शास्त्री गोपालनामधृक् ॥३॥

गोपालशास्त्री नेने ( व्याकरणाचार्यः)
राजकीय-संस्कृत-महापाठशालाध्यापकः

# शुभ-सन्देशाः

सुप्रभातम्, पुनः प्रकाश्यतामेष्यति—इति ज्ञात्वा हर्षः सञ्जातः। तेन सुरभारत्या महती सेवा सम्भविष्यति—इति आशा वर्तते !

भवतः—

माघशुक्ल--पूर्णिमा, २००२ } सम्पूर्णानन्दः [ युक्तप्रान्तीयः शिक्षा—सचिवः ]

× × ×

× × स्थाने हि भवतः सुप्रभातस्य पुनः प्रकाशन—योजना। अतो नितरां प्रसीदामि। × × पुनः कदाचन लेख-प्रेषणाय प्रतिजानानो विरमामि ध्रुवमाशंसे च—

विभातु सुप्रभातेन स्वरूपं संस्कृतं पुनः।
विभातु सुप्रभातेन स्वरूपं संस्कृतं पुनः॥

इति भवदीयः—

लक्ष्मण स्वरूपः [ एम०ए०,डी० फिल० ]
[ पञ्जाप-विश्वविद्यालयीय-प्राच्य महाविद्यालयाध्यक्षः, लवपुरम् ]

× × × ×

संस्कृतज्ञानां जीवनभूतस्य सुप्रभातस्य पुनरभ्युदयं विज्ञाय परां मुदमुद्वहामि। संस्कृत-समाजे स्फूर्ति-जीवन-साहस-सञ्चार-प्रवणस्य तत्सम्पादकस्य प्रिय सुहृदः केदारनाथशास्त्रिणः, न केवलं सुप्रभातस्य; प्रत्युत निखिल-संस्कृत-समाजस्य जीवनभूता भवन्तु-इत्याशंसते—

सुकेतराज्यम् ( पञ्जाब ) } हरिकृष्णदयालुः शास्त्री दैवज्ञ-वाचस्पतिः, राजपण्डितः

× × ×

सुप्रभातमन्तरा तिमिराच्छन्नमिवासीत् सुर—भारती—गगनमण्डलम्। तद् वयं पुनरपि सुप्रभात-मासाद्य भगवन्तं वैश्वानरं तदभ्युदयाय चिरजीवनाय च प्रार्थयामः

ऋषिकेशतः } बालकराम शर्म्मा आहिताग्निः

× × ×

सुप्रभातं सुरभारती-प्रणयिनां हृदि सुरभारती-स्नेह-बर्द्धनं करिष्यतीत्याशास्महे। भगवन्तं जनार्दनं प्रार्थये वर्णाश्रमधर्मरक्षायै सुप्रभात-नामक-पत्र-प्रचारेण वास्तविकं सुप्रभातं भवेदिति।

नरहन इस्टेट ( विहार ) } कामेश्वरो नारायणः

× × ×

वस्तुतः सुप्रभातं संस्कृतज्ञानां हितकरं प्रियतमञ्च मित्रमिति तत्प्रचाराय सर्वथा सनद्धा वयं तत्सम्पादकानां सञ्चालकानाञ्च भृशमुपकारं विभ्रमः। वर्द्धतां सुप्रभातम्।

जम्मू-काश्मीर-राज्यम् } श्रीशङ्करशास्त्री. राजपण्डितः

× × ×

अये ! सुरसरस्वती-समुपासन-रसिकाः सहृदयाः !

अद्य किल सुप्रभातमहः सुप्रभातपत्रस्य, यन्नैकविघ्न-बाधा-धाराधरच्छन्नमुक्तं तत् साम्प्रतं दृष्ट्या सहृदयानानन्द-यितुं ससन्नाहं सोत्साहं च प्रवर्तते, समीहते च सत्वरं सततं च सहृदयहृदयाह्लादनम्।

विशेषतश्च परमं प्रमोदस्थानमिदं नः श्रुतवताम्— संस्कृतसाहितीपरिचर्याचार्यत्वजुषः परित्यक्त-स्वजीविका-साधनीभूतश्ववृत्तिकाः श्रीकेदारनाथशर्माणः सारस्वताः सर्वथा सर्वतः स्वतन्त्रभावेन स्वीकृत-संस्कृतसाहित्य-सेवाः 'सुप्रभात' सम्पादनकार्यभारजातमुररीकृत्य सन्नद्धाः सन्तीति।

तदत्रावसरे सकलैरेव सहृदयैः सङ्ख्यावद्भिर्दीयमान-मवधानं समीहमाना वयं सुप्रभातस्य सार्वकालिकं मङ्गल-माशास्महे, कामयामहे च तदीयं दैनन्दिनमभ्युदयनिःश्रे-सम्। ननु को नाम सचेता नोत्सहेत तदिदं सकलमाकलय्य सौहार्दसंस्तुतेन सरलस्वान्तेन ?

प्रसङ्गमममुमधिकृत्य कस्य वा सचेतसश्चेतः स्वागत चिकीर्षानुरक्तं किञ्चिदनुक्त्वैव विरन्तुं प्रभवेत् ? अतः केवलं पद्यमेकमुपायनीक्रियते। तथाहि—

( ४ पृष्ठे द्रष्टव्यम् )

# २००३—सम्वत्सरस्य फलम् ।

दैवज्ञशिरोमणिः श्रीदाऊजी दीक्षितः

अस्मिन् वर्षे जगल्लग्नाधीशो भौमः, लग्न–(शरीर)–स्थानस्य, अष्टम-( मृत्यु-कष्ट )-स्थानस्य चाधिकारं गृहीत्वा लाभेशेन सूर्येण सह सप्तम-(मद)-स्थाने तिष्ठति, अतोऽस्मिन् वत्सरे जनतायाः शारीर-सुखं समीचीनं न स्थास्यति । यदाकदाचित् —आधि–व्याधि–दुष्टशत्रु–चिन्ता–भय–शंका-आकस्मिककलहादीनां सम्भवो विद्यते । यद्यपि वर्षान्तं यावदेषा स्थितिः स्थास्यति, तथापि वर्षस्य प्रथमे मास-पञ्चके विविधा उत्पाताः सम्भविष्यन्ति जनताक्लेश-कारिणः । अत्याचाराणामनाचाराणां व्यभिचारादीनाञ्च वृद्धिः सम्भाव्यते, परन्तु लग्नोपरि शुक्रस्य पूर्णदृष्टिरस्ति, तत्सम्बन्धी सूर्यश्चोच्चैः स्थानमधितिष्ठति, अतो विविधबाधा-संकुलेऽप्यस्मिन् वर्षे देवाराधन-सदाचारादिभिः परिणामः शुभावहो भविष्यति ।

धनेशः सप्तमेशश्च भौमो नीचराशिस्थः कर्मक्षेत्रे वर्वर्ति, शुभाशुभ-सम्बन्ध-रहितश्च । एवं प्राणिनां कौटुम्बिक-सुखे न्यूनत्वं, अर्शपीडा, वाणिज्ये विघ्न-बाधा, दाम्पत्य-सुखाल्पता, दैनिकजीवनेऽपि च कष्टं भविष्यति । खाद्य-वस्त्र-धनादीनामभावेन शासकानामुत्पीडनेन विविध कष्टानां सम्भवः । एभिः क्लेशैर्मुक्तिरपि सत्वरं न सम्भाव्यते ।

तृतीयेशः षष्ठेशो गुरुश्च दुर्बलः । अतः स्वजन-बन्धु-मित्र-भृत्यादीनां स्वकार्ये न साहाय्यलाभो भवेत् । प्रजासु वर्गविरोध–कलह–वह्निभय–भूकम्प--शस्त्रभय-पशुहानि-पक्षि-विनाश-वैकल्यादिकं प्रायः सम्भाव्यते । जनता च देश-जाति-कुलोचितां मर्यादां विहाय स्वच्छन्दाचार-विचारा भविष्यति ।

चतुर्थेशो पञ्चमेशश्च शनिः, राहुणा सह धर्मस्थानमधितिष्ठति । अतः गृह-भूमि-क्षेत्र-विषयकाः विवादाः समुत्पत्स्यन्ते । असुखम्, अशान्तिः, गृहकलहः, विरोधः, महोत्पाताश्चेत्येतेषामाधिक्येन सम्भवः । परन्तु वर्षमध्यकालात् विचारपरिवर्तनं भविष्यति । हृदये सद्विचाराणामुन्मेषो भविष्यति ।

अस्मिन् वत्सरे सन्तानोत्पत्तिः प्रचुरा भविष्यति, परं पीडा अपि प्राचुर्येण स्यात् । सत्यामपि वायुशकट-वायुयानादीनामभिवृद्धावेतेषामाकस्मिकी हानिरपि भविष्यति । महावात-वात्याद्युपद्रवाणां, वायुरोगाणां वृद्धिर्भविष्यति ।

भाग्येशो व्ययेशश्च बुधो नीचराशिगः, स्व-रिपुस्थानश्चेति वर्षेऽस्मिन् पारस्परिक-वैमनस्य-वृद्धिरधिका, प्रबल-परिश्रमसाध्या च समुन्नतिर्भवेत्, व्ययाधिक्यञ्च ।

धार्मिकनेतृणां धर्मप्रचारे धर्माभ्युदये चाभिवृद्धिः स्यात् । सर्पकीटादिविषमयजन्तूनां वृद्धिर्हानिश्च स्यात् ।

कर्मेशश्चन्द्रो लाभस्थानेऽस्ति । अतः सत्स्वपि विविध विघ्नेषु देशस्य राष्ट्रस्य चाभ्युदयः सम्भाव्यते । आकस्मिकं परिवर्तनमपि स्यात् । स्वीयकार्येषु राजकार्येषु च साफल्यं महता कष्टेन भविष्यति ।

अस्मिन् वर्षे राजा बुधो निर्बलः । मन्त्री शनिश्च बलवान् । अतो राजापेक्षया मन्त्रिणां प्रभावः समधिकः स्यात् । दुर्गेशः शनिः, अतः कष्टेन भारतदुर्ग-रक्षा भविष्यति । मेघेशः शुक्रः शुष्कग्रहेण संगतः, अतो वर्षायोगोऽपि क्वचिदल्पः, क्वचिदधिकश्च विद्यते । विवाहादिमङ्गलकार्याण्यपि स्वल्पान्येव भविष्यन्ति ।

अन्नस्थितिर्यद्यपि दुर्बला, तथापि सद्विचारपूर्वकं कार्यकरणेन, ईश्वरकृपया च दुर्भिक्ष-कष्टं दूरीभवेदिति विश्वसिमः ।

( ३ पृष्ठस्य शेषांशः )

समुदितामुदिताश्रितवल्लरीं
प्रमदयन्, मदयन् कविकोकिलान् ॥
गतमुदन्तमुदञ्च्य पुनर्लसन्
सुहृदये ! हृदयेन निमन्त्र्यसे ॥१॥

जगन्नाथ शास्त्री होशिङ्गः
साहित्याचार्यः

# सम्पादकीयम्

## सुप्रभातम् !!!

प्रेयांसः सुप्रभात-प्रणयिनः पाठकाः !

पुनरपि चिर-प्रणयिनं सुप्रभातमिव सुप्रभातमालोक्य श्रीमन्तो नूनं सहर्षोत्कण्ठाविस्फारित-विलोचनाः क्षणम्-मन्दानन्द-सन्दोहभाजो भविष्यन्ति, वयमपि चोत्कण्ठा-तरलितान्तःकरणाः सप्रणयं सादरं सबहुमानञ्च तेषां चिर-प्रणयिनां सुचिरं रुचिरं सुप्रभातमाशंसामहे। सुप्रभाते सङ्गतानामस्माकं दिनमपि सुदिनमेव भूयादिति सर्वान्तर्यामिणं भगवन्तं भूत–भावनमभ्यर्थयामहे। कामयामहे च स्वराष्ट्रस्य, स्वदेशस्य, आर्यसंस्कृतेः, आर्यधर्मस्य, हिन्दू समाजस्य च सर्वदा सर्वथा च दैनन्दिनं सुप्रभातम् !!

× × ×

## दिव्यस्मरणम्।

विगतेषु वत्सरेषु संस्कृत-संसारस्य विविधानि प्रत्नानि च नूत्नानि च महार्ह-रत्नानि क्रूरेण कालेन कवलीकृतानि–इति–अपूरणीया क्षतिर्नितरां दुनोति धुनोति च मानसम्। एतेषामभावेन शून्यमिव, असारमिव, अनाथमिव च समालोक्यते सुर-सरस्वती-सदनम्। हन्त !

प्राचीन—संस्कृतेरादर्शस्वरूपाः, त्यक्त—महामहोपाध्याय-विरुदः, त्याग-तपोमूर्त्तयः, महर्षिकल्पाः, नाना-दर्शन-परमाचार्याः, महापण्डिताश्च पञ्चानन-तर्करत्न-महोदयाः, प्रगतिशीलविदुषामादर्शभूताः, देश-समाज-साहित्य-धर्म-सेवा-कार्येषु सर्वदा पुरस्सराः, अगाध-पाण्डित्य-मण्डिताः, हिन्दू-विश्वविद्यालयस्य प्रधान-संस्कृत प्रतिनिधयो महामहोपाध्याय-डा० प्रमथनाथतर्कभूषण—महोदयाः, कवि-तार्किक-शिरोमणयो गभीरतराः दार्शनिक-विद्वांसो लोक-व्यवहार-विदः, शिष्टाचार-चतुराः, हिन्दू-विश्व-विद्यालय-संस्कृत-विभाग-प्रधानाः, महामहोपाध्याय-बालकृष्णमिश्राः, त्यागमूर्त्तयो धर्म-धुरीणाः, निखिल-भारत-प्रथित-प्रभावाः, तार्किक-प्रवराः निस्पृहतादर्शभूताः पद्मनाभशास्त्रिमहोदयाः, जङ्गम-विद्यालयस्वरूपाः, छात्र कल्पवृक्षाः, सौजन्य-स्नेह-मूर्तयः, कृत-भट्टोजिदीक्षित-पूर्तयो ऋषिकल्पाः हरिनारायणत्रिपाठिमहोदयाः, वैदिकाग्रेसराः श्रौतस्मार्त्त-मार्त्तण्डाः, सौजन्यसागराः, महामहोपाध्यायाः विद्याधरशर्म्माणो गौडमहोदयाः, मारवाड़ी-संस्कृत-कालेज-प्रधानाध्यापकाः, वैयाकरण-मणयो नरसिंह-शास्त्रिणः, राजकीय-संस्कृत-महापाठशाला-न्यायाध्यापकाः प्रखरतर-प्रतिभासम्पन्नाः, सूर्यनारायणशास्त्रिणः, अन्ते च गणित-विज्ञानस्याद्वितीयविद्वांसो विद्यावयोवृद्धाः गेन्दालालचौधरी-महाशयाश्च न केवलं वाराणसी-मण्डनाः; प्रत्युत निखिलभारतीया गौरव-स्वरूपा आसन्। इयमतितराम-सह्या, अपूरणीया च क्षतिः संस्कृत-संसारस्य।

वाराणसीं विहायापि भारतवर्षस्य विभिन्न-प्रान्तेषु सुरभारती-गौरव-स्वरूपाणि, संस्कृत-समाजस्य च स्वाभिमान-भूतानि महान्ति विद्वद्रत्नानि दुर्दैवेन दूरमपहृतानि। हन्त ! अस्माकं युक्तप्रान्ते—आर्यसंस्कृति-बद्ध-पक्षपाताः, सुर-भारती-सुपुत्राः, संस्कृत-विदुषामाश्रयभूताः सुप्रभात-प्रणयिनो महामहोपाध्याय—डा० सर गङ्गानाथ झा–महोदयाः, प्रिय सुहृदः गभीर-विद्वांसो जयपुर-राजकीय-संस्कृत-विद्यालय—प्रधानाध्यापक—पदं प्राप्यैव स्मृतिशेषतां प्राप्ताः परमोत्साहिनः—घूटरझा–महाशयाः, पञ्चापप्रान्ते—लवपुरीय–संस्कृत–महाविद्यालय—प्रधान–पण्डिताः, विविधशास्त्र-पारङ्गमाः महामहोपाध्याय—माधवशास्त्रिभण्डारी-महाशयाः, सनातनधर्म-धुरन्धराः, व्याख्यान–वाचस्पतयो दिव्यमूर्त्तयः–गोस्वामि यदुकुलभूषण शास्त्रिणः, राजनीति–निपुणाः, प्रखरतर–प्रतिभा-सम्पन्नाः, काश्मीर–जम्मू–राजगुरवो महामहोपाध्याय–देवराजशास्त्रि-महाशयाः, तत्कनीयांसश्च राजपण्डिताः, रघुनाथ-संस्कृत–महाविद्यालय–प्रधानाध्यापकाः, सहृदय–शिरोमणयो बालकृष्णशास्त्रिणः, विहारप्रान्ते—सर्वदा सर्वदा च सुर–भारती–सेवा–निमग्न–मानसाः, शिष्टाचार–सारल्य–माधुर्य-मूर्तयः विहारप्रान्तीय–संस्कृत–एशोशिएशन–मन्त्रिणः, ईश्वरीदत्तदौर्गादत्तिशास्त्रिणः, पाटलिपुत्रस्थाः भिषक् प्रवराः विद्यावयोवृद्धाः व्रजबिहारी चतुर्वेदाः, छपरास्थ-संस्कृत-महाविद्यालय-प्रधानाः, भिषक्प्रवरा अपि गम्भीर दार्शनिकाः, श्रौतस्मार्त्त-कर्मकाण्ड-कुशलाः, विविध-ग्रन्थ लेखकाः महामहोपाध्याय —श्यामनारायणचतुर्वेदाः, मोह-मय्याञ्च समुदीयमान-वैदग्ध्याः विविध-शास्त्र-कुशलाः

गभीर-विमर्शशीलाः, कवि-प्रवराः रामजी पाण्डेयाः, अनेक शास्त्राचार्याः, बंगप्रान्ते—वाराणसीगौरवभूताः, कलिकान्ता-संस्कृतमहाविद्यालयाध्यापकाः विद्वन्मण्डल-मण्डनायमानाः, प्राचीनादर्शविद्वांसः, महामहोपाध्याय-हाराणचन्द्र-भट्टाचार्याः, आयुर्वेदसंसारे लब्ध-महागौरवा अपि सुरसरस्वती-सेवापरायणाः, संस्कृतवाङ्मये विविधनूतन-विज्ञान-ग्रन्थ-लेखकाः महामहोपाध्याय-गणनाथ सेन एम० एम०-महोदयाः-स्मृतिशेषतां गताः-इति ध्यायं ध्यायं किंकर्तव्य-विमूढतामातनोति खिन्नतरं चेतः ।

एतेषां महाविदुषां अन्येषाञ्च बहूनां विदुषां निधनेन, प्रथमत एव जर्जरितः संस्कृत-समाजः,शिथिलितोत्साहः,निरुत्साहश्च समालोक्यते । तेषां देवभूयं गतानां चिरस्मरणेनैव पूतमात्मानं मन्यामहे । एतेषां सुप्रभातेन सह महान् पूज्यः, लेखकेन सहापि व्यक्तिगतो घनिष्ठतरः सम्बन्धः आसीदिति निवापाञ्जलिरूपेण तेषां पुण्य-स्मरणं सुप्रभातस्य सुप्रभाताय भूयादिति भूयो भूय अभ्यर्थयामो भगवन्तं श्रीविश्वनाथम् ।

× × ×

## स्वागतम्, सुप्रभातञ्च ।

अत्र प्रान्ते पञ्चपवर्षेभ्यो युद्धकालीन-'हैलेट'—नाम्नः प्रान्तशासकस्य शासन-निशायामस्माकं प्रान्ते ये ये पाशविकाः, रोमाञ्चकारिणश्च—अत्याचाराः, अनाचाराः, दुराचाराः भ्रष्टाचाराश्च समभूवन्, तेषां स्मरणेनाऽपि विदीर्यते हृदयम्, धमायते धमनीषु शोणितम् । परं क्रमशो व्यपगतायां महारजन्यां राष्ट्रतपस्विनां कठोरतपःप्रभावेण पुनरपि राष्ट्रिय-मन्त्रिमण्डलमयं सुप्रभातमालोक्य समुत्पीडिता जनता सहर्ष-वर्ष-प्रकर्षं सुदीर्घं निश्वसति ।

पुनरपि श्रीमतां गोविन्दवल्लभपन्त-महोदयानां प्राधान्येन प्राक्तनमेव मन्त्रिमण्डलमधिकारारूढमस्ति । वयमस्य मन्त्रिमण्डलस्य सामोदं सादरं सबहुमानञ्च स्वागतं कुर्वाणाः, अस्य साफल्यं सर्वतः सर्वथा च कामयामहे ।

× × ×

## शिक्षा-सचिवा अवदधतु ।

पञ्चपवर्षानन्तरं पुनरपि शिक्षा-सचिव-पदे समधिकृतं माननीयं श्रीमन्तं सम्पूर्णानन्द-महोदयं सहर्षं ससम्मानञ्चाभिनन्दन्तस्तेषां ध्यानं संस्कृतशिक्षायाः पुनरुद्धारे विशेषतः समानयामः । यद्यपि प्रथममधिकारारूढैरेतैः शिक्षा-संस्कार-समितिः संस्थापितासीत् । तदानीं कालीन-संस्कृत-परीक्षा-समित्या परिवर्तिता पाठ्य-प्रणाली प्रचारिताऽप्यासीत् । यत्र राजशास्त्र-नैरुक्तप्रक्रिया-प्राचीनव्याकरण-बौद्धदर्शनादि-नवीन-विषयाः सन्निविष्टा अभूवन् । परन्तेषां त्यागपत्र प्रदानानन्तरमेव व्यक्तिगत-रागद्वेष-दूषितान्तःकरणैः स्वाधिकारं दूषयद्भिः कैश्चन सा पाठ्यप्रणाली प्रसभं परावर्तिता । हिन्दी-गणितेतिहासादयो नितरामावश्यका विषयाश्च निःसारिताः । एतस्मिन् विषयेऽस्माकं सविधे बहुभिः संस्थाभिः सानुरोधं प्रस्तावाः प्रहिताः सन्ति यद्राजशास्त्र-नैरुक्तप्रक्रियादि-विषयाणां सत्वरमेव प्रवेशोऽस्मिन्नेव वर्षे विधेयः । तद् वयं सानुरोधं प्रार्थयामो यत्तेऽत्र साभिनिवेशं सत्वरञ्च दत्तावधाना भवन्त्विति ।

युक्तप्रान्तीय-संस्कृताध्ययन-समितौ [ Board of Sanskrit Studies ] देश-कालेतिहासविदः, संस्कृत-शिक्षा-मर्मज्ञाः सदस्यास्तिष्ठन्तु । पक्षपात-रागद्वेष-दलनिर्माण-निरताः स्व-विरोधिनामुपरि व्यर्थाक्रमणकारिणः, क्षुद्र-हृदया अधिकारिणः स्थानान्तरं करणीयाः, ये संस्कृतज्ञेषु स्वीयं धनं व्ययीकृत्याऽपि जातिभेदम्, पारस्परिकं कलहञ्चोत्पाद्य स्वीयं नेतृत्वं स्थापयितुं प्रत्यक्षं प्रयतमानाः सन्ति ।

संस्कृत-सम्बन्धिकार्यं च संस्कृतभाषायां हिन्दीभाषायां वा प्रचारयन्तु—येन संस्कृतज्ञाः सम्यक् ज्ञातुं प्रभवेयुः । "डा० भगवानदास-कमेटी-रिपोर्ट"—नामकं विवरणं यत् विशुद्धसंस्कृतज्ञानां कृते विद्यते—तदांग्लभाषायामेव विद्यते । अस्माभिर्बहुधा निवेदितैरपि शिक्षाधिकारिभिस्तत्रोदासितम् ।

एतदत्यावश्यकं निवेदनम् । पुनरग्रिमांकेषु विशिष्ट-विषयेषु विशिष्टं निवेदयिष्यामः ।

× × ×

## देशसेवा संस्कृतज्ञाश्च ।

आधुनिकानां हृदये प्रबला धारणा जागर्त्तितरां यत् संस्कृतज्ञाः पण्डिताः, देश-द्रुहः, समाजोन्नतिविरोधिनः, प्रगति-परिपन्थिनश्च सन्ति । वस्तुतो बहुशः सत्यमप्येतत् । परं तत्वतो विचारे तु पण्डितः, राष्ट्रस्य मूर्द्धन्यः, प्रधानः, प्रथमश्च पुरुषः । समाजस्य पुरोयायी पुरोहितो नियामकश्च

धर्मस्य धुरन्धरः, ज्ञान-विज्ञान-सम्पत्तेर्निधानम्, मस्तिष्कं मानव-समाजस्य, जीवनं जनतायाः, विधाता वाङ्मय-सर्गस्य, आदर्शस्त्यागस्य, नायको जातीनाम्, पथ-प्रदर्शको लोकानाम्।

संस्कृत-विदुषो जीवनं राष्ट्रियम्, संस्कारा राष्ट्रियाः, भाषा राष्ट्रिया, वेश-विन्यासो राष्ट्रियः, आकारः, प्रकारः, विचारो व्यवहारः—सर्वमपि राष्ट्रियमेव। अशनं वसनं भ्रमणं रमणमपि राष्ट्रियमेव। प्राचीनार्य-संस्कृतेरादर्शभूतं भारतीयता-पूर्णविदुषां जीवनं को नाम राष्ट्रियं न मनुते।

विश्वस्मिन् भू-मण्डले सर्वप्रथमा, सुसंस्कृता, सुशिक्षिता-आर्यजातिरेव। आर्यैरेव विशालतमस्य भारतराष्ट्रस्य निर्माणं कृतम्, तैरेव महान् हिन्दूसमाजः संग्रथितः, तैर्न केवलं भारतराष्ट्रस्य रक्षा कृता; परमन्यदेशानामुपरि बलादाक्रमण-पूर्वकं शासन-स्थापनमपि कृतम्, विदेशिभिः सह व्यापार-सम्बन्धः, राजनैतिकः सम्बन्धः, दौत्य-सम्बन्धश्च संस्थापित आसीत्। सर्वविदितं वेदप्रतिपादितञ्चैतत्। नात्र प्रमाणान्तरमपेक्षते। एतत् सर्वं केन कृतमासीत्? विश्व-विजयिनः सिकन्दराख्यस्य बलदर्पोद्धतस्य मान-मर्दनं केन कृतमासीत्? विलास-वासना-शीतलीकृत-शोणितस्य राष्ट्रसेवा-विमुखस्य राजभोगासक्तस्य नन्दनृपतेर्विशालं मगध-साम्राज्यं विनाश्य, ग्रीकानामाक्रमणतो भारत-वसुन्धरां परित्रातुं भीषणतरः प्रयत्नः केन कृत आसीत्? समाज-संग्रन्थनाय राष्ट्र-सञ्चालनाय च, परःसहस्रग्रन्थ-निर्माणं केन कृतमभूत्? बौद्धकाले यवनानामाक्रमण-समये च लुप्तप्रायतां गच्छतो धर्मस्य पुनरुद्धारणम्, पुनः संस्थापनञ्च केन कृतम्? क्षणं विचार्यतामङ्ग!

सर्वमेतत् पण्डितैः, संस्कृतज्ञैरेव ब्राह्मणैः कृतमवर्तत। हन्त! अद्य ते राष्ट्र-कर्णधाराः, समाज-नायकाः, धर्म-संस्था-पकाः पण्डिताः, राष्ट्र-द्रोहिणः, समाज-शत्रवः, धर्म-विध्वंसकाः प्रगति-प्रत्यर्थिनः परिगण्यन्ते। एवं स्थिते सति राष्ट्र-स्वातन्त्र्ये राष्ट्रियाः पण्डिता बहिष्कृता भविष्यन्ति, तेषां स्थानञ्चान्ये गृहीत्वा राष्ट्र-समाज-धर्म-नेतृत्वं करिष्यन्तीति नात्र मनागपि संशयलेशः, अतिशयोक्तिर्वा।

एवमनादिकालादेव जन्मसिद्धं नेतृत्वाधिकारमन्येभ्यः समर्प्य पाठशालोपधाने तमाल-तालिकां वादयन्तः, परवाद-परद्रोह-परशातन-प्रकारादिविमर्श-विनोदेन वा, सभा-यज्ञानुष्ठानादि-क्षुद्रतम-लाभालोचनया वा कालं यापयन्तः पण्डित पादाः, स्वार्थ-निमग्नाः, कर्तव्यविमुखाः, मानहीनाः, जीवन-रहिताः सर्वमपि पूर्वजानां वैभवं समापयिष्यन्ति-इत्ययं जीवन-मरण-प्रश्नः, प्राचीन-भारतीय-संस्कृतेः सभ्यतायाश्चेति भृशमालोचनीयं सुप्रभात-पाठकैः।

× × ×

## पाकिस्तानं पण्डिताश्च।

अद्यत्वे एतत्तु विदितचरमेव प्रायः सर्वेषामेव यद्भारतवर्षस्य स्वतन्त्रता-संग्रामे राष्ट्रमहासभा-द्वारा भारतीयैः कियान् महान् त्यागः कृतः, कियत् दुष्करं तपस्तप्तम्, कियत्यः कारागारयन्त्रणा मर्षिताः, लोमहर्षणं बलिदानं कृतम्, स्मरणमात्रेणैव हृदय-दारिण्यो यातनाः सहर्षं स्वीकृताः, जघन्यतराः पाशविका अत्याचाराः सानन्दमुपभुक्ताः। ईदृशीं भीषणतरामग्निपरीक्षामुत्तीर्य भारतीया जनता स्वतन्त्रता-मन्दिर-द्वारमध्यास्ते। तत्फलस्वरूपमेव भारते मन्त्रिमण्डलस्यागमनं समभूदिति।

परमिदानीं फल-प्रसवकाले पर-प्रचोदितो धन-लुब्धो जिना, सर्वं विदन्नपि केवलं विघ्नं विधातुं भारतीय-स्वातन्त्र्यलाभे महान्तमन्तरायमुपस्थापयति पाकिस्तान-मित्यपि नाविदितं कस्यापि।

न केवलं भारतीया एव; प्रत्युत सर्वेऽपि विदेश-वासिनः विवेकरहितमबुद्धिमत्तापूर्णं जिना-दुराग्रहं निन्दन्ति। परमस्माकं धर्मनेतारः सन्न्यासिनः पण्डिताश्च सनातनधर्मस्य, आर्य संस्कृतेः, प्राचीनमर्यादायाश्च प्रत्यक्षं सर्वनाशमालोकयन्तोऽपि निर्जीवा इव, अनभिज्ञा इव, निस्त्रपा इवोदासते—इति ध्यायं ध्यायं विदीर्यते निर्दयं हृदयम्।

अयि पण्डिताः! को नाम सचेता मानवः स्वीयां जननीमिव प्राणप्रियां जन्मभूमिं परैराच्छिद्यमाना-मालोक्य क्षणमपि जीवितुं विषहेत। भूमण्डले नैता-

दृशो विपर्ययः कुत्रापि समालोक्यते। भारतं हि नाम आर्याणां हिन्दूनामेव स्वदेशः, तेषां पैतृकी सम्पत्तिः। तैः प्राणैः कण्ठगतैरपि न कदाचित् पुण्या जन्मभूमिः क्षणमपि परित्यक्तुं शक्यते। हन्त! अद्य द्विसहस्रवर्षेभ्यः परित्यक्तां ख्रीष्ट-जन्मभुवमरब्यदेशं पुनः प्राप्तुं यतन्ते यहूदीयाः, अरब्यांस्ततो बलान्निरस्यन्ति। तत्रांग्लास्तेषां साहाय्यं कुर्वन्ति। परमत्र भारते तद्विपरीतं सार्द्धसहस्रवर्षेभ्य आगता यवनाः, आर्यान् स्व-जन्मभुवं परित्याजयन्ति। तत्राप्यांग्लशासका यवनानां पक्षपातं कुर्वन्तीति पराकाष्ठा वैषम्यस्य, शठतायाश्च।

पश्यत मनाक् सिन्धुदेशम्। अस्मिन्नेव देवगुरोर्बृहतांपतेः पवित्रजन्मभुवि—आर्याणामक्षयनिधिभूतानां वेदानां प्रादुर्भावः समजनि। वेदेषु बहुशः सिन्धु-नाम; तत्सहकारिणीनामिरावती—विपाशा—शतद्रु-नदीनां नामानि च समागतानि। पुराणेषु च सिन्धु नदी, पुण्यतोयासु नदीषु समुपवर्णिता। अस्मिन्नेव 'मोहनजोदड़ो'—स्थानं विद्यते, यत्र पञ्च-सहस्रवर्षेभ्य अपि पुरातनानि वस्तूनि भारतीयार्य-सभ्यता—परिचायकानि समुपलब्धानि, यैर्भारतीयेतिहास एव परिवर्तितः। अस्यैव देशस्य परमशिवभक्तो नरपतिः सिन्धुराजो जयद्रथः, धृतराष्ट्रस्य जामाता बभूव। हन्त! सोऽयमस्माकं महर्षिणां मूलदेशो यत्रार्यैर्वेदा अस्मयन्त। यत्र भारतीया सभ्यता, संस्कृतिश्च प्रादुरासीत्, यस्य सिन्धुशब्दस्यैवापभ्रंशो हिन्दुरितिशब्दः सगौरवमस्माभिर्धार्यते, तत्र! साम्प्रतं हिन्दूनां जीवनमपि प्रतिक्षणं संशयग्रस्तमस्ति।

इदानीं स आर्याणामादिदेशो भारतादपकृष्य 'पाकिस्ताने' ! नीयते बहिर्देशादागतैर्विधर्मभिर्यवनैः। अस्माभिस्तु तत्र ध्यानमपि न दीयते। अत्र विषये तु केवलं वेदाभिमानिभिः सनातनधर्मावलम्बिभिस्तन्नेतृभिः पण्डितैश्च वैदिकीमिमां सिन्धुभुवं पुनरादातुं प्रबलतरमान्दोलनं परिचालनीयम्-यदस्माकं पूर्वजानां वेदानाञ्च प्रादुर्भावभूमिरियं, पवित्रतमोऽयं देशो यवनानां मक्कादिदेशवत्—इति सर्वथा हिन्दूनां संरक्षणे, अधिकारे च तिष्ठतु, अपसरन्तु कियतः कालात् समागता यवना—इति। इतीदमेवोत्तरं पाकिस्तानस्य। एवमेव-व्यास पाणिनि-चरक-चाणक्यादिऋषीणां जन्मभूमिः, वैदिकीभिः शतद्रुविपाशादिनदीभिः परिवेष्टितः, पञ्चनद-प्रदेशोऽप्यस्माकं परमपावनो देशः, अस्माकं हस्ते तिष्ठतु। यत्रार्याणां मूलस्थानं मूलत्राणमद्यापि वर्तते। एवमेव कामाक्षी-पीठाधिष्ठितः पवित्रतम—ब्रह्मपुत्र—पयः प्रक्षालित-पाद-प्रदेशः कामरूपदेशस्तु हिन्दुनां पैतृको देशः। यदि तत्र तत्र देशेषु यवनानां प्राधान्यं विद्यते चेत्तिष्ठन्तु भ्रातृ-भावेन सहर्षम्। यदि ते तत्र स्वशासनं चिकीर्षन्ति, ततश्च हिन्दूनामपसारणमीहन्ते तदा सर्वैरपि—आर्यधर्माभिमानिभिर्न्याय्यं पैतृकञ्च स्वाधिकारमवाप्तुमुग्रतरं शान्तिपूर्णं गम्भीरतमञ्चान्दोलनं सञ्चालनीयम्।

अधार्मिक-नियमानां विरोधे यथा प्रयत्यते स्वधर्माभिमानिभिस्ततोप्यधिकतरं पाकिस्तान—विरोधे प्रयतनीयम्। हन्त! भारतवर्षस्य, भारतीयानाम्, भारतीयसंस्कृतेः, आर्यसभ्यतायाः, हिन्दूधर्मस्यादिमा जन्मभूमिर्यवनराज्ये तिष्ठतु। ततश्च हिन्दूनामपसारणं भवेत्। तत्रत्य-पवित्रतीर्थस्थानेषु यवनानामत्याचाराश्च भवेयुरिति स्वप्नेऽप्यसह्यमार्याणाम्। यथा जिन्ना रक्तपातस्य विभीषकां प्रदर्शयति, ततोऽप्यधिका विभीषिका, ततोऽप्यधिकतरमान्दोलनमस्माभिः सञ्चालनीयम्। ततोऽप्यधिकतमेन घोषेण समुद्घोषणीयमस्माभिः स्वत्वम्।

[ अवशिष्टांशः-आवरण-पत्रस्य द्वितीये पृष्ठे द्रष्टव्यः ]

## सुप्रभात सुषमा

अमन्द-सुरवाङ्मय-प्रतिभटान्धकारच्छटा—
विपाटन-पटीयसी भुवन-भव्यनेदीयसी ।
समुन्मिपति सांप्रतं बुध-सरोरुह-प्रेयसी
स्फुरन्मति-महीयसी तरुण-सुप्रभात-प्रभा ॥१॥

विचारचतुराश्चिरं चरत चारुवाग्वाटिका—
स्वमन्द-रस-मेदुरं रसयताऽमृतं सूक्तिपु ।
सुतर्क-रुचि-कर्कशा अकुशमाशु कोपं गिरा—
मुदीरयत, कोऽप्यसौ सरस-सुप्रभातोदयः ॥२॥

पुरा कविवरावली-ललितवाङ्मयालंकृते
निबन्ध-विनिबन्धनानुगुणविद्वदामोदिनि ।
परिस्फुरति विश्वतोऽधिशिवपत्तनं धीधनै—
र्व्यतन्यत रतिः पराऽभिनव-सुप्रभातोदये ॥३॥

त्वरणं जलदजालकाऽऽवृतमपीदमुद्यत्प्रभ-
प्रबोध-मिहिर-स्फुरद्विबुध-पद्मसद्माञ्चितम् ।
लसत्सुकविकोकिलाऽऽकलितकाकलीलीलया
धिनोतु धरणीतले नरकलेवरान् निर्जरान् ॥४॥

निलीय निभृतं स्थिताः क्वचन केऽपि घूका इवा—
ऽपरे कृतपलायनाः कुकविभूत-वेतालकाः ।
विडाल-कुल-पद्धतिः कृतहतिः स्फुटं दृश्यते
समुद्यदमित-द्युतिप्रथित-सुप्रभातोदये ॥५॥

हिताञ्चितगतिः स्फुरत्सरस-सार-सारस्वतो
विभर्ति यदि के सदा रसिकतल्लजश्चेद्धरम् ।
सनाथपदवी तवोदयति सुप्रभात ! स्थिरा
प्रभाततिमिराशु तद्भुवनमण्डलं भूषय ॥६॥

करांबुरुह-वल्लकी-रणित-वल्लकी-निस्वनै
रहस्यममितं गिरां विशदयत्यमन्दाशये ।
शये शयितवच्च या भुवन-मण्डलं दर्शय—
त्यसौ कविकुलप्रसूर्दिशतु सुप्रभाते दृशम् ॥७॥

सुप्रभात-प्रभाजालैः प्रतिभा भासतां सताम् ॥
कवीनां च मुदे भूयान्मत्कृतिः सचमत्कृतिः ॥८॥

—श्रीवटुकनाथ शास्त्री खिस्ते
साहित्याचार्यः

## संस्कृतज्ञानामात्मविस्मृतिः ।

### ले०—श्री गोपालशास्त्री, दर्शन-केशरी

"सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च
सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति"

उपर्युक्तं पद्यं भगवता मनुना वेदशास्त्रविदामधिकाराथमुक्तम् । तेन सूच्यते यत् पूर्वस्मिन् काले भारते वेदशास्त्रविदः संस्कृतज्ञा विद्वांस एव सैनापत्य-दण्डनेतृत्वाद्यधिकारमधितिष्ठन्ते स्म । उक्तञ्च केनचित्ः—

इन्द्रः याङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथिः
धौम्यो धर्मनृपस्य वन्यनृपतेः स्वौजा निमेर्गौतमिः ।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य विश्वात्मन—
स्तद्वच्चास्य विभोरभूत्कुलगुरुर्मन्त्री महान्माधवः ।

दूरे गमनस्य प्रयोजनमेव नास्ति, सर्वेऽप्यैतिहासिकाः सम्यग्विदन्ति यच्चाणक्यो हि विद्वान् नवनन्दान् विनाश्य चन्द्रगुप्तं सम्राजमिहैव भारतेऽस्वबुद्धिबलेन विधाय कौटिल्यार्थसूत्रन्नामाद्भुतं शास्त्रं प्रणिनाय; यस्य प्रतिस्पर्द्धि पाश्चात्यानामद्यावधिर्नास्ति किमपि राजशास्त्रमर्थशास्त्रं वा । महाभारतीयं कणिकनीतिशास्त्रं कामन्दकीयमेव वा प्रसिद्धमेवेह सर्वविदां समाजे ।

अस्तु, प्राचीनाः संस्कृतज्ञा विद्वांसः सर्वमेव नागरिकं लौकिकमलौकिकं वा कृत्यं स्वयं कुर्वन्तिस्म । अन्यैश्च कारयन्तिस्म इति सर्वविदां सम्मतमेव ।

अद्यत्वे कियत एव कालात् संस्कृतज्ञविदुषाम् पाण्डित्यं संकुचितं जातं दृश्यते । तत्र तेषामेव सङ्कोचदृष्टेरपराधो नान्यस्य कस्यचनेति विचारकानामसन्दिग्धो निर्णयः । सत्येवं व्यतिकरे कथं पुनः स चिराभ्यस्तः पन्थाः पुनस्तैरधिगतः स्यादित्यपि सुप्रभातसंघस्यान्यतम उद्देशः ।

तत्र सा स्फारा दृष्टिः, सोऽप्यवसायो दुर्दमनीयस्तद्धि चतुरस्रं पाण्डित्यं पुनराश्रयणीयमिति नैव कदापि विस्मरणीयं विद्वद्धौरेयैः संस्कृतज्ञैः । तत्र सर्वप्रथममितिहास-भूगोल-प्रभृतिसर्वावश्यकानां सर्वोपयोगिज्ञानमत्यावश्यकम् । पूर्वम् हि आस्माकीनाः पूर्व-पुरुषाश्चतुर्दशानां विद्यानामनायासेनैवाध्ययनं कुर्वन्तिस्मेति मर्मज्ञानां नाविदि-

तम् । पश्यन्तु गुरुकुलादधीत्य गृहस्थाश्रमं प्रविविक्षुः कौत्सो रघुपार्श्वे गत्वा स्वात्मनश्चतुर्दशविद्यावेदितृत्वं प्रख्यापयति । तथाहि—

"समाप्तविद्येन मया महर्षि-
विज्ञापितोऽभूद् गुरुदक्षिणार्थे ।
स मे चिरायाऽस्खलितोपचाराम्
तां भक्तिमेवागणयत्पुरस्तात् ।
निर्बन्धसञ्जातरुषार्थकार्श्य-
मचिन्तयित्वा गुरुणाहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे
कोटीश्चतस्रो दश चाहरेति ॥

इत्यतः स्पष्टं सूच्यते यद्—

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणानि विद्याश्चैताश्चतुर्दश"

इति चतुर्दशापि विद्याः पूर्वं संस्कृतज्ञा जानन्तिस्म । इत्यत एव तु तैः सगर्वमुद्घोषितं विद्यते यत्

"वयमिह पदविद्यां तर्कमान्वीक्षिकीं वां
यदि पथि विपथे वा वर्तयामः स पन्थाः ।
उदयति दिशि यस्यां भानुमान् सैव पूर्वा
नहि तरणिरुदीते दिक्पराधीनवृत्तिः ॥

सम्प्रत्यपि मर्मज्ञा विद्वांसः संस्कृत-शिक्षापद्धतौ सर्वस्याप्युपयोगिनो विषयस्य सन्निवेशमभिलषन्ति । तत्र सुप्रभातसंघस्य प्रवलः प्रयत्नो विद्यते । इह वाराणस्यां पूर्वं सुप्रभात-सञ्चालकानां प्रवलेनान्दोलनेन कांग्रेस-मन्त्रि-मण्डलावसरे काशीस्थराजकीय-संस्कृतपरीक्षा-पाठ्य-पद्धतौ सर्वोपयोगिविषयाणां सन्निवेशः कृतोऽप्यासीत्परन्तु तदीय प्रभावापगतौ सत्यां पुनस्तत्रैवावलम्बितो वेताल इति न्यायश्चरितार्थोऽभूत् ।

सम्प्रति महासङ्ग्रामावसाने सर्वेऽपि द्वीप-द्वीपान्तरस्था मानवाः स्व-स्व-देशदशां परिष्कर्तुं प्रवृत्ताः सन्ति । भारतेऽपि पूर्णस्वातन्त्र्ययुगाविर्भावोऽचिरादेव भविष्यति । तत्र सर्वेऽपि भारतीयाः स्व-स्वसमाजोन्नत्यै सर्वथा प्रयतमाना अवलोक्यन्ते । तत्र संस्कृतज्ञा एव कथं पृष्ठगाः स्युरिति तेषामपि नेतृपदासीनेनानेन सुप्रभात-संघेन साधु समुपक्रान्तम् । यत्पूर्वत एव भारतीयराजनीतिपथपरिष्कर्तॄणां समक्षे स्वमन्तव्यं समुपस्थापयितुं सुप्रभातनामकं संस्कृतपत्रं सर्वप्रियं विश्वप्रसिद्धं राजनीति-धर्मनीति-समाजनीति-दण्डनीति व्यवहारनीति-प्रभृति-सर्वाङ्गपरिष्कारकं पुनर्जगति स्वादम्येनोद्योगेनावतीर्णम् ।

इति सर्वथाऽस्य श्रेयो विधेयात्काशीश्वरो विश्वात्मा परमात्मेति संक्षेपेणैव विरमामि ।

---

## स्त्रीशूद्रादीनां वेदाध्ययने नाधिकारः ।

लेखकः—श्री विन्ध्येश्वरीप्रसाद शास्त्री, धर्माचार्यः

"पञ्च नद्यः सरस्वतीमपि यन्ति सस्रोतसः ।
सरस्वती तु पञ्चधासो देशेऽभवत् सरित् ॥"

इति श्रुतिवचनात् नाद-विन्दु-ब्रह्माण्ड-पिण्डा-ऽक्षरात्मिकाभिधाराभिर्ज्ञानस्वरूपा भगवती सरस्वती पञ्चधा विभक्ता। तत्र भगवान् वेदो नादधारा-रूपः । जगदीश्वरमिव तन्नियमं नादस्वरूपं वेदमपि ध्यानावस्थित-तद्गतेन मनसा योगिनः पश्यन्ति । तस्मादेव ऋषयो मन्त्रद्रष्टारः समाम्नायन्ते, न तु कर्त्तार इति ।

ऋषि-महर्षि-कृपावलेन संसारे प्रसृता विन्दुधारा, ब्रह्माण्डाधिष्ठातृदेवैराविर्भाविता ब्रह्माण्डधारा, देवपिण्ड प्रादुर्भूता पिण्डधारा, इति तिस्रोऽप्येतास्तत्सञ्चालकानां नित्यत्वान्नित्याः सन्ति । तास्तिस्रः किल स्मृतिपुराणतन्त्र षडङ्गायुर्वेदादिष्वन्तर्भवन्ति । अक्षरमयी पञ्चमी धारा केवलमनित्या नाशशीलाऽवगन्तव्या ।

भगवान् वेदो हि स्वरूपतो नित्यः । अन्यानि तु शास्त्राणि सिद्धान्ततो भावतो वा नित्यान्यवगन्तव्यानि । भगवद्गीता-मानव-धर्मशास्त्रादीनि नैकशो भगवद्भिः श्रीकृष्णमन्वादिभिः प्रोक्तानीति नाप्रत्यक्षं तत्तदध्येतॄणां विपश्चिताम् ।

वेदाध्ययनाध्यापनादिषु स्त्री-शूद्रद्विजबन्धवो नाधिक्रियन्त इत्येव शास्त्रसम्मतः पक्षः। कथमितिचेत् श्रूयताम्—

"गायत्र्या ब्राह्मणं निरवर्त्तयत्, त्रिष्टुभा राजन्यं, जगत्या वैश्यं, न केनचिच्छन्दसा शूद्रं निरवर्त्तयत्"

—इति तैत्तिरीय ब्राह्मणश्रुतिः,

"सावित्रीं प्रणवं यजुः स्त्रीशूद्रयोर्नेच्छन्ति"

— इति नृसिंहतापनीयोपनिषत्,

"तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः"

—इति शतपथश्रुतिश्च

स्त्रीशूद्रादीनां वेदाध्ययनं विस्पष्टं निषेधयन्ति।

"उपनीय गुरुः शिष्यं वेदमध्यापयेद् द्विजः"

इति मनुवचनात् स्त्रीशूद्रान्त्यजानामुपनयनाभावाद् वेदाध्ययने नाधिकारः।

"वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम्"

—इति श्रुतेः, ॥

"गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः"

इति मनुस्मृतेश्चोपनयनं त्रैवर्णिकानामेव, न तु शूद्रादीनामित्यवगम्यते।

"विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदा"

इति यमवचनं शूद्राणां विवाहमात्रसंस्कारं स्वीकरोति। स्त्रीणामपि—

"वैवाहिको विधिः स्त्रीणामौपनायनिकः परः
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिष्क्रिया"

इति मनुना उपनयन-स्थाने विवाहस्य स्थापनात्, अध्ययनार्थं गुरुकुलवासस्थाने पतिसेवाया विधानाच्च नास्त्युपनयनं वेदाध्ययनं वेति।

अपशूद्राधिकरणे भगवत्पादैरपि निर्णीतम्, तथाहि-
"नच शूद्रस्य वेदाध्ययनमस्ति, उपनयनपूर्वकत्वाद् वेदाध्ययनस्य, उपनयनस्य च वर्णत्रय-विषयकत्वादिति"

"शूद्रस्यापि विशिष्टस्य परमैकान्तिनस्तथा
स्वाहाकारं च वेदं च हित्वा पुष्पैर्यजेच्छुभैः"

—इति वृद्धहारीतवचनात्,

"शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना"

—इति व्याससंहितावचनात्,

"शूद्रोऽप्येवं विधः कार्यो विनामन्त्रेण संस्कृतः।
न केनचित्समसृजत् छन्दसा तं प्रजापतिः॥"

—इति शूलपाणिस्मार्तधृत-यमवचनात्,

"अधीयीरंस्त्रयो वर्णाः स्वकर्मस्था द्विजातयः
प्रब्रूयाद् ब्राह्मणस्त्वेषां नेतराविति निश्चयः"

—इति मनुवचनात् च—

शूद्राणां वेदाध्ययनेऽनधिकारिता सिध्यति। "अधीयीरन्" इति-मनुवचन-व्याख्याने कुल्लूकभट्टोऽपि सुस्पष्टमङ्गी करोति, तथाहि—

"ब्राह्मणादयस्त्रयो वर्णा अध्ययनानुभूत-स्वकर्मतानुष्ठातारो वेदं पठेयुः, एषां मध्ये ब्राह्मण एवाध्यापनं कुर्यान्न क्षत्रियवैश्यावित्ययं निश्चयः। "प्रब्रूयाद् ब्राह्मणस्त्वेषाम्" इत्यनेनैव क्षत्रियवैश्ययोरध्यापननिषेध सिद्धौ, "नेतराविति" पुनर्निषेधवचनं प्रायश्चित्त-गौरवार्थमिति"।

"नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ।
न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्"

इत्यनेन शूद्रसमीपे वेदपाठोऽपि मनुना निषिद्धः।

"विदुषा ब्राह्मणे नेदमध्येतव्यं प्रयत्नतः
शिष्येभ्यश्च प्रवक्तव्यं सम्यङ् नान्येन केनचित्"

"निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नाऽन्यस्य कस्यचित्"

इत्यादिना भगवान् मनुः मनुस्मृतेरध्यापने ब्राह्मणानामेव, अध्ययने च द्विजानामेवाधिकारो नान्येषामिति स्वीकरोति।

स्त्रीशूद्रादिशरीरं हि दुरूहवेदाध्ययनस्य नितरामनुपयोगीति प्रत्यक्षं किल तत्त्वविदां प्रेक्षावताम्। आक्तं वाभ्यन्तरमेवोद्वाह्यमानानां सन्तानोत्पत्ति-पालनादि-गैहिक-कार्यकदम्ब-निरन्तर-व्यापृतमनसां स्त्रीणाम्, कामप्रधानानां शूद्रादीनां च कलाकौशलादिसमुन्नतेरवश्यं सम्पादनीयत्वादशक्यं वेदाध्ययनम्। अन्यच्च—

"मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्या प्रयुक्तो न तमर्थमाह।
स वाग् वज्रो यजमानं हिनस्ति
यथेन्द्र-शत्रुः स्वरतोऽपराधात्"

इति पाणिनिशिक्षावाक्यतः स्वरतो वर्णतो वा विप्रतिपन्नं वेदाध्ययनं तदध्येतॄणाममङ्गलाय प्रभवति। वर्णविप्रतिपन्नताया अद्रुशिचकित्स्यत्वेऽपि विषयान्तरमधिजिगमिषूणां वेदं किल जिघ्रतां कृते स्वरविप्रतिपन्नता न शक्या निवारयितुम्। अतो विषयान्तरं गौणीकृत्य द्विजोत्तमैर्विशेषतो ब्राह्मणैर्नूनं वेदोऽध्येय इत्युपर्युक्त-वेद-शास्त्र-वचनाभिप्रायः।

अपरंच—

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्"

इति गीताशास्त्रोपदेशकवत् अनन्यशरणानाम् अहर्निशं निजचिन्तापरायणानामेवोपरि भगवान् वेदः प्रसीदति। अतो विषयान्तर-परिज्ञान-बहिर्मुख-मानसैः "वेदाभ्यासजडः कथं नु विषयव्यावृत्त-कौतूहलः" इत्यादि—कालिदासप्रदत्तजडोपाधिं धारयद्भिरेव वस्तुतो वेदस्योपासनं कर्तुं शक्यते, नाऽन्यैरिति। अपि च—

"संहिता पदं क्रमश्च—इति प्रकृतिः
"जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा मनीषिभिः"

इत्यादि—प्रकृति-विकृति-विलास-संवलितं भगवन्तं वेदम्, अनन्याश्चिन्तयन्त एवाधिगन्तुं प्रभवो नाऽन्य इति निर्विवादम्। अतएव—

"स्त्री-शूद्र-द्विज-बन्धूनां त्रयी न श्रुतिगोचरा
तस्माद् भारतमाख्यानं पुराणमुनिना कृतम्"

इति—भागवतवचनमपि स्त्रीशूद्रादीनां वेदाध्ययनं निषेधति।

"न च शूद्र समाः स्त्रियः"
"न हि शूद्रयोनौ ब्राह्मणक्षत्रियवैश्या जायन्ते"
"तस्माच्छन्दसा स्त्रियः संस्कार्याः"

—इति हारीत धर्मसूत्राणि,

"द्विजस्त्रीणामथ श्रौतज्ञानाभ्यासेऽधिकारिता।
अस्ति शूद्रस्य शुश्रूषोः पुराणेरेव वेदनम्"

——इति सूतसंहितावचनं च

द्विजस्त्रीणां वैवाहिकाग्निहोत्रादि-वैदिकमन्त्रेष्वेव, केवलमधिकारमामनन्ति, नाऽन्यत्र।

"पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते
अध्यापनं च वेदानां सावित्रीवचनं तथा"

—इति स्मार्तवचनं, तदपवादस्वरूपम् असाधारणाधिकारसूचकं युगान्तरविषयम्। आनुपूर्व्यरूपतो द्विजमुखोच्चरितत्वे सति स्वर-वर्णविप्रतिपन्नत्वमेव वेदत्वमित्यवधेयम्। अतो हि—

"तानेव वैदिकान् मन्त्रान् भारतादिनिवेशितान्
विहाय मन्त्रनियमं लोकबुद्ध्या प्रयुञ्जते"

—इत्यादि-स्मार्त्तप्रामाण्यात् द्विजमुखोच्चरितत्वेऽपि स्वरवर्णविभिन्नत्वे वैदिकत्वाभावो लौकिकत्वोदयश्च सम्भाव्यते। तस्मादेव "न जायते म्रियते वा विपश्चित्" इत्युपनिषद्वाक्ये "न जायते म्रियते वा कदाचित्" इति वर्णव्यत्यासं भगवान् व्यासश्चकार। अतः स्त्रीशूद्र-द्विजबन्धूनां वेदाध्ययने नाधिकारस्तदधीतत्वेऽनर्थापत्तिपूर्वक—वैदिकत्वाभावश्चेत्यलं पल्लवितेनेति।

## हिटलरस्य सूक्तयः

निबन्धा—श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः

[ विद्याभूषणः, विद्यावागीशः, विद्यानिधिः ]

भूमण्डलसाम्राज्याकाङ्क्षी जर्मनीदेशस्य हिटलरः पराजितः। स इदानीं भूमण्डलेऽस्त्यपि, नो वा-अत्रापि अन्तिमनिर्णयो दातुं न सुशकः। तस्य यावद् यशः; तावत् स मृतोऽपि जीवति। तस्य पराजयेन † भारतवर्षस्य लाभो जातो नो वा—इति विचक्षणाः स्वयमेव विचारयेयुः। एतदवश्यं वक्तुं शक्नुमो यद् यदि स व्यजेष्यत ॐ; तर्हि तत्कारणेन भारतं न्यूनान्न्यूनमारम्भेऽवश्यं महिष्ठां हानिं प्राप्स्यत्। इदानीं तदीयाः + सूक्तीः 'मेरा संङ्घर्ष' इति तदीय-पुस्तकादुद्धरामः। वयं तासां राजनीतिकमर्थं नादाय धार्म्मिकतात्पर्य्यमत्र वर्णयिष्यामः। आसां सूक्तीनां तत्पराजयेन †सह न नाम कश्चन सम्बन्धः। इमाः सूक्तयः सर्व्वथा सत्याः। तासु कतीनाञ्चित् सूक्तीनां ससमन्वय-

मनुवादं 'सुप्रभात'-प्रणयिनां समक्षमुपस्थापयामः। अन्य-दन्यदा अनूद्येत।

(१) "किञ्चित्प्रणिधाय विविच्यतां यद्-बहुमत-मस्ति किं वस्तु? अनभिज्ञजनतायै समाचारपत्रादिद्वारा या सूचना दीयते, सैवाग्रे 'जनमत'-नाम्ना प्रसिध्यति। विना शिक्षणं जनतायाः कापि सम्मतिर्न जायते। केचित् स्वार्थिनो जना आवरणे यत् किमपि 'प्रेस' द्वारा जनतां शिक्षयन्तो भवन्ति, तदेव 'जनमत'-रूपं कलयति। जनमतस्य एतच्छिक्षायाः कार्य्यं राष्ट्र-सञ्चालकाना हस्ते न, किन्तु तुच्छबुद्धीनां कतीनाञ्चित् स्वार्थिनाम् आन्दोलकानां हस्ते तिष्ठति। फलतो जनमत-निर्म्माणे यन्त्रालयस्य (प्रेस) हस्तः सर्व्वतः प्रबलो भवति,'।—पृ० १९

—हिटलरस्येयं वार्त्ता सर्व्वथा सत्या। अस्माभिर्यन्त्रालय (प्रेस) कार्य्यमुपेक्षितमस्ति। तदैव अस्मद्धर्म-प्रभावोऽपि जनेषु न जायते। अद्यत्वे तत्कारणं यत् साम्प्रतं मुद्रायन्त्रं तदायत्तं जनमतं राष्ट्र-महासभायाः (कांग्रेस) हस्तेस्ति;

(२) 'मम धारणास्ति यद्-जनमतसञ्चीकरणे यन्त्रालयोऽपि तावत् साफल्यं नैति, यावद् बृहत्सभासु दत्तानि व्याख्यानानि साफल्यमश्नुवते॥। अनभिज्ञा शिक्षिता च जनता प्रत्यक्षैरावेशपूर्णभाषणैश्च यथा प्रभाविता कर्तुं शक्यते तथा नोपायान्तरेण। लेखकः कदापि नेता न भवितुं शक्तः। नेतृत्वाय स्वमनोभाव-रागैर्जनताया रञ्जनशक्तो वक्ता सर्व्वत आवश्यकः; कार्य्यमेतल्लेखेन न सिध्यति।—पृ० २१

इयमपि सत्यतरा वार्त्ता। अद्यत्वे 'कांग्रेस' साफल्ये प्रभावशालिवक्तृणां व्याख्यानोपन्यासा अपि महिष्ठं कारणम्। सनातनधर्म्मभिरद्यत्वे इतः प्रणिधानमपसारितम्; प्राक्तनी कथापरिपाटी अपि क्रमशोऽपसारिता; तत्फलस्वरूपे एव अद्य तेषां वचनमपि श्रोतुं कोप्युद्यतो नास्ति।

(३) 'कस्याप्युद्देश्यस्य निष्पत्तये प्रचारमतिशय्य 'नान्योपायोऽस्ति भूतले'—पृ० २१ (ख) 'निरन्तरप्रचारो (प्रोपेगेण्डा) महिष्ठ उपायः। तद्व्याप्रतिः, तदीया-नामेव कतिपयवचनानामनवरतमनुवादे व्यासक्तिर्व्यय जनिकापि फलदायिका वर्त्तते।'—पृ० ३२

सुस्पष्टमिदम्

(४) 'इमे आस्माकीनशत्रवो धर्म्मं राजनीतिं च इत्थं मिश्रयन्तिस्म, येन एषां स्वस्वार्थः सिध्येत्। जनता कामं हन्येत। अशिक्षितजनतायामिदं प्रचार्य्यते स्म यद्-इमे धार्म्मिकसिद्धान्ता भावत्कराजनीतिक-सामा-जिकोन्नतौ बाधकाः सन्तीति'।—पृ० ५०

अत्रापि सर्व्वथा सत्यता। आस्माकीन-धर्म्मशत्रव एव भारतीयजनतायामुक्तं प्रचारितवन्तः। जनतापि च तत्प्रभा-विता तथा स्वीचकार। एवं सति जनताया अपि महिष्ठा हानिर्जन्यमानास्ति; आस्माकीनसनातनधर्म्मस्यापि।

(५) 'इयं तात्त्विकी वार्ता यद्—अशिक्षित जनतायां दार्शनिकास्तत्त्वचिन्तकाश्च न भवन्तीति। तदीय प्रतारणं सरलम्। तस्यां नेयती शक्तिर्यत्—स्वकृते उपयोगिनं नव्यमाध्यात्मिकमार्गं चिनुयात्। ये जना जनतां सनातनमार्गाद् विचलयितुं चेष्टन्ते; ते देशस्य घोरशत्रवः'।—पृ० ५०

इयं वार्त्ता हिटलरस्य वस्तुतः सत्या। अद्यत्वे जनतातो भार-तधर्म्मश्चाव्यते; तत्फलस्वरूप एव जनता भारतीयतात-श्च्युता भवन्ती क्रमशः पाश्चात्य-संस्कृति-संस्कृता जायमा-नास्ति।

(६) 'स्वाभाविकप्रतिभा ईश्वरस्योपहारोस्ति, सा शिक्षाभ्यासेन न सम्भाविनी'।—पृ० ५४।

युक्तताऽत्र।—

(७) 'आर्य्याऽनार्य्यजात्योर्वास्तविकपार्थक्यं तदीयविचार-स्वभावाभ्यां लक्ष्यते। लघुजातयो यत् कुर्व्वन्ति; ताः स्ववैयक्तिक-स्वार्थ-निष्पत्तये। तासां मनोवृत्तेस्तुलना तैः पशुभिः कर्तुं शक्या यदीयं कर्म्म-क्षेत्रम् उदरपूर्ति-दाम्पत्यसम्बन्धान्तमेव सीमितं भवति।

स्वोदरदरीपूर्तिरिन्द्रियतृप्तिश्च-इति द्वे एव कार्य्ये तासाम् ( लघुजातीनाम् )। स्वार्थत्यागस्य परोपकारस्य भावनैव च एकमीदृशं वस्तु, येन मनुष्य-पश्वोस्तथा आर्य्यानार्य्ययोर्भेदः स्पष्टीभवति। स्वपरिवारस्य स्वकीयसम्प्रदायस्य च रक्षायै निम्नजातयोपि युध्यन्ते। किमेडकानां समूहोपि एवं न विधत्ते, यदा तेन ( एडका समूहेन ) स्वसाधारणशत्रुतः स्वरक्षा कर्त्तव्या भवति। परम् तच्छत्रोरपसृतावेव स समूहो मिथ एव द्वन्द्वानि विधत्ते' —पृ० ५४

स्पष्टमिदम्। अद्यत्वे निम्नजातयो यदुत्थाप्यन्ते तत्परिणामस्तदुत्थापकैरुपभोक्तव्यः स्यात्

( ८ ) 'एतद्दृष्ट्वा 'ब्रिटिश' जातेस्तुलना अन्यजात्या न भवितुमर्हति। युद्धसामग्र्यां अपर्य्याप्तायामपि यस्मिन् कस्मिन्नपि युद्धे 'ब्रिटिश' जात्या अवतरणीयं भवति तदीयास्तत्र स्वपूर्णशक्तिं योजयन्ति। ततो विजय प्राप्तये कामं महिष्ठस्त्यागो बलिदानं वा कर्त्तव्यतया आपतेत्; कामं बहु समयपर्य्यन्तं युद्धं चालनीयं भवेद्; एते ( ब्रिटिशाः ) अल्पमपि न विचलन्ति, धैर्यं न त्यजन्ति। एषां मैत्री संसारस्य सर्व्वतोऽधिकमूल्यवद् वस्तु सम्भवेत्' पृ० ६६

वस्तुतो हिटलरस्य इयं वार्तापि तथ्यास्ति। परमत्र स तथा नाऽऽचचार। अत एव पराजेष्ट।

( ९ ) 'जनसमूहे निरक्षरा अशिक्षिताश्च आधिक्येन भवन्ति। एतेऽतिशयितभावुका भवन्ति। तर्कविचारयोर्विचारो न भवति। मनोवेग एवैषां सर्व्वङ्किचित्। ते किञ्चिद् वस्तु श्रद्धाऽऽदरयोग्यं वा ज्ञातुं शक्ता घृणायोग्यं वा। एषु दार्शनिका न भवन्ति; ये नीत्या शत्रुणापि सह हसन्तो हस्तयोजनं कुर्य्युः। अदसीया मनोभावा मौलिका उत्तेजनापूर्णाश्च परं सत्या भवन्ति। ते स्वानुकूला निर्म्मेयाः। एकं विषं विषान्तरेण व्यपोह्यते। कण्टकं कण्टकेनैव निस्सार्य्यते। जनतायां यो विचारो रूढमूलः संवृत्तः; तदपसारणाय ततः प्रबलोऽन्यो विचारः प्रचालनीयः स्यात्।, —पृ० ६७

अवश्यं विचारणीयेयं वार्ता। धार्म्मिक-प्रचारेच्छुभिरिहाऽवधेयम्।

( १० ) आन्दोलनार्थमीदृशवक्तारोऽपेक्ष्यन्ते; ये जनसमाजस्य अन्तस्तलं स्प्रष्टुं क्षमेरन्। अत्र दार्शनिकानां विचारकाणां विदुषां न प्रयोजनीयता"। पृ० ६९

सर्वथा सत्येयं वार्ता; यतो हि दार्शनिकानां जिह्वायां रसाऽभावात् तेन साधारणी जनता प्रभाविता न भवति।

( ११ ) "किमप्यान्दोलनं तदा सफलं भवति; यदा खलु तदीयसिद्धान्तानां रक्षायै तदनुयायिनोऽन्तपर्य्यन्तं योद्धुं सहयोगं वा दातुं सन्नद्ध्येयुः। एषां स्वान्दोलनेन सह एतावत् प्रेम भवेत् यत्-ते आन्दोलनान्तरस्य अस्तित्वं सहेरन्नेव न। तेषां स्वान्दोलनस्य सत्यतायां सत्यपूर्णतायां च एतावद्-दृढविश्वासो भवेद् यद्- मरणं यावदपि ते ततो विमुखा न भवेयुः। येषां स्वान्दोलनेषु एतावद् दृढविश्वासः स्यात्; ते एव प्रतिद्वन्द्विभ्य आन्दोलनेभ्यस्तद्रक्षां कुर्युः।–पृ० ७२

इयं नीतिरद्यत्वे 'कांग्रेसीयेषु' दृश्यते। सनातनधर्म्मिभिरपि स्वधर्म्मेच्छुभिरियमूरीकार्य्या। अस्मत्पूर्वजैस्तु इयं नीतिरेवोरीकृता यद्वशादद्यापि प्रबल विरोधेऽपि अस्मद्धर्म्मो विरोधानुरूपां हानिं न प्रपद्यते।

( १२ ) हिटलरो वक्ति—'एतद् वरीयो जातं यद् आरम्भे आस्माकीना सदस्यसंख्या अभावकल्पा केवलं सप्तपरिमिताऽऽसीत्। अन्यथा आरम्भे एव बहुसंख्यायां सर्व्वे एव स्वसार्द्धतण्डुलकृशरापाकं भिन्नभिन्नतया कर्तुमुद्यन्ते। कोऽपि च कार्य्यक्रमो न निर्मीयते'–पृ० ७४

इयमपि वार्ता सत्यैव। अत एवोच्यते—'अल्पारम्भः क्षेमकरः'।

( १३ ) 'आस्माकीनो नायं सिद्धान्तो यत्–सर्वे पुरुषाः सर्व्वा वा जातयः समा इति। संस्कृति-सभ्यता-

द्यनुसारं कतिपयजातीनां पदं जात्यन्तरेभ्य उच्चं भवति। अयमेव प्रकृतेर्मानवताया वा सनातनो नियमोऽस्ति'। —पृ० ८५

साम्यवादिभिः, 'जातपाततोडकमराडलैः', सुधारकैश्चात्रावधेयम्।

(१४) 'भूतलेऽस्मिन आर्य्यजात्यस्तित्वे एव सभ्यता संस्कृतिश्च निर्विभर्त्ति। यदा इयं जातिः स्वमौलिकश्रेष्टतारक्षात औदासीन्यं कलयिष्यति; तदा संसारस्य सर्व्वेषां श्रेष्ठादर्शानां लोपः सम्भविष्यति। ईश्वरस्य सर्व्वोत्कृष्टरचनां वयमेतज्जातियेषु प्रेक्षामहे' पृ. ८५

परमद्यतनाः सुधारका जना अस्यामनार्यजातीयानां विमिश्रणं कृत्वा तस्याः श्रेष्ठतां लवयन्तः सन्ति।

(१५) "जना इदं विस्मरन्ति यद्–मौलिकसंस्कृतिः, सभ्यता, उच्चादर्शसर्जनशक्तिश्च उच्चतम–विशुद्धरक्तवत्सु जनेष्वेव भवति। एतद्दृष्ट्या जातीयरक्तस्य सर्व्वथा विशुद्धतावस्थापनमेव राष्ट्रस्य प्रथमो धर्मोऽस्ति।' —पृ० ८९

परमद्यतनाः सुधारकाभासा निम्नजातिभिर्व्यवहरन्तस्तामेतां विशुद्धिं परिहरन्तः सन्ति। ते वस्तुतो देशस्य दुरुदर्कं घटयन्तः सन्ति। हिटलरस्य अन्याः सूक्तयः पुनरुल्लिख्येरन्।

# सुप्रभात ! सुप्रभातन्ते भूयात् !!

सुप्रभात ! सुप्रभातन्ते कामयामहे ? बुध्यस्व ! बुध्यस्व !! पश्य, पुरस्तात्प्रतीक्षन्त इमे सोत्कमनसः, भारतीय संस्कृत-समाजेनाऽपि पूज्यपादाः सन्न्यासिनिवहाः, एतेऽन्येऽपि बहवः प्राञ्जलयः पण्डित–प्रकाण्डाः, राष्ट्र–सेवा-सुगृहीत–दीक्षाः, कुलीनाः, धर्मप्राण–धार्मिक–धौरेयाः, संसार–सुख–सन्दोहं सम्प्राप्तुकामा युवकजनाश्च। ब्रुवते चैतेऽपि समवहितेन मनसा सुप्रभातन्ते मन्यन्ते, मन्यन्ते च समादरभरेण चेतसा आशायाः परममालम्बनन्त्वामेव। अपि जानास्येव "त्वयि सुप्ते जगत्सुप्तमुत्थिते चोत्थितञ्जगदिति" तस्मादुत्तिष्ठ, उत्थापय चैतान् बहोः कालान्निद्रापरवशान्स्वकीयानपि।

सोऽयन्ते चिरात्परिचितः प्रख्यात-पण्डितकुल-प्रसूतः, परम-प्रतिभाशाली, श्रीकेदारनाथ शर्मा, पुनरपि ते सम्पादकत्वं चिकीर्षति। परमसावनेक-जन्मजात-सुर-सरस्वती-सेवा-समनुराग–रञ्जितान्तरात्मा, परित्यक्ताशेष-संसार-बन्धन-व्रातः, मुमुक्षुरिव समित्पाणिः, श्रोत्रियन्त्वामेव मुद्रायन्त्रपाणिर्धावतीति न पश्यामो वयं भयस्यावकाश-लेशमपि। अपि तु विविध-विघ्न-जात-विधूनन-क्षम-परमोत्साह-शालिन्यत्र भवत्सेवायाः कृतेऽपेक्षितां पूर्णां साधन-सम्पत्तिं निचाय्य, नितान्तं सन्तोष-भरमनुभवामः।

अवेहि तावत्, महामहिम-शालि-विद्वद्धौरेय-श्रीमदनन्तरामशास्त्रि–चरणकुलालङ्कार–सर्वस्व-श्रीरामलालशास्त्रिमहोदयस्य, परमोत्साह-प्रतिभा-वैभव-सम्पन्नस्य, उपस्थितानन्त-विचिकित्सा-परिच्छेद-क्षमस्य, साहाय्यकमिदं साधन-वरेण्यं प्रथमम्।

अपरञ्च, सम्पादकत्वेन त्वयैवासकृद् गृहीतस्यास्य श्री केदारनाथशर्मणोऽनुभवसि-एत्र हृदयङ्गमत्वम् विषय-विवेचना-पाटव-प्रकारस्य, भावग्राहिताञ्च पद-वाक्यविन्यास-व्यापारस्य, सुविशदत्वं, सुमनोहरत्वञ्च व्याख्यायमान-वस्तु-विवरण-विधेः, सुकुमारमति-साध्यताञ्च व्यस्त-समस्तपदार्थ-जात-विघटन-शैलीनामिति, ततोऽपि सर्वातिशायी सकल-प्रत्यूह-प्रशमन-प्रगल्भः, युवक-जन-श्लाघ्यः सुहृदश्च सुप्रभात-सङ्घ-सदस्यानां समुत्साह-पादप-इत्यादि स्मारं-स्मारं वयन्तु मन्यामहे अवतीर्य त्वमनन्त-कालात् प्रार्थितं संस्कृत-समाज-मनोरथ-निकरं वितरन् महते कल्याणाय सम्पत्स्यसे।

कामयन्ते चैते काशीस्थाः संस्कृत-शिक्षा-गृहीत-दीक्षाः, मेधाविनो विद्यार्थिनो जनास्त्वदुपदिष्ट-पन्थानमनुधावितुम्। निर्भयं समादिशैतान् स्वकीयानिति सर्वं पठन-पाठन-विधेय-विधिम्। कर्तव्यञ्च कमनीयं काले-काले करणीयम्। एतेषां पारस्परिक-सौहार्द-संवर्धनायापि यतनीयमस्ति। अन्यथा विद्यमानेऽपि त्वयि यदि न भवेत्सौमनस्यं कथमन्यथा तदायत्तं संघटनादिकं संघटेत। संघटनाऽधीना एवाद्यत्वे जगतां सर्वे व्यवहाराः प्रतिभान्ति। अतोऽत्र नोदासितव्यं कथमपि त्वयापीति प्रार्थयमानो विरमति—

**—कालीप्रसाद मिश्रः**

हिन्दू-विश्व-विद्यालयीय-प्रच्यविद्या-विभागाध्यक्षः

# राधा-माधव-विलासः

**[ काव्यम् ]**

महाकवि विहारी-पद्यैः कृत-संवादम्

प्रणेता—श्रीहरिनाथ कविः, दर्शनाचार्यः

आलिङ्गितमनुगतमतिचुम्बित-
मधिवृन्दावन-कुञ्जम् ।
धाम नमामि दुरित-निवहस्य
शमाय सुमरकत-पुञ्जम् ॥ १ ॥

भव-बाधां शमयतु मम
राधा-माधविकालम् ।
यत्तनुद्युतिमवगम्य हरि-
र्हरितो हरति श्रमजालम् ॥ २ ॥

यदि माधव-मनने मति-रधिका
रतिरक्ता सविलासा ।
राधा-माधव-विलसन-कविता
पठनीया सविकाशा ॥ ३ ॥

पीताम्बरवर-कर-मुरलीधर
पिच्छमुकुट-शिरधारी ।
वसतु सदा मम मानस-
मधिवृन्दावन-चारी ॥ ४ ॥

मकराकृति-कुण्डल-मण्डित-
वर-गण्ड-युगं दनुजारेः ।
वदति मीन-केतन-संगतमिव
मानसमद्य मुरारेः ॥ ५ ॥

कंस-निषूदन-तनुरनु गच्छति
पीत-वसन-परिधाना ।
सातप-शक्र-नील-गिरि-शोभां
दिवसमुखेऽनुपमाना ॥ ६ ॥

हरि-विम्बाधर-सङ्गतिमेत्य
नयन-पट-कान्ति-वितानैः ।
हरित-वंश-वंशी-हरि-
धनुरिव भाति सुभानु-वितानैः ॥ ७ ॥

का न कथा समशिक्षि कुलव्रत-
मत्र बधूरनुवेलम् ।
का न जहौ मुरली-ध्वनिना
कुलरम्यपथं ह्यनुवेलम् ॥ ८ ॥

गोपालोरसि लसति सखे
गुञ्जा-विमलद्युति-माला ।
बहिरुद्गच्छति पीत-दवानल-
सुभग-शोण-रुचिमाला ॥ ९ ॥

मनसा वयसा तनुकान्तिभरेण
सदैक इवाप्रतिमानम् ।
आलोकयितुमलं न किशोरयुगं
नयनं युगमानम् ॥ १० ॥

---

(१) माधवस्य माधविका इव माधवानुगता राधा, मम भवबाधामलं शमयतु । समेत्यनेन सम्बन्धोक्तिः । तेन बाधा-शमनस्य नित्यता व्यज्यते ।

(२) हरिः यत्तनु द्युतिमवगम्य हरितः श्रमजालं हरति । तनुद्युति मवगम्येत्यनेन सम्बन्धाभिव्यक्तिः । तेन भवबाधा शमनयोग्यता प्रतीयते । अत्र तद्गुणालङ्कारः ।

(३) रतिरक्तमतिभिर्माधवानुरक्तमतिभिश्चायं समं सेव्यो राधा-माधव—विलासः, मोक्षफलत्वात्, रसास्वादाधायकत्वाच्चेति भावः ।

(४) मोर-मुकुट कटि काछनी कर मुरली उर माल ।
इहि बानक मो मन वसै सदा विहारी लाल ॥

(५) मकराकृत गोपाल के कुण्डल सोहत कान ।
धस्यो मनो हिय गढ़-समर ड्योढ़ी लसत निशान ॥

(६) सोहत ओढ़े पीत-पट स्याम सलोने गात ।
मनो नील मणि-शैलपर आतप परौ प्रभात ॥

(७) अधर धरत हरिके परत ओठ दीठि पट जोत ।
हरित बाँस की बाँसरी इन्द्रधनुष दुति होति ॥

(८) किती न गोकुल-कुल-वधू काहि न किं हि सिखदीन ।
कौने तजी न कुल-गली ह्वै मुरली-सुरलीन ॥

(९) सखि सोहत गोपाल के उर गुञ्जन के माल ।
बाहर लसत मनों पिये दावानल की ज्वाल ॥

(१०) नित प्रति एकत ही रहत बयस वरन मन एक ।
चहियत युगल-किशोर लखि लोचन-युगल अनेक ॥

# श्री काशी-राजवंशेतिहासः ।

लेखकः—श्री देवीनारायण शास्त्राचार्यः, विद्यासागरः एडवोकेट, काशी ।

शोकं विधेहि नहि भारत-भृङ्ग ! नूनं !
यत्पारतन्त्र्य-रजनी-गत-पद्म-बद्धः ।
भूयो भविष्यति चिराय सखेऽधुनैव
स्वातन्त्र्य-सूर्य-किरणारुण-सुप्रभातम् ॥
—शेशः

अस्ति समस्त-नगरी-तिलकायमाना, शश्वदगण्य-मन्दिर-मठ-पाठशालादि-विभूषिता, भगवती-भागीरथी-तीर-शोभिता, श्रीविश्वनाथ-पद-पद्म-पराग-रञ्जिता, वाराणसी नगरी ।

विश्वेश्वरो यत्र न तत्र चित्रं धर्मार्थ-कामामृत-रूप-रूपः,
स्वरूप-रूपः स हि विश्वरूपस्तस्मान्न काशी सदृशी त्रिलोकी॥

महाकवि-श्रीहर्षोऽपि नैषधीये महाकाव्ये—

वाराणसी निविशते न वसुन्धरायां
तत्र स्थितिर्मखभुजां भुवने निवासः ।
तत्तीर्थ-मुक्त-वपुषामतएव मुक्तिः
स्वर्गात्परं पदमुदेतु मुदे तु कीदृक् ॥

इतिहास-तत्वज्ञैरपि काशी-नगर्याः प्राचीनत्वं स्वीकृतम्। डाक्टर-हावेल-शेरिङ्ग-ग्रीव्जादि-पाश्चात्य-काशीतिहास-लेखकैरपि अस्याः भूरि प्रशंसा कृता ।

काशी-बौद्ध-धर्मस्यापि आदिभूमिरासीत् । भगवान् बुद्धः, स्वधर्म-प्रतिपादनाय-अत्रैव प्रथमं समागतः । अस्यां मृगदावने (आधुनिक-सारनाथे) स्व-शिष्यान् निजधर्मे दीक्षयामास ।

भगवान् बुद्धोऽपि निजाद्वैतवाद-सिद्धान्त-प्रचारार्थं, बौद्धधर्म-खण्डनार्थं, कापालिक-कर्मकाण्ड-पाखण्डादिनिवारणार्थमत्रैवोपस्थितोऽभूत् ।

प्राप तापसवरः स हि काशीं
नीप-कानन-परीत-समीपाम् ।
आपगा-निकट-हाटक-चञ्चद्-
यूप-पङ्क्ति-समुदञ्चित-शोभाम् ॥

काशीनगर्याः राजनैतिकमहत्वमपि दृश्यते । श्रीमद्भगवद्गीतायामुक्तम्—"धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान्" रामायणे, महाभारते तथा पुराणेतिहासादि-ग्रन्थेषु च काश्या राजनैतिक-गौरवं विस्तृत-रूपेण वर्णितम् । यवनराज-कालेऽपि अस्याः राजनैतिकं महत्वमासीत् । बाबर-हुमायूं-अकबर-जहांगीर-शाहजहां-औरङ्गजेबादि-मोगलसम्राजः स्व-स्व-राज्य-स्थापनाय तस्य दृढीकरणाय च अत्रागत्य सफलीबभूवुः ।

वृटिश-राज्य-स्थापनारम्भेप्यस्या राजनैतिकं गौरवमद्भुतमासीत् । क्लाइव-वारेन-हेस्टिङ्गादिभिरनेकैः वृटिश-कूटनीतिज्ञैर्भारत-शोषण-नीति-विष-वृक्षस्य प्रथममस्यामेव वाराणस्यां वपनं कृतम् । ज्ञायते सर्वैरपि वारन्हेस्टिंग-चेतसिंहयोः काण्डम् ।

आधुनिक काशीराज-वंशस्येतिहासोऽपि नितरां मनोरमोऽस्ति । एतद्वंशस्य प्रधानः-पूर्वपुरुषः श्रीकृष्णमिश्रोऽभूत्। एतद्वंश-जाताः श्रीचेतसिंह-राजा महीपनारायण सिंह—राजा उदित नारायण सिंह—महाराज ईश्वरी प्रसाद नारायण सिंह—महाराज आदित्यनारायणसिंहाः काशी-राजान अभूवन् । महाराज-आदित्यनारायणसिंहस्य दत्तकपुत्रोऽयमतीव मेधावी, शान्तो दान्तो वदान्यो महाराजो विभूति नारायण सिंह-देवशर्मा साम्प्रतं राजसिंहासनमध्यास्ते ।

काशीराज-वंशस्येतिहासो निम्नलिखित-श्लोकैः सम्यग् ज्ञायते ।

श्रीमद्गौतम-वंश-भूषण-मणिरत्रैलोक्य-रक्षामणिः
क्षोणां कान्त-मणिर्वनीपक-जन-प्रख्यात-चिन्तामणिः ॥
पौत्रः श्रीमनरञ्जनस्य मनसारामात्मजः श्रीयुतो
वीरः श्रीवरिवन्ड (बलिबन्ध) सिंह-नृपतिर्ववर्ति सर्वोपरि ॥
यश्चतुर्दिक्षु काशीतः सौराज्यं कुरुतेतराम् ।
मान्धातेव धराधीशो येन राजन्वती मही ॥
कातरः शूरतां याति क्रियावानलसो भवेत् ।
वरिवण्ड-कथां श्रुत्वा जयमाप्नोति मानवः ॥
अनश्रमभवद्योम प्रसन्नं हरितां मुखम् ।
पुंसां हृदि सुखं जज्ञे बलिबन्ध-समुद्भवे ॥
तस्य पाणिगृहीतायां चेतो नामाऽभवत् सुतः ।
यस्ताते स्वर्गते राज्यं वर्षाण्येकादशाऽकृत ॥

तं न्यायेन निराकृत्य दौहित्रोऽभून्महीपतिः ।
रोगी कम्पादिव कराच्च्यावयन् वसुधा-सुधाम् ॥

तदात्मजोऽभुदुदित नारायण उदित्वरः ।
परान्धतमस-ध्वस्त-धरोद्धरण-जित्वरः ॥

अथेश्वरीप्रसादादिनारायण इति श्रुतः ।
यः शासद् बुद्धिधर्माभ्यां धरणीमकृतप्रियाम् ॥

चिकीर्षितमकृत्वैव सप्तत्यपि स हायनैः ।
दिने वर्षार्क-राकायाः पुरन्दर-पुरं गतः ॥

मनोरथस्य मध्येऽध्वं सहितोऽस्य धुरन्धरः ।
अभूदयं महाराजः प्रभुनारायणाभिधः ॥

काशी–राज्य-संस्थापको वरिबण्ड-सिंह-नृपतिः, सिंह इव प्रतापी बभूव । तेन निज-बाहु-बलेन षण्णवति ( ९६ ) परगना-विस्तृतं महत्साम्राज्यं स्थापितम् । स तु सन् १७७० खीष्टाब्दे दिवं गतः । तस्य पुत्रो राजा चेतसिंहः राज्य-सिंहासनमारुरोह । बृटिश-गवर्नर-जेनरल-वारन-हेस्टिङ्ग-महोदयस्तस्य समृद्धिं दृष्ट्वा तस्य शोषणार्थं काशीमागतः। चेतसिंहस्तद्भयात् शिवालय-घट्टतः पलायनं चकार, ग्वालियर-राज्ये च शरणं प्राप्तवान् । तद्विषये बृटिश-पार्लमेण्ट-सभायां वारन - हेस्टिङ्गस्योद्धत-कृत्येऽस्मिन्नभियोगश्चालितोऽभूत् । परन्तु स न्यायाधीशैर्निरपराधः कृतः । तत्पश्चाद्राजा महीपनारायणसिंहो वरिबण्डदौहित्रो राजाभूत् । तस्मिन्समये बृटिश-शासकैस्त्रिनवति-परगना-विस्तृतं राज्यं निगलितम् । केवलं त्रिपरगना-परिमितं राज्यं महीपनारायण सिंहाय प्रदत्तम् । सोऽपि १७९५ खिष्टाब्दे परलोकं गतः । तत्पश्चात् महाराज-उदित नारायण सिंहो राज-पदवीं लब्धवान् सोऽपि १८३५ तमे खिष्टाब्दे वैकुण्ठवासी बभूव । ततो महाराज ईश्वरीप्रसादनारायणसिंहः काशीश्वरोऽभूत् । सोऽत्यन्तं धर्मिको राजा आसीत् । पारसी-संस्कृत-तुलसी-साहित्यस्य प्रकाण्ड-पण्डितोऽभूत् । श्रीरामलीलायाः समुचितं दर्शनीयञ्च प्रबन्धं कृतवान् । अधुनापि राजकीय-पुस्तकालये-अनेकानि-अद्भुतग्रन्थारत्नानि सन्ति । तस्य काशीलाभः, १८९९ खिष्टाब्दे समभूत् । तदनन्तरं तस्य भ्रातृ-पुत्रः प्रभुनारायणसिंहो महाराजो बभूव । स तु विख्यातो विद्वत् प्रियः, महान् पण्डितोऽप्यासीत् । तेन वेद-वेदान्तादि-शास्त्रं समीचीनतया अधीतम् । स्वस्य राज्यस्याऽपि समुन्नतिः कृता । तस्मै १९११ तमे खीष्टाब्दे बृटिश-सम्राट् स्वतन्त्र-शासनाधिकारं दत्तवान् । १९३१ तमे खिष्टाब्दे च वाराणस्यामागत्य "ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्' इत्युच्चारयन् शिवलोकं गतः । तस्य पुत्र आदित्यनारायण सिंहो महाराज-पदवीं लब्धवान्, तेन योग्यतया राज्य-शासनं कृतम् । तस्य पुत्रो नासीत् । तस्मात् स विधिपूर्वकं शास्त्रानुसारेण महाराज-विभूतिनारायणसिंहं दत्तक-पुत्रत्वेन प्रतिगृहीतवान् । स तु साम्प्रतं राजकुमार-विद्यालये अजयमेरु ( अजमेर ) नगरे शिक्षां प्राप्नोति । स खलु अत्यन्त-प्रतिभाशाली, वर्धिष्णुः, वाग्मी, परिश्रमी धर्मपरायणश्चाऽस्ति। श्रीकाशीस्थविद्वद्भिरपि धर्मिकतायां राज्य-योग्यतायाञ्च सर्वथा-प्रशस्यमान-महिमा विद्यते । वयं काशीस्थाः सर्वेऽपि नागरिकास्तस्य सर्वथाऽभ्युदयं दीर्घायुष्ट्वं लोकोत्तर-प्रतिभाप्रकर्षञ्च कामयमानाः श्री काशी-विश्वेश्वरमभ्यर्थयामहे ।

---

## लाला-पद्मम्

( १ )

राधाङ्गाधाररागद्रुतिततिभिरहो यन्महो नाध्यगच्छ–
न्नावापद्मा प्रवातैर्बहलपरिमलैः क्षालनादच्छलक्ष्मीम् ॥
कालिन्द्याः कृष्णतृष्णं तटनिकटतम-स्तोम-संक्रान्तकायं
विच्छायं स्वार्थसार्थैर्विमलयतु मनस्तज्जलं कज्जलं मे ॥

( २ )

धन्यो वन्यलताया गन्धं वहतीह गन्धवहः ।
परिमलमुद्यानलता केनोपायेन गोपायेत् ? ॥

( ३ )

सत्त्वान्तराद् भयं स्यात्तस्याः कस्मादकस्मादपि ।
क्रीडति राधाऽरण्ये हरिणा सार्धं निशार्धपर्य्यन्तम् ॥

—श्री जानकीवल्लभशास्त्रिणः

## हन्त ! उपद्रुतोऽयमायुर्वेदः !!

लेखकः—श्रीलालचन्द्र शास्त्री, सारस्वतः, आयुर्वेदाचार्यः

भद्रं कर्णेभिः शृणुयामः। भव्यस्य सुप्रभातपत्रस्य सुप्रभातं भूयात्, सुयोग्यस्य सोत्साहस्य तत्सम्पादकस्य श्रीकेदार-नाथशर्मणः-सारस्वतस्य, तद्व्यवस्थापकस्य रामलाल शास्त्रिणः, तथान्येषां च सर्वेषां शुभसंकल्पवतां तत्संरक्षकाणाम् सहायकानाञ्च–इति शुभकामनया सहैव सञ्चार्यते लेखनोत्सुका लेखनी लेखलेखनाय; लेखनाय च सुहृदयानां सहृदयानां हृत्पत्रेषु भारतीय-भारती-भव्य-भवनस्य मान-चित्रस्य, वर्तमानाया दशायाश्च। यस्मिन् समयेऽस्य निर्माणमभूत्; तदास्य समभूत् कापि शोभा दर्शनीया स्पृहणीयाऽतिरमणीया च। परन्तु-इदानीं तदिदं जातं जीर्णं शीर्णं विकीर्णं च, यद्दर्शं दर्शं विदीर्यते हृदयम्, प्रमश्यते मनः, वंभ्रम्यते बुद्धिः, विघूर्ण्यते शिरः, चंकम्पते वपुः, यत्स्मारं स्मारं लेखनी स्रंसते हस्तात्, त्वक् चैव परिदह्यते, वेपथुश्च शरीरे मे रोमहर्षश्च जायते। हन्त! अधुनाऽपि न शाम्यन्ति शत्रवः, न विरमन्ति वैरिणः ! हा हन्त !! परिवार्यते परितः परिपन्थिभिः। एकतः आरव्य-पारस्य-साहाय्य-संयुक्ता उर्दू, अन्यतो राजकीय-सत्ता-सम्वलिता इंग्रेजी, परतो दंष्ट्राकरालं विकरालं वदनं व्यादाय ग्रसितुमिव प्रवृत्ता हिन्दुस्तानी, केवलमवशिष्टैका दिक्; यत्र स्थितः करुणा-वरुणालयो भगवान् भूत-भावनः करौ प्रसार्य परिपालयत्येवेदं-भारतीय-भव्य-भारती-भवनम्!!!

बाह्यतो लेखनी-खनित्रैः खन्यमानमपि, व्याख्यान-वज्रैः विदार्यमाणमपि समाचार-पत्र-प्रचार-परिधैः पात्यमानमपि यदि दृश्यतेऽन्तः प्रविश्य; तदा दृश्यतेऽस्यातीव कमनीया कान्तिः, देदीप्यमाना प्रभा, वैभवमयं वैभवं, अतिविस्तृतोऽस्य विस्तारः,। यथा विराजि चतुर्दश भुवनानि, तथाऽस्मिन् चतुर्दश-विद्या-रूपाणि चतुर्दश-प्रकोष्ठानि, चतुः षष्टि-कला-रूपाश्चतुःषष्टि-संख्यकाः कक्षाः। न जाने तत्र कियन्ति सन्ति अन्यानि कक्षान्तराणि; यानि द्रष्टुमपि न पार्यन्तेऽतिविशाल-त्वात्, अधिगन्तुमपि न शक्यन्ते समयस्याल्पतया, तत्र विश्रमितुमपि न सह्यते क्षणमपि बहुभिः कारणैरन्यैः। तथापि दृष्टोऽस्माभिरेकः प्रकोष्ठ आयुर्वेद-नामधेयः, तस्य अष्टौ कक्षाः सन्ति, ताश्च यथा–शल्यं, शालाक्यं, कायचिकित्सा, भूत-विद्या, कौमारभृत्यम्, अगदतन्त्रं, रसायन-तन्त्रं, वाजीकरण–तन्त्रञ्चेति। तत्रापि काय-चिकित्सा-कक्षायाः षट् कक्षान्तराणि आसन्। तानि यथा–अग्निवेशतन्त्रम्, भेलतन्त्रम्, जतूकर्ण–तन्त्रम्, पराशर-तन्त्रम्, हारीततन्त्रम् क्षारपाणितन्त्रञ्च। तत्र भेलतन्त्रं नाम कक्षान्तरं यद्यपि भग्न-भित्तिकं, त्रुटित-तोरणम्, दलित-देहलीकं, विच्छिन्न-प्रच्छन्नं चोपलब्धं, तथापि तदतीव मनोहरमिति मत्वा प्रमुदितमपि मनो मलिनमेव भवति। हारीत-पराशर-तन्त्रयोस्तु स्वरूपमेव परिवर्तितमिति त एवेति वक्तुमपि विशङ्कते बुद्धि-र्बुद्धिमतां केषाञ्चित्। वयन्तु यद्यपि ते दुर्दैववशात् विकृते; तथापि त एव त इति मन्यामहे निर्विशङ्कमिति। जतुकर्णक्षा-रपाणि-संज्ञितयोः संहितयोस्तु इतस्ततो विकीर्णानि कानिचित् वाक्यानि, पाषाण-खण्डानीव भग्नावशिष्टानां, विलोक्यन्ते।

शिष्टमेकं कक्षान्तरं चरकापरपर्यायं अग्निवेश-तन्त्रम्, महर्षिचरक-प्रतिसंस्कृतम्, पञ्चनदीय-दृढबल-परिपूरितम्। अस्य मनोहरता हरति हठात् मनो मनस्विनां मनन-शीलानाम्। "यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्" इति घोषणा, घोषयति भेरीघोषेण यद् आप्तजन-पूजितत्वात् पावनं पावनानाम्, गुणि-गण-गृहीतत्वात् गौरवणाग्रगण्यं ग्रन्थानाम्, यत् सर्वभूत-हितैषितया "संहिता" इति सार्थकं नाम विभर्ति। तदस्माकं सौभाग्यतया सुरक्षितं तिष्ठति दैवरक्षितं हर्म्यमिव दूरादवलोक्यमानं सौधमिव सुधालितं, सुधीभिः सहर्षं दृश्यमानं, वियति विततं विशदं वितानमिव विस्तीर्णे आकाशे, धन्यम्मन्यैर्धन्यैः दोधूयमानं त्रिरंगं ध्वजमिव विराजमानं, सुभाषमिव सुभाषितैः सुभाषितं भारतीया यत् समाद्रियन्ते भिषजः। यद् दर्शं दर्शं प्रहृष्यामो वयम्, वयमिव चान्येऽपि स्वदेशीयाः परदेशीयाश्च विद्वांसः प्रहृष्यन्ति-इति नाविदितचरं विदित-वेदितव्यानां विद्याभ्यसन-व्यसनिनां विदुषामित्यलं प्रशंसितस्य प्रशंसनेन।

तस्मिन्नेव महति भवने भ्रमता ससंभ्रमं सुश्रुत-संहितानाम-धेयं कक्षान्तरं दृश्यते, यत् भगवता धन्वतरिणोपदिष्टं सुश्रुतञ्च सुश्रुतेन, यच्च शल्याङ्गमङ्गैरपरैरुपेतं आशु-क्रिया-करणात्

यच्च शस्त्र-क्षाराग्नि-प्रणिधानात् सर्व-तन्त्र-सामान्यात् अष्टास्वपि आयुर्वेद-तन्त्रेषु अधिकमभिमन्येत सर्वैरपि सुधीभिः। यस्यान्तः प्रविश्य पठन-पाठन-मनन-चिन्तनादिभि-र्विलोकनेन मोमुद्यते मनः, हृष्यते हृदयम्, अंच्यते रोमभिः, एवमेतत्संहिताद्वयं, सूर्याचन्द्रमसौ वा ग्रन्थ-गण-गगनस्य, चक्षुषी वा प्राणिलोकस्य, अश्विनीकुमारौ वा सुरसंघस्य, अग्नीषोमौ वा समस्तस्य जगतः।

अनुश्रूयते यद् परःसहस्रेभ्यो वर्षेभ्यो भारतीय-भवन-भञ्जनाय परैः प्राद्रियत त्रिविधम्। परन्तु इतो द्वि-शताब्द्याः प्रवृत्ते वृटिशशासने, घोषित-संस्कृत-संरक्षणाश्वासने, अन्येषां-न्याय-वेदान्त-ज्योतिष साहित्य-व्याकरणादीनां परीक्षाप्रबन्धा-दिभिरुपायैः-कृतेऽपि यथाकथमपि संरक्षणे, वाराणसेय-संस्कृतकालेज-नाम्नि विद्यालये, लवपुरीय-ओरियन्टल-कालेज-नामके च विद्यालये, एवमन्यत्रापि द्वित्र-स्थानेषु कृतेऽपि पठन-पाठन-परीक्षादि-प्रबन्धे, तदर्थं धन्यवाद-प्रदानाय प्रवणेऽपि अन्तः करणे, सविषादं लिख्यते यत् किमत्र रहस्यम्? कोऽत्राभिप्रायः? किंवा अत्र कारणं? कुतो न क्रियते तत्रायुर्वेद-पठन-पठनादि-प्रबन्धः? आस्तां-तत्, अन्यैरपि आयुर्वेदोद्धाराभिलाषिभिः सञ्चालितानां विद्यालयानां किञ्चिदपि प्रोत्साहनं न प्रदीयते, यदि प्रदीयते तर्हि तेभ्य एव; ये खलु एलो-पैथी-पथ-पथिकाः सञ्जाताः, नापि च ज्ञात्वापि, दृष्ट्वापि, श्रुत्वापि, जनतारोग्य-सम्पादनोप-योगितां आयुर्वेदस्य, विविध-व्याधि-विघातने सिद्ध-हस्तानां गुडूची-वासकादिद्रव्याणां गद-गञ्जने प्रदर्शित-दिव्य प्रभावं स्वभावं व्याश्वास्यत वृटिश-शासकैः। अतः परं कः खेदावसरो यत् वैद्येन निशुल्कं चिकित्सितस्यापि राजकर्म-चारिणोऽवकाश-ग्रहणे प्रदत्तस्य प्रमाण-पत्रस्य तावत् स्वीकृतिर्न भवति, यावत् कश्चित् एलोपैथी-डाक्टरः शुल्कं गृहीत्वा तत्र हस्ताक्षराणि न करोति-इति नाविदितं निवेद्यते। तथापि कीदृशो वर्त्तते भारतीय-वैद्यानां आयुर्वेदेन सह व्यवहार-इति भवन्तस्तत्र भवन्तो विद्वांसः किं शुश्रूषन्ते! शुश्रूषा चेद् शृण्वन्तु, श्रावयामि सन्न-सन्नेन, खिन्न-खिन्नेन च चेतसा—

निखिल-भारतीय-वैद्यैः सस्नेहं सोल्लासं ससम्मानं च निखिल-भारतीय-वैद्य-सम्मेलनस्य वार्षिकोत्सवेषु द्वि-त्रि-वारं सभापतित्वे प्रतिष्ठापितेन, "अयं बालकः, आयुर्वेदस्योद्धारं करिष्यति-' इति तदीय-पितामह-द्वारा-सम्भावितोज्वल भविष्यता, सत्यमेव तथा विधेन, प्रथितयशसा महामहो-पाध्यायेन गणनाथ सेन-महोदयेन यद्यपि एकया दृष्ट्या आयुर्वेद-विरोधिनामग्रे आयुर्वेदीय-पक्ष-समुपस्थापनेन आयुर्वेदस्य महान् उपकारः कृतः; परञ्चान्यया दृष्ट्या प्रत्यक्षमेव परं प्रमाणं मन्यमानया, पाश्चात्यैः प्रणीतस्य मानवशरीर-शास्त्रस्य आनुकूल्येनैव भारतीयायुर्वेदीय-शारीर-शास्त्रस्य प्रामाण्यं तद्विरुद्धस्य चाप्रामाण्यं पश्यन्त्या, प्रत्यक्षशारीरोपोद्घाते चरक-सुश्रुतौ-अनार्षौ "शारीरे सुश्रुतो नष्ट" इत्यादि लेखितुं विवशीकृतेन, एतादृशं वातावरणं समुत्पादितम्, यत्प्रभाव-प्रभाविता केचित्, आयुर्वेद-हितैषिणोऽपि आयुर्वेद-प्रेमिणोऽपि, आयुर्वेदा-भ्युदय-कांक्षिणोऽपि सशंकमवलोकयितुं लग्ना आयुर्वेदम्-इत्यलमधुना, केवलमेकमुल्लेखनीयं विषयमुल्लिख्य समाप्यते-अयं लेखः।

ईसवीये १९२७ तमे वर्षे आयुर्वेद-यूनानी-संज्ञकयोः देशीय-चिकित्सा-पद्धत्योः, अभ्युदयाभिलाषिणा (जस्टिस) गोकर्णनाथमिश्र-महाशयेन "इण्डियन-मेडिसन-बोर्ड" संज्ञका, राजकीय-संस्था संस्थापिता। तस्याः सर्वेऽपि सदस्या युक्तप्रान्तीया एव वैद्याः, हकीमाश्च सन्ति। ते च सर्व एव आयुर्वेदोत्कर्ष-दर्शनलालसाः, परमादरणीयाः सन्ति। अस्तु तावत् एतस्याः संस्थाया इदमेव कर्तव्यं कर्म यत् युक्तप्रान्तीय-चिकित्सकानां चिकित्सकत्वेन नाम स्वीकृतिः, विद्यालयानां स्वीकृतिः, पाठ्यक्रम-निर्धारणञ्चेति। एतया संस्थया एतादृशः पाठ्यक्रमो निर्धारितः, यत्र डाक्टरी शिक्षायाः प्राचुर्यम्, बाहुल्यम् प्राधान्यञ्च वरीवर्त्ति, येन मरीमर्त्ति आयुर्वेदः, तरीतर्त्ति डाक्टरी; या तच्छात्राणाम् तत्स्नातकानां तत्प्रोत्साहकानां च मानस-रंग-मञ्चेषु नरीनर्ति। एवमेव मोहमयी प्रान्तेऽपि राष्ट्रिय-मन्त्रि-मण्डलेन आयुर्वेद विषये तादृश एव पाठक्रमो निर्धारितः यदनुसारं मैट्रिकुले-शनोत्तीर्णा एव छात्राः, आयुर्वेद-विद्यालेषु प्रवेशमवाप्तुं शक्नुवन्ति, नान्ये व्याकरणाचार्या वा साहित्यचार्या अपि संस्कृतज्ञाः। हा! हन्त!! कीदृशी विचारधारा सञ्जाता भारतीयानां अधिकारिणाम्? निकटे भविष्यति कालेऽपि यदि ईदृशी एव अवस्था वर्त्तमाना भविष्यति, तर्हि का नाम दशा भविष्यति आयुर्वेदस्य-इति सुदृढं विचारणीयं सर्वैरपि सुधी-धौरेयैः—इति।



## संस्कृत-समाचाराः

### प्रान्तीय-संस्कृताध्यापक-मण्डलम् ।

काशीस्थ-राजकीय-परीक्षावसरे, महाराज्ञीदरभङ्गा-स्थापिते राममन्दिरे युक्तप्रान्तीय-संस्कृताध्यापक-मण्डलस्य विशिष्टाधिवेशनं श्रीमतां दर्शनाचार्याणां विद्यावयोवृद्धानां श्रीमत्पण्डितप्रवर-बालबोधमिश्रमहोदयानां सभापतित्वे समजनि । तत्र च विविधाः प्रस्तावाः समभूवन् । तेषु च महत्वपूर्णोऽयं प्रस्तावः, प्रान्तीय-शिक्षाधिकारिणामवधानदानाय सुप्रभाते प्रकाश्यते । प्रार्थ्यन्ते च सुप्रभात-सम्पादका यत्ते तेषामत्रावधानाय प्रवलं प्रयतन्तामिति ।

प्रस्तावः—

"संयुक्तप्रान्तीय-संस्कृताध्यापकमण्डलस्येदं विशिष्टाधिवेशनम्, एतत् प्रान्तीय-शिक्षाधिकारिणः सादरं सप्रश्रयं समनुरुन्धे-यत् अष्टत्रिंशदुत्तरोनविंशतितमे खीष्टाब्दे समायोजितया शिक्षा-सुधार-समित्या पञ्चशतानां संस्कृताध्यापकानामन्येषाञ्च संस्कृताभ्युदयाभिलाषिणां मतानि सङ्गृह्य, तन्मतानुकूलं यद्धि काशिक-राजकीय-संस्कृत-शिक्षा-पाठ्य-परिवर्तनं महता परिश्रमेण, सततमनोयोगेन च संस्कृतच्छात्राणां सर्वाङ्गीण-श्रेयःसम्पादक संस्कृतभाषायाः शाश्वतिकाभ्युदयकरं विहितमासीत् ; तद्धि साम्प्रतं यावत् बहुशोऽनुरुद्धैरपि तत्कालीन-वैदेशिक-शासक-शिक्षाधिकारिभिः संस्कृतोपेक्षकैः कथं नैव परिणतमकारि, प्रत्युत; किञ्चित् परिवर्तितमपि पाठ्य-विधानं परिहृत्य पुनरपि प्राचीनतमा पाठ्य-पद्धतिः प्रचारिता ।

"तत् सम्प्रति पुनःसम्भावितं राष्ट्रीय-मन्त्रिमण्डलं पुनरपि द्रुतमेव कार्ये परिणमयितुं शिक्षाधिकारिणो यतन्ताम्, येन चास्मिन्नेव वर्षे समागामिन्यां १९४७-ईशवीय-परीक्षायां तत्कार्यकरं स्यात् । यतो हि एतत् प्रान्तीय-संस्कृत-शिक्षा-पाठ्य-पद्धतिपरिवर्तनम्, सर्वत्रैव भारतवर्षे संस्कृत-शिक्षा-पाठ्य-पद्धति-परिवर्तनस्य मार्गदर्शकं स्यादिति सुनिश्चितं विद्यते ।"

—प्रधान मन्त्री,

युक्तप्रान्तीय-संस्कृताध्यापक-मण्डलम्, काशी ।

## सुप्रभातस्योद्घाटन-महोत्सवः ।

फाल्गुन-कृष्ण-प्रतिपदि रविवासरे सुप्रभात-कार्यालयस्योद्घाटन-महोत्सवः, काशी-लाहोरीटोलास्थ-बसोहलीभवने सायं पञ्चवादनसमये महता समारम्भेण सम्पन्नम् । पुष्पमालादिभिः सुसज्जिते कार्यालये, काशीस्थप्रधानवैदिकैः, विद्वद्भिः, नागरिकैश्छात्रैश्च समापूरिते, श्रीमन्तः पूज्यपादाः 'सन्मार्ग'-प्रवर्त्तकाः श्रीकरपात्रिमहोदयाः, 'हर हर महादेव'-घोषेण सह समास्थानं समलङ्कृतवन्तः ।

श्रौत-स्मार्त्त-शिरोमणिश्रीगणपतिदीक्षित-श्रौतस्मार्त्तमार्तण्ड-श्रीअमरनाथदीक्षित-वैदिकशिरोमणिश्रीरामन. सारस्वत-आहिताग्निश्रीचन्द्रभाल-वैदिकसम्राट्-प्रभृतिभिर्वैदिकप्रवरैः कृते वैदिक-स्वस्तिवाचने सुप्रभात-सम्पादकैः श्रीकेदारनाथशर्म्मभिः संस्कृत-समाजस्य दुरवस्थां कर्तव्यञ्च

निर्दिशद्भिरोजःपूर्णमुत्साहजनकञ्च भाषणमकारि । तैरुक्तम्:- यद् "भारतीया संस्कृतिः, संस्कृतभाषायामेव सुरक्षिता विद्यते । तयैव चास्याः संरक्षणं भविष्यति । अतः भारतीयतां रक्षितुमभिलषद्भिर्विद्वद्भिरैरालस्यं विहाय, निःशङ्कं निःसङ्कोचञ्च कार्यक्षेत्रे समवतीर्य संस्कृति-रक्षा विधेया । नोचेत्संस्कृतभाषाया अस्तित्वमेव विलुप्तं स्यात् ।"

"सुप्रभात-सङ्घः संस्कृत-सेवायै सुदृढं सन्नद्धः सेवां सम्पादितुं सोत्साहो वरीवर्तते, सर्वैरपि संस्कृतज्ञैः सम्भूय सहयोग-प्रदानमत्र विधेयमिति ।" अमुमेव विषयं समर्थयद्भिः श्रीमद्भिः श्रीगोपालशास्त्रिभिदर्शनकेसरिभिर्महत्त्वपूर्णं प्रभावजनकञ्च भाषणं कृतम् ।

तदनन्तरं राजकीय-संस्कृत-महाविद्यालय-प्रधानाध्यापकानां साहित्य-वारिधि-श्रीनारायणशास्त्रिणां महामहोपाध्याय-पद-लाभे श्रीगोपालशास्त्रिभिः समभिनन्दयद्भिः श्रीकाशी-पण्डित-सभा-द्वारा-प्रदत्तमभिनन्दनपत्रं पठितम् । तच्च श्रीमद्भिः करपात्रिस्वामिभिः स्वकरकमलेन समर्पितम् ।

तदनन्तरञ्च सुप्रसिद्धैर्नागरिकैः सुप्रभात सम्पादन-समिति-सदस्यैर्विद्यासागर-एडवोकेट-महाशयैः प्रथमं संस्कृते, ततश्च हिन्दी-भाषायां महत्वपूर्णं भाषणं विहितम् ।

अनन्तरञ्च श्रीमद्भिः स्वामिचरणैर्विद्वत्समाजोचिते सारगर्भे भाषणे प्रोक्तम्—"यदस्माकं सर्वमपि कार्यजातं धर्म्यं भवति । युद्धमपि धर्म्यं भवति । अतः संस्कृतिरक्षायै च संस्कृत-रक्षणमावश्यकम् । तस्यां दिशि प्रयतमानं सुप्रभातम् शुभाशीर्भिः सम्बर्द्धयामः ।"

अस्मिन् महोत्सवे त्यक्त-महामहोपाध्यायपदाः श्री भाऊशास्त्रिणः 'बझे'-इत्युपाह्वाः, दार्शनिक-प्रवराः श्री मत्पण्डित बालबोध मिश्राः, पण्डित 'नेने' गोपालशास्त्रिणो व्याकरणाचार्याः, 'खिस्ते' मुकुन्दशास्त्रिणः साहित्याचार्याः, भारद्वाज-विश्वनाथशास्त्रिणः एम० ए०, दर्शनकेसरिणः गोपालशास्त्रिणः, शास्त्रार्थ-महारथाः श्रीवेणीमाधव शास्त्रिणः, गौरीनाथ पाठक-प्रभृतयो बहवो विद्वांसः, जगदीशचन्द्र भट्टाचार्य-के० एस० सुन्दरम्-किशोरीलाल खन्ना ( आनरेरी मजिस्ट्रेट )-प्रभृतयश्च सुप्रसिद्धाः व्यापारिणो नागरिकाः, विशेषतश्च कच्छभुजराज्य-पण्डिताः महामहोपाध्याय-दयाराम खटाऊ महोदयाः, जम्मू-कश्मीर-राज पण्डिताः विद्याभूषण-श्रीशङ्करशास्त्रिणश्च समुपस्थिता आसन् ।

## सुप्रभात-सङ्घः ।

सुप्रभात-सङ्घस्य विशेष-विवरणं स्थानाभावान्नास्मिन्नङ्के प्रकाश्यते । सङ्क्षेपतस्तस्य विधानं प्रकाश्यते ।

( १ ) संस्कृतभाषायाः देशकाल-समाजोपयोगिता—सम्पादनाय, तत्संरक्षणाय, प्रचाराय च वास्तविकः सुदृढः क्रियात्मकश्च प्रयत्नः ।

( २ ) विशुद्धतम-संस्कृत-मुद्रणपरस्य बृहत्तर-यन्त्रालयस्य स्थापनम् ।

( ३ ) संस्कृत-भाषायाः देशकाल-समाजोपयोगि-नूतनतम-साहित्य-निर्माणम्, प्रकाशनम्, प्रचारणञ्च ।

( ४ ) सूर्यसिद्धान्तानुसारि-धर्मकर्मोपयोगि-विशुद्धतर-पञ्चाङ्ग-निर्माणम्, प्रकाशनञ्च ।

(५) संस्कृतभाषा-प्रचारपरस्य संस्कृतज्ञानां सङ्ग्रन्थन सम्पादकस्य, संस्कृत-सम्राज-प्रतिनिधिभूतस्य 'सुप्रभातस्य' सञ्चालनम् ।

( ६ ) संस्कृत-प्रारम्भिक-शिक्षण-सुधाराय उच्चतम शिक्षणस्य सम्पादनाय च संस्कृत-शिक्षण-कला-महा विद्यालयस्य ( टीचर्स ट्रेनिंग कालेज) संस्थापनम् ।

( ७ ) प्राचीनतम-संस्कृत-वाङ्मय-गवेषणम्, लोकोपयोगिसंस्कृतविषयाणां हिन्दीभाषायां प्रकाशनम् ।

( ८ ) हिन्दीभाषायां देश-काल-समाजोपयोगि-मासिक-साप्ताहिकादिपत्र-प्रचारणम् ।

एतदुद्देश्यानां पूर्तये प्रथमं 'सुप्रभातम्-लिमिटेड' नाम्नी व्यापारिकी संस्था संस्थाप्यते ।

एतत्कार्य-सञ्चालनाय, आदर्शसंस्कृत-शिक्षापीठ-स्थापनाय च काशीस्थ-रामकुण्ड-स्थानाधिकृतैः श्रीमद्भिर्बाबा रघुवीरदास-ब्रह्मचारिभिः स्वकीयं विशालं स्थानम्, ट्रस्ट-रूपेण प्रदत्तम् । अचिरादेव तद् राजेष्टितं भविष्यति ।

सुप्रभात-यन्त्रालय-स्थापनाय समुद्योगः प्रचलति । स्वल्पकालानन्तरमेव सुप्रभातयन्त्रालयात् सुप्रभातं प्रकाशमेष्यतीत्याशास्महे ।

**रामलालशास्त्री, सारस्वतः**
**व्यवस्थापकः ।**

## संस्कृत-प्रचारणी-सभा, काशी

काशी-संस्कृत-प्रचारिणी-सभाया द्वितीयमधिवेशनं चैत्र-कृष्ण-सप्तम्यामष्टम्याञ्च श्रीटीकमाणी-संस्कृतमहाविद्यालये महता समारम्भेण प्रथमदिने—विश्वाराध्य-ज्ञानसिंहासनाधीश्वराणां श्री १००८ जगद्गुरु-वीरभद्रशिवाचार्याणां सभापतित्वे, द्वितीयदिवसे च साहित्याचार्य-जगन्नाथ शास्त्रि-होसिंग-महाशयानां सभापतित्वे सम्पन्नम् ।

वैदिक-मङ्गलानन्तरं स्वगताध्यक्षस्य, श्रीदिनेशदत्तझा-महोदयस्य स्वागतभाषणं जातम् । तदनु 'संसार'-प्रधान सम्पादकेन श्रीकमलापतिशास्त्रिणा सम्मेलनोद्घाटनं विदधता संस्कृत-महत्तायां सारगर्भं भाषणमकारि । श्रीदेवीनारायण वाकीलेन संस्कृतभाषायाः सारल्यं प्रदर्श्य सभा तेः स्वागतं विहितम् ।

ततश्च सभा-प्रधानमन्त्रिणा हरिशरणडोगरा शास्त्रिणा सभा-वार्षिक-विवरणं श्रावितम् । ततश्च संस्कृतवाद-विवाद-प्रतियोगिता—समस्यापूर्ति-प्रतियोगिता चापि जाता । यत्र चन्द्रदत्त मिश्रेण श्रीशङ्करहलवे शास्त्रिणा च रजत-पदकं प्राप्तम् ! विदुषां भाषणैः साकं संस्कृत-समाजोपयोगिनः प्रस्तावा अपि समुत्तीर्णाः ।

श्रीविन्ध्याचल शर्म्मणा माननीय-मदनमोहन - मालवीय महोदयानां सन्देशः सदसि श्रावितः । अधिवेशने निम्न-लिखित-विदुषां भाषणानि, कविता-पाठश्च समभूवन् । यथा—श्रीगोपालशास्त्री दर्शनकेसरी, देवीनारायण विद्यासागरः, एडवोकेट, वासुदेवद्विवेदी साहित्याचार्यः, विन्ध्याचलशर्मा (गोरखपुर), पारसनाथ पाठकः, काशीनाथशास्त्री (वैदिकः), वटुकनाथ शास्त्री खिस्ते साहित्यचार्यः, राजनारायण शास्त्री शुक्लः, न्यायाचार्यः, अनन्तराम शास्त्री वेतालः, साहित्याचार्यः, पुरुषोत्तम शर्म्मा गौडः, साहित्यशास्त्री चेति ।

सम्मेलनसमाप्तौ टीकमाणी-संस्कृत-कालेजाधिकारिभिः सभाकार्य-कर्तृभ्यः प्रतिनिधिभ्यश्च जलपानं कारितम् ।

—हरिशरणशास्त्री डोगरा, प्रधान मन्त्री ।



सूचना—दर्शन समिति-श्रीकाशी-पण्डितसभा-वैदिक समिति-प्रभृतिसंस्थानां समाचाराः स्थानाभावान्न प्रकाशिताः । तदधिकृतैः क्षन्तव्यम् । प्रकाशकः



## अभिमतम् ।

### वैदिकी—

सुप्रसिद्ध-राष्ट्र-नायकैः संयुक्तप्रान्तीय-शिक्षासचिवैः श्रीसम्पूर्णानन्दैः कियतः कालात् प्राक् 'आज'—नाम्नि सुप्रसिद्धे पत्रे "ब्राह्मण ! सावधान ।"—शिरस्का लेखमाला प्रकाशिताऽसीत् । तदुत्तररूपेण बहुभिर्बहुधा लिखितमासीत् परं गम्भीर-विवेचन-पुरस्सरं युक्तियुक्तं शिष्ट-प्रकारमुत्तरं न केनापि दत्तमभूत् । परं 'वैदिकी'—नाम पुस्तकं मालोक्यास्माकं हृदि महान् हर्षः, सन्तोषः, गौरवञ्चाजनि ।

पुस्तकमिदं विविधशास्त्राचार्येण महोत्साहवता पण्डित लाल विहारी मिश्रेण लिखितमस्ति । अत्र गम्भीर-शास्त्र प्रमाण-युक्ति-तर्कादिविमर्शन-पुरस्सरमेकैकमंशमुद्धृत्य लेखकेन प्रामाणिकमुत्तरितम् । सर्वतोऽधिकं वैशिष्ट्यमिदमेव यत् संस्कृतविदुषाऽपि सता लेखकेन सस्नेहं सादरञ्च विवेचनं कुर्वता यत् तथ्यं स्वीकृतम्, यच्च शास्त्रमर्यादा-विरुद्धं तत्सरलया स्नेहपूर्णया शिष्टया भाषया मीमांसा प्रकारेण समुत्तरितम् । प्रायो दृश्यते यत् संस्कृत-पण्डिताः प्रतिवादिनामाक्षेपमसहमानाः क्रूरतरं निर्भर्त्सयन्तः स्वयं विवेक-विकलाः पथभ्रष्टा उपहासपात्रतां व्रजन्ति । रोषावेश-पूर्ण-हृदया न गभीरतमं शास्त्रविमर्शं कर्तुं प्रभवो भवन्ति । अयं लेखकस्तु प्रथममेव सन्धाय सम्भाषां प्रतिज्ञाय, लेखकस्य ब्राह्मणसमाजोन्नति-कामनामुररीकृत्य च प्राचीन-परम्परा-विरुद्धांस्तदाक्षेपान् विवेकपूर्वकं प्रमाणोपन्यासपुरस्सरञ्च कृतवानिति महान् सन्तोषावसरः ।

लेखकस्य हिन्दीभाषाऽपि परामृष्टा, प्रवाहवती, हृदयङ्गमा च विद्यते । यद्यपि तर्क-दृष्ट्या तु तत्रापि विविधास्तर्काः समुन्मिषन्ति, उत्तरस्य प्रत्युत्तरमपि भवत्येव, यतो वादि दौर्बल्यान्मत दौर्बल्यम्, तत्प्राबल्याच्च मतप्राबल्यमिति स्वाभाविकी वार्ता, तथापि 'बुद्धेःफलमनाग्रहः' 'तत्त्वपक्षपातो हि धियां स्वभावः' इत्यादि न्यायमनुसृत्य पुस्तकमिदमनुत्तममुपादेयं पठनीयञ्चेति नात्र बहु वक्तव्यम् ।

लेखकेन पुस्तकस्यान्ते जड-वादिनां यदालोचनं विहितं तत्तु भारतीय-संस्कृतेः सर्वथानुरूपं सिद्धान्तितञ्च । तदर्थं लेखकाय हार्दिकान् धन्यवादान् वितरामः । लेखकोऽध्ययनशीलः, मनीषी, स्वभाव-गम्भीरः पण्डावांश्च-

त्यस्मै स्पृहयामः । अभिलषामश्च यदयमुत्तरोत्तरमभ्युदयमयन् संस्कृतसमाजस्य गौरव-वृद्धिं कुर्यात् ।

प्रकाशकः—चन्द्रकिशोरपतिः त्रिपाठी, पिण्डी, गोरखपुर । तदेव प्राप्तिस्थानम् । मूल्यं सार्द्धमुद्राद्वयम् । कर्गज-मुद्रणादिकं शोभनम् । मुद्रण-व्ययादौ लेखकेन तन्मित्रैश्च यत्कृतं तदपि श्लाघनीयमुत्साहजनकञ्च । एतद्दशैर्युवकैः सुरभारत्याः सत्वरं सुप्रभातं स्यादिति सम्भावयति

—सम्पादकः

## ग्राम्य चिकित्सा ।

श्यामसुन्दर–आयुर्वेदमालायाः सप्तमं पुष्पम् । अनुवादकः–केदारनाथ पाठकः, रासायनिकः । प्रकाशकः—उमेदीलाल वैश्यः, श्यामसुन्दर रसायनशाला, गायघाट, काशी । मूल्यम्—॥≈) दशानकाः ।

ग्राम–सुलभानां तुलसी–दूर्वा–द्रोणपुष्पी–गोमय–गोमूत्र–अश्वत्थ–पलाशादिवस्तूनां विभिन्न–रोगेषु सद्य उपकार-जनकाः स्वल्पाः सुसाध्याश्च अनुभूताः प्रयोगाः सन्ति । ग्रामीणजनतासु–पुस्तकस्यास्य प्रचारो नितान्तमुचितः । तदर्थं प्रकाशकैः प्रयतनीयम् । पुस्तकमिदं कस्यचन प्राचीन–संस्कृत–पुस्तकस्यानुवादरूपम् ।

## टोटका विज्ञानम् ।

लेखकः, प्रकाशकः, प्राप्तिस्थानम् पूर्ववदेव । मूल्यम् ।≈) । अत्रापि स्वल्पतमपुस्तिकायां विभिन्न–रोगाणां परम्परा–प्रचलिताः स्वल्पतराः सद्य उपकारकास्तान्त्रिकप्रयोगा इवौषध प्रयोगाः सङ्गृहीताः सन्ति । पुस्तकमिदं संकलनीयं सर्वैरपि ।

—लीलाधर पाण्डेयः

## धन्यवादाः ।

सुप्रभातस्य सञ्चालनाय प्रारम्भिकं व्ययभारमुररीकृतवतां सुप्रभात–संघ-सञ्चालकानां काशीस्थप्रसिद्ध-व्यापारिणां देशभक्त–किशोरीलाल खन्ना–विद्यारत्न–( स्पेशल ऑनरेरी मेजिस्ट्रेट )–महोदयानाम् , विविधशिक्षा–संस्थाऽधारस्तम्भभूतानां नागरिक–प्रवराणां श्रीजगदीशचन्द्र-भट्टाचार्याणाम् , जम्मूकाश्मीरराज–पण्डितानां श्रीमद् बालकृष्णशास्त्रितनूजन्मनां श्रीशङ्करशास्त्रिणां महान्तमुपकार–भारं स्वीकुर्मः, तेभ्यो धन्यवादांश्च वितरामः ।

—व्यवस्थापकः

## पाठका निवेद्यन्ते ।

सुप्रभातस्य प्रथमोऽङ्कः पाठकानां सेवायां यथाकथमपि समुपस्थाप्यते । परमिदानीं युद्धोत्तरकाले महामहर्घतासमये प्रबल-प्रयत्नं कृत्वापि, चतुर्गुणं व्ययं कृत्वाऽपि वस्तूनां लाभो न सुशक–इति नाविदितं भुक्तभोगस्य कस्यापि ।

भारतरक्षा-शासनाधीनं सर्वमपि कार्यजातम् । पत्र-मुद्रणे, कर्गज-प्राप्तौ, यन्त्रालय-स्थापने सर्वत्रापि भारत-शासकानामाज्ञासमपेक्षते । इत्यादि–विविध–प्रतिबन्धक-सद्भावेऽपि सुप्रभातं किञ्चित् समयमतीत्य ग्राहकाणां सेवायां समुपसर्पति । नाद्यापि भारतीय–पत्र-नियन्त्रणविभागस्याज्ञा समुपलब्धा । तेन च मार्गव्यय–सौविध्यमपि न प्राप्तम् । अतो पणत्रयस्य चिटिका–व्ययेन, लेखमाला–रूपेण च सुप्रभातस्य नियमतः प्रकाशनं जातम् । अनुज्ञां लब्धुं क्रियते पत्र-व्यवहारः । भारतीय–व्यवस्थापक–सभा–सदस्याः सुप्रभात-प्रणयिनः श्रीश्रीप्रकाश–बार–एट–ला–एम०एल०ए०–महोदयाः प्रयतन्ते कर्गजाज्ञा-लाभाय । आशास्महे अग्रिमाङ्कं यावत् लब्धा भवेत् ।

अमरभारती–यन्त्रालयाधिकारिणां सौजन्येन प्रकाशितोऽयमङ्कः । अस्य कश्चन भागः, अपरस्मिन् यन्त्रालये प्रकाशितः । एवं प्रकाशन–व्यवस्थायां सत्यामपि–लेखानां सन्देशादीनां बाहुल्येन च सम्पादकीया विचारा अपि, आवश्यका लेखा अपि च नात्र मुद्रिताः । अग्रिमाङ्कतः सुव्यवस्था सम्पादनाय क्रियते प्रयत्नः ।

पाठक–प्रवरैरस्य ग्राहकवृद्धौ प्रबलः प्रयत्नो विधेयः । यत इदानींकाले मुद्राद्वयमस्य मूल्यं न कदापि भवितुमर्हति । चतुर्गुणो द्विगुणश्च व्ययो वरीवर्ति । एतत्तु केवलं प्रचारायैव प्रचलति । तदस्य प्रचारे श्रीमद्भिः सर्वथा दत्तावधानैर्भाव्यम् । शनैः शनैः स्वीय–यन्त्रालयादि-व्यवस्था, सुप्रभातसंघेन क्रियत एवेत्यलमतिप्रपञ्चेन देश–काल–वित्सु सुप्रभात–प्रणयिषु ।

—प्रकाशकः

# श्यामसुन्दर-रसायनशाला

## काशी के

## उपयोगी प्रकाशन

# भोजन-विधि

मनुष्य जब बीमार हो जाता है, तब उसके सामने यह प्रश्न विकट रूप में आ खड़ा होता है कि वह क्या खाय ? इसी प्रश्न को हल करने के लिये पूज्यपाद रसायनशास्त्री स्व० श्यामसुन्दराचार्य जी ने इस पुस्तक को लिखा था।

इस पुस्तक में, बंगसेन, गदनिग्रह तथा भैषज्यरत्नावली आदि मान्य ग्रन्थों के रोगाधिकार क्रम से चिकित्सा-सहित लगभग सौ रोगों के पथ्यापथ्य का पूर्ण विवेचन किया गया है, जिसमें अधिकांश होने वाले सभी रोग आ गये हैं। जहाँ-तहाँ टिप्पणियाँ देकर पुस्तक को सरल बना दिया है।

परिशिष्ट भाग में मण्ड, विलेपी, यूष, क्षीर तथा पाक आदि शास्त्रोक्त पथ्याहारों के परिचय, गुण और बनाने की विधि आदि देकर पुस्तक वैद्य तथा सर्वसाधारण सबके लिए समान उपयोग बना दी गई है।

पृष्ठ २७२, मूल्य २) रु०

## हमारे अन्य उपयोगी प्रकाशन

| | |
|---|---|
| रसायनसार | ३) |
| अनुपानविधि | ॥) |
| अनुभूतयोग प्र० भा० | ॥।) |
| नीमके उपयोग | ॥।=) |
| मधु के उपयोग | ॥।=) |
| ग्राम्य-चिकित्सा | ॥=) |
| टोटका विज्ञान | ।=) |
| मट्ठा या छाछ के उपयोग | १) |

रसायनसार के रचयिता प्रो० रसायनशास्त्री पं० श्यामसुन्दराचार्य वैश्य

मूल्यवान रासायनिक तथा अन्य सभी आयुर्वेदीय औषधियां मिलने का एकमात्र प्रामाणिक स्थान—

श्री श्यामसुन्दर रसायनशाला

गायघाट, बनारस

सूचीपत्र मंगाइये

प्रो० उमंदीलाल वैश्य

रसायनसार के रचयिता प्रो० रसायनशास्त्री पं० श्यामसुन्दराचार्य वैश्य

श्री श्यामसुन्दर-रसायनशाला

गायघाट बनारस सिटी

एम० ए० इत्युपाधिधारि श्री राधाविनोद गोस्वामिना अमर भारती यंत्रालये काश्याम मुद्रितम।

वैशाखः, २००३ वैक्रमाब्दः
त्रयोदशाङ्क द्वितीयोऽङ्क संख्या

# सुप्रभातम्

भारतवर्षस्य सर्वोत्कृष्टम्, काशीस्थ-विद्वत्समाजानुमोदितम्।

## संस्कृत-मासिक-पत्रम्।

तिमिरततिमुदस्यद्, भेदतारा विलुम्पद्,
नयदधिसुरभाषाभापि जागर्तिभावम्।
विबुध-विहग-वादैराह्वयद् भाग्य-भानुम्
विलसतु भुवनेऽस्मिन् सर्वतः "सुप्रभातम्"

प्रधान-सम्पादकः—

**श्रीकेदारनाथ शर्मा सारस्वतः**

व्यवस्थापकः—

**रामलाल शास्त्री, सारस्वतः**

प्राप्तिस्थानम्—

**सुप्रभातम्, बनारस सिटी**

वार्षिकम्मूल्यम् ४)    छात्रेभ्यः पुस्तकालयेभ्यश्च ३)

# लेख-सूची ।



## आवश्यक-सूचना

१—ग्राहकाः सूचनां पठित्वापि मुद्राद्वयस्यैव धनादेशं प्रेषयन्ति। पुनरपि विज्ञापयामस्तान् यत्ते मुद्राचयं प्रहिण्वन्तु ।

२—यैर्मुद्राद्वयं प्रेषितम्, तैरपि एकामुद्रा पुनः प्रेषणीया ।

३—प्राचीनैर्ग्राहकैरेव मुद्राद्वयं प्रेषणीयम् । लेखनीयञ्चयत् "प्राचीनोऽहम्"—इति ।

४—एकवर्षं यावत् ग्राहकत्वं स्वीकुर्वद्भिः प्रथमाङ्कत एव ग्राहकत्वमुररीकर्तव्यम् । मध्ये यस्मात् कस्मादपि मासात् ग्राहकत्वं न भविष्यति । —व्यवस्थापकः

## सुप्रभात-सम्पादन-समितिः ।

१—महामहोपाध्याय श्रीनारायण शास्त्री खिस्ते,
२—दाऊजी दीक्षितः, दैवज्ञशिरोमणिः
३—गोपाल शास्त्री, दर्शनकेशरी
४—देवीनारायण एडवोकेट, विद्यासागरः
५—केदारनाथ शर्म्मा सारस्वतः ( संयोजकः )

## नियमाः

१—'सुप्रभातम्' प्रतिसौरमासस्यावसाने—आङ्गलमासस्य पञ्चदशतारिकायां प्रकाशमेष्यति ।

२—ग्राहकैर्धनादेश ( मनिआर्डर ) द्वारा मूल्यं प्रहेयम्; वी० पी० प्रेषणे ग्राहकाणामेव व्ययाधिक्यं भवति ।

३—सुप्रभातस्य पृष्ठसंख्या राजकीय-नियमानुसारं नियन्त्रितास्ति । एकमपि पत्रमधिकं मुद्रितुं न शक्यते । अतः लेखकैः समाचार-प्रेषकैश्च स्वल्पतरमेव लेखनीयम् । कवितास्तु प्रायो न प्रेषणीयाः । निर्द्धारितानामेव कवीनां कविताः प्रकाश्येरन् ।

४—लेखकैर्लेखाः सुस्पष्टाक्षरैरेव लेख्याः, अस्पष्टाक्षराः, सन्धिविच्छेद-विरामादिरहिता लेखा न कदाचिदपि प्रकाशनीयाः स्युः ।

५—सर्वविधोऽपि पत्रव्यवहारः—'सुप्रभातम्', बनारस सिटी, इत्यनेन सङ्केतेन विधेयः ।

# सुप्रभातम्

❀ संस्कृत-मासिक-पत्रम् ❀

त्रयोदशाऽब्दे } सौर वैशाखः, २००३ विक्रमाब्दाः { द्वितीया संख्या

## शिव-स्मरणम्

श्रीनारायणशास्त्री खिस्ते, महामहोपाध्यायः

[ १ ]

सौभाग्यं वः क्रियासुः शिवपदकमलादुच्छलन्तः परागा
ये रागाद्वीतरागैरपि मुनिनिवहैर्भालभूषाः क्रियन्ते ॥
यत्स्पर्शादेव सद्यः स्फुरति मतिमतामात्मतत्त्वप्रकाशः
संविद्वीचिस्फुरत्ता प्रतिपलममला जृम्भते यत्प्रसादात् ॥

[ २ ]

पादाङ्गुष्ठः स शम्भोर्हरतु मम मनोध्वान्तमुद्यत्प्रकाशो
निर्लक्ष्मा पूर्णचन्द्रोऽपचयतदितरोपाधिहीनः स्वतन्त्रः ॥
यः स्पर्शादेव भक्तालिकतटलिखितां दुर्लिपिं मार्जयित्वा
शैवीं मुद्रां विनिद्रां सपदि वितनुते स्फारसंवित्प्रचाराम् ॥

[ ३ ]

एकत्र व्यालबालप्रकरविवलनैः फूत्कृतैश्चोग्ररूपा-
व॰यत्रालक्तकाङ्कौ मणिगणघटितैर्नूपुरैर्दिव्यरूपौ ॥
सङ्घीभूयापतद्भिर्नरसुरदनुजाऽऽनम्रमौलिस्थमाल्यै-
स्तुल्यं सम्पूज्यमानौ शिवगुरु-चरणौ मूर्ध्नि मे सर्वदा स्ताम् ॥

## शुभाशंसनानि ।

अकस्मादेव सुप्रभातमालोक्य, तदीयाँल्लेखाँश्च दृष्ट्वा नितान्तं सन्तोषमावहामि । सुप्रभातस्य भाषा निर्मलतर-सलिलमिव स्वच्छा मधुरा च वर्तते । तदन्तर्गता भावाः, तलस्थ-वस्तु-जातवत् सुस्पष्टं प्रतीयन्ते । सुप्रभाते पठन-सामग्री महत्त्वपूर्णा मौलिकी सर्वेषामुपयुक्ततरा च विद्यते । संस्कृतविद्वद्भिश्छात्रैश्चास्य ग्राहकतां स्वीकृत्य स्वीयं सर्वाङ्गीणमभ्युदयमापादनीयमिति—अस्माकं प्रबलोऽभिलाषः । अहमस्य जीवन-पूर्णस्य सत्यप्रकाश-प्रसारकस्य सुप्रभातस्य दैनन्दिनमभ्युदयं कामये ।

—काशीरामईस्सरः, एम० ए०

× × × ×

सुदीर्घकालात् प्रियतरस्य सुप्रभातस्य दर्शनोत्कण्ठा-आसीत् । अकस्मादेव तदवलोक्य मानसमानन्दमहासागरस्य कल्लोलेषु नितरामनर्तत । अस्यान्तरङ्गं यथा मौलिक-सामग्र्या परिपूर्णं वर्तते, तथैव सर्वदा मौलिका महत्त्वपूर्णा सामग्री स्थापयति—इत्याशासे । सुदृढं विश्वसिमि यदनेन सुभातेन भारतस्य सुप्रभातं भविष्यतीति ।

सीताबल्डी, नागपुरम्, ( सी० पी० ) — गोवर्द्धन शर्म्मा छांगाणी भिषककेशरी, प्राणाचार्यः,

× × × ×

अवलोक्य सुप्रभातं, समुपगतं बाढमाशासे ।
अचिरेण सुप्रभातं, सुरभारत्याः पुनर्भावि ॥ १ ॥
असमाध्यवसायेन, प्रतिबन्धं धुन्वती शश्वत् ।
श्लाघ्या न किं निकामं, बुधैः पुनस्तत्प्रबन्धकृत् समितिः ।२।

इति निवेदयते—

संस्कृत-कालेज, मुजफ्फरपुरम् — विद्वद्वशँवदो—बदरीनाथः, [ साहित्य-शिरोमणिः ]

× × × ×

## सम्पादकीयम्

### पाठकः प्रार्थ्यन्ते ।

सुप्रभातस्य प्रथमोऽङ्कः; साम्प्रतकालीन-नियन्त्रण-नीतिपरवशत्वात्, मुद्रणयन्त्रालयानां प्राचुर्य्येऽपि संस्कृतमुद्रण-पराणां यन्त्रालयानां दुर्लभतया, कर्गज-प्राप्तावपि राजकीय-नियन्त्रणतया च कथं कथमपि यन्त्रालयद्वये शीघ्रतया प्रकाशितः । तत्रापि पत्रनिःसारणाज्ञाऽलाभेन लेखमाला-रूपेण प्रकाशितो न यथा-रुचि प्रकाशमायात इति वयं पाठकेभ्यः क्षमाप्रार्थनं कुर्मः । अयमङ्कोऽपि यन्त्रालय-शैथिल्येन बिलम्बेन प्रकाशितः । तृतीयोऽङ्को यथासमयं प्रकाशितः स्यादित्याशास्महे । शनैः शनैः सुव्यवस्थिततया प्रकाशनं सम्पादनञ्च स्यादिति पाठकैरत्र नोद्वेगः कर्तव्यः ।

बहुभिरनुग्राहकैः वी० पी०-द्वारा पत्र-प्रेषणाज्ञा प्रदत्तासीत्, परमस्माभिस्तत्र प्रपञ्चबाहुल्यात् व्यय-बाहुल्याच्च धनादेशद्वारैव मूल्यप्रेषणे सौकर्यममानि ! अतस्तैरनुग्राहकैः कृपया धनादेशेन मूल्यं प्रेषणीयम् । अथवा वी० पी०-द्वारा प्रेषणायैव पत्रं प्रहेयम् ।

---

कल्याण-करणं भाति सुप्रभातं मनोहरम् ।
किमर्थं क्रियते स्वापस्त्वया भारत ! सम्प्रताम् ॥ १ ॥
उत्थायाऽबोध-तन्द्रायाः परित्यागो विधीयताम् ।
प्रक्षाल्यतां वपुः सर्वं ज्ञान-निर्मल-वारिणा ॥ २ ॥
स्मरणं क्रियतां भक्त्या भवानी-विश्वनाथयोः ।
आरभ्यतां प्रयत्नेन कार्यमात्मसमृद्धये ॥ ३ ॥

जुब्बल-राज्यम्, शिमला — श्रीतारादत्तः, राजज्यौतिषी राज-कुमार-गुरुः

अस्माभिः प्राचीनग्राहकनामावलीमनुसृत्य प्रायः सर्वेषां ग्राहकाणां सविधे पत्रं प्रेषितम्। अयमङ्कश्च प्रहीयते, परमिदानीं तैः कृपया सूचनीयं यत्तेषां को विचारः ? तृतीयाङ्क—प्रकाशनात् पूर्वमेव तैः सूचना प्रेषणीया। तूष्णीं न स्थातव्यम्।

पत्रस्य वार्षिकम्मूल्य महर्घतया छात्रेभ्यो मुद्राद्वयमेवासीत्; परमिदानीं व्ययाधिक्येन मुद्रात्रयं निर्द्धारितम्। यतः सर्वासां वस्तूनां त्रिगुणं द्विगुणञ्च मूल्यमस्ति। प्रथमन्तु प्रचारदृष्ट्या धनिकेभ्यो धनमाहृत्य एकयैव मुद्रया सुप्रभातं दीयतेस्म। अतएव तस्य सञ्चालनं दुष्करमभूत्। इदानीन्तु भिक्षावृत्याऽस्य सञ्चालनं न क्रियते। अपरं यदि पूर्णं मूल्यं तदधिकारिभिर्दीयेत तदापि पत्रस्य हानिर्न स्यात्। परं महान्तोऽपि, समर्था अपि, छात्रमूल्येनैव पत्रं गृह्णन्ति—इति पत्रस्यार्थिकी हानिरसह्या भवति।

एतदवधेयम्—यत् केचन ग्राहकाः द्वितीयाङ्कतः, केचन चतुर्थाङ्कतः, पञ्चमाङ्कतो वा ग्राहकत्वमभिलषन्ति, तदपि नेष्टमस्माकम्। यस्मिन् कस्मिन् वा मासे ग्राहकत्वं स्वीकुर्यात् ग्राहकः, परन्तस्य प्रथमवर्षस्य प्रथमाङ्कत एव ग्राहकत्वं स्यात्। तत एव सुव्यवस्था भवेत्।

पाठकैरस्य प्रचारायापि प्रबलः प्रयत्नो विधेयः, यतः प्रचारमन्तरा पत्राणां तत्रापि संस्कृतपत्राणां स्थितिरशक्यैवेति सौहार्देन वा, सुप्रभातप्रणयेन वा, सुरभारती—प्रचिचारयिषया वा नैतद्विस्मर्तव्यम्।

× × × ×

## संस्कृतज्ञानां जीविकाप्रश्नः।

अद्यत्वे संस्कृतभाषाया एव नहि; तदुपजीव्यस्य पण्डितसमाजस्य, तदाश्रितायाः प्राचीनार्यसंस्कृतेः, तन्मूलकस्य च धर्मस्य जीवन-मरण-प्रश्नः प्राधान्येनास्माकं सम्मुखमवतिष्ठते। वयञ्च कर्णेषु तैलमापूर्य समाजस्य खरतरानपि प्रहारान् शिरो नमयित्वा निभृतं मर्षयन्तः, क्षुद्रतमस्वार्थाय महत्तमं परमार्थं परित्यजन्तः, परस्परमेव घुरघुरायमाणाः यथाकथमपि ह्रीणा इव, रीणा इव, भीता इव, सङ्कुचिता इव, कृतापराधा इव, क्षुद्रतम-धनलाभाय दीन-दीनाः, वपुषा पीना अपि स्वाभिमान-लेश-हीनाः, समाजेन समुपेक्षिता इव, धर्मेण समभिशप्ता इव, राष्ट्रेण बहिष्कृता इव, अन्तःसार-शून्याः, गत-जीवना इव कृच्छ्रेण कालमतिवाहयामः।

× × × ×

गतः स समयो यत्रैकस्य भारतीय-नृपतेराश्रयेण शतशो विद्वांसो गृहे स्थिताः, शास्त्रचिन्ता-निमग्नाः, बाह्यचिन्ता-विरहिताः, समाजस्य राष्ट्रस्य च कल्याणकामनाम्, धर्मव्यवस्थाम् सम्पादयन्तः, स्वीयमाध्यात्मिकं बलं वर्द्धयन्तः, पूर्वजानां ज्ञान-विज्ञान-सम्पत्तिं विस्तारयन्तः, लोकोपकाराय नवनवाविष्कारानाविष्कुर्वन्तः, देशस्य, जनतायाः, राज्ञाञ्च न केवलं माननीयाः; प्रत्युत परमात्मस्वरूपेण पूजनीयाश्चाभवन्। तदानीं नासीद्वैदेशिकानां सम्बन्धः, नाऽप्यन्यसंस्कृतेर्गन्धः ! राज्येषु गुरु-पुरोहित-वैद्य-सांवत्सरिक-दैवज्ञ-शिक्षक-न्यायाधीश-अमात्यादि-विविधपदेषु संस्कृतविद्वांस एवाधिकृता आसन्। आँग्ल-शासन-प्रवेशात् प्राक् एवंव व्यवस्था समवर्तत।

× × × ×

परमद्यत्वे भारतीय-हिन्दूराज्येषु यत्रकुत्रापि कश्चन राजपण्डितः कथंकथमपि समुद्वसति। तत्र तु सर्वत्रैव आँग्लशिक्षा-दीक्षितानां कृषिविज्ञान-शल्यविज्ञान-खनिज

विज्ञान-स्थापत्य-कला—कौशल-भूगर्भ-तडित्-तर्कादि-विज्ञानविदां वैदेशिक-डाक्टर-परीक्षोत्तीर्णानां वर्तते आवश्यकता। न्यायालयेषु, कार्यालयेषु चाङ्गलभाषामयेषु पाश्चात्यशिक्षा-शिक्षितानामेवावश्यकत्वं विद्यते। तत्र संस्कृतज्ञानां को नामोपयोगः ? तत्र कः पृच्छति संस्कृतज्ञान ? ब्रिटिशराज्ये तु अजागल-स्तनायमानानामेतेषां दर्शनमेव परिहरन्ति शासकाः। धर्मश्रद्धावतां धनिकानां धनानि च धूम्रयानादिद्वारा सुलभे यात्राप्रसङ्गे तत्तत्तीर्थ-भिक्षुकेषु वितीर्यन्ते, मन्दिर-धर्मशाला-हाईस्कूल-कालेज-प्रभृतिनिर्माणेषु, आँग्लभाषाध्ययनार्थ वृत्तिप्रदानादिकार्येषु वा व्ययीभवन्ति। ततोऽप्यवशिष्टं धनं धर्माचार्याणां महामण्डलेश्वराणां धर्मगुरूणां प्रचुरतर-विलास-प्रसाधन-विषयेषु, विविधमठनिर्माण—कुम्भ-समारोहादिषु व्ययीभवति। अथापि यदवशिष्यते धनम्, तत् धूर्तैः, धर्मव्यापारिभिः, नेतृत्वाभिलाषिभिः, वचन-रचनाचतुरैः, यज्ञ-याग-सभा-सम्मेलन-समारोहेषु विविध-विद्यालयाश्रमादिषु वा गृह्यते। तत्रापि वराकाः पण्डिताः तेषामेव चाटुकाराः सन्तः कथंकथमपि प्रविश्य भूयसीं दक्षिणां लभमाना एव स्वीयं परं सौभाग्यं मन्यन्ते। हन्त !!

× × × ×

एवं राजनीतौ, समाजसङ्गठने, धर्मव्यवस्थाविधौ, शिक्षाक्षेत्रे, साहित्य-सेवायां, जनतानुरञ्जने, व्यवहारे, व्यापारे, व्यवसाये—कुत्रापि संस्कृतज्ञानां चञ्चुप्रवेशो नास्ति। केवलं प्रत्यहं क्रमशः क्षीयमाणेषु धनाभावेन कथंकथमपि परिचाल्यमानेषु केषुचन विद्यालयेषु स्वल्पतमधनलाभेन जीवनयापनमन्तरा नान्या गतिर्विद्यते संस्कृतज्ञानाम्। कियतः कालात् पूर्वमाङ्गलविद्यालयेषु संस्कृताध्यापकपदेषु संस्कृतविदुषां स्थानमासीत्तदपि साम्प्रतं संस्कृतभाषायां एम० ए०—परीक्षोत्तीर्णा एव लभन्ते। एवं सर्वतः समवरुद्ध-संसरणस्य संस्कृतस्य प्रचाराय प्रयतमानैः प्रथमं संस्कृतज्ञानां जीविकाप्रश्नः समाधेयः। जीविकां विना संस्कृत-प्रचारायान्दोलनं वा प्रयत्नो वा सर्वमपि निष्फलमेव स्यादिति भर्तृहरेः सूक्तं समालोचनीयम्—

लज्जा, स्नेहः, स्वरमधुरता, बुद्धयो, यौवनश्रीः,
कान्तासङ्गः, स्वजनममता, दुःखहानिर्विलासः।
धर्मः, शास्त्रं, सुरगुरुमतिः, शौचमाचारचिन्ता,
पूर्णे सर्वे जठर-पिठरे प्राणिनां सम्भवन्ति ॥

× × ×

## संस्कृत-परीक्षा-प्रचारः

श्रूयते अहमदाबाद-नगरे गुजरात-संस्कृतएसोशियेशन-संस्थापनं सञ्जातम्। मध्यप्रान्तेऽपि संस्कृतस्य स्वतन्त्र परीक्षा-स्थापनं कियद्भ्यो वर्षेभ्यः सञ्जातम्। दक्षिणदेशेऽपि प्रचलति प्रयत्नः। कराची-नगरेऽपि सिन्धसंस्कृत-एशोसिएशन-संस्था संस्थापिता वर्तते। एतज्ज्ञात्वा परां प्रीतिं प्रकटयन्तोऽपि वयं किञ्चिदसंतोषं प्रकटयामः। प्रथमतस्तु एतन्नाम्नि महानसन्तोषः। संस्कृत-संस्थासु—आँग्लशब्द योजना नितरामरुन्तुदा भाति। संस्कृतभाषायां नास्ति शब्ददारिद्र्यम्. नचापि शब्देषु भावदारिद्र्यम्। तत्किमिति 'एशोसियेशन' शब्दः संस्कृत-संस्थासु विनियोज्यते संस्कृतैरप्यसंस्कृतः। विहारप्रान्ते तु सर्वत्र विहारोत्कलसंस्कृत-समिति-शब्दो व्यवह्रियते। अत्रापि स एव शब्दः प्रयोक्तव्यः। इदानीन्तु आँग्लभाषाविदोऽपि-भारतादाङ्ग्लान्, आँग्लसभ्यताम्, आँग्लशिक्षाम्, आंग्लसंस्कृतिम् बहिष्कर्तुं सन्ति प्रयताः। गंतुञ्च संति ते सन्नद्धाः। वयं संस्कृतास्तु तेषां संस्कृति-सभ्यता-व्यवहाराणां प्रारम्भत एव बहिष्कर्तारः स्मः। तदेतत्सर्वथा परित्याज्यम्।

अपरञ्च भयमेतद् विद्यते यत् कलिकान्ता-संस्कृत परीक्षावत् दुर्व्यवस्था मा भवतु। तत्रेदानीं बहवो व्यवसायिनः केवलं प्रश्नपत्र-विक्रयेण, द्रव्यं गृहीत्वा उत्तीर्णताभारं प्रथम-द्वितीय-श्रेण्युत्तीर्णता-निश्चयञ्च प्रथममेव कृत्वा विपुलं धनमर्जयन्ति। शतशश्छात्राः धनं दत्वा उपाधि-क्रयं

कुर्वन्ति । अस्मिन् व्यापारे 'एशोशिएसन'—सदस्याः, कार्यालयाधिकृताः, लेखकाश्च सम्मिलिताः सन्ति । एवमेव नवस्थापितेषु 'एशोशिएशन'—नाम्नीषु संस्थासु न भवेत् । इदानीं पठन-पाठन-व्यवस्था विगतप्राया विद्यते, केवलं कथमपि परीक्षामुत्तीर्योपाधिप्राप्तिरेव छात्राणां मुख्यं ध्येयमस्ति । विचारणीयमेतत् ।

× × × ×

## वाराणस्यां ख्रिष्टधर्मशिक्षणम् ।

काशीस्थ-आर्यछात्रावासनिवासिभिः, वाग्वर्द्धिनी-परिषदश्च मन्त्रिभिः श्रीस्वामिरामानन्दसरस्वतिमहोदयैः सूचितम्—यद् "वाराणस्या नातिदूरे (बड़ागाँव-समीपे) ख्रिष्ट धर्मानुयायिनां कश्चन विद्यते—उपदेशकमहाविद्यालयः, यत्र ख्रिष्टधर्मावलम्बिनो हिन्दव एव, भारतीयेषु हिन्दुषु ख्रिष्टधर्म प्रचाराय शिक्ष्यन्ते, सज्जीक्रियन्ते । तत्र ईशवीयधर्मेतरेषां प्रवेशो निषिद्धः । यदि अन्तस्थ एव कश्चित्तद्रहस्यं बहिः प्रकाशयेत्, तदा सः प्राणैरपि वियुज्यते । एका संघटनापीदृशी साम्प्रतमेव घटिता ।"—इति ।

समाचारममुं समाकर्ण्य लज्जतेतरां चेतः । हन्त ! भोः हन्त ! सनातनधर्म-प्रधान-केन्द्रभूतायां धर्मप्राणैर्बहुभिः सनातनधर्म-नेतृभिः समलंकृतायां वाराणस्यामेकोऽपि हिन्दू-धर्म-प्रचारकैः कश्चन उपदेशक-महाविद्यालयो नास्ति । अस्माकं दण्डेनैवास्माकं शिरोभेदनं भवति । आस्माकीना मनुष्याः, आस्माकीनं धनम्, आस्माकीना धर्मभूमिः, अस्यां वैदेशिकैर्विधर्मिभिरस्माकं समूलोच्छेदाय सन्नह्यते, सज्जीभूयते च । अस्माकं सनातनधर्मिणां समाचारमवलोकयन्तु—भारतधर्ममहामण्डलं सनातनधर्मनाम्ना धार्मिक-प्रजाभ्यः कोटिशो धनं गृहीत्वा न जाने कुत्र व्ययीकृतवान्? तद्भवन भित्तौ हिन्दूधर्म-विश्वविद्यालयस्य, उपदेशकमहा विद्यालयस्य, अन्यासां च बह्वीनां संस्थानां स्थूलानि फलकानि लम्बन्ते । परमन्तः केवलं कार्यालयानां चित्राणां प्रदर्शन-मेवास्ति । अन्या अपि सनातनधर्मस्य हिन्दूधर्मस्य महत्यः संस्थाः सन्ति, याः स्वसमालोचकानामुपरि सलगुडप्रहारमापतन्ति । भाषणैः, प्रचारणैः, जनता-प्रतारणैश्च केवलं केषाञ्चन स्वपृष्ठगानां पोषणं, धनशोषणं, विज्ञापन-पुस्तकादि-प्रकाशनञ्च कृत्वा दातॄणां नेत्रेषु धूलिप्रक्षेपं कुर्वन्ति । वास्तविकी धर्मसेवा तु न कुत्रापि केनापि कृता-इति निशङ्कं वक्तुं प्रभवामः ।

एकसहस्रवर्षाणि यावत् नृशंसं साम्राज्यं कृत्वापि यवनैर्यावन्तो हिन्दवो यवनधर्मे न प्रवेशिताः, ततोऽप्यधिका हिन्दवः ख्रिष्टीयैः सार्द्धशतसम्वत्सराणां राज्यकाले ख्रिष्टमतानुयायिनो विहिताः । साम्प्रतमपि त्रिवांकुरराज्ये, सन्थालपरगना-मण्डले, ब्रह्मदेशे, कूर्माचलप्रान्ते, मध्यप्रान्तस्थ-पर्वतारण्यप्रदेशेषु तद्देशवासिनः कोटिशो हिन्दवः ख्रिष्टमतानुयायिभिरुपदेशकैः स्वधर्मे गृहीताः, गृह्यन्ते च । यथा अद्य अस्माकमुपेक्षया आलस्येन, अभिमानेन, स्वार्थान्धतया च कोटिशो हिन्दवो यवनधर्ममालम्ब्य-जिना नवाबछतारी-प्रभृतयः-पाकिस्तानाय भीषयन्ति, तथा कियत् कालानन्तर-मीशवीयानामपि महती संख्या, पवित्रतमां भारतभुवं खण्डितुं बद्धपरिकरा आर्याणां विनाशाय प्रभविष्यति ।

अतो वयं प्रार्थयामो धर्मव्यवसायिनो धर्मधौरेयाँश्च यत्ते स्थाने स्थाने हिन्दूधर्मोपदेशक-विद्यालयान् संस्थाप्य स्त्रीयान् प्रचारकान् सज्जीकुर्वन्तु । यतस्ते विधर्मिभ्यः स्वधर्मरक्षां विधातुं सन्नद्धाः भवन्तु । विधर्मप्रविष्टानां हिन्दूनां पुनः स्वधर्मप्रवेशाय च प्रयतन्ताम् । 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ।' 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।'—इत्यादि गीतावाक्यं केवलं पाठायैव वा, आचरणायापि वा ।

× × × ×

## वैद्य-गोवर्द्धनशर्म्माणः ।

इदानीं भारतवर्षे ये परिगणनीया वैद्याः सन्ति पञ्चषा वृद्धास्तेषु नागपुर-निवासिनो भिषक्केशरिणः प्राणाचार्या विद्यावयोवृद्धाः श्रीगोवर्द्धनशर्म्माण अपि स्वीयं स्थानमास्थापयन्ति । इमे मार्मिकाः, अधीत-विविधशास्त्राः, सम्पादित-विविधायुर्वेदग्रन्थाः, विहितायुर्वेद-सेवाश्च सन्ति ।

स्वनामानुसारमिमे वस्तुत एव गोवर्द्धनाः सन्ति । एतेषां गृहे न जाने कियत्यो गावो वत्साः बलीवर्दाश्च सन्ति । गो-सेवायां निरतौ दम्पती सर्वदा गोवर्द्धनमेव कुरुतः । बहवश्छात्राश्च समध्यापिता एतैर्योग्यतराः विद्वद्वैद्याश्च सम्वृत्ताः ।

हिन्दू-विश्व-विद्यालयीय—आयुर्वेदाचार्यस्यान्तिम-परीक्षायां मौखिकपरीक्षार्थमागतानामेतेषां शुभाभिनन्दनं कृतवद्भिः श्रीकाशीपण्डितसभा-वैद्यसभा-सुप्रभातसङ्घ-सदस्यैर्यत् गुणग्राहकत्वं प्रकटीकृतं तद् वयं सोल्लासमभिनन्दयामः। प्रार्थयामश्च काशी-विश्वेश्वरमेतेषां विज्ञान-विदां सुदीर्घं जीवनम्।

समाचार-पत्रेषु-वृत्तमिममवलोक्य नितरां सन्तुष्टमन्तःकरणेन यत्पाटलिपुत्रनगरे विहारप्रन्तीय-अर्थसचिवानां श्रीअनुग्रहनारायणसिंह-महोदयानां सभापतित्वे तत्रत्यैर्वैद्यैश्छागाणी-महोदयानां गुणाभिनन्दनं विहितमिति।

× × × ×

## कृतज्ञता-प्रकाशः।

सुप्रभातस्य पुनः प्रकाशनाय भारतशासकाज्ञां प्राप्तुं कृतपरिश्रमाणां श्रीमतां श्रीप्रकाश [ वार-एट-ला, एम० एल० ए० ] महोदयानां कृतज्ञताप्रकाशनं पूर्वमेव कृतमासीत्। एतदतिरिक्तम्, ग्राहकवृद्धौ कृतोद्योगानां कर्गजप्राप्तौ च कृत-भूरिपरिश्रमाणां सुप्रभातप्रणयिनां प्रयागस्थ-प्रभातमिश्र-साहित्यरत्न-महाशयानामपि महान्तमुपकारं बिभृमः। एवमेव जयपुरस्थ-खेतडी-ग्रामवासिनां आयुर्वेदाचार्य—नन्दलालशास्त्रिणां सुप्रभातस्य सहजप्रणयिनां कृतज्ञताभरमुररीकुर्मः, यैर्विविधाः ग्राहकाः पत्रस्य सम्पादिताः सम्पाद्यन्ते च।

× × × ×

## उत्तिष्ठत ! जाग्रत !!

संस्कृतभाषायाः प्रचाराय, देशकालसमाजोपयोगिता-सम्पादनाय, शिक्षा-परिष्काराय, जनताया हृदयेषु संस्कृत-प्रणय-प्रवणता-प्रवेशाय, विश्व-वाङ्मयजगति संस्कृत-भाषा-गौरव-प्रख्यापनाय च बहुकर्तव्यमस्ति संस्कृत-प्रणयिनाम्। यदा कदाचित् सभामञ्चेषु लम्बायमानैः साङ्गहारैर्भाषणैः, प्रस्तावैः, कियद् वर्षानन्तरं केषाञ्चन विदुषां सम्मेलनैः, पत्रादिप्रकाशनैर्वा न कदाचिदपि न संस्कृतोन्नति-कार्यं सेत्स्यतीति निश्चितमेव।

अस्माकमनैक्येन, परस्परमीर्ष्याबाहुल्येन, आलस्येन, उद्यमराहित्येन, केवलं परदोषालोचनेन च सङ्ग्रन्थनमसम्भवं भवति। उक्तञ्चाभियुक्तैः—

सिंहानां महदालस्यं सर्पाणाञ्च महद्भयम्।
ब्राह्मणानामनेकत्वं तेनेदं ध्रियते जगत्॥

अस्मिन् युगे "सङ्घशक्तिः कलौ युगे"—इति प्राचीनानां वचनमेव सफलं भवतीति प्रत्यहं प्रत्यक्षमवलोक्यते। सङ्घशक्त्यैव राष्ट्रमहासभया (कांग्रेस) साफल्यं लब्धम्। श्रमजीविनः सङ्घशक्त्यैव स्वीयं सौविध्यं सर्वत्र प्राप्नुवन्ति। हिन्दीभाषा-सम्मेलनेन सङ्घशक्त्यैव हिन्दी राष्ट्रभाषा पदमारोपिता। यदि कुत्रापि हिन्दी-भाषाया अपमानं नैयून्यं वा भवति तदा भारतवर्षस्य सर्वाण्यपि हिन्दी-पत्राणि, सर्वेऽपि हिन्दी-हितैषिणः, सर्वा अपि हिन्दी संस्थाः, एकस्वरेण कार्यं कुर्वन्ति, आन्दोलनं सञ्चालयन्ति, विरोधं कुर्वन्ति, साफल्यञ्च लभन्ते। एवमेव साम्प्रतं सर्वत्रैव संघशक्तेः प्रबलता, सफलता च समालोक्यते। अस्माकमेव पूर्वजानां सिद्धान्तमुररीकृत्य-आधुनिका सफला भवन्ति, वयं च विशृङ्खलतामापद्य स्वार्थं विनाशयामः।

× × ×

तद् यदि किमपि कर्तव्यञ्चेत् एका महती संघशक्तिः सम्पादनीया। अद्य संस्कृतज्ञानां का नाम संस्था-एतादृशी वर्तते, या संस्कृतभाषायाः कृते किमपि करोति। राजकीयाधिकारिणो यथेच्छं संस्कृत-शिक्षा-सञ्चालनं कुर्वन्ति, विश्व-विद्यालयेभ्यः संस्कृतभाषाया

अपसारणं क्रियते, महत्यपि दुर्भिक्षे, महामहर्घतायाञ्च संस्कृताध्यापकानां वेतन-व्यवस्था सैव पुरातनी प्रचलति । संस्कृतभाषाप्रसाराय नवीन-वाङ्मय-निर्माणं न भवति ?—इत्यादयो बहवो महत्वपूर्णा विषया संस्कृतज्ञानां नितरामावश्यकाः । परं तेषां कृते कः किं करोति ? का नाम संस्कृतसंस्था महत्वपूर्णेषु विषयेषु-आन्दोलनं करोति ? अधिकारिणां वा ध्यानमाकर्षति ? संस्कृत-शिक्षा-विषये केन किं क्रियते ? कीदृशं परिवर्तनमपेक्ष्यते ? परिवर्तने निखिल-भारतीय-विदुषां का सम्मतिः ?—संस्कृतज्ञानां जीविका-प्रश्नः कथं समाधीयेत ? संस्कृतविदुषां निर्धनता कथं दूरीकृता भवेत् ? जनतायां संस्कृतोपेक्षणे सति संस्कृतं पठतां छात्राणां पठनेन किं फलं स्यात् ? संस्कृतपाठशालादि-व्याजेन धनमर्जयतां कथं नियन्त्रणं स्यात् ? संस्कृतज्ञाः निर्जीवाः, व्यवहारानभिज्ञाः, पदे पदे तिरस्कृताः कथं भवन्ति ? समाजकार्येषु देशकार्येषु वा कथं संस्कृतभाषाया उपयोगः स्यात् ?—इत्यादिकं विविधं विचारणीयमस्ति । तत्कोऽत्र विचारयति ?

× × ×

एतत्कार्यं तु संस्कृतज्ञानामेव विद्यते ? अन्यः किमर्थमस्माकं कृते व्यर्थपरिश्रमं करिष्यति । इत्येतदर्थं संस्कृतज्ञानां प्रबलतरो महान् सङ्घ अपेक्षते । सङ्घशक्ति-सम्पादनाय च पत्राणि व्याख्यानानि चाधुनिकसाधनानि । उभयमपि संस्कृत-संसारे नास्ति ।

पुराकाले वाराणसीतः 'सुप्रभातम्' नाम पत्रं प्रचलतिस्म । संस्कृत-साहित्य- समाज-नामकं विदुषां सुदृढं सङ्घटनञ्चासीत् । तदानीं द्वयोरान्दोलनेन संस्कृत-क्षेत्रे महत्कार्यमनुष्ठितमभूत् । सुप्रभातानन्तरमेव सूर्योदयः, उद्योतः, संहस्रांशुः, मधुरवाणी, संस्कृत-रत्नाकरः इत्येतेषां, 'संस्कृतम्' साप्ताहिक-पत्रस्य च प्रादुर्भावः समभूत् । सुप्रभातानन्तरमपि ज्योतिष्मती, अमरभारती-भारतश्रीः-इत्यादि-पत्राणि निःसृतानि । एवमेव विविध-संस्कृत-संस्थानामपि संस्थापनमभूत् । परमिदानीं द्वित्राण्येव पत्राणि प्रचलन्ति । संस्थाश्च शिथिलाः सन्ति ।

संस्कृत-साहित्य-समाजेन वाराणस्यां या जागृतिः समुत्पादिता, तया च काशीस्थ-विदुषां मण्डले महज्जीवन सञ्चारितम् । ब्राह्मणमहासम्मेलनम्, सनातनधर्म-पण्डित-सभा, अन्यानि च सङ्घटनान्यभूवन् । तेनैव च महदान्दोलनेन काशीस्थ-राजकीय-संस्कृत-परीक्षास्वपि महत् परिवर्तनमभूत् ।

परमिदानीं कतिपयवर्षानन्तरं संसारस्य महत्परिवर्तनं जातम् । एतदभ्यन्तरे यज्जातं तद्विश्वे तिहासे न कदाचिद् बभूव । परिवर्तमानं जगत् पूर्वस्मात् स्थानात् महदग्रे वरीवर्त्ति । सर्वत्रैव विचित्रा स्थितिः समालोक्यते । अस्माकं देशोऽपि पूर्वकालात् किमपि विशिष्टतरं स्थानमासाद्य सन्तिष्ठते । अस्माभिरपि संस्कृतज्ञैर्विशिष्टमेव स्थानमासादनीयम् । नोचेदस्माकमस्तित्वमपि विनष्टं स्यादिति नातिशयोक्तम् ।

× × ×

आन्दोलन-कालोऽयम् । स्वाधिकारप्राप्तये ये कृतसङ्कल्पाः, बद्ध-परिकराः, विविध-कष्टान् मर्षयित्वाऽपि सुदृढं प्रयतमानाः सन्ति, त एव जीविष्यन्ति, तेषामेव जीवनाधिकारः, त एव जीवितुं योग्याश्च । अतो वै वयं संस्कृतज्ञेषु सुदृढं जीवनमाधातुम्, स्वाधिकारानवाप्तुम्, स्वीयं गौरवं रक्षितुम्, स्वञ्च परिरक्षितुम्, कार्यक्षेत्रे सानुरोधम्, साग्रहम्, सोत्साहम्, सोल्लासञ्च समाह्वयामः । अयमेव समयो जीवन-मरण-प्रश्न-समाधानस्य । अवतरन्तु कार्यक्षेत्रे, तरन्तु विपन्नदीम्, उत्तरन्तु अवमान-महोदधेः परं पारम्, एतदेव कर्तव्यं सुप्र-

भातस्य, एतदेव लक्ष्यम्, ध्येयञ्चेति सुप्रभातप्रणयिनोऽपि दुर्गति-महानिशा-सुप्रभाताय सर्वथा सन्नद्धाः भवन्तु। प्रचारयन्तु च प्रतिपाठशालम्, प्रतिशिक्षणालयम्, प्रतिग्रामम्, प्रतिनगरम्, प्रतिखर्वटम्, प्रति संस्कृत-प्रणयिनं सुप्रभात-सन्देशम्।

× × × ×

## मिसमेयो-देशे व्यभिचारः।

कियतः कालात् पूर्वं मिसमेयोनाम्नी महिला, 'मदरइण्डिया'-पुस्तक-द्वारा स्वदेशे भारतीयान् पुरुषान् बर्वरान्, पाषाणपूजकान्, असभ्यान्, व्यभिचारिणः, दुराचारिणश्च प्रख्यापितवती। भारतीयार्यललना-समाजेऽपि व्यभिचारारोपं कृतवतीति सर्वप्रसिद्धमेतत्। साम्प्रतमेव अप्रेल-मासस्य षोडशे दिवसे ब्रिटिश-पार्लमेन्ट-महासभायां श्रमजीवि-सदस्येन आई० सी० सेफिंगटन-महाशयेन यद् वक्तव्यं दत्तम्, तदवलोकनीयमेवास्ति। स वदतिः—

"'मैरिज-गाइडेन्स' नाम्नी सभा स्वविवरणे प्रकटीकरोति यत् ब्रिटेन-देशे २० वर्ष-वयसो न्यूनावस्थायां यावतीनां कुमारीणां विवाहो भवति, तासु प्रतिशतं चत्वारिंशत् कुमार्यो गर्भिण्यो भवन्ति। २० वर्षवयस्कानां कुमारीणां विवाहानन्तरं यदि चत्वारः पुत्राः भवन्ति, तेष्वेकः प्रथमो जार-जातो भवति, यतः स विवाहात् प्रागेव गर्भे समागच्छति"—इति।

एतस्य भाषणानन्तरं महासभायां महान् क्षोभः, कोलाहलश्च समुदभवत्। अथापि पाश्चात्याः सभ्य-शिरोमणयो गण्यन्ते। अस्माकं देशीयाश्च नवयुवकास्तेषामेव सभ्यतानुकरणे स्वीयं गौरवं मन्यन्ते। हन्त !!!

× × ×

## क्षमाप्रार्थनम्।

सुप्रभातस्य प्रथमसंख्यायां 'सुप्रभात-सुषमा' इति शिरस्का कविता प्रकाशितासीत्। तत्रास्माकं प्रियसुहृदां श्रीमदनन्तरामशास्त्रिवेताल-महाशयानां विद्यते काचन विप्रतिपत्तिः। तदुत्तररूपेण तैरपि किञ्चित् प्रकाशनाय प्रेषितमासीत्। परमत्र विषये वयं वेताल-महाभागान् स-क्षमाप्रार्थनं विज्ञापयामो यत्तस्याः कविताया मुद्रणावसरे विविधकार्यव्यग्रैरस्माभिरभिधेयार्थमात्र-विश्रान्त-धिषणैर्व्यङ्ग्यार्थो नावगतः। अतोऽयं सम्पादकापराध एव; न लेखकापराधः। यदि भवतां कवितामिदानीं बुद्ध्वा प्रकाशयिष्यामस्तदा तत्प्रत्युत्तररूपेण पुनरपि पूर्वलेखकस्य कविता-प्रकाशनमत्यावश्यकं स्यादिति सौमनस्य-सौहार्द-स्नेह-प्रचाराय प्रवर्तितं सुप्रभातं कलह-क्षेत्रं भविष्यतीति श्रीमन्तो मर्षयन्तु। साम्प्रतं व्यक्ति-गत-क्षेप-पूर्णाः कविताः कदापि न प्रकाश्येरन्।

× × ×

## वृद्ध-विवाहः।

समाचार-पत्र-द्वारा समाचार-वाहकैश्च समधिगतं यत प्रान्तीय-संस्कृत-पाठशाला-निरीक्षकैः पञ्चपुत्रेषु सत्स्वपि पुनः पाणिपीडनं विहितमिति। वयन्तु तेषां वर्धापनमभिनन्दनञ्च—कुर्महे। एष तु तेषां परम-पुमर्थ-परिचयः। भारतीय-आयुर्विज्ञान-दृष्ट्या तु पुनर्यौवन-महौषधमिति भारतप्रसिद्ध-वैद्यैः स्वर्गीय-त्र्यम्बकशास्त्रिमहोदयैः क्रियासमभिहारेण प्रत्यक्षमेव प्रदर्शितम्। परिणतवयसां विवाहस्तु प्रकृतौ पेलवतां मार्दवं औदार्यं शान्तिञ्च ददाति। तत्रापि ते न वृद्धाः प्रतीयन्ते, जीवज्जनकाश्चेति सर्वथा युक्ततरमेवेदम्। परन्तु विशंतिवर्ष-देशीयस्य स्वात्मजस्यापि पाणि-पीडनं सत्वरमेव तैः कारयितव्यम्। एतत् किञ्चित् मनसि सङ्कोचमादधाति।

× × ×

# राधा-माधव-विलासः ।

( काव्यम् )

## विहारी पद्यैः कृत-संवादम् ।

प्रणेता—कवि हरिनाथशास्त्री, दर्शनाचार्यः

( क्रमशः )

रस-राशं रमयन् शरदो
निशि गोपवधूरनुगामी ।
गतिलाघवमवलम्ब्य
विभावयतीव सखा समगामी ॥११॥

आलोकयितुमिहेच्छसि वामन.
विरहदशामदसीयाम् ।
परिहर पदरवमनुसर,
मानुष-पदगतिमत्र मदीयाम् ॥ १२ ॥

कृष्णालीकवचोभिरलं नहि
वञ्चयितासि विमूढाम् ।
शोणतरं तव नयनयुगं वमतीव,
रतीमतिगूढाम् ॥ १३ ॥

नयनकोणमयि ते किमु शोणं,
बाले जातमवेहि ।
शोणतरं तव नयनयुगं,
प्रतिबिम्बितमित्यवधेहि ॥ १४ ॥

गिलसि कलुषमिह किं शठ,
माधव, दूरमपेहि तवालम् ॥
तव्रजने परिहासकथा,
परितापकरी जहि जालम् ॥ १५ ॥

अन्योन्यस्य मनः सुभगाविह,
अन्योन्यं व्यतिराते ॥
स्वेद—सलिल—भर—रोमकुशा-
नादाय करव्यतिघाते ॥ १६ ॥

---

११ अनुगामी सहगामी तृतीयार्थे अनोः कर्मप्रवचनीयत्वम् । गोपवधूरिति कर्मप्रवचनीय-योगे द्वितीया । बहुवचनेन साहित्यस्य व्याप्तिर्व्यज्यते, तया सर्वासु सममनुरागः, तेन उत्तमनायकत्वमपि प्रतीयते ।

गोपिन सँग निशि शरद की रमत रसिक रस रास ।
लहा छेह अतिगतिन की सब न लखे सब पास ॥

१२ . पद-रव-परिहारेण गच्छन् तस्या मदुक्तां दशां प्रेक्ष्यसि । अन्यथा तवागमनज्ञानेन सञ्जातहर्षातिरेकायास्तस्या अविलम्बमेव सर्वमन्यथाभावि, अहो [तस्यास्त्वयि राग इति व्याजेन व्यज्यते ।

जौ वाकी तनकी दशा देखन चाहत आपु ।
तौ बलि नेकु निहारिये चलि औचक चुप चापु ॥

१३. हे कृष्ण ! = श्यामवर्ण—तेन हृदयस्य मलिनता, तेन च संततापराधयोग्यता, तव मधुरवचोभिरियत्कालं विमूढामिदानीं तव ज्ञातमलिनभावां मां प्रसादयितुं वचोभिरलम्'। नयनयुगं तव शोणतरमतिगूढां हृदयनिहितां रतीं रतिलंचमीं रतिसम्पदं वमति इव ।

मोहि करत कत बावरी किये दुराव दुरै न ।
कहे देत रति रातके रंग निचुरत से नैन ॥

१४. अयि—इति कोमलालापे । बाले—इत्यनेन कोपस्यासम्भावना उक्ता । नायं कोपजनितशोणिमा, किन्तु तव शोणतर—नयनयुग—प्रतिबिम्ब एषः—इत्यवधेहि ।

बाल कहा लाली भई लोयन कोयन माह ।
लाल तिहारे दृगन की परी दृगन मह छाँह ॥

१५. दुरै न निघाट घरौ दिये यह रावरी कुचाल ।
विख सी लागति है बुरी हँसी खिसि की लाल ॥

१६. अत्र मामकीनमपि व्रजभाषा—पद्यं द्रष्टव्यम् इत्युदाह्रियते ।

हाथ लिये ही हाथ दिये हिय दोऊ दुहुन को ।
पायो विजय अनङ्ग भंग करि धैर्य्य दुहुन को ॥
स्वेद-सलिल-रोमाञ्च—कुशा गहि दूलहिन दूलह !
कियो दान भरि भगति भूरि जगमग अति दूलह ॥
विहारीः—स्वेद-सलिल-रोमाञ्च-कुश गहि दुलहिन अरु नाथ ।
दियो हियो संग नाथ के हाथ दिये ही हाथ ॥

वदति न देवर कुमतमहो,
कुलजा कुलकलह—परीता ॥
पञ्जरगत शुक इव,
शुष्यति वृषदंशभयादतिभीता ॥ १७ ॥
कृत्वोन्निद्रमिवाक्षियुगं,
परमलसमिवालिशरीरम् ॥
परसौभाग्यमलम्भि,
सपत्नीभिरति-राग-गभीरम् ॥ १८ ॥
कापट-पाटवशील-जनेषु,
त्यजालि ! मुधा विश्रामम् ॥
जगति सपत्नीजन इह,
सफलं घोपयति प्रतियामम् ॥ १९ ॥
गता न शिशुता तत्तनुतः,
प्रक्रामति यौवनमङ्गे ॥
तत्सङ्गतिमवगम्य लसति,
देहद्युतिरधिकमलङ्गे ॥ २० ॥

---

१७. कहति न देवर की कुवत कुल तिय अधिक डेरात ।
पञ्जरगत मंजार ढिग सुकलौं सूखति जात ॥
१८. पाय्यौ सोर सुहाग को इन विन ही पिय नेह ।
उन दौंही अँखियाँ ककै कै अलसौंही देह ॥
२०. अत्रापि मामकीनं पद्यं व्याख्यानभूतम् । यथाः—
झलक्यो जोवन अङ्ग अङ्ग
झलकति शिशुताकी झाँई ।
दीपति देह दुहूँ मिलि राजै ताफत पट द्युति पाई ॥
विरचि मदन रससदन छवीलिहिं जगकी रुचि
उर वाई ।
कनक कमल विद्रुम—नवपल्लव इन्दुकला सकुचाई ॥
छुटी न शिशुता की झलक झलक्यो जोवन अङ्ग ।
दीपति देह दुहून मिलि दिपति ताफता रङ्ग ॥

---

# महाकवि-त्रिविक्रमभट्टः

लेखकः—पुरुषोत्तम शर्मा गौडः, साहित्यशास्त्री.

काव्यं हि नाम नितान्तरमणीयतरं वस्तु, रोचकतया निरतिशयाल्हादजनकतया च । कथमस्य रुचिरत्वं न स्यात्, यस्य खलु स्वप्रकाशानन्दस्वरूपो ब्रह्मास्वाद-सहोदरश्च रस एवात्मा । अतएव रसिकाः सहृदया एव काव्यानन्दममन्दं विन्दन्ति, नेतरे । तदुक्तमभियुक्तैः—

'कवितारस-परिपाकं ह्यनुभवरसिको विजानाति ।'

एवं ,लोकोत्तरवर्णना-निपुण-कविकर्म-कर्तुः कवेरपि भूयान् भार इति नास्त्यत्र सन्देहलवोऽपि । उक्तमेव केनापि—

न स शब्दो न तच्छास्त्रं न स न्यायो न सा कला ।
जायते यन्न काव्याङ्ग—महो भारो महान् कवेः ॥

अस्माकं संस्कृतवाङ्मये भूयांसो महाकवयो विचित्र-रचना-चातुरी-चमत्कृत-सचेतसः समभूवन् । तत्रैकस्य महाकवेस्त्रिविक्रम-भट्टस्य विषये गुरुजनमुखादाकर्णितं किमपि कौतुकात् सुप्रभात-पाठकानां पुरो विनिवेदयामि ।

महाकविरयं संस्कृतभाषायाः प्रौढतरेषु प्रथमश्रेणी-मुपगतेषु महाकविषु स्थानमासादयति स्वप्रौढिप्रकर्षेण चेतश्चमत्कारि-कविकर्मनैपुण्येन चेति नात्र काचन विप्रतिपत्तिः ।

महाकविरयं देवादित्यस्य पुत्रो दक्षिण-हैदराबाद प्रान्तान्तर्गत-मान्यखेटाधीश्वरस्य सभायाः प्रधानकविः, प्रमुखपण्डितश्चासीत् । स च मान्यखेटाधीश्वर इन्द्रराज-नृपतिः, ९१५ ख्रिष्टाब्दे समभूदिति—बडोदाराज्यान्तर्गत-'नवसारी—' ग्रामे समुपलब्धेभ्यस्ताम्रपट्टेभ्यः समवसीयते; ये च राज्ञा इन्द्रराजेन स्वीय-राज्याभिषेक-समये ब्राह्मणेभ्यो वितीर्णा आसन् । तेषां दानपट्टानां लेखकोऽप्ययमेव देवा-दित्य-सूनुस्त्रिविक्रम इति निश्चितप्रायम् । त्रिविक्रमश्च स्वीय ग्रन्थे स्वपरिचयं ददन् विलिखतिः—

"तेषां वंशे प्रथित-यशसां श्रीधरस्यात्मजोऽभू-
द्देवादित्यः स्वमति-विकसद्-वेद-विद्या-विवेकः ।
उत्कल्लोलां दिशि दिशि जना कीर्ति-पीयूष-सिन्धुं
यस्याद्यापि श्रवण-पुटकैः कूणिताक्षाः पिबन्ति ॥
तैस्तैरात्मगुणैर्येन त्रैलोक्यास्तिलकायितम् ।
तस्मादस्मि सुतो जातो जाड्यपात्रं त्रिविक्रमः ।"
—इति ।

अयं महाकविः 'दमयन्तीकथा'ऽपरपर्यायं नलचम्पूरिति नामधेयं गद्य-पद्यमयं सभङ्गश्लेष-भङ्गि-तरङ्गितं प्रौढतमं काव्यं प्रणिनाय । अत्र सप्तत्रिंशदुत्तर-शतत्रयपरिमितानि गद्यपद्यानि वर्तन्ते ।

अस्माकं देशे विशिष्ट-महाकवीनां विदुषाञ्च विषये माहात्म्य-विशेष-सूचकाः कथाः प्रायः संलभ्यन्ते । कालिदास-भारवि-श्रीहर्षादि-महाकवीनां विषयेऽपि श्रूयन्ते प्रचुराः प्रवादाः । तथैव त्रिविक्रमभट्ट-विषयेऽपि प्रसिद्धा किम्वदन्ती । यथा किल—

"अयं त्रिविक्रमोऽनधीतशास्त्रोऽविनीतो महामूर्खश्चासीत् । एकदा देवादित्ये कार्यवशाद्देशान्तरं गते कोऽपि महान् विद्वान् मान्यखेटाधीश्वरस्य सभायां समागत्य "राजन्! केनापि स्वसभा-पण्डितेन सह मम शास्त्रार्थं कारय, अन्यथा जयपत्रं देहि" ति प्रोवाच । राज्ञा च देवादित्यस्य पुत्रोऽपि नूनं पण्डित एव भवेदिति विचार्य स आकारितः । असावपि तच्छ्रुत्वा विषण्ण-हृदयो वाग्देवीं प्रार्थयामास सा च रक्षायै । सापि च 'यावत्ते पिता न समायाति तावत्त्वन्मुखे स्थास्यामि—" इति वरं ददौ । तेन च वरप्रभावेण प्रतिवादिनं पराजित्य गृहान् प्रति निवृत्तोऽसौ पितुरागमनात् प्राक् गद्यपद्यमयं चम्पूकाव्यं प्रणिनाय । सप्तमोच्छ्वास-परिसमाप्तावेव पितुरागमनेन सरस्वती निर्जगाम, अपूर्ण एवावतस्थे च सन्दर्भः"—इति ।

किम्वदन्तीयं निर्मूला, कल्पिता च प्रतिभाति । वस्तुतस्तु महाकविरयं बाल्यादेवाधीत-सविधि-सकल-साहित्य-शास्त्रस्तदङ्गशास्त्रश्च समवलोकित-निखिलदक्षिण-प्रान्तीय-भूभागः, राजोचिताचारविचार-व्यवहारकुशलः, समनुभूत-संसार-सारः, बहुश्रुतो बहुदर्शी परममार्मिको विद्वद्धुरीणश्चेति प्रतीयते ।

त्रिविक्रमभट्टः, महाकविं बाणभट्टं प्रायः समनुकरोति । बाणभट्टेन यथा शुकनाशोपदेशः सम्बद्धस्तथैव चानेन कविना सालङ्कायनोपदेशः समुपवर्णितः । दैवयोगेन कादम्बरी खण्डिताऽतिष्ठत्तथैवेयमपि चम्पूरसम्पूर्णैवातिष्ठत् ।

प्रकृतिवर्णने सिद्धहस्तस्य महाकवेः—विविधवन-पर्वत-नदी-वृक्ष-चन्द्र-सूर्य-आकाश-नक्षत्रादीनां वर्णने, कुण्डिनपुर-विदर्भदेशादि-वर्णने च सर्वत्र प्रखरतरा मार्मिकी च प्रतिभा प्रतिभासते ।

लौकिकज्ञानेऽपि चास्य महाकवेः परं प्रावीण्यं प्रतिपदं प्रतीयते । बहवो लौकिका आभाणकाः कविना सरसतया यथायोग्यं संनिवेशिता नितरामानन्दयन्ति सचेतसां चेतांसि । यथा—

'इतो व्याघ्रः, इतस्तटी, 'हृदयतृणकुटीरे दीप्यमाने स्मराग्नावुचितमनुचितं वा वेत्ति कः पण्डितोऽपि । ' इत्यादयो बहव आभाणकाः समुपलभ्यन्ते । ' कार्नाटीमिव सुखरतां न प्रशंसन्ति सुधियः । ' इत्यादयो गूढदेशाचारा अपि वर्णिताः कविना । संगीतशास्त्रे, चित्रकलायाञ्चास्य प्रखर-पाण्डित्यं स्थाने स्थाने विद्योतते ।

'हरचरणसरोज'—शब्दः प्रत्युच्छ्वासमन्ते निवेशित इति हरचरणसरोजाङ्केयं प्रसिद्धा चम्पूः । कविश्चायं शैव इति प्रतीयते ।

एकवचन—बहुवचनयोः, स्त्रीलिङ्ग—पुल्लिङ्गयोरेकाधिकरण्यं बहुशः समावेश्य व्याकरणशास्त्रे परमं पाटवं प्रकटीकृतं तत्र तत्र त्रिविक्रमेण ।

अलङ्कारेषु च भ्रान्तिमदलङ्कार एव प्रियतरः कवेः । साहित्यदर्पणादिलक्षण-ग्रन्थेषु अत्रालङ्कारे त्रिविक्रमस्यैवोदाहरणानि लभ्यन्ते ।

सभङ्गश्लेषे तु संस्कृत—साहित्येऽद्वितीय एवायं कविकुलचूडामणिः । प्रथममेव कविः स्वग्रन्थे लिखति:—

वाचः काठिन्यमायान्ति भङ्गश्लेप—विशेषतः ।
नोद्वेगस्तत्र कर्तव्यो यस्मान्नैको रसः कवेः—इति ।

यद्यपि भङ्गश्लेषवशात् श्रवणसमनन्तरमेव सद्यो रसास्वाद—प्रतिबन्धकता भवति, तथापि कवेरस्य श्लेषोऽपि सरल—सरसतया सद्य एव मदयति सहृदय—मानसानि । नैतादृशः प्रौढतरः सरसश्लेषकविरन्यः समालोक्यते संस्कृत—साहित्य—संसारे ।

संस्कृते केषाञ्चन महाकवीनामैकैकयानुपमोपमया यथोपनामानि दीपशिखाकालिदास–आतपत्रभारवि–घण्टा माघ–तालरत्नाकरप्रभृतीनि प्रसिद्धानि, तथैवास्य "यमुना त्रिविक्रम" इति प्रसिद्धिः। भूतले यत्रतत्राऽस्थानेऽपि गङ्गा यमुना–सङ्गमवर्णनं कृतं दृश्यते कविभिः। परन्तु आकाशे गङ्गा–यमुना–सङ्गमं कुर्वता कविना कल्पनाशक्तेर्महान् परिचयः प्रदत्तः। यथा—

उदयगिरिगतायां प्राक्प्रभा–पाण्डुतायां
गतवति च निशीथे शृङ्गमस्ताचलस्य।
जयति किमपि तेजः साम्प्रतं व्योममध्ये
सलिलमिव विभिन्नं जाह्नवं यामुनञ्च॥

अस्मिन् काव्ये तद्धितप्रयोगाणां बाहुल्येन "प्रियतद्धिता दाक्षिणात्याः" इतीयं लोकोक्तिः सर्वथा सङ्गच्छते।

नैषधकारो महाकविः श्रीहर्षो नलचम्प्वां त्रिविक्रमस्य काव्यरचनावैचित्रीमालोक्यैव रभसवशात् महदद्भुतं महाकाव्यं प्रणिनाय। इमामेव दमयन्तीकथां तत्तत्स्थाने परिवर्द्धयन्, परिष्कुर्वन्, स्वीयां वाग्वैदग्धीं प्रदर्शयन्, नलचम्पूमेवापूपुरदिति मन्तव्यम्। यत्र यत्र त्रिविक्रमस्य नैयून्यमासीत् तत्र तत्र रचना–परिपाटी–पाटवेनोत्कृष्टतरं चकार। यथा हंस–नलसमागमे, तस्य दौत्ये, दमयन्ती–हंस–समागमे च त्रिविक्रमस्य किमपि क्षतिपूरणमकार्षीदिति मन्यामहे। नलस्य दौत्यमपि सविशेषचमत्कारमरीरचदिति च। अस्तु।

त्रिविक्रम-भट्टोऽयं स्वीयया एकलयैव चम्पूरचनया भारतीय-कवि-समाजे प्रकृष्टतरमासनं लभते-इति निःशंसयं वक्तुं पारयामः।

मदालसा-चम्पू-कर्ता यमुना-त्रिविक्रम एव, अन्यो वेति सन्देहास्पदमेव। तदेतदग्रे विचारयिष्यामः।

भारते भारती भातु पण्डिताः सन्तु मण्डिताः।
संस्कृताः सन्तु सन्तुष्टाः सुप्रभातोदये पुनः॥

---

## लीला—पद्मम्

( १ )

श्रीधाने द्यौविताने स्फुरितमणिगणाकारताराप्रताने,
पर्य्याय-द्योतमान-द्युमणि-शशि-महादीप-जाग्रत्प्रकाशे,
मन्द्रं मन्द्रं मृदङ्गे ध्वनति जलनिधेरन्तरङ्गे तरङ्गे
लोके लोकोत्सुकेऽस्मिन् जयति पटुनटो विश्व-रङ्गस्थलस्य।

( २ )

म्रियते धरणिरितीव म्रियतेऽखर्वेण निर्गुणं ब्रह्म
ब्राह्मी तदा सदाशय–महिता मे निर्गुणा जयतु।

( ३ )

स जयति रतिमिव नगपतितनयाम्प्रणयागताम्पराभूय
तपसा भृशं कृशान्तां कान्तां विदधान ईशानः।

( ४ )

लघुनैव लघु क्रियते यावज्जगतो महत्कार्य्यम्
पारावारोऽपारो न्यपायि यत् कुम्भ–सम्भवेनैव।

( ५ )

निर्दोषे मयि रोषं विधाय जोषं स्थितः किमसि ?
तर्ज्जयति पारदृश्वा चौर्य्यकलाया नगरपालम्!

( ६ )

पिब गरलं मधुरं तद्, विश वह्नौ शीतलस्सोऽपि
प्रेम–पथे चल–चरणं, राधे मा धेहि, मा धेहि।

( ७ )

प्राग् यस्या वचनेन चारु–रचनेनाघानि हैमो मृगस्तामन्तःपुरतो न किन्तु पुरतो निष्कास्य निष्कारणम्।
निर्मायाप्रतिमां तदीय–प्रतिमां यज्ञे यशश्चिन्वतो
मर्य्यादापुरुषोत्तमस्य पुरुषैर्मा स्त्रैणता वर्ण्यताम्।

---

—श्री जानकीवल्लभ शास्त्रिणः,
साहित्य—वेदान्ताचार्यस्य,

# पारसीक-धर्म-तत्वम् । ×

सम्पादकः

भारतवर्षे स्वल्पतमाः पारसीका निवसन्ति । स्वल्पतमा अपि ते परम-सभ्याः, सुसंस्कृताः, सुशिक्षिताः, सुसंवटिताश्च सन्ति । व्यापार-क्षेत्रे तु भारतवर्षे प्रधानेयं पारसीक-जातिरिति प्रचुरतरधन-शालिनी दानशीला च विद्यते । न केवलं भारते; निखिल-भूमण्डले लौहव्यापारे प्रधानः श्रीमान् ताता पारसीक एव । भारतीय-राष्ट्रमहासभा-संस्थापकः प्रथमो भारतनेता दादाभाई नौरोजी पारसीक एवासीत् । मोहमयी पून्ते कराची-नगरे च पारसीकानां प्राधान्यं विद्यते । अस्मिन् पारसीक-समाजे स्त्रीषु वेश्यावृत्तिः, पुरुषेषु च याचकवृत्तिः सर्वथा निषिद्धैवेति परमं महत्वम् । एतेषां समाजे सुरक्षिता धनकोषा विद्यन्ते । यदि कश्चन पुरुषो दरिद्रो भवति, तदा धनकोषात्तस्मै व्यापाराय धनं दीयते, यदि काचन स्त्री दरिद्रा स्यात्तदा तत एव कोषात्तस्यै धनं दीयते, येन सा गर्हितां कामपि वृत्तिं न समाचरेदिति । व्यापारशीलेयं जातिः, भारताद् बहिरपि अफ्रीका-अबीसीनिया-फ्रान्स-अमरिका-जावा-सुमात्रादि-देशेषु विपुलं व्यापारं करोति ।

भारतीयानामिव पारसीकानामपि धर्मः प्राचीनतम इति नैकप्रमाणैः सिद्धप्रायमेव । अस्माकं ऋग्वेदवत् 'जिन्दा अवेस्ता' नामको धर्मग्रन्थो नितरां प्राचीन इति प्रसिद्धम् । 'जरथुस्त्र' नामा प्रथमो विद्वान् ग्रन्थमेनं प्रणिनाय । एतेषां सभ्यता संस्कृतिश्चापि आर्याणामिव दृश्यते । इमे कटिभागे यज्ञोपवीतं धारयन्ति । अग्निहोत्रिणामिवैतेषां अग्निशाला स्थापनम्, हवन-पूजनादिकञ्च भवति । समानैव सभ्यता संवदति परस्परं पारसीकानामार्याणाञ्चेति ऐतिह्यविदामत्र प्राय ऐकमत्यमेव ।

यदा खिष्टस्याष्टमे शतके ( 8th Sentury A.D. ) पारसीकाः स्वदेशात् भारतभुवं समवतीर्णाः 'सञ्जाणबन्दर' नाम्नि समुद्रतटे, तदा तत्र यादवराणानाम्नो नरपतेः सभायां निवासाज्ञां लब्धुं समुपस्थिताः । तत्र च पारसीक-धर्मविषये राज्ञा पृष्टेषु तेषु तेषां धर्मगुरुः-दस्तूर नैर्योसंग धवले नामा संस्कृतभाषायां षोडश श्लोकान् निर्माय स्वधर्मतत्वं प्रख्यापयामास ।

भारतवर्षे निवासस्थानमुपलभ्य पारसीकैः स्ववेशं विहाय भारतीयो वेशः स्वीकृतः । पूर्वं तेषां विवाह-संस्कारः प्रातःकाले भवतिस्म, परं भारतीय-देशाचारमनुसृत्य रात्रावेव विवाहक्रिया सम्पाद्यते ।

यादवराणा-समक्षं पठितेषु षोडशश्लोकेषु समुपलब्धा अष्टौ श्लोका अत्र समुद्ध्रियन्ते । एतेषामवलोकनेन स्फुटं प्रतीयते यद् भारतीयैरार्यैः सह तेषां कियत् साम्यं विद्यते । इमे श्लोका यत्रकुत्राप्यशुद्धा विद्यन्ते, परं यथोपलब्धा एव प्रकाश्यन्ते । पाठकैरवधेयम् ।

[ १ ]

सूर्यं ध्यायन्ति ये वै हुतवहमनिलं भूमिमाकाशमाद्यम्,
तोयेशं पञ्चतत्वं त्रिभुवन-सदनं न्यासमन्त्रैस्त्रिसन्ध्यम् ।
श्रीहोर्मिज्दं सुरेशं बहुगुणगरिमाणं तमेवं कृपालुम् ।
गौराः धीराः सुवीरा बहुबल-निलयास्ते वयं पारसीकाः ॥

[ २ ]

स्नाने ध्याने सुपाठे हुतवह-हवने भोजने माल्य-मौत्रे
शास्त्रोक्तं सप्तमौनं विदधति नृवराः सर्वदाः सर्वदा ये ।
नानाधूपैः, सुपुष्पैर्वरफल-बहुलैः पूजयन्तीह धेनूः
गौराः धीराः सुवीरा बहुबल-निलयास्ते वयं पारसीकाः ॥

[ ३ ]

रम्यं वस्त्रं पवित्रं कवच-गुणमयं कञ्चुकं नित्यमङ्गे
युक्तामूर्णां सकुस्तीमहिमुख-समता-बन्धनां चैव कट्याम् ।
मूर्द्धानं वस्त्रगुप्तं पट-युगल-तले रक्षणं कुर्वतो ये
गौराः धीराः सुवीरा बहुबल-निलयास्ते वयं पारसीकाः ॥

[ ४ ]

यन्माङ्गल्ये विवाहे कथित-शुभदिने सुस्वरं गीतवाद्यम्,
श्रीखण्डं चन्दनाद्यं वपुषि युवतयो धारयन्तीह येषाम् ।
स्वाचाराद्ये पवित्रा बहुगुण-निधयो रम्य-शास्त्रार्थ-युक्ताः
गौराः धीराः सुवीरा बहुबल-निलयास्ते वयं पारसीकाः ॥

× इमे श्लोकाः मोहमयीस्थ-सुप्रसिद्धविदुषां प्रथित-यशसां महोपाध्याय पं० रेवाशङ्कर मेघजी शास्त्रिणां कृपया समुपलब्धा आसन् । अतस्तेषां महान्तमुपकारमुररीकुर्मः ।—सम्पादकः

[ ५ ]

येषां गेहे सुरम्यं मधुर-रसमयं चान्नदानादि नित्यम्
कासारं कूप-वापी-जलपुल-रचनं दानमेभिः प्रकारैः ।
वस्त्राद्यं द्रव्यदानं सुददति गुणवद्भ्यः सदा ब्राह्मणेभ्यो
गौराः धीराः सुवीरा बहुबल-निलयास्ते वयं पारसीकाः ॥

[ ६ ]

यादृग् हर्षो विषादः सुखमसुखमहो ज्ञानमौने च यादृक्
धर्माधर्मौ च यादृक् मल-विमल-कुले यादृगारोग्य-रोगौ ।
ऊर्ध्वाधस्तौ च यादृक् द्युति-तिमिरमयौ सृष्टि-संहारकारौ
येषामुक्तौ मतौ द्वौ नर-विधि-पुरुषौ ते वयं पारसीकाः ॥

[ ७ ]

गोमूत्रैर्मन्त्रपूतैः शिरमुख-नमिताः स्त्री-पयःपान-शुद्धाः
ब्राह्यान्तःस्नानमुक्तं तदनु परिवृता मध्यदेशे च मुद्रा ।
मुद्रावाह्यं न निद्रा जपनवमनसा साधु पूजादिकार्यम्
येषां मार्गे हि तत्त्वं सततमभयदं ते वयं पारसीकाः ॥

[ ८ ]

काष्ठैः षण्मासशुष्कैरगुरुमलयजैः काष्ठ-कर्पूर-धूपैः,
होमः स्यात् पञ्चकालं प्रतिदिनमुदितैरक्षरैर्मन्त्रयुक्तैः ।
निर्वाणाग्निस्तु सूर्यावृत-घन-रुचिरैर्ना युगान्तेऽपि येषां
सत्यन्यायैकनिष्ठा न च युवतिरतास्ते वयं पारसीकाः ॥

---

# संस्कृत-भाषा

श्रीगोपालशास्त्री, दर्शनकेसरी, साहित्याचार्यः

अनादि निधना ह्येषा वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी नित्या यतः सर्वाः प्रवृत्तयः ॥

इयं संस्कृतभाषा सृष्टितोऽपि पूर्वं वेदरूपेणाविर्भूता । अस्यामेव भाषायां देवाः स्वीयं व्यवहारं चालयन्ति । तत एवेयं ब्रह्मदेवेन सर्वप्रथमं पूर्ण-सृष्टि-विकाशावसरे सनक-सनन्दन-सनातनादिषु पूर्णप्रज्ञेषु महर्षिषु भाषारूपेण सञ्चारिता । अस्या व्युत्पत्तिबलादेवायमभिप्रायो द्योत्यते । तथाहि-संस्कृतभाषा नाम संस्कृता परिमार्जिता, परिष्कृता वा भाषा-वाक्-इति । परिष्कृततयैवेयमुच्यते—अतः संस्कृता, संस्कारं प्राप्ता—इति कथ्यते । अस्या एव विकृतं रूपं यद्धि प्राकृतजनैरभिधीयतेस्म, तद्धि प्राकृतभाषेतिशब्देनाभिधीयते ।

पूर्वस्मिन् काले या हि भाषा सभ्य-समाजे शुद्धरूपतो व्यवह्रियतेस्म, यस्यां भाषायां जनाः परस्परं लेखपत्रादिव्यवहारं कुर्वन्तिस्म, यस्याञ्च स्थिरसाहित्यं सूत्र-संग्रहोऽप्युपयोगिज्ञान-सन्निवेशो भवतिस्म; सैव हि संस्कृतभाषा, समीचीनभाषा, आर्याणां मातृभाषा, स्थिरभाषा, परिष्कृता भाषा, देवभाषा, अनादिभाषेत्यादिशब्दैर्व्यवह्रियते । इयन्तु अनार्याणां पद्धतिर्यत् पूर्वमसभ्याः पुरुषा अभूवन्, पश्चात् शनैः शनैः सभ्यत्वमवाप्ता—इति । नेयमार्याणां विचार-परम्परा । आर्याणान्तु वेदत आरभ्य धर्मशास्त्रेतिहास-पुराणकाव्यं यावत् सर्वाण्येव शास्त्राणि-एकस्वरेण पूर्व-पूर्णपुरुषाणां सभ्यानां सृष्टिर्भवति । पश्चाच्छनैः शनैः ह्रसिताः, असभ्याः, वर्णसङ्कर-वृत्तिसङ्कर-आश्रमसंकरादिभावेन वर्वरा मानवा भवन्ति, यतश्च सृष्टेरुच्छेदो जायत-इति सङ्गिरन्ते । उदयनाचार्येणोक्तम्-

जन्म-संस्कार-विद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
ह्रास-दर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥

अतश्चेयं सृष्टेरादौ समुद्भूतानां दिव्यानां मानवानां सुसंस्कृतभाषा, अमरभाषा, अविकृता भाषा-इत्यादि नाम्नाऽभिधीयते । अतएवेयं न विकारं गतवती । पूर्वत इदानीं यावदविच्छिन्न-परम्परेयं भाषा विद्यते ।

अस्या लौकिक-वैदिक-भेदेन द्वैविध्यम् । तत्र कियतां शब्दस्वरूपाणां भेदो दृश्यते, नान्यः कोऽप्यन्यादृशो भेदः । स चापि भेदो नगण्य एव । यतो हि इयमुभयात्मिकाऽपि व्याकरण-नियमैर्नियन्त्रिताद्यावधि-एकरूपेणैव तिष्ठति । प्राकृतजनेषु व्यवह्रियमाणा प्राकृतभाषा अस्या एव द्वितीयं रूपम् । सा च कालभेदात् देश-भेदतश्च विविधरूपाणि विभ्रती, हिमालयतः प्रसृता मूले विशुद्ध-सलिलापि मध्ये मध्ये सहायक-नदीभिर्विवर्द्धितजला, समुद्र-सन्निधौ तु

कलुषधारजला, अन्यदृशेव संजाता गङ्गेव, प्राकृत-पाली-मागधी-अवधी पैशाची--शौरसेनी-सौराष्ट्री-महाराष्ट्री, नागरी--त्यादिभेदेन नामबाहुल्यमासाद्य स्वकीयमूलशुद्धस्वरूपात्मक-संस्कृतस्वरूपतोऽन्यादृशा, तत्तत्कालिक-जनप्रिया, तत्तद्देशस्थ-जनप्रयोग-सरला, मूल-रूपतश्च्युतस्वरूपा, देशान्तरीय-भाषा-सम्मिश्रणतश्च नानारूपेण विकृता सम्भूय तिष्ठति । यतश्च साधारणजनानां परिचय एव न भवति यदिमाः सर्वा अपि देशभाषाः, मूले एक स्वरूपा एवासन्निति । किन्त्वासां भाषाणां मूलं शुद्धं स्थिरं स्वरूपं संस्कृतं यथा पूर्वं मूले-आदिकाले-आसीत्, तत् तथैवाद्यापि विद्यते । नाममात्रेणैवास्यास्तस्मिन् स्वरूपे लौकिक-वैदिक रूपेण भेदोऽयं नगण्य एवास्तीति बहूनां जनानान्तु सन्देहो विद्यते यदियं संस्कृतभाषा कस्मिंश्चिदपि काले जनैर्भाष्यमाणा व्यवह्रियमाणा वा नासीदिति ।

अत्रेदमेव वक्तव्यं विद्यते यदीयं कदापि काले जनैर्भाष्यमाणा नासीत्तदा अस्या पाणिनिमुनिकृतं भाषा-शब्देनाभिधानं कथं सङ्गच्छते । पश्यन्तु, पाणिनिर्हि—भाषायां सदवसश्रुवः ३ । २ । १०८, शरव्यशिश्वीति भाषायाम् ४ । १ । ६२, प्रथमायाश्च द्विवचने भाषायाम्, ७ । २ । ८८ ।—इति सूत्राणि पठति । प्रत्यये भाषायां नित्यम्-इति वार्तिकमपि वररुचिर्विरचयति । यदि लोके व्यवहृतेयं न स्यात्तर्हि लौकिकभाषा लोके व्यवह्रियमाणा भाषा-इति संज्ञैवास्याः कथं सङ्गता स्यात् । अतश्चाकामैरपि तैः प्रतेतव्यं भवति यदियं संस्कृता वाक्, सभ्या, सभ्यजनोचिता भाषा, संस्कृतमानवेषु, सभ्येष्वार्य्येषु, नूनं व्यवहृता आसीदिति । अतएवैमौ महावैय्याकरणौ पाणिनि-वररुची महर्षी भाषाशब्देनैव संस्कृत भाषाया बोधं कारयतः ।

वाल्मीकिरामायणे सुन्दरकाण्डे हनूमन्मुखेन वाल्मीकि महर्षिरपि—

अहं ह्यतितनुश्चैव वानरश्च विशेषतः ।
वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥

इति पद्यद्वयेन संस्कृता मानुषीं वाचं सर्वद्विजाति वाच्याञ्च स्वीकरोति । श्रीहर्षस्तु विश्वबोध्यामेवेमां संस्कृत भाषां प्राक्तने काले स्वीकरोति । तथाहि—

अन्योन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु ।
दिग्भ्यः समेतेषु नृपेषु तेषु सौवर्गवर्गो न जनैरचिह्नि ॥

इत्यतोऽपि संस्कृता चासौ भाषा संस्कृतभाषा-इति व्युत्पत्त्या सूच्यते । यतश्च या हि भाषा व्यवह्रियमाणाऽपि शुद्धा, परिष्कृता, संस्कार-सम्पन्ना भाषा विज्ञानानुकूलास्ति । सैव संस्कृतभाषेत्युच्यते—इति विशिष्ट-गुण-महिम्नैवेयमद्यापि सृष्टेः सुचिरे काले व्यतीतेऽपि निजं प्राचीनं रूपं नैव विजहौ । एतस्या एव द्वितीयं रूपं प्राकृतं पूर्वोक्त-प्रकारतो विगुणतामापद्य, आपद्य, देशभेदतो विविधरूपतां गतमस्ति । इत्यनेन संस्कृत-व्याकरणस्यापि महती अनुकम्पा ज्ञेया, यद्बलादियं स्वस्वरूपे एव नियंत्रिताऽद्यावधि निजरूपमविजहती तथैव तिष्ठति—इति ।

---

# को वेदानुद्धरिष्यति ?

लेखकः—श्रीलालचन्द्र शर्म्मा, आयुर्वेदाचार्यः
अर्जुन-आयुर्वेद-विद्यालय—प्रधानाध्यापकः

परःसहस्रेभ्यो वर्षेभ्यः सर्वतो हि अनर्थपरम्परापरिप्लुतेऽपि, अधुना च पाश्चात्य-चिकित्सा पद्धतिपदाक्रान्तेऽपि, पतितपावने पवित्रतमेऽपि आयुर्वेदे, सकलेऽपि, सकल-प्रतिपादित-प्रतिपाद्य-विषय-समन्विते-ऽपि, व्याधि-विकल-समस्त-संसार-सन्ताप-संशमन-सामर्थ्य-सम्पन्नेऽपि, सुकर-सुलभ-सुन्दर-चारु-चिकित्सा चन्द्रिका-चन्द्रित-सकलबुधजनान्तः करणेऽपि, भारतीय-दर्शनानुरूप-भव्यभावना-संभृतेऽपि, यः खलु अखिलस्यापि विश्वस्य सम्मिलिता संयुक्ता च सम्पत्तिः, परञ्च अखिलेनापि विश्वेन प्रमादवशात् विस्मृतत्वात् केवलं भारतवर्षीय-विद्वज्जनेन संरक्षितः स्यात्, निखिलस्यापि लोकस्य चिकित्सा-सरणि-स्रोतसां एको मूलभूतो महामहिममहितोऽमृतरस-स्राव-स्रवणो विस्रवणः, यश्च धर्मद्वारावहितैः, व्यपगत-भय-राग-द्वेष-लोभ-मोह-मानैः,

ब्रह्मपरैः, आप्तैः, कर्मविद्भिरव्याहत-सत्त्वबुद्धि-प्रचारैः, पूर्वैः पूर्वतरैर्महर्षिभिर्दिव्यचक्षुभिर्दृष्ट्वा उपदिष्टः। यश्च आयुष्याणि अनायुष्याणि च द्रव्य-गुण-कर्माणि वेदयति अतएव च हेतोर्यस्य "आयुर्वेद" इति संज्ञा, यश्च अथर्ववेदस्योपवेदः, येनोपकृतोऽयं लोकस्तं सबहुमानं अवलोकयन्नवलोक्यतेऽधुनापि — इति।

हा हन्त ! भोः ! तस्मिन् आयुर्वेदे प्रजापालन तत्परस्य प्रजापतेः शिरसीव भस्म प्रक्षेपं, सकल-लोकाल्हादके चन्द्रमसीव थूत्कारं, पाश्चात्य-वाग्जालच्छलोच्छलित-चित्तानां; वाचालवाग्-वागुराऽवपतितमनोमृगाणां, वौद्धिकदासता-दोष-दूषितान्तःकरणानां जनानां को नाम भारतीयताभिमानी सुखं शृणुयात् प्रत्यक्षाऽप्रत्यक्षं कृतान् अधिक्षेप-सहितान् आक्षेपान् ? इति।

प्रत्यक्षं एकः कथयति–"अवैज्ञानिकोऽयं आयुर्वेदः" (पं० जवाहिरलाल नेहरू), अपरश्च (गणनाथ सेनः, प्रत्यक्षशारीरोपोद्घाते) "सेयं चरकसंहिता साक्षात् अग्निवेशतन्त्रम्–एवेति न युज्यते वक्तुम्" तथा "न चास्याः (वर्त्तमान-सुश्रुत-संहितायाः) प्राचीत-सौश्रुत-तन्त्राद् अभेदः कथमपि सम्भाव्यः" अथ च वाग्भटमपि स्व-स्वरे स्वरं मेलयन्तं पश्यन् तस्य सुप्रसिद्धं श्लोकमुद्धरति—"वाग्भटश्च लभ्यमान-चरक-सुश्रुतयोरनार्षवचोबहुलत्वं प्रतिपादयन्नाह—

ऋषिप्रणीते प्रीतिश्चेन्मुक्त्वा चरक-सुश्रुतौ ॥
भेलाद्याः किं न पठ्यन्ते तस्माद् ग्राह्यं सुभाषितम्।

तदेतद् अरुणदत्तो (वाग्भट-टीकाकारः) व्याचक्षाण उपसंहरति–"अतश्चरक-सुश्रुतवद् "अनार्षं, अपीदं (अष्टाङ्गहृदयम्) गुणवत्त्वान्मतिमद्भिर्ग्राह्यमेव इति। प्रतिसंस्कृतत्वं च लभ्यमान-सुश्रुत-संहिताया डल्लन-चक्रपाण्यादिभिः अनुमन्यते सुस्पष्टया गिरा इत्येवमिदं सति नानाप्रमाणसंस्रवे कृतं सुप्रसिद्धमतविरोधेन, कृतं च वृथाऽऽर्षभक्ति संरम्भेण।" तदग्रे च यथा—"शारीरे सुश्रुतः श्रेष्ठः इत्येवं योऽसौ प्राचीनः प्रवादः......इदानीं तु "शारीरे सुश्रुतो नष्टः,, इत्येव युज्यते विलपितुम्"–इत्यादि-बहुत्र बहु आश्चर्यजातम् दृश्यते।

अन्यच्च—यद्यपि अहं आयुर्वेदानभिज्ञः; तथापि भवतां नियोगं शिरसि निधाय निवेदयामि किञ्चित् इत्यादि प्रस्तावनां प्रस्तूय भाषितुं आरभते यत्—"वैद्यैः डाक्टराणां सरणिरनुसरणीया, "विटामिन"—विषये वैज्ञानिकं विज्ञानं विज्ञेयम्, तेषामनुकरणं करणीयं, तद्वत् नवा नवा गवेषणा गवेषणीयाः, क्रिमीणां (रोग हेतूनां ?) आक्रमण-निरोधाय बद्धपरिकरैर्भाव्यम्, तथा विधातव्यं यथा कोऽपि रुग्ण एव न स्यात्, संग्रन्थनं कृत्वा प्रस्तावाः स्वीकृत्य शासक-समीपे प्रेषणीयाः, नवीनाः पेटेण्टयोगाः अनुसन्धातव्याः, निघण्टुरपि तादृश एव निर्मातव्यः, क्वाथादि-निर्माणस्य "बखेड़े को" परित्यज्य तादृश्य एव औषधयः प्रस्तुतीकृत्य रक्षणीया" इत्यादि बहुलं श्रूयते च।

अहह !! अयि भोः ! कीदृशोऽसौ बुद्धेर्विपर्यासः, दुर्दैवस्य दुर्विलसितम्, भारतभाग्यस्य दुर्भाग्यम्, आयुर्वेदादृष्टस्य दुर्विपाकः, ये खलु श्रद्धालवः श्रोतारः आयुर्वेदस्य पवित्रयशःश्रवणाय समुत्कण्ठिता भूत्वा सम्मेलनेषु सम्मिलिता भवन्ति तेषामेवाग्रे कीदृशोऽसौ संशयोत्पादक-पदानां प्रयोगः ? स्पष्टमेव निन्दागर्भा स्तुतिः, अधीरवत् धीराणां धैर्यस्य अपवादः, असिद्धान्तानां सिद्धान्ताभासानां वा सिद्धान्तत्वेन उपन्यासः, परप्रवृत्तौ प्रवर्त्तनस्य प्रतारणापरा प्रवृत्तिः, वाक्यच्छलावृतो विकृतो व्यापारः, चापल्य-पूर्णा चपलता, स्वाज्ञानस्य च निस्त्रपं प्रदर्शनम्—इत्यलमति-कटु-कल्पना-कल्पित-

कटु-वाक्यावलिज्वालावलीढ-हृदयोद्भूत-धूम-धूसरत्वेन व्याधिपीडितपीडोत्पीडन-संलग्नस्य शान्तस्य वैद्य-समूहस्य मनसामिति ।

अथ तृतीय आक्षेपः। तत्र वर्त्तमानौ चरक-सुश्रुतौ अनार्षौ-इति आक्षेप-संक्षेपः। अतस्तस्य प्रत्याक्षेपोऽपि संक्षेपेणैव विधीयते। तत् शृणुत श्रोतारः! आक्षेपसमर्थकः श्लोकस्तु "ऋषिप्रणीते" इत्यादिः-आक्षेपक-मुखेनैवोद्धृतपूर्वः, तस्य अरुणदत्तव्याख्यातो व्याख्या उद्धृयते तावत् श्रुत्वा च तां सत्य आक्षेपोऽसत्यो वेति-निर्णयकरणे भवन्त एव प्रमाणम्—सेयं व्याख्या-"ननु किमस्माकमुपकारकत्वादिद्वारेण ऋषिप्रणीतमेव तंत्रमध्येतव्यमित्याशंक्याह—ऋषिप्रणीते इति—यदि ऋषिप्रणीते प्रीतिः ततः चरक-सुश्रुताख्यौ हित्वा भेड (ल) जातुकर्णादि-मुनिप्रणीतानि (तंत्राणि) किमिति न पठ्यन्ते सर्वेणैव वैद्यवृन्देन। अपितु सुभाषितप्रियतया चरकसुश्रुतौ बाहुल्येन यथा पठ्येते न तथा भेडादयः। तस्मात् स्थितं एतत् सुभाषितं ग्राह्यं ननु मुनीप्रणीतमेव तंत्रम्। अतः चरकसुश्रुतवत् अनार्षमपि—इदं गुणवत्त्वात् मतिमद्भिर्ग्राह्यमेव।—वा. उ. तं. ४० श्लो. ५३। [क्रमशः]

# संस्कृतस्य प्रचारोऽत्रैव स्वरूपरक्षा

लेखकः—विश्वनाथ शास्त्री, वेदतीर्थः

सृष्टेः सूक्ष्मतत्त्वविद्भिः प्राचीनैरर्वाचीनैश्च बुधैः सर्वथा विविच्य निर्धारितं यदेतस्य समस्तजगतः सर्वादितमा सृष्टिरस्या एव भारत-वसुन्धरायाः पावनप्राङ्गणाद् विधिना प्रारेभे। इत एव च कालक्रमेण विवर्धमानं विश्वमिदमेतादृशरूपे परिणतं विद्यते। नहि वाचं विना कश्चन व्यवहारः प्रवर्तते, अतस्तदानीन्तनं व्यवहारं प्रवर्तयितुं या वाक् विधिना विन्ययोजि, सैव निखिलवाङ्मयजननी विश्वभारती, संस्कृत वाणीति।

ये चाधुनिका पुरातत्वविदो वैज्ञानिकाः सन्ति तेऽपीदं प्रमाणयन्तितमां यत् यावन्ति भाषापुस्तकानि पुरातन लिपयश्चाद्ययावदुपलब्धास्तेषु वेदपुस्तकानि किल प्राचीनतमानि सन्ति, ततश्चापि सिद्ध्यति यद् वैदिकभाषैव सर्वभाषासु प्राक्कालिकी—इति

वयमार्या वेदाननादीन् शास्त्राणि च महर्षिप्रणीतानि सुतरां मन्यामहे। एवं सति वेदशास्त्राणां रचना-प्रचारकाले तेषां भाषा संस्कृतं न खलु भारतवर्षेऽपितु अखण्डभूमण्डले प्रथितमासीदिति स्वीकरणीयमेव भविष्यति, यतो हि वेदशास्त्राणां निर्माणं लोक-कल्याणार्थमेव। यथेदानीन्तना यत्रत्याश्च विपश्चितो यानि साहित्यानि सृजन्ति; तदानीन्तनानां तत्रत्यानां लोकानां हितबुद्ध्यैव, अतस्तस्मिन् समये सर्वसाधारणी जनताव्यवहार-परिणता या भाषा भवति तस्यामेव तत्कालीनानि साहित्यानि सन्निबध्यन्ते। एतेनापीदमेव निश्चेतुं शक्यते, यत् पुरा संस्कृतमेव सर्वेषां जनपदानां वाणी-आसीदिति।

दूरदर्शिणां समदर्शिणां च महर्षीणां भेदबुद्धि-विरहितानि सकललोकहित-साधकानि च कृत्यानि भवन्ति। अतश्च लोकैरविदितायां तदेकदेशविदितायां वा भाषायां ते नैव किञ्चिल्लिखितुं वक्तुं वा अशक्नुवन्।

यथा भारतभूमावेव प्रादुर्भूताः क्षत्रियाद्यार्यजातय एव भूमण्डलस्य नाना-भूभागेषु कृताधिवासाः शनैः शनैरार्यसंस्कृतीनां लोपात्, तदुपदेशकानां विदुषां ब्राह्मणानां चासङ्गमादनार्यत्वं भजन्ते। तथैव तासां भाषापि पूर्व-संस्काराभ्रष्टत्वादुच्चारणादिबहुविधदोषभेदैश्चिरं विक्रियमाणा नानारूपा विरूपा बभूव। चिरकालाद् विकृतासु तासु भाषासु बहुशः शब्दसाम्यं साम्प्रतमपि विलोक्यत एव।

हिन्दीभाषायाः सम्बन्धे तु किमपि वाच्यमेव नास्ति। तद्भव—तत्समशब्द-समूहसंभूता हिन्दीभाषा संस्कृत-तनया खलु। भोजविक्रमादित्यादिराजकालस्य संस्कृतेतिवृत्तं सर्वं विदुषां विदितम्। एतत्समग्र-समालोचनेन संस्कृतस्य

सर्वभाषादिमत्वं विश्वव्यापकत्वं भारतभारतीत्वं च निर्विवादं सेत्स्यति। एवं सति संस्कृतभाषाव्यवहरणे तदध्ययने च कस्याश्चन जातेरनधिकारचर्चा नितरां निरस्ता। तत्र समेषां समोऽधिकार इति युक्तियुक्तं मतमत्रधेयम्। एवं जगद्दृष्ट्या किञ्चिद् विचार्य, भारतदृष्ट्या संस्कृतसम्बन्धे किञ्चिद् विचार्यताम्। कश्चिद्देशो वा काचिज्जातिर्वा लोकोत्तम स्वचरित्र-प्रभावेणैव जगति गौरवपदं प्राप्नोतीति सर्वतन्त्र-सिद्धान्तः। भारतीया आर्यजातिरपि चतुर्दिगतिशालिभिर्निजदिव्यचरित्रैरेव क्षितिचक्रवालस्य निखिलमानवानां गुरुत्वं समासाद्य भारतं गुरुधामत्वं प्रापयत्। कस्यापि देशस्य जातेर्वा गौरवचिन्हप्रकाशकानि, तच्चरित्रस्मारकानि च साधनानि तत्साहित्यान्येव भवन्ति। येषां रक्षण प्रचारेण च देशजात्योश्चरितगौरवं नितरामेधमानमक्षुण्णं च तिष्ठति। एतद्विपरीतं जातीय-साहित्यस्यानादरेण वैमुख्येन ह्रासेन च जातीयचरित्राणां हानिः, चरित्रहानौ स्वरूपनाश एव, स्वरूपनाशे स्वाभिमानपदच्युतिः, ततश्च लोके तिरस्कारः, पारतन्त्र्यं, परानुकरणं, पराभवः, दरिद्रतादिकं च जायते। एतद्रहस्यविदो लोकव्यवहारपटवो मानवाः स्वप्राणपणैः, स्वजातीय-साहित्यानि संरक्षन्तः, तेषां प्रचाराभिवृद्धये च सततं प्रयतन्ते।

इमं सिद्धान्तं पुरस्कृत्य भारतीयार्यजातेर्वर्तमानदशा विचार-प्रवृत्तौ, अयमेव निष्कर्षो निःसरिष्यति यद् भारते भारत-सर्वस्व-रूपस्य संस्कृत-साहित्यस्य समादरविरहात्प्रचाराभावाच्चैव भारतस्येयं दुर्दशाऽभूत्। एतन्निवृत्तये पूर्व गौरवलाभाय च भारतीयानां हृदये स्वपूर्व-चरित्राणां दृढा स्मृतिः सत्वरं सम्यक् च भवितव्या। एतदर्थं संस्कृत-साहित्यस्य व्यापकः प्रचारः सर्वथैवापेक्षितो वर्तते। यतश्चाबाल-वृद्धा भारतीया निजातीतमहापराक्रम–गाथां स्मारं स्मारं भूरि भूरि-समुत्साहिताः स्वोद्धाराय च बद्धपरिकराः भवेयुः। एतस्मिन् विषये स्वदेशहितैषिभिः स्व-संस्कृति प्रेमिभिः संस्कृतस्नेहिभिश्च सर्वैरेव स्त्री-पुंभिर्झटिति ध्यानं दातव्यं तदुपयुक्तकार्याणि च कर्तव्यानि।

संस्कृतसाहित्यस्योपयोगिता-विषये किं वाच्यमस्ति। संसारे नह्यो तादृशाः केचन ज्ञान-विज्ञानविषयाः सन्ति, ये संस्कृतसाहित्ये न भवेयुः, यत् क्वापि नास्ति तदत्रास्ति, यदत्रास्ति तदतिरिक्तं त्रिलोके क्वापि नास्ति। अस्य जगतो यानि ज्ञानविज्ञान-शिल्पानि साम्प्रतं विलोक्य वयं भारतीया आश्चर्य-चकिता भवामः, तानि अस्माकमेव शास्त्र-विभूतेः फलानि। दुर्भाग्योपहता वयं तेषां वेदशास्त्राणां समादरं न कुर्मः, परन्तु विदेशीयैः तानि समाद्रियन्ते।

किमस्माकं कृते लज्जाकरमिदं वृत्तं न विद्यते।

"सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति" ॥ —मनुः

संस्कृतज्ञाः, संसारे किं कर्तुं न पारयन्ति। यत् कश्चिदपि कर्तुं न पारयति तदपि कर्तुं संस्कृतज्ञाः प्रभवन्ति।

एवं सत्यपि गौरवगुम्फिते सर्वशक्तिसमन्विते विशेषज्ञानविज्ञान-शिल्पकलानिधौ संस्कृते, तस्य वर्तमानदशा नितरां शोचनीया वर्तते।

एतस्याभ्युदयाय संस्कृतविदां विदुषां तद् विद्यालयानां तत् पाठनविधौ तत्पाठ्य-क्रमस्य सर्वथा विशेषतश्च तत्सेवकानां पण्डितानां व्यवहारस्य–सर्वथा सुधारोऽपेक्षितोऽस्ति। एतद् विना नैवास्य समुन्नतिर्भवितुं शक्नोति। तदर्थं समस्ते संस्कृत-समाजे जागरणं सम्पादनीयम्।

एतस्य पुण्यकृत्यस्य सिद्धये संस्कृतविदां संस्कृत-विद्यालयानां तत्सञ्चालकानां संस्कृतशिक्षाधिकारिणां संस्कृताध्यापकानां संस्कृतच्छात्राणां संस्कृतप्रेमिणां च अखिलभारतीयानां सुदृढं कार्यक्षमं संघटनमत्यावश्यकं विद्यते। एतस्य महत्तमकृत्यस्य सफलतायै सर्वैरेव स्वसंस्कृति-प्रेमिभिः भारतस्यातीतगौरवाभिमानिभिः सर्वविधबुधैरुदारधिया सोत्साहं प्रयतितव्यमित्येवाभ्यर्थना मम।

संस्कृत-रक्षणेनैव भारतीयसंस्कृते रक्षणं भविष्यति, संस्कृतस्य प्रचारेणैव भारतीयानां हृदि-स्वरूपज्ञानं भविष्यति, भारतस्य स्वरूप-रक्षणं पूर्वगौरवप्राप्तिश्च भारतस्य वास्तविकः समुद्धारः। क्रियाकालोऽयं समाह्वयति संस्कृतसेवकान्। ते उत्तिष्ठन्तु स्वकर्मणा जगदीश्वरं सन्तोष्य संस्कृतभारत्या भूयोऽपि भारतं मण्डयन्तु। भगवतो भूतभावनास्यानुग्रहतः सुप्रभातमिदं पुनः संस्कृत-सरस्वत्याः सत्य-सुप्रभातायालंभवेदिति।

# पञ्चाङ्गे-इतिकर्तव्यता

लेखकः—दाऊजी दीक्षितः, दैवज्ञ-शिरोमणिः

तिथि-नक्षत्र-योग-वार-करणानि पञ्चाङ्गानि । एतेषां पञ्चानामपि साधनं सूर्य-चन्द्र-ग्रहाधीनम् । अतः पञ्चाङ्गे सूर्य-चन्द्रौ भौमादि-पञ्च ताराग्रहाश्च स्पष्टाः, मिश्रमानकालिकाः, क्वचिच्चौदयिकाः, दैनन्दिनीयाः, क्वचिच्च सप्ताहान्तरीयाः विलिखिता दृश्यन्ते । यतस्तेषामुदयास्तौ, नक्षत्रचारः राशिचारश्च धर्मकृत्ये फलादेशे च परमोपयोगिनः ।

फलादेशे स्पष्टग्रह-साधनस्य परमावश्यकता इति भास्कराचार्यवचनेनापि स्फुटं प्रतीयते । यथाः—

ज्योतिः शास्त्रफलं पुराणगणकैरादेश इत्युच्यते ।
नूनं लग्नबलाश्रितः पुनरयं तत्स्पष्टखेटाश्रयम् ॥

एवम्—संसाध्य स्पष्टतरं वीजं नलिकादियन्त्रेभ्यः ।
तत्संस्कृत-ग्रहेभ्यः कर्तव्यौ निर्णयादेशौ ॥

इति ब्रह्मगुप्तवचनेन च आदेशे स्पष्टग्रहा एवापेक्षिता—इति सुस्पष्टमेव ।

अथेदानीं प्रचलितेषु बहुविधेषु मान्येषु पञ्चाङ्गेषु—एकस्थानीया यद्यपि औदयिका भिन्ना भिन्ना ग्रहा विलिखिता दृश्यन्ते । सौर-मकरन्द-ग्रहलाघव-विशुद्धमार्ग-प्रवर्त्तितेषु पञ्चाङ्गेषु येषां यत्र विश्वासस्ते तत्सम्प्रदायानुसारेण स्वीयं गणितादिकं कुर्वन्ति, धर्मकृत्यादिकञ्चाचरन्ति । परन्तु सत्यमेकमेव, विशेषतो गणितस्य सत्यत्वे नास्ति द्वैविध्यम् । तेन सत्यान्वेषणमावश्यकम् ।

अस्माभिरेका सत्यान्वेषणयुक्तिर्विदुषां पुरस्तात् प्रस्तूयते । फलादेशः स्पष्ट-ग्रहाधीनः, अतो यः फलादेशः, येन स्पष्ट-ग्रहेण साधुर्भवति स एव वास्तवः स्पष्टग्रहः । तेन च शुद्धां काञ्चिज्जन्मकुण्डलीमादाय शास्त्रोक्तदिशा फलकथने येन स्पष्टग्रहेण सह सादृश्यं भजते, स स्पष्टः स्वीकर्तव्यः । अत्रापि काठिन्यं विद्यत एव बहुभिः कारणैः, तथापि यदि दैवज्ञ-प्रवराणामत्रैकमत्यं स्यात्तदा—अनयाऽपि दिशा शुद्धमार्ग-निर्णयः कर्तुं शक्यते । अन्यथा काचन रीतिः स्पष्टग्रह-ज्ञानाय भवतु, परन्तु स्पष्टग्रहज्ञानन्तु सुतरामावश्यकमेव । तदभावस्तु कलङ्क एव ज्योतिर्विज्ञानस्य । तेनैतद्दोषपरिशोध-नाय कोऽपि समीचीनः पन्था नितरामन्वेषणीयः ।

तिथि-नक्षत्र-योग-साधनेऽपि—एवमेव विसंवादो विद्यते । यतः सिद्धान्तग्रन्थरीत्या करणग्रन्थरीत्या वा साधिताः एव तिथि-नक्षत्र-योगाः धर्मकृत्यार्हाः, नान्यमतसिद्धाः । किन्तु फलादेशाय भिन्नाः ग्रहा अपेक्षिताः, एवं न कुत्रापि दृश्यते । फलादेशे तु स्पष्टग्रहाणामेवापेक्षा । तथाच यत्र फलादेशे सम्यक्फल-घटनमेव प्रत्यक्षं तत्र कस्यचिद् वचनस्य युक्तेर्वा नापेक्षा । तेनेयं सुगमा रीतिः स्पष्टग्रहज्ञानाय, प्राचीनग्रन्थवचन-संरक्षणाय च ।

यद्येकस्यामेव कुण्डल्यां—एतेन प्रकारेण वास्तवग्रह निश्चये काचिद् विप्रतिपत्तिर्भवेत्तदा—एकस्यां कुण्डल्यां शुद्धस्य ग्रहस्य दशकुण्डलीषु फल-प्रत्यक्षता साधु समव-लोकनीया । यद्येकस्यां कुण्डल्यामेकेन स्पष्टग्रहेण फलस्य प्रत्यक्षता; अन्यस्यां द्वितीयप्रकारसिद्धेन स्पष्टग्रहेण फलस्या-प्रत्यक्षता स्यात्तदाऽयमपि मार्गः सदोष एव स्यात् । परमेवं नहि सम्भाव्यते, तेनैषा युक्तिर्दैवज्ञैः परीक्षणीया, एष प्रस्तावश्च विचारणीयः । मन्ये, दैवज्ञ-प्रवरा नूनमत्र स्वीयान् विचारान् प्रकटीकरिष्यन्तीति ।

## महिषशतकम् ।

[ प्राचीनं विनोदमयं श्लिष्ट-काव्यम् ]

सानन्दं महिषीशतं रमयसे मूर्धाभिषेकोऽन्वहं
त्वं वालव्यजनीवधूतिमसकृत्प्राप्नोषि शृङ्गान्वितः ।
धात्र्युत्सङ्गतले विमुञ्चसि मुहुर्विण्मूत्रमस्तत्रपं
धत्सेनाप्यपलालमास्यमनिशं स्नेहेन संबध्यसे ॥

किंच स्वां प्रकृतिं न मुञ्चसि तृणप्रायं जगत्पश्यसि
स्वस्ति श्रीमहिषेन्द्र ! तेऽस्तु नियतं राजा त्वमेवासि नः ॥
शङ्खेनापि पयः पिबस्यनुदिनं तस्मादिदं सम्मुखे
वत्स श्रीमहिषेन्द्र ! बालकमिव त्वां वीक्ष्य नन्दाम्यहम् ॥

उल्लेखान् विविधान् करोपि च पदन्यासस्तवान्यादृशः
पद्यालोकनदत्तदृष्टिरपि च प्रायः प्रबन्धे स्थितः ॥
कोशाधारतया स्थितश्च रसिकप्राये स्थले सादर-
स्तेन श्रीमहिषाधिराज ! सुकविं त्वामेव मन्यामहे ॥
कर्षं कर्षमहर्निशं वसुमतीं क्लिश्नासि किं कासर !
त्वं सभ्योऽसि सनातने नृपसभास्थाने सुखेनावस ॥
न ज्ञानं न च मेऽस्ति कौशलमिति व्यर्थां मतिं मा कृथा-
स्त्वत्तो मूढतमा भवन्ति हि इमे त्वं तेषु वाचस्पतिः ॥
मूढाः केचिदुपाश्रयन्ति धनिकान् क्लिश्यन्तु नश्यन्तु वा
यो मामाश्रयते तमेव बिभृयामात्मप्रयासैरपि ॥
मष्टान्नैकवदान्य ! सैरभपते ! हुंभारवव्याजतो
घण्टाघोषपुरःसरं कलयसे सम्यक् प्रतिज्ञामिव ॥

प्रेषकः—बटुकनाथ शास्त्री, खिस्ते

---

# महत्त्वाकाङ्क्षा ।

लेखकः—श्री अनन्तराम शास्त्री वेतालः, साहित्याचार्यः

[ १ ]

इदं सान्द्रानन्दं सुदिनमुपयातं, यदिह सु-
प्रभातं पश्यामः पुनरुदयमानं क्षितितले ।
चिरं दुर्दैवेनाऽहह ! विबुधवाचोऽत्र समया-
नुकूल्याभावोऽद्यावधि किल महारात्रिरभवत् ।

[ २ ]

समागच्छ भ्रातः ! सरसमिह ते स्वागतमिदं,
प्रियं पश्यन्तस्त्वां मुदितहृदयास्ते सहृदयाः ।
प्रियैः पद्यैर्हृद्यैः कविनिकषगद्यैश्च मधुरैः
सुधीन्द्राणां वृन्दं गमय परमानन्दपदवीम् ।

[ ३ ]

पुरीं काशीमेतां सततमभिरक्षन्ति चतुरा
गणा भूतप्रेतप्रभृतय उदाराः पशुपतेः ।
इहत्यं तद्रूपं कविकुलमिहैवाऽभ्युदित ! सु-
प्रभात ! त्वामद्याभिलषति महत्त्वं गमयितुम् ।

[ ४ ]

भ्रमन्मोहावर्ते समयपरिवर्तेन, सह सु-
प्रभातेनैतच्च स्पृहयति महत्त्वाय महते ।
सुधीर्वा दुर्धीर्वा जगति सुकविर्वा कुपदभाक्
कविर्वा सर्वोऽपि प्रथयति महत्त्वाभिलषितम् ।

[ ५ ]

जडः प्राज्ञः, क्षुद्रो विधृतमहिमा वाऽदिमवया
युवा प्रौढो वृद्धोऽप्यहह ! महदाकांक्षति पदम्
समुन्नेतुं सर्वान् विलसति महत्तायुगमिदं
वयं सर्वेषामप्यतनुमहिमेच्छां वितनुमः ।

[ ६ ]

महत्त्वं रक्षन्तो यदिह न महान्तोऽपि विरम-
न्त्युदात्ताकाङ्क्षातः, स किल महतां कोऽपि महिमा ।
ध्रुवं सर्वोऽप्युर्वीवलयनिलयो लब्धमहिमा
महत्त्वाकाङ्क्षायां प्रवहति महीयानपि जनः ।

[ ७ ]

अहो ! साहित्याब्धिर्वहति खलु दैवज्ञधिषण-
स्तथा विद्यासिन्धुर्यदवयवतां दर्शन-हरिः ।
यदीयं सर्वस्वं जयति स हि सारस्वतसुधी-
र्महत्त्वं तत्पत्रं जगति सरसत्वं च लभताम्

[ ८ ]

उदारमतिदैववित्कविमृगेन्द्र-'वेताल'-सद्-
'विनायक'—सुधीतनूजनि 'रनन्तरामा'ऽभिधः ।
इदं कविसुधाकरो गुरुपदाब्जपुष्पन्धयः
कवित्वचषकात्मनाऽचिनुत सुप्रभातामृतम् ॥

# आर्यसभ्यता-सदाचारः

लेखकः—श्रीदेवीनारायणः एडवोकेट, विद्यासागरः -

अद्यत्वे नवीनतम-भौतिक-विज्ञान-सम्पन्नाः पाश्चात्या अमरीका-देशवासिनश्च सभ्यम्मन्याः मिसमेयो-आरचर-सदृशाः समुद्घोषयन्ति यत् "भारतीयाः, असभ्याः, पतिताः, भ्रष्टाश्चरित्रहीनाः, सर्प-वृक्ष-पाषाणादि-पूजकाश्च सन्ति"—इति । परमेतत्तेषां मौर्ख्यम्, अज्ञानम्, स्वार्थान्धत्वञ्च। वस्तुतस्तु—इमे विनाशसाधन-सम्पन्नाः पाश्चात्याः सर्वथा सर्वदा च—

"असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मम ।"

इति मोहमयीं प्रमादमदिरां पिबन्तः परस्परं विगृह्णमाणाः, विनाशोन्मुखाः, परामसभ्यतामाचरन्तः सदाचारविरहिता पञ्चतां प्राप्ताः, प्राप्स्यन्ति च ।

अस्माकं भारतीया जाति-धर्म-समाज-संग्रन्थन-परिपाटी उत्तरोत्तरं पुष्टिमेव प्राप्नोति । वयं स्वसभ्यतां सदाचारञ्च पालयन्तो न जाने कियद्भ्यो वर्षेभ्यस्तथैव तिष्ठामः, स्थास्यामश्च ।

हिन्दूधर्मस्य चतुर्धा प्रसारणमस्ति । यथा :—

वेदाः, स्मृतिः, सदाचारः, स्वस्य च प्रियमात्मनः ।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥
—याज्ञवल्क्यः

भारतवर्षस्य सभ्यता, धर्मजिज्ञासा, सदाचारिता च सूक्ष्मतमा तथा संसारस्य सर्वासां सभ्यतानां मूर्ध्नि तिष्ठति। यथा—यथाह भगवान् मनुः—

सरस्वती-दृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥
यस्मिन् देशे य आचारः पारंपर्यक्रमागतः ।
वर्णानां सान्तरालानां सदाचारः स उच्यते ॥
कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरम् ॥

एतेन मानवसभ्यता सर्वप्रथमं भारतवर्षे प्रादुर्बभूव, ततश्च समस्तेऽपि भूमण्डले प्रसृतेति निर्विवादमेव ।

भारतीय-ब्रिटिशन्यायालयेषु संस्कृतधर्मशास्त्रस्य 'हिन्दूला'—इति नामास्ति । तत्र आधुनिक-'हिन्दूला'—शास्त्रेऽपि भारतीयसदाचारस्य ( Custumकष्टम्—इत्याख्यस्य ) महत्ता वर्तते । 'हिन्दूला'-शास्त्रे सदाचारस्य चतुर्विधं लक्षणमस्ति । यथा—(१) प्राचीनत्वम्, (२) स्थिरत्वम्, (३) न्याययुक्तिसिद्धत्वम्, (४) अविच्छिन्नत्वञ्च ।

भारते-ब्रिटिशउच्चन्यायालयानां ( हाईकोट ), महान्यायालयानाञ्च ( प्रीवीकाउन्सिल ) सदाचारविषयेष्वनेके निर्णयाः सन्ति । त एव निर्णयाः ( रूलिंग ) 'हिन्दूला'—शास्त्रस्य प्रधानाङ्गानि सन्ति । ते तु ब्रिटिश—भारतेऽवश्यमेव माननीया प्रामाणिकाश्च गण्यन्ते । तेषां सदाचारसम्बन्धिनिर्णयानां सहस्रशो ग्रन्थाः मुद्रिताः प्रचलिताश्च सन्ति ।

भारतीयायुर्वेद-प्रधानाचार्येण चरकाचार्येण कानिचित् सूत्राणि नितरामुपादेयानि सदाचार-सम्बन्धे-लिखितानि, तानि च भारतीयां सभ्यतां डिण्डिमघोषेण घोषयन्ति । एतानि चास्माभिः कण्ठे करणीयानि, व्यवहारतश्च समाचरणीयानि:—

"देव-गो-ब्राह्मण-गुरु-वृद्ध-सिद्धाचार्यानर्चयेत । अग्निमनुचरेत् । ओषधीः प्रशस्ता धारयेत् । द्वौ कालावुपस्पृशेत् । मलायतनेष्वभीक्ष्णं पादयोश्च वैमल्यमादध्यात् । त्रिपक्षस्य केश-श्मश्रु-रोम-नखान् संहारयेत । नियतमनुपहतवासाः, सुमनाः, सुगन्धिः स्यात् । साधुवेशः, प्रसाधितकेशः, मूर्द्ध-श्रोत्र-पाद-तैल-नित्यः, धूमपः, स्मितपूर्वाभिभाषी, सुमुखः, दुर्गेष्वभ्युपपत्ता, होता, यष्टा, दाता, चतुष्पथानां नमस्कर्त्ता, बलीनामुपहर्ता, अतिथीनां पूजकः, पितॄणां पिण्डदः स्यात् । काले हित-मित-मधुरार्थवादी, वश्यात्मा, धर्मात्मा, हेतावीर्षुः, फलेनेर्षुः, निश्चिन्तः, निर्भीकः, श्रीमान्, ह्रीमान्, महोत्साहः, दक्षः, क्षमावान्, धार्मिकः, आस्तिकः, विनयबुद्धिः, विद्याभिजनवयोवृद्ध-सिद्धाचार्याणामुपासिता, सर्वप्राणिषु साधुभूतः स्यात् । क्रुद्धानामनुनेता, भीतानामाश्वासयिता, दीनानामभ्युपपत्ता, सत्यसंधः, सामप्रधानः, पर-परुषवचन-सहिष्णुः, अमर्षघ्नः, प्रशमगुणदर्शी, राग-द्वेष-हेतूनां हन्ता स्यात् । [ ४६ पृष्ठस्यान्ते ]

# अभिमतम्

## निरुक्तम्

यास्कमुनिप्रणीतस्य निरुक्तस्य पञ्चनदीयशास्त्रि-परीक्षा-पाठ्यांशमात्रस्य हिन्दूसभा-संस्कृत-महाविद्यालय-प्रधानाचार्येण पण्डितरत्न-मिहिरचन्द्रपुष्करणाशास्त्रि-निर्मिता पुष्करणाख्या व्याख्या। मूल्यम्-मुद्राचतुष्टयम्। प्राप्तिस्थानम्-पुरुषार्थग्रन्थमाला-कार्यालयः, अमृतसरः,

वैदिक-वाङ्मये निरुक्तस्य महत्वपूर्णं स्थानं वर्तते। पञ्चनदीय-संस्कृत-परीक्षासु निरुक्तस्य कियानंशः पाठ्यत्वेन निर्धारितः। तस्य शास्त्रिमहाशयैः विशदा छात्रोपयुक्ता च व्याख्या निर्मिता। व्याख्या-विषये किमपि वक्तव्यं नास्ति। यतः श्रीमन्तः शास्त्रिणः सुप्रसिद्धाः, मार्मिकाः, विविधशास्त्र-व्युत्पन्नाश्च विद्वांसः सन्ति। परःशता छात्राश्च तैः समध्यापिता इति परीक्षा-र्थिनां कृते शास्त्रिणां व्याख्या सुतरां व्युत्पादयित्री, पठनीया, संग्राह्या च विद्यते। भूमिकायां शास्त्रिभि-र्विचारणीय-विषयाणां या विवेचना कृता, सा तु नितरा-मुपयोगिनी गभीर-पाण्डित्य-प्रकाशिनी च विद्यते। अन्येऽपि उपयुक्ताः विषयाः पुस्तके सन्निवेशिताः सन्तीति ते पुस्तकस्य महत्वं परिवर्द्धयन्ति कर्गजस्य। मुद्रणस्य महर्घतां दुर्लभत्वञ्च दृष्ट्वा मूल्यमधिकं नास्ति। अनया व्याख्यया विदुषां छात्राणाञ्च महानुकारः सिद्ध्येदिति मन्यामहे। —सम्पादकः

[ ४५ पृष्ठस्य शेषांशः ]

"नानृतं ब्रूयात्। नान्यस्वमाददीत। नान्यस्त्रियम-भिलषेत्। नान्यश्रियं न वैरं रोचयेत्। न कुर्यात् पापम्। न पापेऽपि पापी स्यात्। नान्यदोषान् ब्रूयात्। नान्यरहस्यमागमयेत्। नाधार्मिकैर्नरेन्द्रद्विष्टैः सहासीत। नोच्चैर्हसेत्। न शब्दवन्तं मारुतं मुञ्चेत्। नासंवृतमुखो जृम्भां क्षवथुं हास्यं वा प्रवर्त्तयेत्। न हुं कुर्यात्। न पाप-वृत्तान् स्त्री-भृत्यान् भजेत। नोत्तमैर्विरुद्ध्येत। नावस-नुपासीत। कलिं नारभेत। [ क्रमशः ]

## क्या विवाह संस्कार में नियोग की प्रतिज्ञा योग्य है ?

इति नामिका एका हिन्दीमयी लघुपुस्तिका पण्डित श्रीपाद दामोदर सातवलेकर-महोदयैर्लिखिता, तेनैव सम्पादिता च।

पुस्तिकेयमतिपरिश्रमेण जगत्कल्याण-कामनया आर्य्यसमाजपण्डितानां तत्रापि प्रियरत्न-आर्य-महोदयस्य सार्वदेशिक-आर्य्य-प्रतिनिधिसभा देहली-इति संस्थायाश्च विवेक-शैथिल्यं प्रकटयति। ऋग्वेदे 'देवकामा' इत्येव पाठोऽस्ति, न तु देवृकामा इति विषयं, तथा स्वामिदयानन्द सरस्वतिमहोदयेन संस्कारविधिनाम्नि पुस्तके नियोगवि-धानं परिहृतं, तत्तु अग्रेतनैस्तदानीन्तनैश्चार्य्यसमाज पण्डितैः स्वामिपरोक्षे सन्निवेशितम्—इति च विषयं विवृण्वती। सर्वानपि विदुषो हठदुराग्रहं विहाय सत्यपक्ष मादिशति। तथा आर्य्यपण्डितान् 'बुद्धेः फलमनाग्रहः' इति सदुपदेशं दिशति संस्कारविधितो देवृकामा इति पाठं तथा नियोगविधानत्यागञ्चादिशति इत्येतावाने-वास्य विषयः। महाविदुषा लेखकेन स्वविषयप्रतिपादने न किञ्चिदपहृतमिति पुस्तक-पठनेनैवाशु प्रकाशते। अहमपि समालोचकपदासीनो भूत्वा सार्वदेशिक आर्य्यप्रतिनिधिसभासदस्याननुरुणध्मि यत् श्रीपाद दामोदर सातवलेकर-महोदयानुरोधं सावधानं श्रुत्वा-प्रस्तावादिकं कुर्वन्तु। नो चेत् "एकोऽपि वेदविद् धर्मम् यं व्यवस्येद् द्विजोत्तमः। स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः"। इति मनूक्तेरार्य्यसमाजपक्षगा अपि विद्वांसः सभाप्रस्तावं तिरस्करिष्यन्ति। वयं तटस्था विद्वांसस्तु इमां लघुपुस्तिकां पठित्वैव सातवलेकरमहोदय पक्षं समर्थयामः।

—श्रीगोपालशास्त्री दर्शनकेशरी

# संस्कृत-समाचारः

श्री छांगाणी-अभिनन्दन-समारोहः ।

वैशाख-शुक्ल-त्रयोदश्यां सोमवासरे [ २०-४-४६ ] श्रीमदर्जुन-आयुर्वेद-महाविद्यालये, सायं षड्वादने, श्री काशी-पण्डितसभा-सुप्रभात-संघ--श्रीकाशी-वैद्यसभानां सम्मिलितमधिवेशनम्, अखिल-भारतीय-आयुर्वेद-महामण्डल-भूतपूर्व-सभापतीनां प्रथितयशसामायुर्वेद-सेवकानां नागपुर-निवासिनां प्राणाचार्य-भिषक्केसरी-श्रीगोवर्द्धनशर्म्म—छांगाणी—महोदयानामभिनन्दनाय, काशीस्थ-राजकीय-संस्कृत-महाविद्यालय-( गवर्नमेन्ट संस्कृत-कालेज )-प्रधानाध्यक्षाणां माननीय-डा० मङ्गल-देव शास्त्री, एम० ए० डी० फिल०--महोदयानां सभापतित्वे समभवत् ।



सुप्रभात-सम्पादकैः श्रीमतां छांगाणी-महोदयानां प्रदत्ते परिचये, सदस्सपतीनामाज्ञया गद्यमयमभिनन्दनं सुप्रभात-सम्पादकैः पठितम्, सुप्रभात-संघस्य च सरस-पद्यमयमभिनन्दनं महामहोपाध्याय-श्रीनारायणशास्त्रि-खिस्तेमहोदयैः पठितम्, 'आयुर्वेद-महोपाध्यायो' पाधि सहितं काशी-पण्डित-सभा-मानपत्रञ्च दर्शनकेसरि-श्रीगोपालशास्त्रिभिः पठितम् । ततश्च छांगाणी-महोदयैः कृतज्ञता-सूचकं भाषणं विहितम् । तदनन्तरं वैद्यानां-कर्तव्यं काशीस्थ-विद्वत्समाजस्य च कर्तव्यमधिकृत्य सभापतिमहोदयैः सरस-संस्कृत-भाषणं कृतम् । धन्य-वादानन्तरं सभाविसर्जनमभूत् ।

सभाकार्यजातं संस्कृतभाषायामेवाभूत् । श्रीमन्माध्व-सम्प्रदायाचार्याणां सर्वतन्त्र-स्वतन्त्र-श्रीदामोदरलाल-शास्त्रिणां पद्यमय्यः शुभाशिषः, वाराणसेय-व्यापारि-मण्डलप्रधान-सभापतेः के० एस० सुन्दरम्-महाशयस्य शुभाशंसनञ्च पठितम् । उपस्थितेषु प्रतिष्ठित-विद्वत्सु, काशी-पण्डितसभा-सन्त्रिणः श्रीदाऊजी दीक्षिताः, श्री सीताराम झा-दैवज्ञमार्तण्डाः, श्रीदेवीनारायण एडवोकेट—प्रभृतयो विद्वांसः, श्रीदुर्गादत्तशास्त्रिणो वैद्याः, श्रीनागेश्वर-भारती-श्रीरामशङ्करमालवीय-श्रीशिवनाथ-शास्त्रि-श्रीहरिदासशास्त्रि-श्रीलालचन्द्रशर्म्म-वैद्यप्रभृतयः प्रसिद्धाः वैद्यप्रवराश्च समुपस्थिता आसन् ।

अस्मिन्नवसरे छाँगाणी-महोदयैः एकोत्तरं मुद्राशतं दत्त्वा सुप्रभातस्य संरक्षकत्वमपि स्वीकृतम् ।

× × ×

श्रीमतां भिषक्केसरि-प्राणाचार्य-विद्यावाचस्पतीत्यादि-विरुदाङ्कितानां भूतपूर्व-निखिल-भारतवर्षीयायुर्वेदमहा-मण्डलाध्यक्षाणां श्रीगोवर्धनशर्म्मछांगाणी-महोदयानां

## अभिनन्दनम्

पीयूषपूर्णकलशं कलयन् करेण
लोकोपकारकरणाय कृतावतारः ।
यः प्रादुरास जलधेः करुणार्द्रनेत्रो
धन्वन्तरिर्हरिरसौ भवतोऽस्तु भूत्यै ॥१॥

दिगन्तर-विसृत्वरस्फुरदमन्दसीताचल-
प्रभासहचरीभवद्विमलकीर्तिपूराञ्चित ! ॥
प्रमोद-परिवर्द्धन ! प्रथितवैद्य-गोवर्द्धन !
त्वदीयमभिन्दनं वितनुमो वयं सादरम् ॥ २॥

अगदङ्कार-समाजधीश्वर ! पीयूष-पाणिता-प्रथित ! ॥
छांगाणी-कुलभूषण ! गोवर्द्धन ! वर्द्धसे दिष्ट्या ॥ ३ ॥

गदभीति-हारिता तव विदिता लोके तु युक्तैव ॥
भिषजां केसरिणः किल नाम श्रुत्वा गदाः पलायन्ते ॥४॥

प्राणाचार्य-पदाङ्कित ! पवनजयी भासि सांख्ययोगज्ञः ॥
किंवा विद्यावाचस्पतिनाऽगम्यं धरातले शास्त्रम् ॥

'आयुर्वेद-महोपाध्याय'-पदव्याऽनया नवया ।
समलंकृत्य भवन्तं सन्तुष्यति सुप्रभात-संघोऽयम् ॥ ६॥

सुप्रभात-कार्यालयः
काशी, वैशाखः २००३

इति भवतां शुभैषिणः
सुप्रभात-संघ-सदस्याः

# अखिल-भारतीय-पञ्चविंशायुर्वेद-सम्मेलन-सभापतीनाम्, भिषक्केशरि-श्रीगोवर्द्धनशर्म्म-छांगाणी-महोदयानाम्

# शुभाभिनन्दनम् ।

**मान्यवर्य्याः !**

साम्प्रतं सर्वतः समाप्लुतायामस्यां भारतावनौ, शनैः शनैः सङ्कोचमञ्चन्त्याम् क्षीण-क्षीणायां भगवत्यां सुरभारत्यां विलुलितायाम्, निर्दयं विलुठ्यमानायां भारतीय-विज्ञान-सम्पत्त्याम्, श्रीमत्सदृशैरेव मर्मज्ञैः प्रकाण्ड-पण्डितैरस्याः सुरभारत्याः, भारतीय-विज्ञान-सम्पत्तेश्च गौरवं सर्व्वथा समेधमानमालोक्यते ।

**श्रद्धेयाः !**

श्रीमद्भिर्निखिलभारतीय—आयुर्वेदमहामण्डल-पत्रिका-सम्पादन—विविधायुर्वेदागम-ग्रन्थसम्पादन-भाषान्तरकरण—प्रकाशनादिभिः, परःशतच्छात्राध्यापनैः, विविध-संस्थानां साहाय्यप्रदानैः, शारीरिकमार्थिकञ्च क्लेशजातमविगणय्यापि यद्भारतीयायुर्विज्ञान-सेवाकार्यजातं कृतं तदभूतपूर्वमुत्साहजनकञ्च ।

श्रीमतां गौरवपूर्णमादरणीयञ्चायुर्वेद-सेवाकार्यमालोकमालोकं मध्यप्रान्तीयैः राजपूतानाप्रान्तीयैश्च प्रान्तीय-वैद्यसम्मेलनस्य प्रधानपदे विनियुज्य कृतज्ञता-प्रकाशनं कृतम्, तत्तेषामुचितमेवासीत्; निखिलभारतीयायुर्वेद-सम्मेलनस्य अहमदाबादस्थ-पञ्चविंशतितमाधिवेशने श्रीमतां समुचित-समादरणद्वारा निखिलभारतीयैश्चिकित्सकैर्यद् गौरवं विहितं तेन काशीस्थविदुषामपि विद्यते महान् संतोषः प्रमोदश्च ।

**आर्य्याः !**

किम्बहुना, श्रीमत्सदृशानामेव भिषक्प्रवराणां प्रचण्ड-पाण्डित्य-गौरवेण सम्प्रति भारतभूरियं, भारतीयो वैद्यसमाजः, काशीस्था विद्वन्मण्डली चात्मानं बहुमन्यमाना, आयुर्विज्ञानविषये स्वात्मानं गौरवास्पदं मन्यते ।

इत्येवं सर्वतोऽपि प्रसृतयशःसौरभाणां सनातनधर्म-मर्यादा-संरक्षण-बद्धपरिकराणां सततमायुर्वेदसेवा-सन्नद्धानां श्रीमतां शुभं स्वागतं विदधतीयं काशीस्था सुरसरस्वतीसेवन-बद्धपरिकरा विद्वत्प्रतिनिधिभूता श्रीकाशी-पण्डित-सभा, काशीस्था वैद्यसभा च, 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति' । इति श्रीमद्भगवदनुशासनं स्मारं स्मारं श्रीमत्करकमल इदं शुभाभिनन्दन-पत्रं समर्पयति, आशास्ते च यच्छ्रीमन्तोऽपि पद्यस्योत्तरार्द्धं संस्मरन्तोऽवश्यमिदं 'प्रदीप्तकिरणाय सहस्रभानवे' दीपप्रदानवदकिञ्चित्करमपि स्वीकृत्येमं विद्वत्समाजं वैद्यसमाजञ्चानुगृहीष्यन्तीति ।

**वाराणसी**
**वैशाखः, २००३**

**श्रीमतां शुभाभिलाषिणः—**
**श्रीकाशी पण्डितसभा-श्रीकाशी वैद्यसभा**
**सदस्याश्च.**

एम्० ए०-इत्युपाधिधारि श्रीराधाविनोद गोस्वामिना अमरभारती यंत्रालये काश्याम् मुद्रितम्।

त्रयोदशाब्दे ]  सौर-आषाढः २००३ वैक्रमाब्दाः  [ चतुर्थी संख्या

भारतवर्षस्य सर्वोत्कृष्टम्, काशीस्थ-विद्वत्समाजानुमोदितम

संस्कृत-मासिक-पत्रम्

# सुप्रभातम्

तिमिरततिमुदस्यद्, मेदतारा विलुम्पद्,
नयदधिसुरभाषाभापि जागर्तिभावम् ।
विबुध-विहग-वादैराह्वयद् भाग्य-भानुम्
विलसतु भुवनेऽस्मिन् सर्वतः "सुप्रभातम्"

प्रधान-सम्पादकः—

श्री केदारनाथ शर्मा सारस्वतः

व्यवस्थापकः प्रकाशकश्च—

रामलालशास्त्री, सारस्वतः



प्राप्तिस्थानम्—

सुप्रभातम्, बनारस

वार्षिकम्मूल्यम्—४)  [ जुलाई, १९४६ ]  छात्रेभ्यः पुस्तकालयेभ्यश्च—३)

# लेख-सूची





# संरक्षकाः

१—शारदापीठाधीश्वराः जगद्गुरवः श्री ११०८ शङ्कराचार्याः श्रीमदभिनव-सच्चिदानन्दतीर्थाः

२—आयुर्वेद-महोपाध्यायाः भिषक्केशरिणः श्रीगोवर्धन शर्म्मछांगाणी महोदयाः, नागपुरम्

३—श्री किशोरीलाल खन्ना, विद्यारत्नम्
स्पेशल मजिस्ट्रेट
मैनेजिंग डाइरेक्टर-दी हिन्दुस्थान सिल्क फैक्टरी लिमिटेड, बनारस।

४—श्रीरामलाल शास्त्रिणः सारस्वताः

५—विद्याभूषण श्री श्रीशङ्कर शास्त्रिणः, जम्मू-काश्मीर-राजपण्डिताः

# सुप्रभात-सम्पादन-समितिः।

१—महामहोपाध्यायः श्रीनारायण शास्त्री खिस्ते,
२—दाऊजी दीक्षितः, दैवज्ञशिरोमणिः
३—गोपाल शास्त्री, दर्शनकेशरी
४—देवीनारायण एडवोकेट, विद्यासागरः
५—केदारनाथशर्मा सारस्वतः ( संयोजकः )

# नियमाः

१ 'सुप्रभातम्' प्रतिसौरमासस्यावसाने-आङ्गलमासस्य पञ्चदशतारिकायां प्रकाशमेष्यति।

२ ग्राहकैर्धनादेश ( मनिआर्डर ) द्वारा मूल्यं प्रहेयम्; वी० पी० प्रेषणे ग्राहकाणामेव व्ययाधिक्यं भवति।

३ सुप्रभातस्य पृष्ठसंख्या राजकीय-नियमानुसारं नियन्त्रितास्ति। एकमपि पत्रमधिकं मुद्रितुं न शक्यते। अतः लेखकैः, समाचार-प्रेषकैश्च स्वल्पतरमेव लेखनीयम्। कवितास्तु प्रायो न प्रेषणीयाः। निर्द्धारितानामेव कवीनां कविताः प्रकाश्येरन्।

४ लेखकैर्लेखाः सुस्पष्टाक्षरैरेव लेख्याः, अस्पष्टाक्षराः सन्धिविच्छेद-विरामादिरहिता लेखा न कदाचिदपि प्रकाशनीयाःस्युः।

५ सर्वविधोऽपि पत्रव्यवहारः—'सुप्रभातम्', बनारस, इत्यनेन सङ्केतेन विधेयः।

# सुप्रभातम्

❀ संस्कृत-मासिक-पत्रम् ❀

त्रयोदशाऽब्दे } सौराषाढः, २००३ विक्रमाब्दाः { चतुर्थ-संख्या

## चेतश्चञ्चलता ।

ले०—जगन्नाथ शास्त्री होशिङ्गः, साहित्याचार्यः ।

अन्तर्वाणिवरेण्यैरन्तर्वाणि ! त्वमेव परिणूता ।
कस्त्वामपहाय परां ध्यातुं शक्तो वचो विलासाय ।
श्रीलश्रीगुरुपादपद्म-युगलात्याराधनासादितो--
दीप्यन्मन्त्रवरेण्य-साध्य-सकलाभीष्टार्थसिद्धिप्रदम् ।
तत्त्वं किञ्चन चेतसा सरभसं सञ्चिन्त्य सारस्वतं--
स्वस्वान्तस्य सदा बुबोधयिषया वक्तुं समीहे मनाक् ।
जिह्वे ! किं नु बिभर्षि वाक्चपलतामालोक्य सभ्याकृतीन्
सम्मान्यान् विदुषो दिदर्शयिषया स्नेहार्द्रचित्तस्थितेः ।
तूष्णीं तिष्ठ सुखेन, जातु कथयेत् कश्चित्कविश्चेत्पुन--
मूकां; तर्हि सहस्व; किन्तु न वदेः स्यात्तयतो नामृतम् ।
प्राज्ञम्मन्यमना यदीच्छसि पुनर्वक्तुं रसज्ञे ! ततो
रामोदारगुणानुवर्णनविधौ वैदग्ध्यमुद्धाटय ।
विस्मृत्यापि कदापि किञ्चिदपि वा मर्मस्पृगन्यस्य चे-
न्नैवोच्चारय चारु चेदपि वचः किञ्च स्वयं चिन्तय ।
अन्तःस्थं किल वैमनस्यमचिरादुन्मूल्य तन्वत्पुन--
र्विद्वद्भिः सह सौमनस्यमभितः प्रेमप्रतिष्ठास्पदम् ।
वैषम्यं हृदयात् सतामपनयन् साम्यानुवृत्त्याऽचिरात्
प्रीत्या शान्तिमुपेत्य नन्दतु मनः सत्ये शिवे सुन्दरे ।
दुर्मतितिमिरोच्छित्त्यै ज्ञानालोकं गुरूक्तिभिर्लब्ध्वा ।
सेवस्व चित्त ! शान्त्यै देवीं तां सुरसरस्वतीं सततम् ॥
आक्षेपाधिक्षेपौ, वाणीविन्यास-कैतवाञ्च कलिम् ।
परिहृत्य सुप्रभातोदयो विलोक्यः सदा सुजनैः ॥

# हिन्दू-समाजस्य पुनः सङ्घटनम् ।

"कश्चिद् विदग्ध-हृदयः"

[ साम्प्रतं स्वतन्त्रतायुगेऽस्मिन् हिन्दूसमाजस्य कीदृग् रूपमस्ति इति लेखकेन गम्भीरदृष्ट्या विविच्य लिखितोऽयं लेखो मनीषिभिर्विमर्शनीयः । स्वीया विचाराश्चात्र प्रकटीकर्तव्याः । वयं सुप्रभाते सहर्षं प्रकाशयिष्यामः—सम्पादकः ]

यदैवाहं हिन्दू-समाजस्य वर्तमानस्वरूप-विषये विचारं करोमि, तदैव मे दृष्टौ हिन्दू-समाजस्य ह्रासकारणेषु कतिपयेषु एकमेव मुख्यं कारणं सर्वदैव स्मृतिपथारूढं जायते । सत्यञ्चेदमेवास्ति यत् "हिन्दू-समाजे सामाजिकं दृढं सङ्घटनं नास्ति । हिन्दू-समाजस्य नापि वैदिकं स्वरूपं विद्यते, नापि पौराणिकम्, नापि तान्त्रिकम्, नाधुनिकं नापि प्राचीनम्, न चापि मध्यकालिकम् । वस्तुतः किमपि स्वरूपमेव नास्ति । ये हि केचन अल्पज्ञाः सम्प्रति समाज-सुधारका भवन्ति, तेऽपि किमपि तत्तद्देशकालाननुरूपं स्वमनोगतं वैदेशिकं सामाजिक-स्वरूपमेवास्मिन् हिन्दूसमाजे हठात् प्रवेशयन्ति । यतश्चायं समाजः पूर्वतोऽपि विकृततरो जायते ।

'इयं दशा भारतस्य स्वातन्त्र्यकाले नासीत् । तदानीं हिन्दूसमाजस्य आचार-विचारादिकं राजशक्त्या नियमितमासीदिति धर्मशास्त्रादिदर्शनतो विवेकिनां प्रत्यक्षमेव । इत्यत एव हिन्दूसमाजे स्थैर्यमासीत् । यतः कालात् समाजस्यास्य राजशक्तिर्विदेशिनां हस्ते गता, तत एव हिन्दूसमाजस्य सामाजिकाचारविचारेषु शैथिल्यस्य प्रवेशो जातः । बहूनां वैदेशिकानामाचारव्यवहाराणामपि प्रवेशो जातः । किं बहुना, राजशक्ति-नियमनाभावात् स्वेच्छया विगुणितानां कुरीतीनां कदाचाराणां तत्तत्कालिक-दाम्भिक-बैडालव्रतिक-वाकव्रतिक-प्रवर्तितानामप्याचार-व्यवहाराणां वैदेशिक-राजशक्ति-सम्पर्कतस्तदीयानामाचार-व्यवहाराणामपि यथेच्छं प्रवेश इह हिन्दुसमाजे सञ्जात इति समाजोऽयं जर्जरितो जीर्णशीर्णोऽन्याकारतामेव गतो दरीदृश्यते ।

अन्यतश्च वैदेशिका विधर्माणः शासका आर्य्य-धर्मस्यास्य विध्वंसने विगुणीकरण एव प्रवृत्ता आसन्, सन्ति च । अतएवास्य स्वरूपं साम्प्रतं न वैदिकम्, नापि तान्त्रिकं न चापि पौराणिकमास्ते, सर्वथा पूतिकूष्माण्डीकृतोऽर्द्धजरतीयन्यायमनुसृतोऽयमार्य-हिन्दू-समाजो बौद्धकालीन-वैदिक-श्रद्धाभावे दूषितश्च स्वाचारे महान्तं भेदमासाद्य सर्वतः परिष्कारार्हो विद्यते । परन्तु अत्र कोऽग्रे पदमादध्यात् । एकस्य वशे इदं परिष्करणं नास्ति । एकस्तु यः कोऽपि किमपि कर्तुं किञ्चिदिह वदति चेत् स एव नास्तिकोऽयम्, आर्यसमाजिकोऽयमित्यादि विविधैर्विशेषणैरलंक्रियते । अतश्च "सङ्घे शक्तिः कलौ युगे"—इति सङ्घसाध्य एव परिष्कारः । सङ्घोऽपि विना राजशक्तिप्रभावात् सम्प्रति हिन्दूधर्म-परिष्कारे नैव प्रवृत्तो भविष्यति—इति निश्चप्रचम् ।

पश्यन्तु, अस्य हिन्दूधर्मस्य संरक्षकास्त्रयः स्तम्भा आसन् । यथाः—(१) साधु-सन्यासिवर्गः (२) पुरोहित-वर्गः, (३) शिक्षित-समुदायश्च ।

तत्र प्रथमस्य स्तम्भस्य सन्यासि-साधु-वर्गस्य विषयेऽपि मम बहु वक्तव्यमस्ति । हिन्दूधर्मशास्त्राणि, वेदाः, पुराणानि च एकस्वरेणैव साम्प्रतिक-वैरागिसन्न्यासि-साधु-प्रकारं विनिन्दन्ति । क्वापि धर्मशास्त्रे भवन्तोऽल्पवयस्कानां वैराग्यविधिं सन्यासविधिं वा नैव द्रक्ष्यन्ति । विधानन्तु दूरे तिष्ठतु । शतमुखी निन्दा विद्यते । पश्यन्तु—

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः !!"
"ब्रह्मचारी भूत्वा गृही भवेत्. गृही भूत्वा वनी भवेत् ।
वनी भूत्वा प्रव्रजेत् ॥"

इत्यादिवचने विद्यमानेऽपि बाला अनधिगत-लोकव्यवहाराः, अदृष्टशास्त्रा अपि जटां भृत्वा, वैरागिणो भूत्वा, गैरिकं काषायं परिधाय, मुण्डित-मुण्डा वा भूत्वा निर्लज्जाः कौपीनभृतो वा भूत्वा निःशङ्कं पर्यटन्ति भारते ।

शूद्रा वा वैश्याः क्षत्रिया वा द्विजन्मानो वा यदा गृहे किञ्चिदपि योग-क्षेम-व्यवहार-क्षमं क्षेत्रं चलां सम्पत्तिं वा नोपलभन्ते, तदा काषायं परिधाय जटाभारं शिरसि कृत्वा,

मुण्डित-मस्तका वा विविधलिङ्गिनो वा ऋजुबुद्धीन् हिन्दू-दासान् चारयन्ति। स्वयं च बलीवर्दतामापद्य चेत्राणीव हिन्दूनां दार-धनानि चरन्ति। नैतेषां धर्मस्य भयम्, नापि राजशासनभयम्। यदेव मनसि आयाति, तदेव वदन्ति, तदेव कुर्वन्ति। नापि धर्मशास्त्रं मन्यन्ते, न चापि लोकव्यवहारम्। राजनियमभङ्गकारस्तु वराकाः कारागृहे नीयन्ते, तत्रैव विविधां यातनामप्यनुभवन्ति। इमे तु हिन्दूशास्त्रनियमानपि भञ्जन्ति, उपरितः सर्वैरेव हिन्दुभिः पुरस्क्रियन्ते। अहो भाग्यमेतेषाम् !!

पश्यन्तु, यो हि शूद्रो दिनं यावत् चेत्रेषु सपरिश्रमं कार्यं कुर्वन् सेटकद्वयं बज्रं (बाजरा) यवं वा लभते, स एव यदि साधुर्भूत्वा रामफटाकां धृत्वा पर्यटति चेत्, तदा स अनायासेनैव समीचीनं भोजनम्, परिधातुं वस्त्राणि, उपानहौ, पादवन्दनानि च सम्यक् लभते। किम्बहुना, गञ्जा-भङ्गा-चुरुट-सिग्रेट-प्रभृतीनि मादक-द्रव्याण्यपि प्रचुरमात्रायां हिन्दूसमाजेन तत्कृते उपाह्रियन्ते। अधिकन्तु वक्तुमपि न शक्यते। एकं प्राचीनतरं पद्यमेतेषां कृते स्मृतिपथमारोहति—

"प्रपायां पीयते वारि सत्रागारेषु भुज्यते।
सुप्यते देव-सदने यभ्यते यत्र लभ्यते॥"

ईदृशी दशा सम्प्रति हिन्दूशास्त्रमर्यादाभञ्जकानां विद्यते।

यावदयमस्माकं साधुसमुदायो मार्गस्थो न भवति, तावद् हिन्दूसमाजस्य सङ्गठनं कथं स्यात्? अत एव यथा प्राचीनकाले—"*आश्रमादाश्रमं गच्छेत्*" इति नियमः प्रचलतिस्म, तथैवाधुनापि राजनियमः स्यात्। केऽपि ब्रह्मचर्याश्रमात् वैराग्यं सन्न्यासं वा न गृह्णीयुः। सर्वथाऽयमीदृग् राजनियमः स्यात् यत् यदि केऽपि अनुत्पादितसुताः, अनास्वादित-गृहस्थभोगाः, अकृतलोकोपकाराः सन्न्यासं गृह्णन्ति चेत् ते कारागारे निक्षिप्ताः स्युः। इतीयं हिन्दूधर्म-प्रथमस्तम्भविषयिणी वार्ता।

अथ द्वितीयं स्तम्भं विमृशन्तु। अयं हि पुरोहित-समाजः। सम्प्रत्यपि सर्वत्रैव देशे समाजे कुले गृहेषु च पुरोहितानां प्रभावो जागर्ति। जन्मत आरभ्य मरणान्तं—, वार्षिकश्राद्धान्तं-जनतायाः पुरोहिताकाङ्क्षा। यदैव पुरोहितः कथयिष्यति तदैव नवयुवकः पत्नी-समागमं करिष्यति। ग्रामीण-जनतासु एतावान् पुरोहितस्याधिकारः सम्प्रत्यपि विद्यते। स्त्री-समाजस्तु सर्वथैव पुरोहिताधीनः। अतो हि पुरोहिता एव विशेषतः संस्कर्त्तव्याः सम्प्रति। तीर्थ-पुरोहितानान्तु विचित्रैव शोचनीया परिस्थितिः। इमे हि भङ्गाभट्टाः सर्वप्रत्यक्षं धर्मश्रद्धावतो यात्रिकान् विलुण्ठन्ति। यदि कश्चन श्रद्धालुर्हिन्दूदासः कुत्रचित्तीर्थादौ गच्छति चेत्, तीर्थ-पुरोहिता विलोमचुरेणैव तस्य चौरं कुर्वन्ति। स तु वराको धर्मं निन्दन्नेव गृहं परावर्तते। तस्य न पुनः श्रद्धा समुदेति तीर्थाटनं विधातुम्। स तु यावज्जीवनं तीर्थपुरोधसो निन्दति। अन्यानपि तीर्थयात्रातो वारयति। तीर्थपुरोधसस्तेन सह तथा निष्करुणं व्यवहरन्ति, येन स हिन्दूधर्मत एवोद्विजते। अतस्तीर्थपुरोहितानां ग्राम पुरोहितानाञ्चामूलतः संस्कार आवश्यकः। तेषां कृते किमपि परीक्षादिकं स्वातन्त्र्येण सञ्चालनीयम्, येन ते सर्वेऽपि स्वकर्म-शिक्षिताः, सभ्याः, समाजोपकारिणः, जनता-हित-चिन्तकाः, स्वकर्तव्य-दृढाश्च भवेयुः।

ये च पौरोहित्यकर्मणः समुचितां शिक्षां गृहीत्वा प्राप्तप्रमाणाः स्युस्त एव धार्मिकं कर्म कारयेयुः, नान्ये मूर्खाः। एतेन तु महाननर्थापातः, धर्मलोपः, अधर्मश्च भवति। यथोक्तम्—

"मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्या प्रयुक्तो न तमर्थमाह।
स वाग-वज्रो यजमानं हिनस्ति।
यथेन्द्र-शत्रुः स्वरतोऽपराधात्॥"

ईदृशस्य कस्यचन राजनियमस्याभावादेव सम्प्रति तीर्थादौ शूद्राः, आभीराः, नापिता अपि-पौरोहित्यं कारयन्ति स्वयं ते निरये पतन्ति, अन्यांश्च पातयन्ति। बहवोऽन्याश्च दोषा हिन्दूसमाजे पुरोहितानामेवापराधात् प्रविष्टाः सन्ति। मनुनापि स्त्री-शूद्र-कल्कनं निषिद्धं विद्यते। तदिदानीं पुरोहितापराधात् सर्वप्रत्यक्षं केवलं स्त्रियः शूद्रा एव नहि; महान्तोऽपि श्रद्धालवो विश्वस्ता हिन्दवस्तीर्थादौ वञ्चिताः, लुण्ठिताः, अपमानितास्तिरस्क्रियन्ते। राजनियमे निबद्धे सति एतस्यापि दम्भस्य समूलोन्मूलनं स्यात्। अयं हि सम्प्रति संक्षिप्तः पुरोहित-विषयको विचारः।

तृतीया विद्यते हिन्दू-समाज-संरक्षणस्तम्भस्वरूपा संस्कृत-शिक्षा-पद्धतिः। तस्या विषयेषु सुप्रभातस्य प्रचलत्येव विचारः। पुनरपि कदापि पृथक् विचारः कृतः स्यात्। सम्प्रति संक्षेपत इदमेव वक्तव्यमस्ति यत् विद्वांसः स्फारचक्षुष्का भवेयुः। अधीयीरन् लोकव्यवहारम्। जानीयुर्वर्तमान-देशदशाम्। शास्त्राण्यधीत्यापि मा मूर्खा भवन्तु। शतद्वयवर्षतः प्रवृत्तानां ग्रन्थानामध्ययनेन पाण्डित्यं नायाति। हिन्दूसमाज-संग्रन्थनम्, विना इतिहास-भूगोलज्ञानम्, विना वेद-पुराण-धर्मशास्त्राध्ययनम्, विना महाभारत-रामायणपाठं नैव कोऽपि कथमपि कर्तुमर्हति। तत्रावधानं देयं विद्वद्भिः। शिक्षा-पद्धतिः परिष्कर्तव्या। सम्प्रति स्वातन्त्र्ययुगेऽस्मिन् सर्वैरपि स्वतन्त्रभारतकाल-निर्मिता ग्रन्था अध्येतव्याः; येन नेत्रं विस्फुरितं स्यात्। हृदयं स्फारं भवेत्। *'दीर्घं पश्यत मा ह्रस्वम्'* इति दीर्घदर्शिनोऽप्यन्वर्थनामानो विद्वांसः स्युः। यदेव वयं कुर्मस्तदेव हिन्दूधर्मतत्वं--इति संकुचिता दृष्टिर्मा भवेत्। पुराणगतवार्ता-समर्थनार्थं वेदानां हननं न स्यात्, यथा साम्प्रतिकाः पण्डिताः कुर्वन्ति। नेदमुचितम्। दुराग्रहोऽयमल्पज्ञता च। ये केऽपि मनीषिणो हिन्दूधर्म-परिष्करणं हिन्दू-सङ्ग्रन्थनमभिलषन्ति, तेषां वार्ताः श्रोतव्याः। "अयमब्राह्मणः, अयं कायस्थः, अयं वैश्यः, एतस्य कथनं कथं वयं श्रोष्यामः"--इति मिथ्यादम्भस्य नास्त्यवसरः।

"शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि।"
"युक्तियुक्तं वचो ग्राह्यम् बालादपि सुभाषितम्।
अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मयोनिना॥"

इत्यादि सदुपदेशं गृह्णद्भिः परिष्करणीयः स्वीयः समाजः--इत्येवाधुना निगद्य सङ्क्षिपामि स्ववक्तव्यम्।

अत्र विषये सर्वानपि हिन्दूधर्म-संस्कारमभिलषतो महानुभावान् प्रार्थये यत्ते स्वीयान् विचारान् राष्ट्रियपत्रेऽस्मिन् सुप्रभाते प्रकाशयन्तु; येन झटित्येव देशनायकानां समाजनेतॄणां दृष्टिपथे ते विचारा आगच्छेयुः। ते च विदुषां विचारानवगत्य तथा प्रयतन्ताम्; यथा हिन्दुसमाजः, शीघ्रमामूलतस्तैः सुपरिष्कृतः पुनरपि सर्वोन्नतो निजजगद्गुरुत्वपदम्प्राप्नुया दिति।

## बृहन्मानवधर्म सारः।

मानवधर्मं प्रवणीकर्तुकामैः, वर्णाश्रमधर्मस्यैव व्यवस्थया विश्वशान्तिकामुकैः, महामनीषिभिर्विश्वविख्यात-वैदुष्यैः श्रीभगवद्दासमहोदयैर्विरचितोऽयं ग्रन्थो मया सावधानमनसा सम्पूर्णः सम्यागधीतः।

अत्रार्यधर्मस्य सर्वेष्वपि विषयेषु सम्यग् विमर्शबुद्ध्या विचारः कृतो विद्यते। सम्प्रति वर्णाश्रमधर्मे ये दोषाः समागताः सन्ति, तेषां निष्पक्षतया विचारः कृतो विद्यते। ग्रन्थोऽयं विदुषां मननीयो विद्यते। अत्र धर्मनीति-समाज-नीति-राजनीति--वर्णाश्रमनीति--शिक्षणनीति--संस्कारनीति-प्रभृति सर्वेष्वेव परमोपयोगिविषयेषु शास्त्रीयप्रमाणोद्धरण पूर्वकं मार्ग-निर्देशोऽस्ति। संस्कृतपद्यानि सरलानि सुखावबोधानि च। प्रसादगुणगुम्फितत्वात् पठनसमकालमेवार्थावगतिः सञ्जायते। सारल्यधियैव पद्ये निर्द्धारितस्य "यतिः सर्वत्र पादान्ते श्लोकार्द्धे तु विशेषतः" इति नियमस्याप्यवहेलनां कृत्वा सर्वत्रैव सन्धिविश्लेषः कृतो विद्यते।

ग्रन्थोऽयं संस्कृतस्य साधारणं ज्ञानं बिभ्रद्भिरप्यध्ययनयोग्योऽस्ति। स्वात्मनो बहुश्रुतत्वाभिलाषिभिः सर्वेषामेव वर्णाश्रम-सम्बन्धिविचाराणामेकत्रैव संग्रहं द्रष्टुकामैर्भावियुगस्य च वर्णाश्रम-व्यवस्थया सञ्चालनं कर्तुमभिलषद्भिः साम्यवादस्य च यथोचितं प्रत्युत्तरं दातुकामैरवश्यमेवाध्येतव्यः परिशीलनीयो मननीयश्चायं ग्रन्थमणिः। अत्राष्टादशाध्यायाः सन्ति। विविधा ज्ञातव्या विषयाश्चात्र सन्निवेशिताः सन्ति। यथा—

'हिन्दूनां क्षयरोगः' 'तेषां ह्रासकारणान्वेषणम्' 'अबलासु घोर अत्याचारः,' 'द्विजत्रयस्य स्वकर्तव्याच्च्युतिः', 'वर्तमान शास्त्रदुर्दशा', 'चतुर्णां वर्णानामङ्गाङ्गित्वम्,' 'कर्मणा वर्णः पुराणोदाहरणानि च', 'जन्मवर्णाग्रहस्य दारुणः परिणामः', इत्यादयो बहवो विमर्शनीया विषया विद्यन्ते। अध्याय सूची आदौ, अन्ते च विषयसूचक-शब्दा-नुक्रमण्यपि विद्यते। मुद्रण-प्रकाशन-कर्गजादि-सर्व-सामग्री-सम्पन्नस्याप्यस्य मूल्यं रूप्यकद्वयं त्रिशत-पृष्ठात्मकस्य रूपमेव।

*श्री गोपाल शास्त्री दर्शनकेशरी*

# प्रतिबोधनम्

ले०—कवि-तार्किक-चक्रवर्त्ती महादेवपाण्डेयः शास्त्री साहित्यशास्त्राचार्यः

वर्षा समय एव शालय उप्यमानाः फलसम्पत्तये प्रभवन्ति, यौवन एव विवाहाः क्रियमाणाः सन्तान-जन्मने समर्थयन्ते, बाल्यावस्थायामेव विद्या अधीय-माना अर्थक्रियाकारितायै शक्नुवन्ति, रात्रावेव च दीपाः प्रज्वाल्यमानाः प्रकाश-प्रसारितायै सम्पत्स्यन्ते, तथैव यथाकालं विधीयमाना यत्नाः फल-सम्पत्प्रवणतायै पर्याप्नुवन्तीति नैतत्पारमनीषं विमृशतां विद्वन्मूर्द्ध-न्यानाम् ।

देशे इदानीमार्यावर्त्ते राजनीतिक-प्रभात-वेलायां संचरन्नवतिष्ठते । धमनीषु तदीयासु रक्तसंचारः, प्रति-हन्यमानोऽपि विविधैर्विरुद्धैर्वातावरणैरविरतधाराभि-र्विक्षोभमाणः प्रवहति । कुहनाः, सह नाना-प्रलोभनैः सन्त्रासैश्चातुर्यैश्च वितायमाना अस्य निश्चयशिलाफलक पतिताश्चूर्णीभवन्ति । विभीषिका महत्योऽपि प्रदर्श्य-माना अकालिक्यः सुमनस इव निष्फलाः संजायन्ते ।

आसीमान्ताद् आवङ्गोपसागरम्, आकेदारक्षेत्राद् आकन्याकुमारिकम्, अविद्वद्भ्य आसुलभाचराभा-वम्, आभूपालेभ्य आ शास्य-वर्गम्, किं बहुना समस्तव्यापारेषु, सकलकर्मकरेषु, यवन-विविध-संघेषु ईशावीयभारतीयेषु, सिक्खेषु, राजपुरुषेषु, सैनिकेषु, पोतवाहकेषु, स्त्रीषु, पुरुषेषु, अन्यान्य-राज-कर्म-चारिषु, ब्रिटिशभारते राजशासितप्रदेशेषु च "गौराङ्गशासनं सत्वरं पलायताम्, स्वराज्यं शीघ्रं प्रकाशताम्, वैदेशिकी सेना प्रतिपदं पराधीनता-पाशं कटु क्वणन्ती देशादविलम्बं समूलतूलं निवार्यताम्, पूर्णा स्वतन्त्रता भारतस्य तूर्णं प्रतिभासताम्" इत्येक एव शब्दः, एषैव घोषणा, अयमेव प्रतिध्वनिः सर्वत्र दन्ध्वनीति। विचित्रा-जागर्त्तिः, अद्भुतः प्रबोधः, अभूतपूर्व उल्लासः समन्ततो दरीदृश्यते ।

किमयं स्वप्नः ? किं वा मोहः ? आहोस्विद् इन्द्र-जालम् ? किमुत विकल्पः ? न केचिद् बिभ्यति । न केचन हानिं मन्यन्ते । न केऽपि मृत्युं गणयन्ति । विश्वतः उत्साहः । परितस्तदेकलीनता । विष्वग् गभीरः-परामर्शः। अन्तराग्निर्ज्वलति । रहसि शासन-विपरिवर्त्त-नस्य सुदृढा सुसज्जता । एकतो द्वाचत्वारिंशी पुनरा-वृत्तिरुद्घोष्यते। अपरत एतदुद्वेलान्दोलने नष्ट-भ्रष्टानां दग्धोल्लुण्ठितानां स्वेनैव पुनर्निर्माणेऽसमोऽपत्यय इति नूतना विध्वंस-प्रकाराः श्राव्यन्ते । अन्यतोऽसंभाविता अतर्किताश्च उपप्लवा उपद्रवाश्च उपनंस्यन्ति; ये न जात्वपि श्रुता नापि कल्पिताः पश्चात्यैः । यावद्राज्य-समूलोत्खातं स्थायुकाश्च कारिष्यत इत्युद्घोष्यते ।

अहिंसा हिंसा वा भवतु, सत्याग्रहो दुराग्रहो वास्तु, नीतिरनीतिर्वास्ताम्, विजयः साधनीयः । स्वाधीनता लभ्या। शत्रु-पराभवो लक्ष्यः। पुरस्तादेशः, पश्चाद् धर्मः. यवन-हस्तान्तर्गतं शासनं सम्पाद्य गौराङ्गाः शीघ्राति-शीघ्रं गच्छन्तु । अनन्तरं प्रतिविधानं सर्वस्य यथावद् विधातुं यतिष्यते । परवशतायां वस्तुतो विनिवृत्तायां निःशेषं मालिन्यं, समग्रः कलहः, सकला उपद्रवाः, अशेषा उद्दण्डता विनङ्क्ष्यन्तीति निश्चप्रचम् । जाय-माना अपि वा ते कियन्तंचन कालं स्थित्वा मासिका वार्षिका अपि वा भूत्वा सहस्रं लक्षं वा व्यापाद्य विपद्येरन्नेव केषांचन महतां हस्तालम्बमलभमानाः ।

किन्तु तदर्थमत्र भोजनं व्युदस्य, निद्रां परिहाय, निखिलमेव वा भौतिकमगणयित्वा, सुखं शिरसि वहन्तो-ऽपारामापदं, दिवानिशं निर्विश्रममुद्युञ्जतेऽत्रत्याः सर्वे

वर्गाः विश्व उद्बुद्धाः, कृत्स्नास्तरुणाः, स्थविराः, स्त्रियश्च। तत्र संस्कृतज्ञैर्न केवलमुदासीनैरास्यते; निरारम्भैरुपविश्यते, प्रेक्षमाणैः स्थीयते, अपि तु नानाकाराः समास्थाय चेष्टाः, विविधा उद्वेल्य क्रियाः, नैका आधाय भूमिकास्तत्तदाचर्यते. प्रदर्श्यते, उद्घोष्यते, यदरुन्तुदता कतिपयैर्देश-काल-परिस्थितिविद्भिर्नैव परिमाष्टुं प्रभूयते, न निर्मलयितुं समर्थ्यते गीर्वाणवाणीविदां वरैः।

समस्तं धर्मस्य विलयनमिदानीमेव वन्दनीयानां तेषां पुरस्तादुपस्थितम्। शिखा-सूत्र-रक्षा सम्प्रत्येव पूज्यानामत्रभवतां नेदीयसी पुरो निषेदुषी क्रन्दन्ती विलोक्यते। तैः किल धर्मागमपारदृश्वमतिवैभवैः किं किं न कथ्यत उच्चैस्तरामेतर्हि यत्प्रतिबध्नात्येव मातृ-वन्धन-विमोचन-समारम्भं, कण्टकीभवत्येव जागरूकाणां शत्रून् प्रसह्य विदधतां पलायनतत्परान् राजमार्गे। प्राप्ते तु स्वातन्त्र्यस्य महोदये समये तैरप्याकाङ्क्षिष्यत एव स्वकीयो भूयान् संविभागः, बुभुक्षिष्यन्त एव मधुर-मधुराणि तर्पणीय-वस्तूनि जिघत्सिष्यन्त एव मोदक-पायसा-पूपाः।

मान्याः संस्कृत-विद्या-विनोद-रसिकाः! चौरैर्लुण्ठिते वेश्मनि यामिक-जागरण-वृत्तान्तानुहरणं मा वः प्रसाङ्क्षीत्, मा च वः परापतन् निर्गतनीर-सेतुचिकीर्षानुचर्या। इत्येव पुरतो वः पुनः पुनः प्रतिबोधनम्—

उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु।
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः।
विजयाय हि निर्याहि सततं रश्मिमानिव।
मानं विधम शत्रूणां देशो जयतु नः सदा॥

# कमा = कमलिनी।

महामहोपाध्यायः नारायणशास्त्रीखिस्ते, साहित्याचार्यः।

"अयथाकृतः प्रणयः एवमेव दुःखाकरोति"—

[ १ ]

कुमारेण दिनकरेण उषोदेव्या वदनान्नीलावगुण्ठनं बलादपसारितम्, तदानीमुषोदेवी सद्यो मन्दमहसत्। तया सार्द्धमखिलं विश्वमपि सानन्दं हसितुमारेभे। अत्रान्तरे पवमानेन रक्त-पिष्टातक-मुष्टिं मध्येनभः समद्धूल्य मङ्गलोत्सवः सम्पादितः। कुसुमैरपि स्वसौरभैः स्वैरं दश दिशः सुरभीकृताः। अस्य प्रणयि-युग्मस्य मिलनावसरे कोकिला अपि मङ्गलगीतानि गायन्तिस्म।

आसीदेका पुष्करिणी, तस्यामनेकानि कमलानि कमलिन्यश्च विकसन्तिस्म। तेष्वेव इयमस्माकं कमा = कमलिन्यप्यासीत्। इतराः कमलिन्यः स्वस्वभावानुसारं हसन्त्यः खेलन्त्यश्चासन्, तत्र रहस्य-वार्तैवियमासीत्, यत्सर्वाभिरपि कमलिनीभिरात्मनः कृते एकैकः प्रियः सम्पादित एव, सोऽपि बाढं निभृतमेव, गुरुजनस्य सर्वथा परोक्षमेव। प्रेम-व्यवहारस्तु सर्वदैव निभृतमेव क्रियते। प्रेम्णः खलु रीतिरीदृशी। तत्र केन किं क्रियताम्!!

परन्तु अस्माकं कमा = कमलिन्या वार्ता तु सर्वथैवान्यादृश्यासीत्। सा किल प्रमादादपि स्वसखीनां हसन-खेलनेषु न कदापि सम्मिलतिस्म। मूर्तिमतीव लज्जा सा वराकी भृशं मुग्धासीत्। तल्लावण्य-दर्शनोन्मत्तास्तत्कृपा-कटाक्षाभिलाषिणो बहवो भ्रमरा अन्ये च चित्र-विचित्र-वर्णाः पक्षिणस्तस्याः परितो गतागतानि वितेनिरे। परन्तु परममुग्धया तया तेष्वेकोऽपि प्रमादादपि नोद्ग्रीवया क्षणमपि निभालितः, सा खलु लज्जा-जातीयैवासीत्। उषोदेव्या सह कुमारदिनकरस्य प्रेम-शृङ्गारः सहसाऽस्माकं कमा = कमलिन्या दृक्पथे समापतितः, अत्रान्तर एव केचनोन्मादक-मधुर-तरङ्गास्तदीय-मनःसरोवरे प्रादुर्भूताः। सा स्वेनैव जहास, हसन्त्येव च ललज्जे। विश्वाधिकं किल मौग्ध्यम्।

जाति-यूथिकादिसुमनोवनात् कण्टक-परिहार-पूर्वकं स्वमार्गमाक्रामन् एकस्तरुणो भ्रमरस्तदानीं तां पुष्करिणीमुपाययौ। स च स्व-स्वभावानुसारमस्माकं कमा = कमलिन्याः परितोऽपि भ्रमिचक्रमेकं चकार, तदानीं लज्जावल्याऽपि कमा = कमलिन्या सहज-संस्कारवशादुद्ग्रीवया भूत्वा स निरीक्षितः, दृष्टि-मिलनं सम्पन्नम्, द्वयोरपि दृष्टिः कियन्तंचित् कालं परस्परस्योपरि स्थिराऽभूत्। द्वावप्यन्योन्यदृशोः किमपि मोहकत्वमन्वभूताम्। परितो विस्तीर्णा जड-सृष्टिस्तयोर्दृष्टिपथात् क्षणं विलुप्तेवाभूत्। अत्रान्तरे कुत्राऽपि निभृतं निलीय स्थितया लज्जया पुरो भूत्वा द्वयोरपि हृदये सममेव वेगेनास्पन्दितम्। द्वावपि सद्यः प्रेमतन्द्रातो जागरमापादितौ। इयं लज्जा-वराकी किल स्थलं कालं चानपेक्ष्य यत्र तत्र पुरः पुरः प्रचलति हतभागधेया।

कमा = कमलिन्या लावण्येन तस्य तरुण-भ्रमरस्य चित्तं बाढमाकृष्टमभूत्। स च तत्र चिरं तिष्ठासुरपि सभ्यजन-व्यवहारमनुरुन्धानस्तत्र चिरं स्थातुं नाशकत्। सद्य एवादृश्योऽभूत्। प्रायो यौवनारम्भ-हृदयभावना एवमेव मिथो विरुद्धा विचित्राश्च प्रतीयन्ते।

क्षणादुड्डीय निर्गते तस्मिन् भ्रमरे कमा = कमलिन्याः सख्यः पुरोभूय तां परिहसितुकामाः पप्रच्छुः—

"अयि मुग्धे! कं भाग्यवन्तं तिर्यङ् निभालयन्ती इत्थं स्थिताऽऽसीः? वयं विद्मः किल तव रहस्यम्।"

तदाकर्ण्य कमा = कम-लिनी लज्जाविशेषारुणितानना लज्जामपि लज्जितवती। कृतककोपेन जगाद च—

"अलं सख्यः! ईदृशमन्यादृशं परिहासं विधाय, न रोचते मे वार्तेयम्।"

परन्तु कृतककोपेन किं सवयसो वयस्या विभ्यति?

अथ स पुरागतस्तरुणो भ्रमरस्ततःपरं येनकेनापि व्यपदेशेन तत्रागत्य कमा = कमलिनी-दर्शन-सुखमनुभवति स्म। तां परितो भ्रमता तेन सर्वेषां दृष्टीः परिहरता क्वचिन्मधुरं-चुम्बनमपि लभ्यते स्म। कमा = कमलिनी च तदानीं कृतककोपमभिनयन्ती पत्रकराग्रैस्तं रोद्धुमिव प्रयतते स्म।

स्त्रीणां हि अनुरागतोऽपि कृतककोपाभिनयो बाढं सुखयति रसिकहृदयानीति सहृदयानां प्रत्ययः।

[ २ ]

भ्रमर-कमलिन्योः प्रेमव्यवहार-वार्ता शनैःशनैर्भ्रमर-मण्डले प्रसिद्धाऽभूत्। यदा स तरुणभ्रमरः स्वमण्डलं पुनरागतस्तदा भ्रमरमण्डलीयोत्तम-मध्यम-वृद्धैः संभूय वाग्बाणैः स भृशं ताडितोऽभूत्।

एका मुखरा युवती भ्रमरी ससन्नाहं समुपसृत्य तं तरुण-भ्रमरं साधिक्षेपमवोचत—

"किं रे कुलाङ्गार! किं त्वं तया पुष्करिणी-वासिन्या कमलिन्या सह विवाहं चिकीर्षसि?"

भीतभीतेन भ्रमरेणोत्तरितम्—"आम्!"

"अरे स्वजातिं स्वकुलं च किञ्चिद्विमृश।"

स्वजातीयाः स्वशरीर-वर्ण-परिभूत-कज्जलाचलाः, सौन्दर्यवत्यः, प्रगाढतारुण्याः शतशो भ्रमर्यस्त्वयि बद्धानुरागास्तव चरणतले लुठन्ति, ताः परिभूय परजातीयां कमलिनीं यत्कामयसे तत्किं शोभनम्?"

"अहं किल तस्यां बाढं प्रेमासक्तोऽस्मि तत्परित्यागो हि ममाशक्य एव"

"अरे कीदृशीं प्रेमासक्तिं कथयसि? प्रेम-प्रणयादिकं किमपि नास्ति, जगति प्रेम-पदार्थो नास्त्येव"

"जगति प्रेम नास्ति?"

"नास्ति"

"जगति वास्तवं प्रेम वर्तते?"

"वर्तते।"

"जगति परमेश्वरो नास्ति।"

"जगति परमेश्वरोऽस्ति?"

"अस्ति"

प्रेमवार्ता परमेश्वरवार्ता च हार्दा कथा। मान्यते चेत् प्रेम! नास्तिचेन्नास्ति। मान्यते चेत्परमेश्वरः! न चेन्नास्ति। प्रेम-परमेश्वरयोः सत्ता हृद्गतैव। तयोरन्वेषणं परिशीलनं च हृदय एव कर्तुं पार्यते। हृदय कूटानि हृदयेनैव समाधीयन्ते। वराकी बुद्धिस्तत्र कियत् प्रसर्पतु?

"—प्रेम सौन्दर्याधीनमेव भवति, सुन्दरीं सर्वं एव कामयन्ते"

"सौन्दर्येण संजातं प्रेम क्षणिकं भवति, प्रेम्णोत्पादितं सौन्दर्यमविनाशि भवति ।"

"भगिनि ! विवाहः किमर्थं क्रियते ?"

"हुं, कोऽयं प्रश्नः, लोका विवाहं कुर्वन्ति, अत एवास्मनाऽपि सकर्तव्य एव । अन्यदपि, जगति बहूनि कार्याणि लोकाः कुर्वन्तीति हेतोरेव वयमपि कुर्मः । असौरभं कुसुमं, तुलसीरहितं वृन्दावनम्, मङ्गल-तिलक-रहिता सधवा नारी, प्रेमरहितो विवाहश्च चक्षुष्मताममङ्गल एव प्रतीयन्ते । विवाहान्तर्गते प्रेमज्योतिषि निर्वाणे सति पाशवीमिन्द्रिय-तृप्तिं विहाय तत्र किमन्यदवशिष्यते ?"

"भगिनि ! कमलिनीमकामयित्वा, तस्या उपरि प्रणयमविधाय, नाहं स्थातुं पारयामि, तां विना मम जीवनमपि दुःशकम्, किमहं करोमि" तरुण-भ्रमरेण दृढतयोत्तरितम् ।

"मुग्धोऽसि, तव हितमुपदिशामि, त्वं कमलिन्याः कथामपि परित्यज । उपहसन्ति त्वां सर्वे द्विरेफ-कुल-धूर्धराः ।"

"परोपदेशकाले सर्व एव पण्डिता भवन्ति, ते खलु परोपदेशनावसरे स्वहृदयसंवेदनाः सर्वथा विस्मृत्यैव तिष्ठन्ति । 'लोकस्तं प्रेमान्धं वदति' वदतु नाम । को नाम सचेता हृदये हस्तं विधाय सशपथं वक्तुं प्रभवेत् यत्तेन तारुण्ये कदापि प्रेमान्धेन न संजातम् । 'लोको हसति' इत्यपि कथनमकिंचित्करमेव । जगत् कं न हसति ? हसनमेव जगतः स्वभावः ।"

तरुणभ्रमरस्ततः परं तत्र चिरं स्थातुं नापारयत् । स किल ततो विरक्तः गूं गूं गूं शब्दं कुर्वाण एव निःसृत्य एकस्य रसालसालस्य घनच्छाये तले निषद्य, सद्यःसमुत्पन्न-परिस्थितिविषये विचारयामास । किं करोतु वराकः ।

[ ३ ]

स्वयूथ्यैस्तिरस्कृतः स तरुण-भ्रमर उद्विग्नचेताः सन् इतस्ततो भ्रमन्नेव कंचित्कालमतिवाहयामास । चिरं स तां कमलिनी-निकेतनभूतां पुष्करिणीं नोपाययौ । कमा = कमलिनी तु तद्विरह-विधुरा तमपश्यन्ती गाढोत्कण्ठावशंवदा भूत्वा क्रमेण क्षामक्षामतामाससाद । ।

क्षमा = कमलिनीमित्थं दुरवस्थागतां दृष्ट्वा तां सान्त्वयितुं तद्वयस्यास्तत्समीपमुपाजग्मुः ।

'मुग्धे ! कियच्चिरमिदं भ्रमरव्रतं धारयिष्यसि ? निष्कासय तं भ्रमर-हतकं मनोमन्दिरात् । पुरुषजातिः सर्वाऽपि वञ्चनशीलैव ।"

स्त्रियो मन्यन्ते यत्पुरुषजातिः स्त्रीहृदयं परिचितुं न पारयतीति, परन्तु वस्तुतो विचार्यमाणे स्त्रीजातिरपि किं पुरुष-हृदयं परीचितुं पारयति ? कमा = कमलिन्याः प्रिय-प्राप्तये तपश्चरितुं निश्चितम् । श्रूयते पुरा भगवत्या पार्वत्या शिव-प्राप्तये एवमेवाचरितमासीत् । आशा किल आत्मवञ्चनैव । मुग्धा वराकी कमलिनी ।

सा किल उद्यन्तं भगवन्तं भास्वन्तं स्थिर-दृष्ट्या पश्यन्ती तस्यास्तगमनपर्यन्तं तथैव तपस्तेपे । रात्रौ च निरुद्धेन्द्रिय-ग्रामा संकुचिताङ्गीभूत्वा उदवासात्मकं तपस्तेपे । एवमेव चक्रारपङ्क्तिक्रमेण बहूनि दिनान्यतीतानि । तपस्तु निर्बाधं प्रचलतिस्म । क्व पेलवतमं तस्या वपुः ? क्व चेदं दुश्चरं तपः ? पर्यवसाने निदाव-प्रचण्ड-चण्डांशु-प्रखर-कर-शुष्क-देह-पञ्जरा पपात सा कमा = कमलिनी पुष्करिणी-नीर-पूरे ।

तस्मिन्नेव क्षणे स तरुण-भ्रमरः 'स्वजातिं स्वयूथं, गुरुजनं चानपेक्ष्य "तामेव कमा = कमलिनीं परिणेष्ये"— इति प्रतिज्ञाय तामानन्दवार्तां कथयितुमेव कमलिनी-समीपे पुष्करिणीमुपाययौ । परन्तु स कमा = कमलिनीं न ददर्श । तेन पुष्करिणी आमूलचूलं पर्यवेक्षिता । बहूनि प्रफुल्लानि कमलानि तत्रासन् ; परन्तु कमा = कमलिनी तत्र नासीत् । तेन सर्वत्र तारस्वरेण कमा — कमा — कमा — इत्यसकृदाहूतम् । परन्तु सकृदपि प्रतिवचनं नोपलब्धम् । स च कमा = कमलिन्याः शून्य-शिथिलं च वृन्तमभितः साक्रोशं बभ्राम । अत्रान्तरे सोऽपि स्वस्मिन् शैथिल्यं शक्तिपातं चान्वभूत् । तस्य पक्षद्वयमकस्मादेव निरुद्धगति बभूव । मुखं च व्यात्तम् । सहसा तद्वपुरपि पुष्करिणी-सलिले पपात । पुष्करिणी-नीर-तरंगान्दोलितस्तद्देहस्तरङ्गवाहितः सन् क्वचिद् दूरकोणे निभृतं निपतितेन कमलिनी-देहेन सह सममिलत् । परं तु कदा ? उभयोः प्राण-प्रयाणोत्तरम् !

"अयथाकृतः प्रणय एवमेव दुःखाकरोति ।"

# ज्यौतिषशास्त्रानुसारेण फलं कस्मान्न लभ्यते ?

सिद्धान्तमार्त्तण्डः श्रीबलदेव मिश्रः, ज्यौतिषाचार्यः

[ अवशिष्टांशः ]

श्रूयते ज्यौतिषफलिते आयुर्वेदे च किञ्चिद् गुरुकीलकं भवति यदुद्धरणे गुरव एव समर्थाः। अत्र विषये या गाथा मया गणकतरङ्गिण्यामुपलब्धास्ता उदीर्यन्ते।

"अयं (परमसुखोपाध्यायः) फलितपण्डितः फलितग्रन्थरसिको लघुपाराशर्यास्त्रिकोणकेन्द्रनेताराविल्यादिश्लोकस्य वास्तवान्वय-ज्ञानार्थं कर्णाटकदेशादागतस्यातिवृद्धस्य ज्यौतिषशास्त्रकुशलस्यैकपुत्रां पत्नीं, तत्पुत्राय स्वर्णकटकदानेन सन्तोष्य, तत्पुत्राध्यापनसमये तत्पत्नीकृपया प्रच्छन्नरूपेण स्थितः। निजपुत्राध्यापनसमये द्रागन्वयकृतो वृद्धपण्डितस्य तच्छ्लोकविषये यद्यपि कृतबहुपरिश्रमो दत्त बहुमूल्यस्वर्णकटकस्तस्मिन् समयेऽभिप्रायं नाजानत्; तथापि पञ्चगङ्गास्थले गङ्गायां निमज्जतोऽस्य वृद्धपण्डितस्य मुखात् "यदि तच्छ्लोकस्य वास्तवमन्वयं भवान् न करिष्यति तर्हि भवतः काशिवासफलं नष्टं भविष्यती" ति शपथेन ज्ञात्वा मुमुदे।"

"एवं बांसबरैलीप्रान्तादागतं कमपि पण्डितं स्वगेहे निमन्त्र्य रत्नभूषितां बहुमूल्यां स्वर्णमुद्रिकां च दत्वा, पश्चात्तद्देशं च गत्वा वस्त्रादिना तत्कुटुम्बं च संतोष्य, "तत्कालभिन्दुसहितो द्विरसांशकोयं" इति वराहमिहिरकृतवृहज्जातकश्लोकेनानुपातद्वयेन प्रसवकालज्ञानं कथं भवतीति ज्ञातवान्"।

एतेनेदं स्फुटं यद् ये खलु फलितशास्त्र-मर्मज्ञाः वस्तुतो ग्रन्थकृदभिप्रायं जानन्ति ते तदभिप्रायं सर्वेभ्यो न कथयन्ति, तावतापि फलकथनाय क्लेशोऽनुभूयते लोकैः। एवं सुरक्षितापि विद्या गोप्यत्वेन कार्श्यमुपगता, विरलैरेव महानुभावैर्यथार्थतोऽवगतेदानीमिति मन्तुं शक्यते।

४—वास्तवफलकथनाय सूक्ष्मं गणितमपेक्षितम्। केवलमायुष आनयनाय केशवदैवज्ञेन या जातकपद्धतिर्निर्मिता तत्र यद्गणितं तस्य साधनाय पञ्चमासकालोऽपेक्षितः। एवं सर्वस्मिन् फलितविषये सूक्ष्मज्ञानस्यावश्यकता। तच्च सूक्ष्मज्ञानं सूक्ष्मगणितसाध्यं परन्तु तथाविधं कष्टसाध्यं गणितं न केनापि क्रियतेऽतो यथार्थफलं न लभ्यते।

५—फलकथनं गणिताधीनमतो गणितज्ञा एव यथार्थफलकथने समर्था भवेयुः। परन्त्विदानीं भारते वर्षे गणितानभिज्ञा एव फलितज्यौतिषस्य व्यवसायं कुर्वन्ति। ये गणितज्यौतिषज्ञाः; ते फलिते उपेक्षां कुर्वन्ति, ते तत्र श्रमं न कुर्वन्ति। तेषां मते फलितग्रन्थः सरलस्तत्र श्रमस्यानावश्यकता! बहवः फलितज्यौतिषं विश्वसन्त्यपि न। अधिकारिजनानामुपेक्षयापि फले विसंवादो दृश्यते।

एष तु आनन्दस्य विषयः यदिदानीं पाश्चात्यविद्याविदो बहवो भारतीया फलितज्यौतिषाध्ययनाय यतमाना दृश्यन्ते स्वदेशभाषायां चानेके ग्रन्था निर्मिता दृश्यन्ते।

६—फलकथने न केवलं शास्त्रस्य; किन्तु शास्त्रयुक्तिमवलम्ब्यानुभवस्य विशेषतः प्रयोजनम्।

उक्तमत्र वराहमिहिराचार्येण—

सत्त्वं रजस्तमो वा त्र्यंशांशो यस्य भास्करस्तादृक्।
बलिनः सदृशी मूर्त्तिर्बुद्ध्वा वा जातिकुलदेशान्॥

अर्थात् कस्यापि जातकस्य स्वरूपवर्णने न केवलं शास्त्रोक्तप्रवचनं कार्यं; किन्तु जातिकुलदेशानाधारीकृत्य वर्णनं समुचितम्। कश्मीरदेशप्रभवस्य वर्णो यदि ग्रहस्वरूपतः कृष्णः समागच्छति, तदा तत्र कथनीयं, यतस्तस्मिन् देशे प्रायो गौराङ्गा एव भवन्ति। एवं कर्णाटकदेशोत्पन्नस्य वर्णो यदि गौरः समागच्छति; तदा तत्र तत्र वक्तव्यं यतस्तद्देशीयाः प्रायः कृष्णवर्णा एव भवन्ति। एवं जातेस्तथा कुलस्यानुसारं स्वरूपमूह्यम्।

अस्त्यत्र विषये प्रसिद्धा जनश्रुतिर्यत् केनापि स्वमुष्टावेकां मुद्रिकां निधाय कश्चिद् गणकः पृष्टोऽभूद् यत्तस्य मुष्टौ किमस्ति? गणकेन गणनां विधाय निर्दिष्टं यत्तद्वस्तु गोलाकारं धातुमयं मध्ये सरन्ध्रं च। परन्तु प्रष्टा पुनरपि स उक्तो यद्वस्तुनो नामनिर्देशः करणीयः। केवलं वस्तुनो वर्णनं नाभीष्टम्। तदा तेनोत्तरं दत्तं यत्तद्वस्तु पेषणयन्त्रम् (चक्की)। गणकेनेदं न विचारितं यद् पेषणयन्त्रं मुष्टौ स्थापयितुं कथं शक्यते। एतेनेदं निर्गलितं यत्फलादेशो न केवलं सर्वं गणनामात्रेणैव सिद्ध्यति किन्तु तत्र बुद्धेरनुभवस्य च

विशेषतः प्रयोजनम् । उक्तमपि नीतिशास्त्रे—

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।
नेत्रवक्त्रविकाराभ्यां ज्ञायतेऽन्तर्गतं मनः ॥

विचार्यतां यत्पञ्चमभाववशतः सन्तानस्य विद्यायाश्च विचारो भवति । पञ्चमभावः सर्वथा पुष्टश्चेत्तदा सन्तानस्य वृद्धिः विद्याया अपि वृद्धिः । परं बहुधा दृश्यते यत्सन्तान-सौभाग्यान्विता जनाः विद्यारहितास्सन्ति । प्रकृष्टविद्वांसश्च सन्तानरहिता दृश्यन्ते तदत्र विनिगमकः कः प्रकारः । एवं दशमभावात् पितुः सुखस्य राज्यस्य च विचारो भवति । यदि दशमभावः साधुस्तदा पितुः सौख्यं राज्यसुखं च । परञ्च प्रायो जातकः राज्यसुखं पितुः परोक्ष एवानुभवति तदात्र विनिगमकः प्रकारः कः ? एवं फलितज्यौतिषे विशिष्टबुद्धेरावश्यकता । उक्तञ्चात्र विसंवादे स्वयं वराहमिहिरेण बृहज्जातके—

"यस्मिन्योगे पूर्णमायुः प्रदिष्ट
तस्मिन्प्रोक्तं चक्रवर्त्तित्वमन्यैः ।
प्रत्यक्षोऽयं तेषु दोषः परोऽपि-
जीवत्यायुः पूर्णमर्थैर्विनापि ॥"

शकुनमपि भविष्यसूचकमित्यत्रापि वराहेण युक्तिर्दत्ता —

"श्रान्तस्य यानमशनं च बुभुक्षितस्य
पानं तृषापरिगतस्य भयेषु रक्षा ।
एतानि यस्य पुरुषस्य भवन्ति काले
धन्यं वदन्ति पुरुषं खलु लक्षणज्ञाः ॥"

अर्थात् श्रान्तस्थितौ यानप्राप्त्या, बुभुक्षितावस्थायां भोजनप्राप्त्या, एवं विभिन्नावश्यकतायां तत्तदुपकरणप्राप्तौ यथा भाग्यवतामनुमानं भवति अर्थाद्भाग्यवन्त एव तानुपकरणानि यथासमयं प्राप्नुवन्ति । एवं भिन्न-भिन्न शकुनवशतः भिन्न-भिन्नं फलं भवति तत्रागम एव प्रमाणम् । धर्मनिष्ठा भगवद्भक्ता ऋषिकल्पा एव गणका फलादेशकरणाय वस्तुतः समर्थाः । यतः—

"ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति" तेषां प्रवचनं कदापि नान्यथा भवितुं शक्नोति यतस्ते मिथ्याभिया सत्यमेव फलकथनं कुर्वन्ति ।

वराहमिहिरेणाप्यत्र विषये उक्तम्—

"अप्यर्णवस्य पुरुषः प्रतरन् कदाचि-
दासादयेदनिलवेगवशेन पारम् ।
न त्वस्य कालपुरुषाख्यमहार्णवस्य-
गच्छेत्कदाचिदनृषिर्मनसापि पारम् ॥"

अर्थादनृषिः फलकथने समर्थो न भवति ।

यथा शकुनेन, प्रश्नेन, कुण्डलीदर्शनेन, स्वरूपदर्शनेन, हस्तरेखया च फलादेशः क्रियते, तथैवाकाशस्थविशिष्टघटनायाअवलोकनं कृत्वा संहिताशास्त्रेण फलादेशो भवति । तादृशपरीक्षकस्यावलोकनपरस्य दैवचिन्तकस्य प्रशंसा च वराहमिहिरेण कृता—

न तत्सहस्रं करिणां वाजिनां च चतुर्गुणम् ।
करोति देशकालज्ञो यथैको दैवचिन्तकः ॥
न तथेच्छति भूपतेः पिता जननी वा स्वजनोऽथवा सुहृत्
स्वयशोऽभिविवृद्धये यथा हितमाप्तः सबलस्य दैववित् ॥

परञ्चेदानीं न तथाविधा आकाशनिरीक्षका गणका दृश्यन्ते । न च तादृशे कर्मणि प्रयोक्तारः श्रीमन्तो राजानो दृश्यन्ते, ये तान् तथाविधेषु कार्येषु नियोजयेयुः । अतो वर्षफलकथनमपि यथावन्न भवति ।

## उपसंहारः

उपसंहारे तु इदमेव कथनं वरीवर्त्ति यत्प्रतिपादितकारणैरेव गणकानां फलकथने विसंवादो भवति । यदि तानि कारणानि दूरीकृतानि भवन्ति सच्छास्त्रदृष्ट्या धार्मिकेण पुरुषेण यद्यादेशः कृतो भवेत्तदा साधुफलं घटत एव ।

ज्यौतिषशास्त्रे प्रगाढस्नेहैर्महामतिमद्भिः पुरुषैस्तथा यत्नो विधेयो येनार्गलास्वरूपेण स्थितानां बाधकानां कारणानामपाकरणं भवेदेतदेवाशंसनम् ।

---

प्रिय-दिनेश-शुभागम-सङ्गमात्
मुदमुदञ्चति चञ्चल-लोचना ।
बत ! तथापि न दोहद-शोभना
"कमलिनी मलिनी कमलाकरे"

—नन्दलाल शर्मणः



# राधा-माधव-विलासः

[ विहारी-पद्यैः कृतसम्वादं खण्डकाव्यं ]

प्रणेता—कवि हरिनाथशास्त्री दर्शनाचार्यः



आगच्छत्यनुदिनमिह कृष्णो भीषयते कुत एत्य ।
सस्वेदं कम्पं जनयत्यधिकं हृदयं हरिरेत्य ॥ ३३ ॥

देवर-रागवती निहता कुसुमेन तनावधिहासम् ।
हर्षोद्गत-शोफं शोचन्ती हसिता सखी निराशम् ॥३४॥

चिरजीवित्वमुपेहि सुकण्टक ! विद्धयन्नपि मम पादम् ।
धृत्वोरसि विरुजं कृतवान् प्रिय एत्यचिरान्मम पादम् ।३५।

कालीतीर-तमालमहीरुह-मिलितमालती-कुञ्जे ।
वारय घर्मघटीं पथिकालिकलित-ललित-ध्वनिपुञ्जे ।३६।

दृष्ट्वा सुभगममुं सविधेऽन्यजनेन गता न तमूचे ।
नयनयुगेन विहस्य शिरसि चोरसि दधती करमूचे ॥३७॥

विन्दुमिषेण हरिं प्रणता परिधाय वसनमभिजाता ।
गमयन्ती भवनं हरिमभिका दृशमुत्क्षिप्य सुयाता ॥३८॥

अन्योन्यं पश्यन्ननुकं हृदय पणायन्ननुवेलम् ।
मदनमनुं जपतां कम्पिततनुतां दधतौ प्रतिवेलम् ॥३९॥

कालिन्दीनीरे न विशति तीरे विलसति शुचिरदना ।
घर्षति पादतलं प्रोञ्छत्यङ्गानि मुखं सुखमदना ॥ ४० ॥

साभिलाषनयनेन निपीय हरिं घुंघुट-पट-मध्ये ।
स्वच्छायां संयोज्य हरौ क्षणमितो ययौ गृहमध्ये ।४१।

किमु रुणत्सि मार्गं त्रपसे नहि यामि गृहं व्रजगोप ।
गोरसमिच्छसि नहि गोरसमिह कृष्णकलासु न गोप ।४२।

गच्छति सर्वमुखं क्षणमेषा आगच्छति पुनरेत्य ।
तिष्ठति दिग् बोधक सूचीव सुदृष्टिस्तत्तनुमेत्य ॥ ४३ ॥

भित्वा गुरसङ्घं सुरसैषा केन पथेह समेत्य ।
प्रतिगच्छति दृष्टिर्दृष्ट्या मिलिताप्रजनान्परिहृत्य ॥४४॥

---

कारो वरन डरावनो कत आवत इहि गेह ।
कै वा लख्यो सखो लखै लगै थरहरी देह ॥३३॥

देवर फूल हनै जु शिशु उठे हरषि अंग फूलि ।
हँसी करत औषधि सखि नु देह ददोरन भूलि ॥३४॥

इहि कांटे मो पांय लगि लीनी मरत जिवाय ।
प्रीति जनावत भीति सो मीतजु काढ्यौ आय ॥३५॥

घाम घरीक निवारिए कलित ललित अलि पुञ्ज ।
जमुना तीर तमाल तरु मिलत मालती कुञ्ज ॥३६॥

हरखि न बोली लखि ललन निरखि अमिल संग साथ ।
आँखिन ही में हँसि धस्यो शीश हिये पर हाथ ॥३७॥

न्हाइ पहिरि पट उठि कियो बेंदी मिस पर नाम ।
दृग चलाय घर को चली विदा कियो घनश्याम ॥३८

चितवत जित वतहित हिये किये तिरीछे नैन ।
भींजे तन दोऊ कँपै क्यों हू जप निबरै न ॥३९॥

मुँह धोवति एडी घसति हँसति अनंगवति तीर ।
धसति न इन्दीवरनयनि कालिन्दी के नीर ॥४०॥

चितई ललचौंहें चखनि डटि घूँघुट पट मांह ।
छल से चली छुवाय के छनक छबीली छांह ॥४१॥

लाज गहौ वे काज कत घेरि रहे घर जांहि ।
गोरस चाहत फिरत हौ गोरस चाहत नांहि ॥४२॥

सबही ते समुहाति छन चलति सबन दै पीठि ।
वाही तन ठहराति यह किबलनुमा लौं दीठि ॥४३॥

खरी भीर हूं भेदिकै कित हू ह्वै इत आय ।
फिरै दीठि जुरि दीठि सों सबकी दीठि बचाय ॥४४॥

# पञ्चाङ्गविषये सम्मतिः

दैवज्ञकेसरी श्रीसीताराम झा ज्यौतिषाचार्यः

सौरवैशाखीय-सुप्रभाते दैवज्ञशिरोमणीनां श्रीदाऊजी दीक्षितमहोदयानां "पञ्चाङ्गे इतिकर्तव्यता' शीर्षकं सुलेखमनुमादयन्नहमपि यथाबुद्धि पाठकानां पुरस्तात् स्वमतं समुपस्थापयामि ।

आकाशे ये ग्रहा नक्षत्रराशयश्च दृश्यन्ते, तेषु केचित् सुधारश्मयः, केचिद् विषरश्मयः, केचिदुभय-रश्मयश्च सन्ति । तेषां संयोगवियोगाभ्यामेव देश-विशेषेषु कालविशेषेषु च सुभिक्ष-दुर्भिक्षादिकं जायते । यदा सुधारश्मीनां प्राबल्यं तदा सुभिक्षं,' नैरुज्यञ्च, यदा विषरश्मीनां प्राबल्यं तदा दुर्भिक्षं रोगबाहुल्यं च यदा च मिश्ररश्मीनां प्राबल्यं तदा फलसाम्यं जायते, इतीदानीन्तनैर्विज्ञानविद्भिरपि स्वीक्रियते ।

तत्र केषां केषां ग्रहाणां, ग्रहनक्षत्राणां वा संयोगे कीदृशं फलं भवतीति तपोनिष्ठैः प्राचीनमहर्षिभिः प्रत्यक्षं परीक्ष्य पुनः पुनरनुभूय च लोकोपकाराय विलि-ख्य यत् सुरक्षितं तदेव ज्यौतिषशास्त्रमित्युच्यते (ज्योतींषि ग्रहनक्षत्रबिम्बान्यधिकृत्य प्रवृत्तत्वात्) ।

तच्च ज्यौतिषं द्विविधम् । वासनात्मकं व्यवहारा-त्मकञ्च । तत्रापि यद् वासनात्मकं तत् सूक्ष्मं स्थिरं वास्तवं सर्वदैकरूपम् । यच्च व्यवहारात्मकं तत् स्थूलं प्रतिक्षणं चलमचिरस्थायि च भवति ।

सूक्ष्ममानस्य दुर्गमत्वात् सर्वेऽपि व्यवहाराः स्थू-लमानेनैव भवन्तीति बालिशा अपि जानन्त्येव ।

वैज्ञानिकैः प्राचीनाचार्यैर्या या ग्रहसाधनपद्धत्यो विनिर्मितास्तास्ताः स्थूलमानेनैव । अत एव काले-काले तासां संशोधनम्, परिवर्धनं, परिवर्तनं च तत्त्वविद्भिः कृतं, क्रियते च ।

यथा पूर्वरचितसूर्यसिद्धान्त-ग्रन्थे शिथिलतां याते पुनः सूर्यसिद्धान्तस्य रचना जातेति वर्तमान-सूर्यसिद्धा-न्तस्थ-सूर्यांशपुरुषवाक्येन—

"शास्त्रमाद्यं तदेवेदं यत् पूर्वं प्राह भास्करः ।
युगानां परिवर्तेन कालभेदोऽत्र केवलः ॥
तत्तद्गतिवशान्नित्यं यथादृक्तुल्यतां ग्रहाः ।
प्रयान्ति तत्प्रवक्ष्यामि स्फुटीकरणमादरात् ॥"

इत्यादिना स्फुटमेवावगम्यते—

कालान्तरे तत्रापि शैथिल्यमवलोक्य भारत-भूषणेन भास्कराचार्येण स्वकाले ग्रन्थान्तरं रचयता—

"यात्राविवाहोत्सवजातकादौ-
खेटैः स्फुटैरेव फलस्फुटत्वम् ।
स्यात् प्रोच्यते तेन नभश्चराणां-
स्फुटक्रिया दृग्गणितैक्यकृद् या ॥"

इति स्पष्टमेवोक्तम् ।

कालान्तरेण भास्कररचितग्रन्थेऽपि शिथिलतां प्राप्ते गणेशदैवज्ञादिभिरपि स्वस्वकाले ग्रहलाघवादीनां ग्रन्थानां रचना कृता । तत्र च "इतीमे यान्ति दृक्तुल्य-तां, सिद्धैस्तैरिह धर्मपर्वनयसत्कार्यादिकं ह्यादिशेत् ।" इत्येवादिष्टम् ।

केशवदैवज्ञादिभिस्तु—

"यन्त्रैः स्पष्टतरोऽत्र जन्मसमयो वेद्योऽथ खेटाः स्फुटाः, यत् पक्षे हि घटन्त" इति स्पष्टमेवोपदिष्टं यद् यस्मिन् समये ग्रहा येन प्रकारेण साधिता दृग-गणितैक्यं गच्छन्ति तेनैव प्रकारेण स्फुटाः कार्यास्तत एव तिथिनक्षत्रादीनां साधनं, जन्मपत्र-वर्षफलानयनं च कर्तव्यमिति ।

इदानीमपि बहुभिस्तत्त्वज्ञैः समुपलब्धसंस्कारद्वारा दृग्गणितैक्य-सिद्धाः ग्रहा गृह्यन्ते ।

अत एव यया पद्धत्या साधितेषु ग्रहेषु दृग्गणि-तैक्यं भवेत्, अथवा यत्पद्धतिसाधितग्रहैः शास्त्रोक्तं फलं संघटेत; सैव पद्धतिः प्राचीनाऽर्वाचीना वा स्वदे-शीया विदेशीया वा सादरं ग्राह्येति मदीया सम्मति-रित्यलं पल्लवितेन प्राज्ञेषु ।

# विविध-वार्ताः

[ अस्मिन् स्तम्भे राजनीति-समाज-विज्ञान-पुरातत्त्व सम्बन्धिनो महत्वपूर्णाः समाचाराः, समालोचनाः, विचाराश्च सङ्कलय्य प्रकाशिता भविष्यन्ति । लेखकैरत्र-स्तम्भे सङ्क्षिप्ताः सारगर्भाः, समाचाराः विचाराश्च प्रकाशनाय प्रेषणीयाः—सम्पादकः । ]

## अस्माकं स्वाधीनता-प्रश्नः

पञ्चाशद्वत्सरेभ्यः समुत्थितोऽयं स्वाधीनता-प्रश्नः साम्प्रतं समाधानोन्मुख इव प्रतीयते । अतएव भारतीय-राजनीति-रङ्गमञ्चे मासत्रयं यावत् 'स्वाधीनता-दानं' नामाभिनयो महता समारम्भेण सम्पन्नः । परमेतेन किमपीष्टं न सम्पन्नम् । प्रत्युत विशिष्टमनिष्टमापतितम् । विचारणीयम्—

भारतवर्षे आँग्लशासनस्य मूलं भेदनीतिरेव । तयैव ते सर्वदा विजयन्ते । साम्प्रतमपि ब्रिटिश-मन्त्रिमण्डलस्यागमनं केवलं तस्या एव भेदनीतेः सुदृढीकरणायाभूत् । स्वाधीनता-दान-वार्ता प्रचलिता, परं हिन्दू-यवनानां विरोधेन सा कियन्तं कालं यावत् स्थगिता । ये भारतीया स्वाधीनतायै प्रयतमानाः शासन-मार्गे कण्टका आसन्; ते विधान परिषदो निर्वाचने सँल्लग्नाः सन्ति । देशे शान्तिः सञ्जाता । शासन-सूत्रं स्व-हस्ते समागतम् । स्थाने-स्थाने हिन्दू-यवन-सङ्घर्षः संरम्भेण-प्रचलति । प्रान्तीया अधिकारिणो मन्त्रिणश्च तस्य शमनाय विचेष्टमानाः सन्ति । शान्तिमापन्नं स्वाधीनतान्दोलनम् । शासनमार्गो निष्कण्टकः सम्वृत्तः ।

इत्येव फलम्, एष एव निर्गलितार्थस्तेषां समागमनस्य । या हिन्दूयवन-वैमनस्य-वल्लीदानीं यावत् भूतपूर्वैर्मन्त्रिभिः सिञ्चिता, चर्चिल-एमरीत्याख्यैः क्रूरतम-कूटराजनीतिज्ञैर्दत्त-दोहदा साम्प्रतं पुष्पिता, फलिता च । अत्रागतेन मन्त्रि-मण्डलेन द्वयोरपि महान् मतभेदः प्रत्यक्षपक्षपातेनाऽपि प्रसभं दृढीकृतः । इदानीं द्वयोरैक्यं प्रयत्नशतेनापि दुःशकम् । यावत्तयोरैक्यं न स्यात्तावत् कथं स्वाधीनतादानं स्यात् महते रक्तपाताय, विनाशाय चेति कार्य्यकारणभावं पुरस्कृत्य न जाने कियन्तं कालं यावद्रक्तशोषणं विधास्यन्ति वैदेशिका वणिज इति न ज्ञातुं शक्यते । हन्त !

"धृतराष्ट्र-सुतेन दुस्त्यजा—
श्चिरमास्वाद्य नरेन्द्र-सम्पदः"

× × × ×

एवमसाफल्येन नास्माभिर्निराशैर्भाव्यम् । प्रत्युत सोत्साहैः स्वाधीनतान्दोलनं सञ्चालनीयम्; साम्प्रतं युद्धोत्तरकाले ब्रिटिशशासने न तादृशं सामर्थ्यमस्ति । येन तत् जागरूकाणां प्राणत्यागपूर्वकं स्वाधीनतायै कृत-सङ्कल्पानां चत्वारिंशत् कोटिमितानां भारतीयानामुपरि निरङ्कुशं नग्न-ताण्डवं विधातुं प्रभवेत् । महासमरात् प्राक् ब्रिटिशराज्यस्य यादृशः प्रभावो मानवसमाजे समभूत्, तादृशः प्रभावः साम्प्रतं सत्यपि विजये नास्ति । प्रथमश्रेणीस्थं ब्रिटिशराज्यं साम्प्रतं द्वितीयश्रेण्यां परिगण्यते । यदि तद्धस्तात् भारतमपगतं स्यात् तदा तु एतेषामांग्लानां तृतीयश्रेण्यामपि स्थानं न भविष्यति । अत इमे यावच्छक्यं प्राणैः कण्ठगतैरपि भारतं परित्यक्तुं न वाञ्छन्ति । परमेनं निगरितुमपि न शक्नुवन्ति ।

यत एतेषां चिरशत्रवो रूस-देशीया नैतेषामभिवृद्धिं कामयन्ते । तेन सह युद्धमन्तरा विश्वशान्तिः सर्वथैवाशक्या । तस्मिन् युद्धे भारतस्यैव सर्वाधिकं महत्वं वर्तते । अतएव भारताराधनं नितरामावश्यकम् । तत एव मनसा प्रयतन्तोऽपि कर्मणा कर्तुं न क्षमन्ते स्वाधीनतादानं ब्रिटिश-कूट-नीतिज्ञाः । समयातिपातमाचरन्ति ।

अस्माकं दुर्भाग्यधेयेन पारस्परिकः कलहस्तेषां कूटनीति-कुशलानां महते लाभाय कल्पत इति सौभाग्यमेव तेषाम् ।

अचिरादेव भारतीया भारतशासनं प्रसभं ग्रहीष्यन्तीति नास्त्यत्र मनागपि सन्देहः । परमिदानीमेकवारं पुनरपि सुमहान् त्यागः कर्तव्यो भविष्यति ।

× × × ×

यथा मध्यकालीन-शासन-समिति-निर्माणं जिना-राष्ट्र-महासभयोर्वैमत्येन स्थगितम्, तथैव विधानपरिषदपि स्वल्पावस्थायामेव विनष्टा भविष्यति, तत्राल्पसंख्यं जिना-दलं 'शेषं कोपेन पूरयेत्'—इति नियमानुसारं महान्तमुत्पातमुत्थापयिष्यन्ति, येन परिषत् प्रसवकाल एव प्रलयं यास्यति । तदनन्तरं यदि साम्राज्यलोलुपा साम्राज्यवादिनः प्रज्ञापराधं विधास्यन्ति चेत् भारतेऽपि स्वाधीनतान्दोलनम्,

प्रलयकालीना घोरा विनाश-स्थितिः समुत्पद्येत; यया विचलितमाँग्लशासनं भारतात् पलायनपरमेव स्यात्।

भारतीया राष्ट्रनेतारोऽपि साम्प्रतमेव चिरं कारावास-कष्टमनुभूय समुत्तीर्णाः कमपि कालं प्रतीक्षमाणाः राजनीति-विनोदेन कालं यापयन्ति। समागते काले ते नूनं प्रहरिष्यन्ति। पूर्वकालीनान्दोलनेभ्यः सर्वथा भिन्नमिदमान्दोलनं परमाणु-विस्फोटमिव महोत्पातं विधास्यति।

अस्माकं भारतीयै राष्ट्र-नायकैर्मध्यकालीन-शासन-सञ्चालनमस्वीकृत्य, ब्रिटिश-कूटनीतिज्ञेभ्यः समीचीनमुत्तरं दत्तमिति सर्वेऽपि भारतीयाः सुसन्तुष्टाः सन्ति।

× × × ×

## वैज्ञानिक-सन्तति-समस्या

स्वतन्त्रदेशेषु बुद्धिमन्तो वैज्ञानिकाः प्रखरतर-प्रतिभा-प्रसूतैराश्चर्यकरैराविष्कारैर्न केवलं मानवदेशानां संहाराय प्रयतन्ते, परं मानव-समाजस्य विनाशायापि कृतोद्यमाः समालोक्यन्ते। एतेषामाविष्कारेण महान् समाज-विप्लवो धर्म-विप्लवश्च समुपस्थित एव संसारे।

कियतः कालात् श्रृणुमो यत् वैज्ञानिक-प्रणाल्याः, गर्भाधान-प्रयत्नो विधीयते वैज्ञानिकैः। सर्वप्रथमं गो-विषये गवेषणा सञ्जाता। कृत्रिमया गवा सह महोक्षस्य मैथुनं कारयित्वा गर्भस्थान-सन्नद्धे चर्मणि तस्य वीर्यं गृह्यते। तच्च पुनर्नलिकायन्त्रेण गवां गर्भाशये पात्यते। तेन च वत्सोत्पत्तिः सञ्जायते। एकस्य वृषभस्यैककालनिर्गलितेन शुक्रेण प्रायः षष्टिसंख्यकानां गवां गर्भाधानं क्रियते।

अनयैव रीत्या मानवेष्वपि सफलः प्रयोगः सञ्जातः। अमरीका-देशे इयमप्राकृतिकी गर्भाधान-प्रथा महिलासमाजे प्रचलतीति साम्प्रतमेव न्यायालयादयं समाचारः समुपलब्धः।

कश्चन सैनिक ऊनविंशतिमासानन्तरं गृहान् प्रतिनिवृत्तः पत्न्याः क्रोडे क्रीडन्तं शिशुमेकं दृष्ट्वा चकितो न्यायालयेऽभियोगमकरोत् यदयं जारजातः शिशुर्न मदीयः, अतोऽहं पत्न्या सह सम्बन्धं विच्छेत्तुमिच्छामीति।

तस्य पत्नी वदति—नाहं व्यभिचारिणी, मया वैज्ञानिक-प्रणाल्या गर्भाधानं कारयित्वा प्रसवः कृत इत्ययमस्योत्तराधिकारी न्याय्यश्च पुत्र इति।

एवमेव नगरद्वये-ईदृश एवाभियोगो न्यायालये समागतः। एकत्र तु न्यायाधीशेन वैज्ञानिक-प्रणाल्या प्रसूतस्य पुत्रस्य पुत्रत्वं स्वीकृतम्। अन्येन तु अस्याः प्रणाल्या महती निन्दा कृता।

एतेन प्रतीयते यदियं प्रणाली महता वेगेन प्रचलिष्यति। क्लीबानां पतीनां पत्न्यो व्यभिचारमन्तरा पुत्र-सुखानुभवं कुर्वन्त्विति तासां मनोरथ-पूरणाय वैज्ञानिकैरयमाविष्कारो विहितः। वैज्ञानिका यस्य कस्यापि पुंसो वीर्यं गृहीत्वा निरीक्षण-परीक्षणानन्तरं काच-नलिकायामवस्थाप्य हिमान्यां स्थापयन्ति। एवं द्वादश दिवसानि यावत् शुक्रमविकृतमवतिष्ठते।

वैज्ञानिकाः, स्त्रीणां गर्भाधान-समये शुक्रदातुर्नाम नैव प्रकाशयन्ति। यतस्तत्परिचये जाते कदाचित्तयोः प्रेम-सम्बन्धः स्यादिति। ते वदन्ति यत् वयं कुलीनानां शिक्षितानां स्वस्थानाञ्च मनुष्याणां शुक्रं गृह्णीमः।

अनया गवेषणया पाश्चात्यपत्राणि, पाश्चात्यधर्माचार्याः पादरी-संज्ञाः क्षुब्धा रुष्टाश्च सन्ति। ते वदन्ति यत् शुक्र-विक्रयः, तेन चान्यासु स्त्रीषु गर्भाधानम्, समाजस्य कृते परं लज्जाकरं घृणितम्, अमानुषञ्च कर्म। एतेन महान् विप्लवः सम्भाव्यते। समाजे अयमपि प्रश्नः समुत्थितो विद्यते यत् आँग्लशुक्रेण रूसदेशीय-नार्यां समुत्पन्नः पुत्रः किं आँग्लो वा रूस्यो वा भविष्यति? बहवस्तु वदन्ति यत् परमाणवस्त्रमिव, अयमपि समाज-विध्वंसक आविष्कारो निरोद्धव्य इति।

आँग्ला वा अमरीका-वणिजो वा स्वदेशे नियमेन वरं निरोत्स्यन्ति कुप्रणालीमिमाम्, परं अनुकरण-परायणे पाश्चात्य-संस्कृति-संस्कृते विवेक-विकले भारतीय-समाजे नैतिक-पतनधिया द्रव्योपार्जनबुद्ध्या वा भारते प्रणालीमिमां प्रोत्साहयिष्यन्ति, तदा तु महान् धर्म-विप्लवः स्यात्। अत्र तु एकस्यामेव ब्राह्मणजातौ शतशो भेदाः सन्ति। पुत्रोत्पादनन्तु जीवनस्य सर्वोत्कृष्टं मुख्यं लक्ष्यम्। पुत्रोत्पादनाय न जाने हिन्दूसमाजे कियन्त उपायाः प्रकाराश्च प्रचरन्ति। बहवः साधवः, सन्न्यासिनः, तान्त्रिकाः, दैवज्ञाः, भिषजः, वैदिकाः, कर्मकुशलाः, भूतप्रेतादिविद्याविदः पुत्रोत्पादनमिच्छन्तीनां स्त्रीणां तदिच्छतां पुरुषाणाञ्च कथं-कथं धनशोषणं कुर्वन्ति, व्ययं वा कारयन्तीति नाविदितं केषा-

मपि। बहूनां जीविकाभूतोऽयं व्यवसायः। पुत्रोत्पादन-धिया भारतीय-समाजे गुप्तव्यभिचारस्य कियान् महान् प्रचार इत्यपि नाविदितं विदित-वेदितव्यानाम्। यतो भारते पुंनाम्नो नरकात् त्रातुः पुत्रस्य सर्वाधिका आवश्यकता। सरल-सरलममुं प्रकारं भारतीयाः पुरुषा नार्यश्च नूनं सोत्साहं स्वीकरिष्यन्ति। उक्तमेव च देवीभागवते—

"येन केनाप्युपायेन पुत्रस्य जननं चरेत्।"

तेषु येषु केषुचिदुपायेषु सभ्यतमोऽयमुपायो यदि भारते प्रचलिष्यति तदा घोरतरा वर्ण—सङ्करता प्रसरीसृता स्या-दिति प्रथमत एव सावधानैर्भाव्यं धर्मधुरीणैर्धर्माचार्यैः पण्डितैश्च।

× × ×

## परमाणुशक्तेः सदुपयोगो दुरुपयोगो वा

भारतस्य सर्वोन्नतिमैर्दार्शनिकैर्नैयायिकैः परमाणुवादस्याविष्कारस्तु कृतः, परन्ते परमाणुं निरवयवं मत्वा तस्य सूक्ष्मतम-गवेषणा-गाम्भीर्ये न समवतीर्णाः। साम्प्रतिका वैज्ञानिकास्तु तस्यापि विस्फोटं कृत्वा अकाल एव महान्तं प्रलयकालं समुपस्थापयितुं प्रवृत्ताः प्रतीयन्ते। तेषामन्वेषणे तु परमाणूनामपि बीजं भवति। प्रत्येकस्य तत्त्वस्य सर्वतः सूक्ष्मः कणः परमाणुः-'ऐटम' इत्याख्यायते। प्रत्येकस्य परमाणोरन्तरा तस्य तत्त्वस्य बीजं भवति, यस्य तत्त्वस्य परमाणुर्भवति। स च बीजो विद्युत्कणेन विद्युत्कणैर्वा निर्मितो भवति। तस्य चाभित अन्ये विद्युत्कणाः परिधिरूपेण चक्राकारं भ्रमन्ति। शब्दान्तरेण—एतेषां विद्युत्कणानां घन-विन्यासमात्रं परमाणुशब्देनोच्यते। वैज्ञानिकानां कथनं विद्यते यत् कस्यापि रासायनिक-तत्त्वस्य वैशिष्ट्यं, तस्यैव परमाणुबीजस्य घनविद्युत्कणानां च विन्यासविशेष एवावलम्बितं भवति। तेषामेव कणानां विद्युद्विघटन-द्वारा या शक्तिरुत्पद्यते, तयैव शक्त्या संहार-कार्यं सृष्टि-कार्यञ्च कर्तुं शक्यते। एवं परमाणुबीजेषु विपुलः शक्ति-भाण्डारः सन्तिष्ठते; यस्य सदुपयोगेन विविधमुत्पादनं विनाशश्च कर्तुं शक्यते।

वर्तमान-वैज्ञानिकाः परमाणुगतं द्विविधं शक्तिसञ्चारं स्वीकुर्वन्ति। तत्रैको निष्क्रियः केन्द्रस्थः proton = प्रोटोन-इत्याख्यः। अपरः सक्रियः परिधिस्थः आवर्तनशीलः Neutron = न्यूट्रोन-इति कथ्यते।

नवीन-वैज्ञानिकानां ज्ञानमिदं प्राचीन-शास्त्रीयज्ञानानुरूपमेव प्रतिभाति। सांख्यमते निर्गुण-पुरुष-संयोगमात्रेण प्रकृतिर्यदा रमते, तदैव सृष्टिविकाशो भवति। तत्र 'प्रोटोन' इत्याख्यं बीजं निष्क्रियं पुरुषसंज्ञम्, न्यूट्रोन-इत्याख्यं सक्रियमावर्तनशीलञ्च प्रकृतिसंज्ञम्।

परमाणुबीजम्, न्यूट्रानसंज्ञं-यदा विघटितं भवति, तदा ततः शक्तिरुत्पद्यते, बीजविघटकं न्यूट्रानञ्च समुत्पद्यते। एवमेव एकस्मात् बीजादुत्पन्नं न्यूट्रानमन्यं बीजं प्रताडयति, तदपि नूतनं न्यूट्रानमुत्पाद्यान्यं बीजं विघटयति एवमेव परमाण्वस्त्रे एषा क्रिया तीव्रगत्या प्रचलति, येन-विस्फोटः सञ्जायते। यदि क्रमशः समुत्पद्यमानानां न्यूट्रानानामधिका संख्या न्यूनीकृतास्यात्तदा तच्छक्तेः सृष्टिकार्ये बीजानां मन्थरतां स्थायिताञ्च लभमानं यन्त्राणां सञ्चालनोपयुक्तं स्यात्। इत्येतदर्थं क्रियते प्रयत्नस्तैः। अचिरादेव तेषां वैज्ञानिकानां साफल्यं प्रत्यक्षीकरिष्याम इति सम्भाव्यते।

साम्प्रतं जयप्राण (जापान) देशे अस्य प्रयोगो वारद्वयं कृतः। तेन च महान् जनसंहार अनायासेनैव सम्पादितः। 'बिकिनी' द्वीपे तृतीयवारमस्य प्रयोगः सञ्जातः, परं स न सफलतामाप्तः। इदानीं समुद्रगर्भे तस्य परीक्षार्थं चतुर्थः प्रयोगः कृतः। अस्य प्रयोगपरीक्षणे—कोटिशो धनस्य विनाशः सम्पन्नः।

अमरीकन-राष्ट्रपतिः-टूमेन-नामा. वारं वारं स्वव्याख्यानेषु सगर्वं परमाणु-शक्तेः सामर्थ्यं बहुधा समुपवर्णयति। रूसदेशीयान् अन्यान् दुर्बलदेशान् भीषयितुञ्च तस्य परीक्षणं प्रचारञ्च महताटोपेन करोति। एकतस्तु परमाणुनियन्त्रण-समितिः कार्यं करोति, येन युद्धेऽस्य संहारात्मकः प्रयोगो माभूदिति। अपरतश्च अमरीकावासिनः शतशः परमाण्वस्त्रान् निर्माय निभृतं स्थापयन्ति। अवलोकनीयम्, यदस्याः परमाणुशक्तेः सदुपयोगो दुरुपयोगो वा भवतीति।

# लेखकानां स्वच्छन्दता ।

जगन्नाथ शास्त्री होशिंगः, साहित्याचार्यः ।

अद्य विषयं यमधिकृत्य सुरसरस्वती-सुप्रभातावसरे लेखनीं व्यापारयितुमुद्यता वयं, स किल न कश्चिदन्यः शास्त्रबहिर्मुखः; किन्तु शब्दशास्त्रोक्तादेशशरणीकरणरूप एव । विद्वत्कर्णगह्वरेषु तप्ततैलबिन्दुत्तारणमिव सुतरामसह्यकोटौ प्रविशेदसाधूनामाहोस्विदशुद्धानां शब्दानां प्रयोगविन्यासः । अपशब्दितं श्रीमद्भिरिति कैश्चिदन्ये विगृहीताश्चेत्तदा ससम्भ्रमं ते प्रतिवदेयुः-किमहो ! स्वच्छन्दमुच्छलन्ती सर्वथा सर्वदा च स्वातन्त्र्येण विहरन्ती देवी वाक् व्याकरणेन पराजिता तन्नियमपराधीनता-शृङ्खलायां निगडिता तिष्ठेत् किमु ? नैव, कदापि न सम्भवत्येवमिति । सत्यं, श्रीमतां वचनं पूर्णतः सत्यम् । भाषा न जातुचिदपि परतन्त्रा । किञ्च स्वतन्त्रैव । तथापि विचार्यतां किञ्चित्—यदि प्रत्येकस्य विदुषः पुरश्चेतसि-विचारधाराऽनर्गलमेतादृश्येव तरङ्गिता स्यात्तर्हि सौशब्दनियामकस्य शब्दशास्त्रस्य मूलमेवोच्छिन्नं स्यात् । अथ च रमणीयशब्दार्थप्रतिपादकानां साहित्यादिशास्त्राणां नियमानां च्युतिसंस्कृत्यादिदोषरूपाणां हेयताप्युपादेयतापत्त्ते प्रविशन्ती सर्वेषामच्छिविषयिणी स्यात् । एवं च लेखकेच्छामात्रविषयिण्यां वाचि जातायां हतभाग्या तपस्विनी भिक्षुकीव विकृतरूपवसना सैव देवी सरस्वती सर्वेषामनादरपात्रतां विभृयादिति निरंकुशतानिरर्गलताद्यपल्लवप्रशान्तयेऽन्ततो गत्वा वर्तमानसमये पाणिन्यनुशासनमवश्यमङ्गीकर्तव्यमित्यापतति । महाकविश्रीकालिदासादीनां कथा तु साधारणानामस्मादृशां वाचामविषयैव, न तत्र किञ्चिद्वयं वक्तुं प्रभवामः ।

सम्प्रति हि गतानुगतिकन्यायेनानेकैः प्रयुक्तानां द्वित्राणामुदाहृतिरूपाणां शब्दानां विचारः प्रस्तूयते; यथा—'मोऽनुस्वार' इति शास्त्रबलेन हल्परकत्व एव मान्तपदस्यानुस्वारविधानादच्परकत्वे मानाभावात् तथा क्वचन-क्वचन दृश्यमानः प्रयोगोऽस्मच्चेतसि संशयमुत्पादयति, अथ च कुत्रचिद्वाक्यान्ते समुपलभ्यमानोऽनुस्वारप्रयोगो वैरस्यं जनयति । अपदान्तस्थयोर्वकारयोर्झल्परकत्वेऽनुस्वारत्वं 'नश्चापदान्तस्य झली'ति शास्त्रमुद्घोषयति । अनुस्वारस्य परसवर्णताऽऽपाद्यते शास्त्रेण यम्-परकत्व एव, तथाचैतत्सूत्रम्—'अनुस्वारस्य ययि परसवर्ण' इति ।

एतेनेदमेवायातम्—पदान्ते वर्तमानो मकारो हलि पर एवानुस्वारतां भजति । अपदान्तस्थौ नकार-मकारौ झलि लभेते अनुस्वारस्य रूपताम् । ययि चानुस्वार एव परसवर्णतामुपगच्छति । एवं चाऽन्तःस्थोष्मसंज्ञकेषु वर्णेष्वष्टसु-"यरलवषसह-" रूपेषु परेषु सत्सु न कदाचिदपि पदान्तापदान्तयोर्वर्तमानो मकारो मकारतारूपेण पूर्वोक्ताष्टवर्णान्तर्गतैकवर्णसाहचर्यं लब्धुं शक्नोति । तत् कथं दन्तोष्ठ्येन वकारेण सह संयुज्येत मकारः "सम्वत्-स्वयम्वरा" दिषु ? "स्वयंवर" शब्दे मकारविशिष्टो वकारःसङ्कुचन्निव यदा-कदा दृग्गोचरतामेति, परं "संवत्" शब्दे निर्भयं विहरन् वकारेण सह मकारो बहुत्र महद्भिः संमानितोऽप्यस्मच्चेतसि सोऽरुन्तुद इव स्थित इति ।

महीयांसो विद्वांसः ! सन्तोषमुत्पादयदुत्तरं श्रीमतां नूनं सर्वानुपकरिष्यतीति मन्यमान आशासानश्चानयैव विधया सुरसरस्वती–समुपासनं किञ्चिदपि स्यादिति सम्प्रति लेखनी-व्यापाराद्विरन्तुमीहामहे–इति शिवम् ।

# ज्योतिष दर्शनम् ।

लेखकौः—
डाक्टर राखालदास रायः—एम० वी०, डी० पी०, एच०
श्रीराजमोहन उपाध्यायः, ज्यौतिषाचार्यश्च
'विश्वपञ्चाङ्ग'—सहायक—सम्पादकः

[ पूर्वतोऽनुवृत्तम् ]

पूर्वलेखे प्रतिपादितं यत् जगति विश्लेषण-सम्बन्धेन देश-काल-पात्रेति त्रयो भेदाः जायन्ते । न हि संसारे भेदत्रयं विहाय चतुर्थो भेदः कल्पयितुं शक्यते ।

प्रकृतौ तु सगुणब्रह्मणः प्रवृत्तिशक्ति-साहाय्येन व्योमादि-पञ्चतत्वानां समाहारेण च षड्भेदा भवन्ति । एवमुभयो-र्विश्लेषणेन द्वादश भेदा जायन्ते । त इमे ज्योतिःशास्त्रे द्वादशराशय—इत्युच्यन्ते ।

शास्त्रे ब्रह्माण्ड-पिण्डयोरैक्यं निर्दिष्टमस्ति । एतावता सुस्पष्टं भवति यत् यावन्तः पदार्थाः ब्रह्माण्डे सन्ति, तावन्तः सूक्ष्मतमरूपेण पिण्डेऽपि निवेशिताः सन्ति । यद्यपि शक्तेर्भेदा अनन्ताः सन्ति, तथापि पिण्डे दशेन्द्रि-याणां प्रत्यक्षमवलोकनात् दशभेदानामेव ज्ञानं समीचीनम् । दशभेदानां क्रियाफलन्तु नवभिर्द्वारैः प्रत्यक्षीक्रियते । यतो हि पिण्डाण्डे नवद्वाराणि सन्ति । एभिर्नवभी रन्ध्रैः सत्वरजस्तमःस्वरूपायाः शक्तेः क्रियाफलं प्रत्यक्षी भवति । अतः ९ × ३ = २७–सप्तविंशति भेदा भवन्ति, ते च भेदा ज्योतिःशास्त्रे सप्तविंशतिनक्षत्राख्यया प्रसिद्धाः सन्ति । इमे त्रिगुणात्मशक्तेर्विभिन्न-भेदरूपाः । परन्तु शक्तित्रयस्य अविभक्ता या अवस्था, तस्याः फलं अभिजिन्नक्षत्रनामकं अष्टाविंशतिसंख्यकम् ।

अतएवाष्टाविंशतिभानां शास्त्रे विभिन्नमानानि प्रदर्शितानि सन्ति । स एव ज्यौतिषे सूक्ष्मनक्षत्रकालः कथ्यते । अनेनैव कालेन फलविमर्शो भवति । यथा चोक्तम् भास्कराचार्येण—

स्थूलं कृतं भानयनं यदेतत्-
ज्योतिर्विदां सद्व्यवहारहेतोः ।
सूक्ष्मं प्रवक्ष्येऽथ मुनिप्रणीतम्
विवाहयात्रादिफलप्रसिद्ध्यै ॥—इति ।

अभिजिन्नक्षत्रस्य धातुगतार्थस्तु-अभिलाषाया जयो यत्र-इति अभिजित् । अर्थात् निर्गुणे ब्रह्मणि 'स अकामयत' इति वर्णिताया जगत् सिसृक्षाया अत्रैव पूर्णत्वम् । उक्तञ्च रुद्रयामलतन्त्रे—

अभिजित्तारका सूक्ष्मा सन्धिकाललया जया ।
कुम्भकाक्रान्तहृदया ग्रह-चक्र-पुरोगमा ॥
नक्षत्र-मण्डलं ग्राम-मध्यस्था स्थितिषोडशी ।
आशामयी सूक्ष्मकला तरुणानन्दनिर्भरा ॥
अस्या आद्या भागसंस्था ब्रह्मरूपी रजोगुणा ।
अस्या शेषा कालरूपा तमोगुणलयप्रिया ॥
चन्द्रो ब्रह्मा शिवः सूर्यो महामाया तदुत्तरा ।
आत्रेयी परमाशक्तिः सुषुम्नान्तरगामिनी ॥
मध्यस्था ब्रह्म-शिवयो र्विधिशास्त्रस्य सिद्धिदा ।
महाविष्णुर्महामाया चन्द्रतारा-स्वरूपिणी ॥

वयं सर्वे भूस्थाः प्रकृतेः पूर्णविकासोनोत्पन्नाः । अतोऽस्माकं समक्षे अभिजित्तारकास्थानं भवति । अस्माकं स्थिति-स्थानं तु प्रकृतेः पूर्णविकाशान्तविन्दुः । अस्योभयपार्श्वे-नक्षत्रद्वयं वर्त्तते । एकत श्लेषा, अपरतश्च मघा । श्लेषाया धातुगतार्थ आलिङ्गनम् , अर्थात् पूर्ण-विकाशावस्था । मघा-या धात्वार्थो महान्. पूज्यतमः, परमात्मा, परं ब्रह्म । श्लेषान्ते निवृत्तिशक्तेरारम्भः ।

चक्रे यत्रकुत्रापि श्लेषान्तं विन्दुं प्रकल्प्य, अभिजित्-पर्यंतं क्रम-व्युत्क्रम-गणनया प्रवृत्ति-निवृत्त्योरुभयोर्भागा लभ्य-न्ते । श्लेषान्त-विन्दुतो व्युत्क्रम-गणनया त्रिंशदंशपर्यन्तो-भागः पूर्णो विकसितः कालः । अतस्तदेव प्रकृतिरूपि-णश्चन्द्रस्य चेत्रम् ।

तस्मादेव विन्दोः सकाशात् क्रमगणनया त्रिंशदंश पर्यन्तभागस्तु प्रकृतेराश्रयभूतस्य ब्रह्मरूपिणो भगवत आदि-

त्यस्य क्षेत्रमिति जानन्त्येव ज्योतिःशास्त्र-मर्मज्ञाः। प्रकृतित्रह्मणोरुभयपार्श्वे पञ्चतत्वानां विकाशलयाधीनानि दशक्षेत्राणि सन्ति। अनया रीत्या राशिचक्रप्रतिष्ठानं तथा राशिस्वामि-निरूपणञ्च प्रत्यक्षं जायते।

द्वादश राशिचक्रोपरि त्रिगुणात्मिकायाः शक्तेर्लीलाप्रभावः परिलक्ष्यते। प्रत्येकशक्तेस्तुल्यत्वात् द्वादशारे विभागक्रमेण १२० पर्यन्तं एकगुण भोगकालो जायते।

श्लेषान्त-बिन्दौ तु निवृत्तिशक्तेरारम्भः, अस्मात् स्थानादारभ्य १२० पर्यन्तं स्थानं तमोगुणाधीनम्। तदन्ते पुनः सृष्टेरारम्भः। अतस्तत्रस्थो नक्षत्रो 'मूल' इत्यभिधीयते। तच्च रजोगुणक्रियारम्भस्थानम्। अस्मात् १२० पर्यन्तभागस्तु रजोगुणाधीनः। स च रेवत्यन्तबिन्दुः। तस्मादारम्य श्लेषान्तो भागः सत्वगुणाधीनः।

सृष्ट्यारम्भे ब्रह्मण उपरि प्रकृतिदत्ते आवरणे अतिस्वच्छत्वात् प्रथम-सृष्टो जीवो 'देव' इत्यभिधः। स्वर्गलोकात्मकश्च। स्थित्यारम्भे मध्यमावरणे मानवादीनां जन्ममरणाधीना जीवानां च सृष्टिः। स च मर्त्यलोकः। लयारम्भे पूर्णविकसितायाः प्रकृतेर्ध्वंसारम्भ इति स ध्वस्तलोकः पाताललोको वा।

अतएव जीवानां त्रिकालफलज्ञानं गतजन्मफलज्ञानं वा मघादिचक्रज्ञानेन सिंहादिचक्रज्ञानेन स्फुटं भवति। एष्यज्जन्मफलज्ञानं मूलादिचक्रज्ञानेन धनुरादिचक्रज्ञानेन वा भवति। वर्तमान-लौकिक-फलज्ञानार्थं अश्विन्यादि-चक्रज्ञानं मेषादिचक्रज्ञानं वाऽवश्यकम्। यथाह पाराशरः—

"सिंहात् मेषाच्च चापाच्च नक्षत्रक्रम ईरितः।

अतो ज्यौतिषशास्त्रे वर्तमानफलज्ञानाय आचार्यैर्मेषादिगणना शास्त्रे निगदिता। एवं ज्योतिःशास्त्रेण त्रिकालफलज्ञानं सुगमम्।

भूवासिनां फलज्ञानाय शास्त्रे या मेषादि-निरयनगणना प्रतिपादिता वर्तते, तत्रापि अद्भुतं रहस्यमस्ति।

दक्षप्रजापति-यज्ञे विध्वस्ते शिवः समाधिस्थोऽभवत्। ततश्च सृष्टेः पुनर्विकाशाय हिमतनया गौरी शङ्कराराधनमकरोत्। तत्तपःप्रभावेण शिवस्य हृदि "स अकामयत"-इति श्रुतिपादिताऽकाङ्क्षा समुदभवत्। अत एव कामशक्तेर्विकाशोऽभवत्।—अस्याः कथायाः चमत्कारकारि रहस्यं विदाङ्कुर्वन्तु विज्ञाः—

हृदि विद्यमानः कामस्तैजसरूपेण बहिर्बभूव। तदेतत् क्रोधाग्निना कामदहनमित्युच्यते कविवरैः। अत्र ज्योतिःशास्त्रस्य ज्योतिषा सम्बन्धात्—अग्निपुञ्जस्य भौमाधिकारित्वात्, मेषस्य च बह्नेर्वाहनत्वात् प्रथमो मेषराशिः। यतो हि अग्निना रूप-लावण्यादीनां बोधो भवतीति न्यायवेदान्तादिशास्त्रेषु प्रसिद्धम्।

कामदहनान्तरं शङ्कर अधोदृशा गौरीमपश्यत्। तद्दर्शनेन तस्य हृदि सिसृक्षा समुत्पन्ना। अत्र शास्त्रे द्वितीयो वृषराशिः वृषादिषु प्रजननफलो पशुधर्म एव समालोक्यते। अत्रेदमप्यवधेयम् यत् कामाधिपो भृगुरेव वृषराशेरधिपः।

गौरीं दृष्ट्वा सम्मिलनाकाङ्क्षा, वार्तालापेच्छा च लोभरूप-वायु-गुणाधीना। अतोऽस्य राशेर्युग्मं मिथुनञ्चेति नाम। वाक्स्फुरणात् तदधिपो बुधः। मिथुनफलं तु जगतः सृष्टिः।

उत्पन्नस्य जीवस्य पालनं पोषणञ्च मातृस्नेहेनैव जायते। अत्र स्नेह-मायादिगुणयुक्तं जलतत्त्वम्। जीवविज्ञानशास्त्रे (Zoology) कर्कट एवैकमात्रमेतादृशो जीवः, यः स्वशरीरेण सन्तान-पोषणं करोति, यदा कर्कटस्य सन्ततिर्भवति, तदा तस्य माता प्रसवानन्तरं म्रियते। तस्या मातुरेव मृतशरीर-भक्षणेन सद्यः प्रसूतो बालः स्वं पुष्णाति। पशुजगति कर्कटं विहाय नान्यो जन्तुरेतादृशो विद्यते, यः स्वसन्तति-पोषणायैतादृशं महत्यागं करोति। अत एवास्य राशेः कर्कट इति नाम। अत्र मातृत्वस्य पूर्णविकाशो लक्ष्यते, अतएवास्य स्वामी जगज्जनन्याः प्रकृतेः स्वरूपश्चन्द्रमाः।

सृष्टिजीवस्य विकाशस्तु पुनरग्नितत्त्व एव भवति। अहङ्काररूपस्य पशुभावस्य पूर्णो विकाशः पशुराज एव भवति। अतोऽस्य राशेः सिंह इति नामाख्यायते। अस्य पशुराजस्य सिंहस्य स्वामी ग्रहराजो भगवान् भास्कर उपयुक्त एवाहङ्कारतत्त्वस्य।

वाक्चातुर्यस्य पूर्णत्वं सर्वविधनिकृष्टाकाङ्क्षाया विकाशस्थानं क्षितितत्त्वमेव। पारलौकिक ज्ञानस्याङ्कुरोत्पत्तिरपि क्षितावेवेति भविष्यत्सृष्टिरुपादानरूपः कन्या-राशिः। अस्याधिपो बुधः। कन्याराशिर्बुधस्योच्चस्थानं, निकृष्टकामवासनाया विकाशत्वात् शुक्रस्य नीचस्थानञ्च। भविष्यति पारलौकिकं जीवनञ्चास्तीतयस्य द्योतकोऽयमपि षष्ठः कन्या-राशिः।

—[ क्रमशः ]

# को वेदानुद्धरिष्यति ?

*श्रीलालचन्द्र शर्म्मा, आयुर्वेदाचार्यः*

[ द्वितीयाङ्कतोऽनुवृत्तः ]

किं सत्यमेवोपलभ्यमानयोश्चरकसुश्रुतयोरनार्षत्वं वाग्भटस्य सम्मतमासीत्—इति किञ्चित् सञ्चिन्त्य समाप्यतेऽसौ लेखः—सोऽसौ वाग्भटः स्वग्रन्थस्याष्टाङ्ग-हृदयस्याऽऽरम्भे—

ब्रह्मा स्मृत्वाऽऽयुषो वेदं प्रजापतिमजिग्रहत् ।
सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान् मुनीन् ।
तेऽग्निवेशादिकांस्ते तु पृथक् तन्त्राणि तेनिरे ।
तेभ्योऽतिविप्रकीर्णेभ्यः प्रायः सारतरोच्चयः ।
क्रियतेऽष्टाङ्गहृदयं नाति-संक्षेप-विस्तरम् ।

इति सार्द्धश्लोक-द्वयेन अत्रिपुत्रं 'आत्रेयपुनर्वसुं' आयुर्वेदोपदेशकं सुप्रसिद्धं महर्षिं तच्छिष्यत्वेन चाग्निवेशं सुस्पष्टं संस्मरन्, तत्तन्त्रसारमादायाऽष्टाङ्ग हृदयस्य निर्माणं च स्वीकुर्वन् तथा च सर्वत्रापि अध्यायानां प्रारम्भे "इति ह स्माहुरात्रेयादयो महर्षयः" इत्युपन्यस्यति–अथ चात्र "स्म" प्रयोगं कृत्वा वाग्भट-महोदयेनात्रेयादीनामायुर्वेदोपदेशस्याऽग्निवेशादिकान्प्रति साक्षात्त्वं स्वीकृतं अतएव च हेतोस्तेन अग्निवेशादीनामेव च तन्त्रेभ्य एव सारतराणां विषयाणां सञ्चयः कृतः स्वग्रन्थे नान्यतस्तेषामार्षत्वात् ।

*अन्यच्च*—अस्थ्नां शतानि षष्टिश्च
त्रीणि दन्तनखैः सह ।
धन्वन्तरिस्तु त्रीण्याह ।

*अत्र हि—"त्रीणि सषष्टीनि शतान्यस्थ्नां सह दन्तनखेन"* ( च० शा० अ० ७ ) इति चरकपाठं साक्षादुद्धार वाग्भटः । अत्रैव च *"निजगादात्रिनन्दनः"* अत्रिनन्दनस्य धन्वन्तरेश्च सनामग्राहं स्मरणं कृतवान् इति ।

अथ च पदे पदे वर्त्तमानयोरेव चरकसुश्रुतयोरविकलान् श्लोकान् विन्यस्यन्, अथवा तद्भावभावितमनुवादं कुर्वन्, अन्ते च

*"यदि चरकमधीते तद्ध्रुवं सुश्रुतादि-*
*प्रणिगदित-गदानां नाममात्रेऽपि बाह्यः ।*
*अथ चरक-विहीनः प्रक्रियायामखिन्नः*
*किमिह खलु करोतु व्याधितानां वराकः ।*

इत्यन्तेन चरकसुश्रुतयोरध्ययनार्थं "वराकः" पदेन साग्रहं प्रेरयन् परान् प्रत्यक्षमवलोक्यते । तत्कथं मन्येत विश्वस्येत वाऽस्माभिः "वाग्भटोसौ लभ्यमान-चरक सुश्रुतयोरनार्षवचोवहुलत्वं प्रत्यपादयदिति ।

इत्यभिधाय वयमपि ब्रूमो यत् इत्येवमिह सति नाना प्रमाणञ्च-संप्लवे कृतं सुप्रसिद्धमतविरोधेन, कृतं चार्यभक्ति-भञ्जन-वृथा-प्रयत्न-संरम्भेणेति ।

# अभिमतम्

## आयुर्वेद-प्रकाशः ।

सारस्वत-कुलावतंस-श्रीमन्माधवोपाध्याय विरचितः । वैद्यवाचस्पति-श्रीगुलराजमिश्रायुर्वेदाचार्यविरचितयार्थ-विद्योतिनीसमाख्यया संस्कृतव्याख्यया सङ्क्षिप्तार्थ-प्रकाशिनी-हिन्दीटीकया च समुल्लसितः । मूल्यम्—रूप्यकचतुष्टम् ।

आयुर्वेदशास्त्रस्य प्राचीनोऽयं मूलग्रन्थो मोहमय्यां श्रीमद्धियादवजी त्रिविक्रमजीमहोदयैरायुर्वेदग्रन्थमालायां प्रकाशितो वैद्यसमाजे महतीं प्रतिष्ठामलभत । रसग्रन्थस्यास्य वैशिष्ट्यमिदमेव यदस्मिन् माधवपण्डितेन प्रायः

समनुभूतानामेव प्रयोगाणां विशेषत उल्लेखः कृतः । प्रथममेव प्रतिज्ञायामुल्लिखति माधवः—

*अध्यापयन्ति यदि दर्शयितुं क्षमन्ते-*
*सूतेन्द्रकर्म गुरवो गुरवस्त एव ।*
*शिष्यास्त एव रचयन्ति पुरो गुरूणां-*
*शेषाः पुनस्तदुभयाभिनयं भजन्ते ॥*

एतदतिरिक्तं ग्रन्थोऽयं प्रौढतमः, पाण्डित्यपूर्णश्च । अतोऽस्य विस्तृता टीका नितरामपेक्षितासीत् । आयुर्वेदे कुत्रचित् ग्रन्थ-ग्रन्थयोऽपि भवन्ति । तदेतट्टीकाकर्त्रा स्वगुरूणां श्रीमतां भारत-प्रथित-यशसां गोवर्धनशर्म्म-छांगाणी-महोदयानां तत्त्वावधानेन साहाय्येन च प्रस्फोटिताः सन्ति । टीका सुविस्तृता स्फीततरा सरला सुखावगमा च विद्यते । वैद्यानां कृते महानुपकारकोऽयं प्राचीनग्रन्थः पठनीयो मननीयश्च विद्यते ।

× × ×

## ग्रहलाघवीयं पञ्चाङ्गम् ।

—❀❀❀❀❀—

पूर्वं मोहमयीस्थ निर्णयसागर-यन्त्रालयतो ग्रहलाघवीयं पञ्चाङ्गं प्रकाशमायातिस्म । परं कियद्भ्यो वर्षेभ्यस्तद् ग्रहलाघवीयां पद्धतिं विहायान्यया गणितपद्धत्या प्रकाश्यत इति कैश्चन ज्योतिर्विद्भिर्विशुद्धग्रहलाघव-सरण्या निर्मितं प्रकाशितञ्च पञ्चाङ्गमिदं समालोचनार्थं समुपागतम् । तद् वयमस्य प्रणेतॄन् प्रकाशकांश्च धन्यवादान् वितरन्तस्तेषामुद्योगमिमं साधु मन्यामहे ।

अस्य प्रणेता मोहमयीस्थ-शुद्धग्रहलाघव-पञ्चाङ्ग-समितेर्महामन्त्री ज्योतिःशास्त्रमार्त्तण्डः गणककेशरी हरिशङ्कर जोशी नडियादकरो विद्यते । मूल्यम् -।) काशी—महाराष्ट्र-मोहमयीस्थ-विदुषां समर्थनमपि लब्धमस्ति पञ्चाङ्गेन ।

× + +

## काञ्चन पत्रिकाः

### वैदिक धर्मः

श्रीमद्भिः सातवलेकर-महोदयैः सम्पादितः स्वाध्यायमण्डलेन ( औंध, जि० सतारा ) प्रकाशितः सुचिरादेव वैदिकविषयेषु महत्वपूर्णां गवेषणा विदधानो महतीं वैदिक-वाङ्मय-सेवां वितनोति । कदाचित्त्वस्य लेखा नितरां मननीयाः सङ्ग्राह्याश्च भवन्ति । पत्रमिदं प्राचीन-वैदिक-गवेषणापरं संस्कृत-विदुषां नितरामुपकार-कारकम् । वार्षिक मूल्य ४)

### श्रीस्वाध्यायः

शिमलाशैलस्थ—सोलनराजधान्याः स्वाध्यायसदनात् प्रकाशमेति । अस्य संस्थापकाः श्रीमदमृतवाग्भवाचार्याः, सम्पादकाः-श्रीहरदेवशर्म्मत्रिपाठिनो ज्योतिर्विदः, स०सम्पादकाश्च-पं० भवानीशङ्कर त्रिवेदाः काव्यतीर्थाः सन्ति । मूल्यं सार्द्धमुद्रात्रयं वार्षिकम् ।

त्रैमासिकमिदं पत्रं वस्तुतः स्वाध्याय-प्रणयिनां कृते महदुपकारकम् । पत्र-सञ्चालका राष्ट्र-भक्ताः परिष्कृतबुद्धयः, अन्वेषणशीलाश्च सन्तीति प्रतीयते । अस्य साहित्याङ्को-लब्धः अस्मिन्नङ्के 'एक कविता' शिरस्को लेखः शोभनतरः । अत्र प्रायः सर्वेऽपि लेखाः पठनीयाः, उपयुक्ताः, वस्तुत अध्येतव्याश्च सन्ति । प्रसिद्धैर्मननशीलैर्विद्वल्लेखकैर्लिखिता लेखा एवात्र प्रकाश्यन्ते । ज्योतिर्विज्ञान-विषयेऽप्यत्र विशिष्टा महत्वपूर्णा च सामग्री तिष्ठति । वस्तुतो वयमस्य कृते वाक्यद्वयेनैव स्वीयं हार्दं प्रकटयामः—
*"स्वाध्यायोऽध्येतव्यः" "स्वाध्यायान्न प्रमदितव्यम्"*

### 'सिद्धान्तः'

—साप्ताहिकं धर्मसङ्घस्य पत्रम् । सम्पादकाः श्रीगङ्गाशङ्कर मिश्राः, श्रीदुर्गादत्तत्रिपाठिनश्च । साम्प्रतं धर्मसङ्घः, धर्मप्रचाराय सुदृढं प्रयतत इति सर्वविदितमेव । तस्येदं पत्रं युक्तितर्क-शास्त्रानुकूलैर्धार्मिकलेखैरलङ्कृतं

# सम्पादकीयम्

## श्रीशङ्करतर्करत्न-महोदयानां कैलाशवासः

एतज्ज्ञात्वा परं कष्टमनुभवामो यद् वाराणसेय-विद्वत् समाजस्य परिगणितेष्ववशिष्टेषु प्राचीनविद्वद्रत्नेषु तार्किक-शिरोमणयः श्रीश्रीशङ्करतर्करत्न-महाशयाः, विगत मासे कैलाशवासमन्वभवन्निति। इमे गौतमावताराणां विद्वन्मूर्द्धन्यानां प्रातःस्मरणीय-चरणानां महामहोपाध्याय–राखालदास-न्यायरत्न-महोदयानां शिष्येस्वन्यतमाः परमपावनचरिता हिन्दूविश्वविद्यालयस्य न्यायविभागे प्रधानाध्यापका आसन्। न्यायशास्त्रस्यानुमानखण्डे, तत्रापि व्याप्तिवादेऽद्वितीया भारतेऽभूवन्। एतेषां शास्त्राभ्यसन-व्यसनमेवैकमात्रमभूत्। "क्षणादूर्ध्वमतार्किकः"––इति नियमानुसारं तर्कशास्त्रानुशीलनमन्तरा नान्यत्कार्यमेतेषामासीत्। सार्वजनीनकार्येषु, व्यावहारिकविषयेषु च नैतेषां स्वल्पतरोऽपि सम्बन्ध आसीत्। शास्त्रविचारेऽपि नासीदेतेषां समकोटिकः कश्चन नैयायिक इति विद्वत्सभास्वपि नैतेषां शास्त्र-विचारो विंशतिवर्षात् कुत्रापि दृष्टः। एतत् पूर्वन्तु विद्वत्सभासु प्राचीनैर्महाविद्वद्भिः सह बहुशः शास्त्रार्थ एतेषां लेखकेन दृष्टपूर्वः।

साम्प्रतमिमे विद्वत्समाजस्य पूज्या माननीयाश्चासन्। सरल-हृदयानां प्राचीनविद्वदादर्शभूतानामेतेषां तर्कशास्त्र धुरीणानां निधनेनापूरणीया महती हानिः सञ्जाता संस्कृत-समाजस्येति वयं भृशं दुःखितास्तत्कुटुम्बिभिः समं दुःखानुभवं कुर्मः।

× × ×

मननीयं भवति मनीषिणाम्। श्रीमतां पूज्यकरपात्रिस्वामिनामपि लेखा अत्र पठनीया भवन्ति।

'धर्मदूतम्'—काशी-सारनाथस्थ-बौद्धसंघस्य मुखपत्रं चिरकालात् प्रचलति। बौद्ध-साहित्य-परिचयाभिलाषिणां हिन्दीभाषिणां कृते पत्रमिदं समीचीनम्।

सर्वेषामेतेषां सहयोगिनां समुन्नतिं कामयामहे।

× × ×

## संस्कृतभाषा-प्रचारोपायाः

अस्माकं केचन सुहृदः संस्कृतभाषां राष्ट्रभाषां विधातुकामाः प्रबलं प्रचारं कुर्वन्ति। ये संस्कृतं राष्ट्रभाषां नेच्छन्ति तेषामुपरि वाग्बाण-वर्षणं लेखनी-लगुड-प्रहारञ्च स्वच्छन्दमाचरन्ति। परमाश्चर्यन्त्विदमेव यत्ते प्रत्यहं सञ्जायमानस्य संस्कृतभाषावमानस्य ह्रासस्य च निरोधाय, तत्प्रचाराय च किमपि क्रियात्मकमुपाय-प्रदर्शनं तदाचरणं वा न कुर्वन्ति।

वयन्त्वभिलषामो यत् सर्वेऽपि संस्कृतज्ञाः स्वार्थसङ्कोचादिकं परिहृत्य, सङ्घीभूय च सरल-सरलां संस्कृत-शिक्षासरणिं निर्माय तस्याः प्रचाराय प्रयतन्तामिति। एतादृशी संस्कृत-शिक्षा सरणिर्निर्मातव्या, यया ब्राह्मणाः, क्षत्रियाः, वैश्याः, शूद्राः, नार्यः, कुमार्यः, आँग्लाः, यवनाः, अन्येऽपि संस्कृतभाषा-प्रणयिनः, स्वल्पेन कालेन, स्वल्पतरेण च परिश्रमेण संस्कृतभाषायां व्युत्पन्ना भवेयुः।

आँग्लभाषा-प्रचार-परिमर्द्दावसरे "संस्कृतं कठिना भाषा, संस्कृते सूत्र-रटनं भवति, तस्याः पठनं क्लिष्टतरम्"—इत्यादि भूयान् प्रचारः सञ्जातः। मानवसमाजे सैव मिथ्या धारणा सर्वदा जागर्तितराम्। वस्तुतो विचारे वैदेशिकांग्लभाषाया पठनमुच्चारणं रटनं संस्कृतादपि महत्क्लिष्टं विद्यते। भारतीयानां कृते हिन्दी-जननी स्वाभाविकी-संस्कृतवाक् न तथा कठिना। संस्कृतज्ञा एव न तथा प्रयतन्ते यथा सर्वेऽपि तां पठितुं प्रभवेयुः। केवलं "स्त्री-शूद्रौ नाधीयाताम्"––इत्येव रटन्ति। एकत इमे रटन्ति वराकाः, अपरतश्च स्त्रियः शूद्रा अन्त्यजा अपि आँग्लभाषां ज्ञानं विज्ञानञ्चाधीत्य ब्राह्मणानेव शिक्षयन्ति बहुषु विद्यालयेषु।

अन्यच्च कारणं वैदेशिक-शासनम्, यदस्या नामापि विनाशयितुं प्रवृत्तमस्ति। परं साम्प्रतं तु जनप्रतिनिधि-शासनमस्ति। अत्र तेषां सहयोग आन्दोलनादि द्वारा सुशकः। तेऽपि भारतीयाः, भारतीय-संस्कृति-पक्षपातिनश्च सन्ति। तेषामपि विद्यते सुरभारती-प्रणयः। परन्तेऽस्माकमालस्यं दुर्व्यवस्थाञ्च दर्शंदर्शं न विश्वसन्ति, न च पण्डितानां गौरवं मन्यन्ते। यदि संस्कृतविद्वांसः सत्येन हृदयेन, त्यागेन, प्रेम्णा च संस्कृतप्रचाराय सन्नद्धा भविष्यन्ति, तदा सर्वेऽपि तेषां सहायका भविष्यन्ति।

एतादृश-पुस्तकानां निर्माणं यदि कैश्चन विद्वद्भिः कृतं स्यात्तदा तत्सूचना सुप्रभाते प्रदेया ।

× × ×

## संस्कृत-भाषायां प्राथमिक-शिक्षणम्

कस्यापि वाङ्मयस्याध्ययनं प्रारम्भिकशिक्षाधीनमेव। यतस्तदेव मूलभूतं शिक्षणम्। यदा भारते हिन्दीभाषाया आँग्लभाषायाः वा प्रचारो नासीत्, तदा तु संस्कृतस्य प्रारम्भिकं शिक्षणं सर्वसाधारणमासीत्। स्वल्पेनैव परिश्रमेणाध्येतारो व्युत्पन्नाः संस्कृतभाषा-व्याकरणस्य, साहित्यस्य च पण्डिताः भवन्तिस्म। भारतीयैर्गणकैरपि शुष्कतमस्य गणितशास्त्रस्यापि ग्रन्थाः पद्यबद्धा एव विरचिताः। आयुर्वेदेऽप्ययमेव मार्गः। एतेनैव प्रतीयते यत् व्याकरण-काव्य-कोश-छन्दसामध्ययनं सर्वसाधारणमभूत्। साम्प्रतिका वैदिकाः, ज्योतिर्विदो वैद्याश्च संस्कृतज्ञान-विरहिता एव भवन्ति। तेषामिदमज्ञानं भूषणत्वेन परिगण्यते। एतेषान्त्वियं शोचनीया दशा विद्यत एव; परं व्याकरण-साहित्य-धर्मशास्त्र-दर्शनादिविषयाणां पण्डिता अपि संस्कृतभाषणे, लेखने, व्यवहरणे च दुर्बलाः, भीता इव च विलोक्यन्ते।

एतस्य प्रधानं कारणं अत्यावश्यक-प्राथमिक-शिक्षणाभाव एव। आधुनापि मद्रप्रान्ते यत्किमपि महाराष्ट्रप्रान्ते च प्राचीना प्रारम्भिक-शिक्षण-पद्धतिः प्रचलति, यया लघुकौमुदी-रटनमन्तरा पञ्चकाव्यानामध्ययेनैव सम्यक् तया संस्कृत-भाषण-प्रगल्भा भवन्ति छात्राः। प्राचीनाः पण्डिताः सारस्वतं चन्द्रिकां वा अवश्यं पठन्तिस्म।

अद्यत्वे विचित्रैव परिस्थितिः। शास्त्रिपरीक्षामुत्तीर्णाः स्वाधीतग्रन्थानभिज्ञाः, संस्कृतभाषण-लेखन-शून्याः, प्राथमिकच्छात्रानध्यापयितुमप्यसमर्थाः पण्डिताः प्रचुरं प्रतीयन्ते। साम्प्रतं लघुकौमुदीमारभ्य संस्कृतपठनं प्रारभ्यते। सापि पाठशालाध्यापकैरुत्कृष्टग्रन्थ-पठनदत्तावधानैरुपेक्षाबुद्ध्या पाठ्यते। कैश्चन पाठितुमपि न शक्यते। तैः पाठिता अपि छात्राणां हृदयाङ्गमा न भवति, अतस्ते जीवनपर्यन्तं लघु-ज्ञान-शून्या एव सन्तिष्ठन्ते। उपरितनग्रन्थानां तु कथैव का।

अस्य तु स्पष्टतरं कारणं वर्तमान-परीक्षा-पद्धतिरेव। साम्प्रतिकं संस्कृताध्ययनं विशुद्ध-परीक्षोत्तारमात्रसारं भवति। यथाकथमपि प्रतिशतं त्रयस्त्रिंशदङ्कावाप्तिरेव परमः पुरुषार्थः। अतएव संस्कृत-पाण्डित्यं प्रत्यहं ह्रासमेवाप्नोति।

अपरं कारणं प्राथमिक-शिक्षा-विरहः। यदि प्राथमिकी संस्कृत-शिक्षा-प्रणाली सुदृढा, उपयुक्ततरा, शोभना च भवेत्तदा-एतद्दौर्बल्यं सर्वथा व्यपगतं स्यात्। इत्येतदर्थं संस्कृत-पाठ्य-निर्द्धारण-समित्या, शिक्षामन्त्रि-निर्मितया, डा० भगवान्दास-कमेटीत्यभिधया विशेषतोऽवधानदानमाचरणीयम्। प्रत्युत एतदर्थं संस्कृतस्य प्राथमिक-शिक्षा निर्माणाय तद्विशेषज्ञानां काचन उपसमितिः स्थापनीया। भारतवर्षे पूर्व-प्रचलितायाः प्रारम्भिकशिक्षा-प्रणाल्या गवेषणं विधाय साम्प्रतिकीञ्च प्रारम्भिकशिक्षा-पद्धतिमालोच्य लघुकौमुदीपठनात् प्राक् वर्षद्वयं यावत् पाठनीया प्राथमिकी शिक्षा-पद्धतिर्निर्मातव्या। प्रारम्भिक-शिक्षणमन्तरा संस्कृतस्योच्चैः शिक्षणं व्यर्थमेव। आमूलपरिवर्तनमन्तरा केवलं पाठ्य-पुस्तकानां परिवर्तनेन किमपि न सेत्स्यति।

× × ×

## हिन्दू-विश्व-विद्यालये हिन्दी विरोधः

हिन्दू-विश्व-विद्यालयस्य स्थापनं हिन्दु-संस्कृति-रक्षायै, हिन्दीभाषाप्रचाराय, हिन्दूसमाजस्योपकृत्यै च समभूत्। एतस्य जीवितादर्शभूताः देशपूज्या महर्षय इव महामान्याः मालवीय-महोदया भारतीयानां भाग्येनेदानीमपि जीवन्ति। परमेतेषां वार्धक्येनासमर्थतया तत्स्थानीयाः साम्प्रतिका विश्वविद्यालय-सञ्चालकाः श्रीराधाकृष्णन्-महोदया अपि भारतीय-संस्कृतेर्जगन्मान्या विद्वांसः सन्ति। परन्ते हिन्दीभाषानभिज्ञा अपि हिन्दीविरोधिनश्च सन्ति। ते हिन्दीं प्रान्तीयां भाषां मन्यन्ते।

अस्मिन् वत्सरे लखनऊ-विश्वविद्यालयेन तु हिन्दीभाषैवाध्यापनभाषात्वेनाङ्गीकृता। अपरेष्वपि विश्वविद्यालयेषु तथैव यत्नः प्रचलति। नागपुरविश्वविद्यालयेनाप्येवमेव कृतम्। परमत्र हिन्दूसंस्कृति-केन्द्रे हिन्दूविश्वविद्यालये हिन्दीभाषाया इमामसहनीयामुपेक्षां दर्शं दर्शं सर्वेऽपि हिन्दी-ज्ञा नितरामसन्तुष्टाः सन्ति। हिन्दूविश्वविद्यालयस्य प्रधानद्वारेऽपि आँग्लभाषाया एव प्राधान्यम्। एतस्य

विरोधस्तु महात्मना गांधिमहोदयेनापि रजतजयन्ती-भाषणावसरे कृत आसीत्। साम्प्रतमपि नागरी-प्रचारिणी-सभा-प्रधानैः श्रीरामनारायणमिश्र-महोदयैरयं विरोधः स्मारितो विद्यते। अत्र विषये नागरीप्रचारिणी सभा, छात्राश्च विरुद्धाः सन्ति।

अस्य कारणन्तु प्राय इदमेव यच्छ्रीमतां राधाकृष्णन् महोदयानां कार्यकाले हिन्दू-विश्व-विद्यालये मद्रप्रान्तीया-ध्यापकानां प्राचुर्यं वरीवर्त्ति। रिक्तस्थानेषु प्रायो मद्रप्रान्तीया एव गृह्यन्ते। त एव हिन्दीभाषा-विरोधं कुर्वन्ति। तेषामेवाभिमतं प्रदर्श्य कुलपतयो हिन्दीभाषां विरुन्धन्ति।

वयं न मद्रप्रान्तीयानां विरोधिनः, ते सुखमागच्छन्तु। परं हिन्दीभाषामपि पठन्तु। ये खलु भारतीयाः फ्रान्स-शर्मण्य-जयप्राणादिदेशेषु विद्याध्ययनं कुर्वन्ति, ते प्रथमं तत्तद्देशीयभाषां सोत्साहं पठन्ति। तत्रत्यास्तु-आँग्ल-भाषामपि न जानन्ति। यदि ते विदेशेषु वैदेशिकीमस्वा-भाविकीञ्च भाषामध्येतुं प्रयतन्ते तदा ते किं न स्वल्पेष्वेव दिवसेषु सरलसरलां भारतीयां भाषां पठन्ति। एष तेषां दुराग्रहो निर्मूलनीय एव।

नेदानीं केऽपि हिन्दीभाषा-प्रणयिनः स्वमातृभाषाया अवमाननं दृष्ट्वा तूष्णीं स्थातुं प्रभविष्यन्ति। भारतीय-सिविल-सर्विस-परीक्षायां वैदेशिका अपि भारतीयं शासनं विधातुं हिन्दुस्तानी-भाषां पठन्ति। तथैव प्रान्तीया अध्यापका अपि नियमेन हिन्दीभाषां पठन्त्विति-महान्दोलनं सञ्चालनीयम्।

× × ×

## संस्कृतज्ञानामध्यापनकला-शिक्षणम्।

ये आचार्य-शास्त्रि-तीर्थादिपरीक्षोत्तीर्णाः कुत्रापि संस्कृत-विद्यालये, आँग्लविद्यालये वा नवीनाध्यापका भवन्ति, ते पाठनप्रणाल्याः सम्यग्ज्ञानमन्तरा पाठयितुं न प्रभवन्ति, विशेषतश्च प्राथमिकच्छात्राणां पाठने तु नितान्त-मनभिज्ञा भवन्ति। वस्तुतस्ते यथाकथमपि परीक्षोत्तीर्णा भवन्ति, अधीतान् ग्रन्थान् विस्मरन्ति। यस्य ग्रन्थस्य स्वयमेव ज्ञानं न भवति, तेषां पाठनं कथंकारं स्यात्? तदुपरि पाठनप्रणालीमपि तेन जानन्तीति-तेषामध्यापन प्रकार-परिचयः, मनोविज्ञानशास्त्रस्य च परिचयो नितान्तमावश्यक एव। हिन्दीमिडिलपरीक्षोत्तीर्णानाम्, आँग्लभाषायाः कलाकुमार (B.A.)—परीक्षोत्तीर्णानाञ्च कृते प्रतिप्रान्तं ट्रेनिंग-स्कूल-कालेजादिनाम्ना प्रसिद्धाः शिक्षणालया राजकीया विद्यन्ते। तथैव संस्कृतज्ञानां कृतेऽपि नितरामावश्यकमिदम्। मन्यामहे नात्र, कस्यापि विरोधः स्यात्। अस्माभिस्तु शिक्षामन्त्रिभिः सह प्रत्यक्ष-वार्तालापे प्रस्तावोऽयं संस्थापित आसीत्। तैरस्य प्रस्तावस्यौचित्यमपि स्वीकृतमासीत्। परमिदानीं वयं पुनरपि शिक्षाधिकृतां ध्यानमत्राकर्षामः।

शासनाधिकारिणः प्राय एवंविधेषु कार्येषु द्रव्याभावं पुरस्कृत्य समयातिपातमाचरन्ति। परमत्रापि विषये निवेदन मस्माकं यत् काशीस्थराजकीय-महाविद्यालये पौरस्त्याचार्य-कक्षा विद्यते, यस्यामष्टादशच्छात्रेभ्यः प्रतिमासं विंशतिमुद्राणां वृत्तयः सन्ति। एवं गवेषण-विभागोऽपि विद्यते, यत्र साधोलाल-वृत्तिं लभन्ते छात्राः स्वाधीत-विषयेष्वन्वेषणं विधातुम्। परमिदं द्वयमपि व्यर्थमेव प्रतीयते साम्प्रतम्। यतस्तत्र नास्ति कापि पठन-पाठन-व्यवस्था, न तत्र कोऽप्यध्यापकः। एवमेव प्रचलति केषाञ्चन ब्राह्मणानां साहाय्य प्रदानरूपेण। नियमाभावात् यदैव तत्रस्थश्छात्रोऽन्यत्र ततोऽधिकां वृत्तिं लभते तदैव सर्वं विहाय गच्छति। तत्र-स्थिता अपि ते न स्वाधीतग्रन्थानामभ्यासं कुर्वन्ति, अन्वेषणस्य तु प्रणालीमपि न जानन्ति, न किमप्युपकुर्वन्ति कमपि। अतस्तद्धनं शिक्षणकला-विद्यालये वृत्तिरूपेण प्रदातव्यम्। एवं तस्य सदुपयोगोऽपि भवेत्।

अन्यच्च—संस्कृत-परीक्षाशुल्कादपि प्रतिवत्सरं सहस्रशो मुद्रा अवशिष्यन्ते। तस्यैव द्रव्यस्यात्र विनियोगः कर्तव्यः। एवं सर्वं सुसम्पन्नं स्यात्। अयोग्यैरध्यापकैरध्यापिता आधीयाना अपि तादृशी एव स्युः। न हि सर्वेऽप्यध्यापका अध्यापन-समर्था भवन्ति। उक्तमपि कालिदासेन—

श्लिष्टा क्रिया कस्यचिदात्मसंस्था
सङ्क्रान्तिरन्यस्य विशेषयुक्ता।
यस्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितव्य एव॥

× × ×

## वास्तविकं दानम्

आजमगढ़मण्डस्थ-खुरासनग्रामवास्तव्यैः कालिकान्तास्थ-प्रसिद्ध-व्यापारिभिर्धार्मिकैश्च-श्रीमद्गयादीनजायसवालमहाशयैः परमधार्मिकैः स्वग्रामे जायसवालविद्यालयः, रुग्णालयः ( हास्पिटल ) संस्थापितो विद्यते। तत्रैव च श्रीमतां सुप्रसिद्धव्यापारिणां श्रीमन्नूमन्नूलालखत्री-महाशयानां प्रेरणया श्रीलक्ष्मीनारायण-मन्दिरमपि संस्थापितं महता समारोहेण । साम्प्रतं ते कमपि महायज्ञं विधातुं कृतसङ्कल्पाः सन्ति । वयमेतेषां धार्मिकीं प्रवृत्तिमालोक्य नितरां प्रसीदामः । अभिलषामश्च यदेते महान्तं ज्ञानयज्ञं कृत्वा महतीं धर्मसेवां, देशसेवां, ब्राह्मणसेवाञ्च विदधतु; येनाकल्पमेतेषां यशः पुण्यञ्च स्थिरं स्यात् ।

साम्प्रतकाले संस्कृत-शिक्षायाः, संस्कृत-शिक्षितानां विदुषाञ्च जीविकोपार्जनोपायाभावाद् दयनीया दुरवस्था विद्यते । प्रत्यहं विरोधिभिश्च भगवान् सनातनोधर्मः ह्रासमानीयते । शतशः संस्कृत-पाठशाला देशकालात्मज्ञानरहितान् छात्रान् प्रसूयन्ते । तेन न कोऽप्युपकारः, पठताम्, पाठयताम्, जनतायाः, देशस्य च भवति । परीक्षामुत्तीर्णोऽपि छात्रा न तादृशीं व्युत्पत्तिं लभन्ते । अतः सुप्रभातेन नवीन-संस्कृत-शिक्षणालयस्य ( ट्रेनिंग कालेज ) प्रस्तावः कृतो विद्यते। यत्र आचार्यादि-परीक्षोत्तीर्णानां विदुषां वर्षद्वयं वर्षत्रयं वा वास्तविकं देशकालानुरूपङ्काध्ययनं स्यात्तेषां जीविकाप्रश्नश्च समाहितो भवेदिति । तदत्र महति ज्ञानयज्ञे यदि श्रीमतां श्रीगयादीन-महाशयानां ध्यानं स्यात्तदा वास्तविकं महत्कार्यं सम्पद्येत ।

साम्प्रतं धार्मिका धनदातारो गड्डलिकाप्रवाहेण स्वल्पकाल-स्थायिषु देशकालानुपयुक्तेषु कार्येषु धनं व्ययीकुर्वन्ति । वैदेशिका धनिकास्तु देश-समाज-धर्म-प्रचारकार्येषु महत्सु धनं ददति ।

मन्ये, श्रीमन्तो दातारो दत्तावधाना विचारं करिष्यन्तीति । अन्येऽपि दातारो दापयितारश्चात्र दत्तावधाना भवन्त्विति ।

\+ \+ \+

## पञ्चाङ्ग-विषये

अस्मिन्नङ्के पञ्चाङ्ग-विषये श्रीसीतारामझा महोदयेन स्वीया विचाराः प्रकटीकृताः सन्ति । तत्रास्माकं किमपि वक्तव्यमस्ति ।

माननीय-लेखकस्य विचारा दैवज्ञप्रवराणां माननीया भविष्यन्ति नवेति त एव जानन्तु, स्वीयमभिमतञ्च प्रकटयन्तु । परमस्माकमत्र वक्तव्यमिदमेवास्ति यत् केतकर-प्रभृतिभिरर्वाचीनैः पञ्चाङ्गकर्तृभिर्यस्य मार्गस्यान्वेषणं कृतम्, स मार्गो धर्मशास्त्रेण निरयन-ज्यौतिषशास्त्रेण चानुमोदितो ऽस्ति न वा ? किमन्यत् एभिः पञ्चाङ्गैः प्राप्तास्तिथयः, "बाणवृद्धिरसक्षयः" इत्यादिप्राक्तनवचनानां विरोधन्तु नाचरन्ति—इत्यपि द्रष्टव्यम् । यतस्तत्पञ्चाङ्गानुसारेण 'सप्तवृद्धिर्दशक्षयः '—इति नियमः प्राप्नोति । अतस्तेन प्राचीन-नियमोल्लङ्घनं धर्मशास्त्रातिक्रमश्च भवति, एवं सदसत् फलज्ञानञ्च सम्यङ् न भवति, यतः प्राणिनां धर्मेणाधर्मेण वा शुभाशुभकर्माणि सृज्यन्ते । तद् द्वारैव च प्राणिनः शुभाशुभ-फलं-सुखदुःखात्मकं लभन्ते । अस्यामवस्थायां धर्मस्य प्राचीन-वचनानाञ्च संरक्षणेनैव रव्यादिग्रहैः शुभाशुभं सम्यक् फलं लब्धुं शक्यते ।

एतदतिरिक्तं माननीयेन लेखक-महाभागेन चलैरेव ग्रहैः फलविचारः स्वीक्रियते; ये वस्तुतः फलादेशे सर्वथानुपयुक्ताः सन्ति । यतः फलितशास्त्रे, सृष्ट्यारम्भकालीनाः ग्रहा यत्रावर्तन्त, तमेव बिन्दुं स्वीकृत्य सृष्ट्यादितः सृष्ट्यन्तं तैरेवाचलैर्ग्रहैः फलकथनस्य निर्देशः कृतः । अन्यथा प्रत्यहं चलैर्ग्रहैः फलकथनेन फलेऽपि चलत्वं वैषम्यञ्च भविष्यति । अस्यामवस्थायां जन्मकालतो वर्ष-मास-दिनादिफलस्य निश्चयः प्रत्यहचल-ग्रहाणां स्वीकारेण न सम्यग् भविष्यति । अतः पुनरप्येतत् सर्वमालोच्य माननीयेन लेखकेन विचाराः प्रकटनीयाः—श्रीदाऊजी दीक्षितः, सम्पादकः ।

卐 卐 卐 卐 卐 卐

# आवश्यक-सूचना

'सुप्रभातम्' हि नाम षष्ठाङ्कतः "सुप्रभातम्—लिमिटेड" नामक-व्यापार-संस्थया स्वाधिकारे गृहीतं स्यात् ।

इयं संस्था—एकलक्षात्मक-मूलधनेन संस्कृत-हिन्दी-साप्ताहिक-दैनिक-मासिक-त्रैमासिक-पत्राणाम्, संस्कृत-हिन्दी-प्राचीनपुस्तकानां सम्पादनं प्रकाशनं नवीन-पाठ्य-पुस्तकानां निर्माणं प्रकाशनं सम्पादनं मुद्रणञ्च विधास्यति ।

सर्वप्रथमं संस्कृत-मुद्रण—परस्य बृहत्तरस्य सुप्रभात-यन्त्रालयस्य संस्थापनं, बीजसंस्कारसंस्कृतस्य धर्मकर्मोपयोगिनो विशुद्ध-"राष्ट्रिय-पञ्चाङ्गस्य" प्रकाशनञ्च भविष्यति ।

साम्प्रतं भिक्षावृत्तिं विहाय प्रचुरधन-समृद्धया संस्थया सञ्चाल्य-मानस्य सुप्रभातस्य निर्बाधं यथासमयञ्च प्रकाशनं स्यात् ।

सुप्रभात—प्रणयिभिरस्य प्रचारे ग्रहणे च निःशङ्कं प्रयतनीयम् ।

卐 卐 卐 卐 卐 卐

एम० ए०—इत्युपाधिधारि श्रीराधाविनोद गोस्वामिना अमरभारती-यंत्रालये काश्याम मुद्रितम।

अस्मिन् मम लेखः सामाजिक-स्वास्थ्य-संहिता शीर्षकः ११० पृष्ठे मुद्रितो विद्यते-प्राप्यते

त्रयोदशाब्दे ] सौर-श्रावणः, २००३ वैक्रमाब्दाः [ पञ्चम-संख्या

भारतवर्षस्य सर्वोत्कृष्टम्, काशीस्थ-विद्वत्समाजानुमोदितम्

संस्कृत-मासिक-पत्रम्

# सुप्रभातम्

श्रीद्वारकापीठाधीश्वराः जगद्गुरवः श्रीशङ्कराचार्याः

श्री ११०८ राजराजेश्वरस्वामिपादाः

प्राप्तिस्थानम्—

**सुप्रभातम्, बनारस**

वार्षिकम्मूल्यम्—४) [ अगस्त, १९४६ ] छात्रेभ्यः पुस्तकालयेभ्यश्च—३)

कांगड़ी गुरुकुल में ६ अक्तूबर १९४६ ई. को प्राप्त

## लेख-सूची

—०—



## आवश्यक-सूचना

१—सुप्रभातस्य पञ्चमोऽङ्को महता विलम्बेन, त्वरया च मुद्रितः। अत्र यन्त्रालयस्यैव कृपा कारणम्। तत् त्वरया यत्र कुत्रापि काश्चनाशुद्धयः शोधन-सम्बन्धिन्यः ( प्रूफ ) त्रुटयश्च सञ्जाताः । तासु काचन पाठकानां सौकर्याय प्रकाश्यन्ते--कृपया क्षन्तव्यम्।

(१)—९९ पृष्ठे तुलसीदास-चित्रस्याधः [१००पृष्ठतः] इत्यत्र [ ९८ पृष्ठतः ] इति पठनीयम्।

(२)—९९ पृष्ठे 'तुलसी स्मृतिः' इति लेखे १६ पङ्क्तौ 'भुवनतस्लम्'-इत्यत्र 'भुवनतल' मिति पठनीयम् ।

(३)—१०० पृष्ठे 'जकोन्दा' इति लेखस्य परिचयात्मिका टिप्पणी स्थानाभावात् सम्पादकीये स्तम्भे अन्ते द्रष्टव्या ।

(४)—१०१ पृष्ठे तृतीयपङ्क्तौ 'सेवा-सम्पादनदस्ये'ति स्थाने 'सम्पादनमस्येति' पठनीयम्।

(५)—१११पृष्ठे १८ तमे श्लोके 'विज्ञापन-कोविदा' इत्यत्र 'विज्ञान-कोविदा' इति पठनीयम ।

२--येषां पाठशालाध्यापकानां सविधे सुप्रभातं गच्छेत् तैः 'संस्कृताध्यापकेभ्यः, इति शिरस्को लेखो नूनं पठनीयः। विमर्शनीयश्च ।

३—सुप्रभातस्य षष्ठोऽङ्कः पञ्चदश-दिवसाभ्यन्तर एव प्रकाशितः स्यादिति यन्त्रालयाधिकारिभिः प्रतिज्ञातम् । सप्तमाङ्कतो मुद्रणप्रबन्धः स्वाधीन एव स्यात्। तत एव च यथा समयमुद्रणमपि भविष्यतीति पाठकैः ग्राहकैश्चायं कियानपि काल-विलम्बः सोढव्यः क्षन्तव्यश्चेति--

—प्रकाशकः

# सुप्रभातम्

तिमिरततिमुदस्यद्, भेदतारा विलुम्पद्, नयदधिसुरभाषाभापि जागर्तिभावम् ।
विबुध-विहग-वादैराह्वयद् भाग्य-भानुम् विलसतु भुवनेऽस्मिन् सर्वतः "सुप्रभातम्"

त्रयोदशाऽब्दे } सौर-श्रावणः, २००३ विक्रमाब्दाः { पञ्चम-संख्या

## लीला-पद्मम्

श्री जानकीवल्लभ शास्त्री, साहित्य-वेदान्ताचार्यः

( १ )

ज्योत्स्ना-स्नाते निशीथे,
किसलय-शयिते मर्मरे स्निग्ध-सान्द्रे,
चान्द्रपीयूषमाचामति
चटुल-चलच्चञ्चु-चञ्चच्चकोरे;
वेल्लत्कल्लोल-लीला-कलकल-कलिते
यमुने काम्य-कूले,
मन्दं-मन्दं कदम्बं स्पृशति
मधुमये माधवीये समीरे;
'किङ्किङ्कि' ङ्किकिणीनां,
कन-कन-रणनं कङ्कण-द्वन्द्व-वन्धि
श्रावं-श्रावं विरावं
चल-चरण-मिलन्मञ्जु-मञ्जीर-जातम्,
लीला-शीलालि-लोलत्करतल-
कलितोत्ताल-तालं, स-हास्यं,
लास्यं श्रीराधिकाया-
स्तिरयतु दुरितं मानसं मानवानाम् ।

( २ )

आसीद्दासीकृतेन्दु-
र्वदन-सदनयाऽमन्द-नन्दच्छ्रिया या
यस्याः कस्यापि वश्या,
गुण-गण-गणना नाभवद्वाग्मि-वृन्दे
स-व्याजं प्रीतिभाजा
रहसि परिहृता साऽच्युतेनोग्रबाधा
राधाऽगाधार्णवे हा,
विषम-विषमये मज्जितु सज्जतेऽद्य ।

## श्रीदक्षिणामूर्ति-स्मरणम्

लेखकाः—श्री १०८ गोडबोले महाराजाः

( हमीर रागः )

वंदे चित्रनटम् । तमहं वंदे चित्रनटम् ।

ध्रु०

यः कदर्यवेषधृगुदारो । विरक्तोऽर्धाङ्गीकृतदारो ।
विषभुक् सुधाकराधारो । वासोऽन्नाद्यधिदेवीडपटो-
यो भिक्षार्थमटन् । वंदें तम० ॥ १ ॥

जडसमा यस्य भाति चर्या । पदनतास्त्रिजगद्गुरुवर्याः ।
अवेद्यो बौद्धिकचातुर्या । कुक्कुरत्वमाप्तं वेदैरपि
गत्वा यन्निकटं ॥ वंदे—तम० ॥२॥

क्षमालुः क्षपितभेदकीलो । निःस्पृहो दीनोद्धृतिशीलो ।
मौनतोऽपि विद्बोधनलीलो । वसति गुरुरपीशोऽखिलजगतां
तरुमाद्रुत्य वटम् ॥ वंदे—तम० ॥३॥

यस्य करुणाऽनुपमैश्वर्या । संस्तुतिः परमतपश्चर्या ।
साष्टविधसत्वमुदाश्चर्या । अरमनुगृह्णाति यस्तद्व्रतम्
नरमिह निष्कपटम् ॥ वंदे—तम० ॥४॥

ऊर्ध्वरेतस्कं जितमदनम् । विरक्तं चित्स्मशानसदनम् ।
रूपमानंदि स्मितवदनम् । आच्छाद्यात्मानं निदर्शयति
भिल्ल्यासक्त-विटम् ॥ वंदे—तम० ॥५॥

लभते परमपदं योगी । विविदिषुर्विद्यामथ भोगी ।
स्वार्थमपि चानार्तिं रोगी । ध्यात्वा यं संधृतचित्पुस्तकमणि-
स्रगलङ्कृतघटम् ॥ वंदे—तम० ॥६॥

अधरीकृत्य जगदशेषं । भाति यत्परवपुर्विशेषम् ।
व्यक्तनिखिलात्मशक्तिवेषम् । धृतसृणिपाशसुमेष्विक्षुधनु-
र्व्याप्यसुधाब्धितटम् ॥ वंदे–तम० ॥ ७ ॥

जयति तच्छिवाद्यवनिपालम् । स्त्रीपुमाकृति शास्त्यपि कालम् ।
स्मृतमक्षोर्दहति पाशजालम् । अनहंकृत्यपि सर्वानुग्रहदक्ष-
मनुपमघटम् ॥ वंदे–तम ॥८॥

यस्याऽव्यक्तरूपमननम् । योगिनामपि क्लेशजननम् ।
अतस्त्यक्त्वाऽक्षवृत्तिहननम् । रात्रुर्नष्टजनिस्मृतिर्विहरति
यन्नामैव रटन् ॥ वंदे—तम० ॥९॥

वंदे चित्रनटम् । तमहं वंदे चित्रनटम् ॥

## श्रीतुलसी-जयन्ती

मानस-राजहंसः श्रीविजयानन्दत्रिपाठी

श्रावणी सप्तमी पुण्या पुण्यं राजापुरं पुरम् ,
यस्मिन्नाविर्बभूवादिकविर्लोकहिताय वै
तुलसीदास-रूपेण कृतवान् ग्रन्थमद्भुतम् ,
मानसं रामचरितं येन रामः प्रसीदति ॥

श्रीमत्कविकुलचूडामणि-भक्ताग्रगण्य-श्रीगोस्वामि-तुलसीदासस्य परिचय-प्रदानं हिन्दीभाषाभाषिभ्योऽन्ये-भ्यश्चासाम्प्रतमिव प्रतिभाति । यतस्तस्य दिगन्तव्यापिनी कीर्तिर्न केवलं भारते वर्षे; किन्तु निखिलेऽपि भूमण्डले प्रथिता विद्यते, परन्तु कृतेषु प्रतिकर्तव्यमिति न्यायात् तस्य गुण-सङ्कीर्तनम्, तत्कृत-ग्रन्थानामध्ययनम्, तस्य स्मृतेः स्थापनम्, तस्य जन्मोत्सव-सम्पादनञ्चास्मद्विधैस्तदुपकृतै-रवश्यमेव करणीयम् ।

प्राचीन-हिन्दीकविभिस्तत्समकालीनैः श्रीनाभाजी महात्मभिर्यच्छ्रीमन्तो गोस्वामिपादाः साक्षात् प्राचेतसावतार-त्वेनोपवर्णिताः, समाहृताश्च तत्कथमप्यत्युक्तिरिति वक्तुं न शक्यते । तस्य वेदेऽचला श्रद्धा, काव्येऽलौकिकी प्रतिभा, योगे महती निपुणता, शास्त्रे सारग्राहिणी शक्तिः, उपासने दृढा निष्ठा, धर्मसंस्थापने तीव्राभिरुचिः, लोकश्रेयसेऽवितथा चेष्टा, संस्कृतेऽतीवानुरक्तिरित्येते गुणास्तस्यर्षिसुलभस्वभावं द्योतयन्ति ।

यद्यपि श्रीमद्भिर्गोस्वामिपादैः सत्यपि संस्कृत-पद्य-रचना-सामर्थ्ये स्त्री-शूद्र-द्विजबन्धूनामुपकाराय लोकभाषाया-मेव ग्रन्था निर्मिताः, येषु श्रीमद्रामचरितमानसस्यासमुद्रान्तं प्रचारस्तस्य महाकवेर्लोकोत्तरमहिम्नि प्रमाणम्; तथापि श्रीरघुनाथगाथाया असंस्कृतभाषायां निर्माणे योऽन्तस्तापोऽ-नुभूतस्तैर्महात्मभिस्तेनैव तेषां संस्कृतभाषायां प्रगाढोऽनु-रागो लक्ष्यते । यथा—

राम सुकीरति भनित भदेसा
असमंजस अस मोहि अँदेसा ।
भाषा-भनित-भोरि मति मोरी
हँसिवे जोग हँसे नहिं खोरी ।



# तुलसी-स्मृतिः

निरुपम-भक्ति-विलासो
वाणी-लतिका-विकास-मधुमासः ।
सुयशःपुञ्ज-निवास-
स्तुलसीदासश्चिरं जयति ।

श्रीरामचरितमानस—
माश्रयतामखिल-पापहरम् ।
यस्मादुद्गतममलं
तुलसी-शैलं तमेकमाकलये ।

यवन-दवानल-कीलै-
राकुलिते निगम-कानने परितः ।
सञ्जीवनाय तस्य
प्रावीवहद्येष भक्ति-धुनीम् ।

अभिरामा राम-कथा
कामारि-नुता वितीर्ण-नत-कामा ।
यद्वाग्विलसित-धामाऽ-
प्यापामरमुद्धार भुवनतत्रम् ।

अप्राकृत-वाङ्मूला
स्मृति-पल्लविता पुराण-पुष्पमयी
तुलसी-परिमल-शुद्धा
जयतितरां रामभक्ति-कल्पलता ।

शतशः कवयन्तु परे
वयन्तु वाक्-तन्तुजालमविरामम्
तुलसी-वाङ्मय-समता
न मता मम ताभिरन्य-भङ्गीभिः ।

पातक-पर्वत-भञ्जन-
कुलिशायित-रामनाम-परिपूता ।
धूताऽहिता समन्तात्
तुलसीदासस्य भारती जयति ॥

भाषास्तु लौकिकी वा-
प्यलौकिकी भक्ति-सरसा चेत् ।
भावोऽप्यलौकिश्चेत्
विजितं मन्ये कवित्वेन ।

वटुकनाथशास्त्री खिस्ते

[ १०० पृष्ठतः ]

तत्परितापोपशमाय मङ्गलकामनया वा प्रारम्भे, मध्ये, अवसाने चातीव मनोहराः श्लोकाः सन्निवेशिताः सन्ति। नानापुराण-निगमागम-काव्य-नाटकादि-संस्कृतोदधिं स्व-बुद्धिमन्दरेणोन्मथ्य या रामायणी सुधा तैः प्रकटीकृता, सा दैवीवागनभिज्ञानां श्रेयसे लोकभाषा-प्रपायां स्थापिता, रसज्ञास्तद्द्वारा संस्कृत-साहित्यस्य रसमश्नुवन्त्विति ।

एतादृशां महात्मनां कृते विहितः श्रद्धाञ्जलिर्दशस्य सुप्रभाताय भूयादित्यभ्यर्थये ।

# जकोन्दा ।

*लेखिका—सौभाग्यवती विदुषी क्षमा राव*

चमत्कर्तुकामा पतिं पुण्यशीला
जकोन्दास्य सायं गता शिल्पशालाम् ।
निलीयोपविष्टा बहिर्जोपमेकं
प्रचिक्षेप वातायनान्तः शिरीषम् ॥ १ ॥

अलब्धोत्तरा मन्दमुत्थाय तन्वी
'विनोदाय कुत्रापि गूढः पतिः स्यात् ।'
इति स्मेरवक्त्राऽतिशल्लोलनेत्रा
सकम्पाग्रपादाञ्चिताकुञ्चिताङ्घ्री ॥ २ ॥

स्थिता द्वारि किञ्चित् प्रकोष्ठस्य पत्युः
पुरावत् प्रिया स्यामिति ध्यानमग्ना ।
अभूदर्पणेऽन्तर्निजं वीक्ष्य विम्बं
कर-स्वस्तिक-च्छन्न-वक्षोज-वक्त्रा ॥ ३ ॥

क्षणादुन्मुखी सा दृशं यावदन्त-
र्न्यधात्तावदासीन्नु पातालमग्ना ।
बभौ नैव यत् साश्रु-विस्फारिताक्षी
हृतालाप-शक्तिर्विधातव्य-मूढा ॥ ४ ॥

तथाहि प्रियं सा ददर्शाङ्कलग्नां
भुजग्रन्थि-बद्धामुपासीनमन्याम् ।
पुरस्तस्य गुर्वी शिलामूर्तिरेका
विरेजेऽन्तिके नव्य-कान्ता-प्रतीका ॥५॥

निशम्य प्रगल्भा निजक्षोभमीषद्
विकारं न कञ्चिद् बहिर्दर्शयन्ती ।
विवेश प्रकोष्ठं लसद्दिव्यमालाऽऽ-
कुलेन्दिन्दिशालिः शनैरिन्दिरेव ॥६॥

प्रिया श्लेषबन्धाद् विमुक्ताय पत्ये
झटित्युद्गताय स्रजं सा व्यतारीत् ॥
ततश्चान्धकारात् परामङ्गनां ता-
मनालोकयन्तीव नाथं जगाद ॥७॥

विधातुः प्रयत्नानुरूप-स्वरूपं
विलोक्याद्भुतं नाथ ! पाषाणमूर्तेः ॥
कियन्नाम तद्रूप-संवादि-शीलं
भवेद् विम्बभूतस्त्रिया इत्यचिन्त्यम् ॥८॥

स्वतन्वा परस्त्रीं तिरोधाय्य तूर्णं
बधूं सान्त्वयिष्यन् पुरःपाणिरासीत् ।
निवृत्य क्षणात् सा परागञ्चितास्या
बभूवाऽथ धृष्टः स तामित्युवाच ॥९॥

क्व नैसर्गिकं ते प्रिये ! कान्तरूपं
क्व निर्जीवमूर्तेरविज्ञात-वध्वाः ।
क्व पातिव्रती ते क्व लीलाऽपरासां
स्वकीया स्वकीया परोढा परोढा ॥१०॥

निशम्याऽथ गेहं गता भूषणानि
व्यपास्याभवन्नित्य-कार्य-प्रसक्ता ।
निशि स्वमिनाऽभ्यर्थिताऽपि स्वमञ्चे
जहौ कन्ययाऽशेत यामद्वयञ्च ॥११॥

अथ क्षोभजालाकुलात्मान्तरङ्गा
निज-स्वास्थ्य-गाम्भीर्यभावादुपेता
तमोनीलवासाः स्फुरद्घर्घरान्तः
स्रवन्ती द्रुतं शिल्पशालां विवेश ॥१२॥

विधृत्य तं विग्रहमुग्रहस्ता
तद्भ्रंश-विभ्रंशित-बाहुयुग्मा ॥
शरावती वोद्धु-श्चण्डवीचिः
पपात हा हन्त ! विरूपिताङ्गी ॥१३॥

कदाचिद् गवाक्षे सुदृश्यास्य-पद्मां
विलोक्याङ्गणात्तामृजुर्बाल-कन्या ।
कराभ्यामुपादाय चुम्बस्व मां मा-
मिति प्रार्थयामास वृत्तानभिज्ञा ॥ १४ ॥

स्थितां सन्निधौ बालिकामुद्भुजां ता-
मभूदक्षमा चुम्बितुं मन्दभाग्या
गलद्बाष्प-दृग्भ्यां पिबन्ती तु वत्सां
कथञ्चिद् विविक्तं व्यधादात्मचित्तम् ॥ १५ ॥

× × ×

# संस्कृताध्यापकेभ्यः—

*अयि मान्याः परिडतपादाः !*

सादरं सप्रणयञ्च श्रीमत्सेवायां समुपसर्पति सुर-सरस्वती-सुप्रभातमिव सुप्रभातम्। सुरभारती-समाश्रयभूतान् श्रीमत एव द्वारीकृत्य संस्कृत-सेवा-सम्पादनयस्य समुचितं सुशकञ्च। यदि भवन्त एव सुप्रभातं नानुग्रहीष्यन्ति, नावलोकयिष्यन्ति, न पठिष्यन्ति, न श्रोष्यन्ति—तदा निष्फल एवारम्भः स्यादस्माकम्। कथंकारञ्च संस्कृतसेवा सुविहिता स्यादिति भवन्त एव रहसि मनः समाधाय भृशं विमृशन्तु।

परं सङ्ग्रन्थन-युगेऽप्यस्मिन् भवन्तः संस्कृत-सभा सम्मेलनादिकं मदिरागारमिव परिहरन्ति, अस्पृश्यानिव च पत्रादीन् समवलोकयन्ति। पत्रमालोक्यैव भवन्तो वदिष्यन्ति यत् " अहो! धनार्जनाय विहितोऽयं प्रपञ्चः। किमेतेनास्माकं स्यात्। व्यर्थसमयव्ययोऽस्य पठने। तत्रापि वार्षिकं मूल्यं दत्त्वाऽस्य व्यर्थपत्रस्य ग्रहणं सर्वथानुचितम्। मध्ये समवरुद्धं न प्रचलति सुप्रभातम्। पण्डितान् भर्त्सयति। सुधारपक्षमालम्बते।"—इत्यादि।

हन्त भोः पुरोभागिनः! रहसि विचारयन्तु, किमेकया मुद्रया तादृशं पत्रं प्रचलितुं शक्नोतिस्म? प्रचारधिया-अर्द्धमूल्येन दीयतेस्म। कियती सम्पत्तिः समर्पिता तदानीं भवद्भिः सुप्रभाताय। संस्कृतभाषा-समुन्नत्यै, संस्कृतविदुषामभ्युदयाय, तत्प्रतिष्ठायै, गौरवाय, राजसम्मानाय, धनप्राप्त्यै, स्वीयं समयं व्ययीकृत्य सपरिश्रमं सचिन्तं प्रयतमानं सुप्रभातं भवतामसहयोगम्, औदासीन्यम्, तिरस्कारम्, परीवादम्, मात्सर्यम्, अपमानञ्च सादरं विषह्य स्व-सञ्चालनार्थं धनप्रदानोदाराणां धनिकानां मोहान्तानां मण्डलेश्वराणाञ्च चाटुकारितां विधाय भवत एव जागरणाय, भवज्जीवनभूताया सुरभारत्याश्च समभ्युदयाय यदि सुस्पष्टमालोचनं विदधाति, तदा किमुद्विजन्ते भवन्तः?

क्षाम्यन्तु विद्वांसः, विदुषामेष स्वभावो यत् परकृतं समीचीनतरमपि कार्यं ते नाभिनन्दन्ति। परप्रदर्शितं श्रेयस्करमपि पन्थानं नानुगच्छन्ति। हितानि, परिणाम-सुखानि, परवचांसि नाकलयन्ति। पथ्यं हितमपि न शृण्वन्ति। एतेन स्वीयां गौरवहानिं मन्यन्ते। सङ्कोचमञ्चन्ति। स्वयञ्च किमपि कर्तुं न प्रभवन्ति। रूप्यकद्वयदातुः कस्यापि श्रेष्ठिनः सविधे सन्ध्यावन्दनादिकृत्यमपि परित्यज्य याममेकं तिष्ठन्ति, स्वीयां निन्दामपि शृण्वन्ति, परं तस्य संस्कृत-पत्रस्य पठने समयहानिं प्रतिष्ठाहानिं च मन्यन्ते; यत्तेषां वेतनवृद्ध्यै प्रवलं प्रयतते, यत् संस्कृतप्रचारोपायान् प्रदर्शयति, यत् संस्कृतज्ञानां जीविकाक्षेत्र-परिवर्द्धनाय जनतामुत्तेजयति, शासकैः सह युद्धयति, यत्संस्कृत शिक्षा-समुद्धाराय, तत्राधिकधनव्ययाय च शासकानुद्बोधयति, यत् संस्कृत-शिक्षा-प्रसाराय घोरतरमान्दोलनं सञ्चालयति, यद् विदुषां गौरव-सम्मान-परिवर्द्धनाय प्रवलं परिश्राम्यति च। अहो व्यामोहः! नैप दोषो युष्माकम्। एतद्धि दौर्भाग्यविजृम्भितं भगवत्या भारत्याः, भगवतः सनातनधर्मस्य च।

अयि मात्सर्य-मग्न-मनसः! व्यर्थमेवैतत् सर्वम्। सङ्घशक्ति-कालोऽयम्। अद्यापि जागृत! शुष्कमभिमानं परित्यज्य सौहार्दं सम्पादयत! पश्यत! सङ्घशक्त्या निम्नश्रेणीस्थाः श्रमजीविनोऽपि विपुलविस्तृतमनन्तशक्तिसम्पन्नं साम्राज्यमप्युद्वेलयन्ति, शासकानां मानभङ्गं क्षणात् कुर्वन्ति। यूयमपि राग-द्वेष-मत्सर्य-वृथाभिमान-परवादादि-कलिधर्मान् दूरीकृत्य परानोन्मुखं धर्मं समाजञ्च रक्षन्तु। स्वमनःकल्पितं वशिष्ठ-वामदेवत्वं स्वगृहे स्थापयन्तु। समाजे, राष्ट्रे, धर्मे, जनतासु च नास्ति भवतां गौरव-स्थानम्। भवतां लोभमस्थिरतां विवेक-विकलतामाकलय्य प्रवलसनातनधर्मावलम्बिनोऽपि, भक्ता अपि भवतष्ट टकादासादिशब्दैराक्रोशन्ति। शनैः शनैर्नैराश्यं गच्छन्ति भवन्तः। नायं व्यर्थदम्भस्यावसरः!

साम्प्रतं न्यूनतोऽपि सहानुभूतिमेव स्थापयन्तु स्वोन्नतिकार्येषु। पत्राणि, भाषणानि, आन्दोलनानि, स्वाधिकार-संरक्षणाय प्रयतनम्—इत्यादीन्येवाधुनिक-युगे समुन्नतिसाधनानि सन्ति। यदि केचन तदर्थं प्रयताः सन्ति, तदा तैः सह सौहार्दम्, स्नेहम्, स्वल्पतमोऽपि सहयोग-इति तु कर्तव्यमेव श्रीमताम्। यदि आन्दोलन-कारिणो दैववशात् सफला भविष्यन्ति चेत् सर्वेऽपि संस्कृतज्ञास्तत्फलभाजो

भविष्यन्ति । यदि भवन्तो विविध-व्याज-प्रदर्शनद्वारा दूरे स्थास्यन्ति, तदापि सुप्रभातस्य का नाम हानिः स्यात् ? तस्य क्षेत्रं विपुलतरमस्ति ।

संस्कृत-प्रणयिन आँग्लाध्यापकाश्छात्राः, आर्यसामाजिकाः, कांग्रेस-मतावलम्बिनो महाशयाः सत्यपि सिद्धान्त-विरोधे केवलं संस्कृतोन्नतिधिया सुप्रभात-साहाय्ये सर्वथा सर्वदा बद्ध-परिकराः सन्ति। परं येषां जीवनं संस्कृतेनैव, येषामभ्युदयाय प्रवृत्तं सुप्रभातम्, ते यूयमुदासीनाः सन्ति चेत् कस्यैषा हानिरिति काल एव कथयिष्यति ।

यदि भवतां हृदय-कुटीर-कोणे प्रस्फुरति स्वावमानवह्नेः निर्वाणोन्मुखः स्फुलिङ्गस्तदा मूल्यमन्तरापि दीयमानं सुप्रभातं पठन्तु, छात्रांश्च पठने प्रेरयन्तु, स्वविद्यालयेष्वस्य समानयनाय प्रयतन्ताम् । स्वीयान् विचारान् प्रेषयन्तु । सत्परामर्शं ददतु । अस्माकं परिश्रमं सफलयन्तु । सङ्घशक्ति-सम्पादनद्वारा स्वयञ्च सफला भवन्तु ।

केषाञ्चन मनसि खटखटायते यत् पत्रं प्रचलिष्यति न वा ? पूर्वमपि बहुवारमवरुद्धमिति । तत्कारणमिदमेवासीत् यदधिक-संख्यायां संस्कृतज्ञाः सुप्रभातं पठन्तु, ते निर्धनाः भवन्ति, प्रायः एषा क्षतिपूर्त्तिः संस्कृतप्रणयिभ्यो धनिकेभ्यः विहिता स्यादिति एकयैव मुद्रया दीयतेस्म । परमस्यां नीतौ सञ्चालकानां शक्तिर्धनार्जन एव व्ययीभवतिस्म । पत्र-संपादनं समये तत्प्रकाशनञ्च दुष्करमभूत् । तदानीं केचन संपादने, अन्ये च धनार्जने संलग्ना आसन् । परं तेषु केचन दिवङ्गताः, केचन स्वकुटुम्बचिन्ता-संलग्ना इति पत्रस्यावरोधः सञ्जातः ।

अस्मिन् महामहर्घता-समये दुष्करमेतत् साहसम् । अतः पत्रमिदं व्यापारदृष्ट्या सञ्चालितं कैश्चन संस्कृत-प्रणयिभिः ।

एतद् विज्ञाय भवतां मनसि सन्तोषो भवतु यदिदानीं सुप्रभातम्; एकलक्षमूलधन-संस्थापितया महत्या प्रकाशन-संस्थया स्वायत्तीकृतम्, अचिरादेव स्वकीय-यन्त्रालयात् प्रकाश्यमानं न कदापि निरुद्धं स्यात् । अत्रापि केचन मुद्राचतुष्टयं त्रयञ्चेति मूल्य—द्वयं दृष्ट्वा छात्रमूल्येनैव जिघृक्षवो भविष्यन्ति-इत्यनुमिनुमः । तेषां कृते वयं मुद्रात्रयेणैव दातुं प्रयताः स्मः । यन्मूल्यं पुस्तकालयानां कृते तदेव संस्कृताध्यापकानां कृतेऽपि भविष्यति । यत इमेऽपि वराकाः संस्कृतस्य जङ्गम-पुस्तकालया एव सन्ति । पूर्वमपि बहवो विद्वांसश्छात्रमूल्येनैव गृह्णन्तिस्म छात्रनाम्ना, पुत्रनाम्ना वा । इदानीन्तु वयं सुस्पष्टतया क्षतिं बोद्धुं समुद्युक्ताः स्मः । यतः सुप्रभात-पत्र-द्वारा न वयं धनार्जनमभिलषामः । तदर्थं यंत्रालय-पुस्तक-पञ्चाङ्गादि-प्रकाशनानि सन्त्येव । अथापि ये मुद्रा त्रयमपि दातुं नेच्छन्ति, तेभ्यो विना मूल्यं वितरिष्यामः ।

मन्ये विद्वांसः, अस्माकं कटुसत्यमालोच्य क्षमाप्रदानं करिष्यन्ति । एतन्न विस्मर्त्तव्यं तैः—

"कटुकस्य च पथ्यस्य श्रोता वक्ता च दुर्लभः ।"

किमधिकम् । पुनरपि प्रार्थयामः—

दानार्थिनो मधुकरा यदि कर्णतालै—
दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुग-मण्डन-हानिरेषा
भृङ्गाः पुनर्विकच-पद्मवने वसन्ति ।

---

## गीतम्

नैष सामयिको विलापः !
शोक-शय्या-सन्निषण्णः—
हन्त ! कथमेवं विषण्णः ?
ब्रूहि, रोदिषि रे, कथम् ?
कथमीदृशस्ते तरुण-तापः ?
नैष सामयिको विलापः !
हा ! शिशौ त्वयि या कृताशा,
सत्यमेव वृथा गता सा,
पुत्र, सम्प्रति यत्त्वमेवम्—
भवसि शोषित-शाप-पापः !
नैष सामयिको विलापः !
त्वादृशां जन्मापि लोके—
कथमभून्नाहं विलोके,
मुञ्चतस्तरुणे वयसि तव—
लोचने यदि चञ्चलापः !
नैष सामयिको विलापः ?

—रामनाथ पाठकः 'प्रणयी'
साहित्यायुर्वेद-व्याकरणाचार्यः

# भारत-विजय-नाटकम् ।

प्रणेता—

महामहोपाध्यायः श्रीमथुराप्रसाद दीक्षितः

## [ प्रथमोऽङ्कः ]

तृतीयाङ्कतोऽनुवृत्तम्

वैदेशिकवैद्यः[१]—( मनसि ) अस्त्येनं स्वायत्तीकर्त्तुमयमवसरः ।

( प्रकाशम् )—बङ्गप्रान्ते मम स्थित्यर्थं किञ्चित्स्थानं प्रदेयम् । यत्र गृहं निर्माय स्थास्यामि । मम व्यापाररक्षार्थं साहाय्यं च देयम् । अहमपि यथावसरं ते साहाय्यं करिष्ये ।

भारतराजः—अवश्यमेव ते व्यापारसाहाय्यं करिष्यामि, यदभिलषसि तत्कथय ।

वैदेशिकवैद्यः—इदं तावद्भवेत् :—

न विक्रयं मामतिरिच्य वाससः
प्रजासु कश्चिच्चरितुं समीहताम् ।
न राजलाभो मम विक्रय-क्रये
भवेत्क्वचित्किञ्चिदपीति पालयेः ॥८॥

भारतराजः—अस्तु । निश्चीयतामेतत्, न त्वामतिरिच्य कश्चिदपि वसनविक्रेता भविष्यति ।

१—अग्निदग्धायाः शाहजहाँकुमारिकाया औषधं गेबरियल्बाऊटनेन विहितम् । सर थामस रो-महोदयेन विहितमित्यपरे । आरोग्यं जातम् । पुनर्वङ्गाधिपतेः शाहजहाँ राजकुमार-शुजापत्न्या अपि औषधमनेनैव कृतम् । आरोग्यं च प्राप्तम् । पुनः फर्रुखशियर-सम्राज आरोग्यं सर्जनविलियम हेमिल्टन्-द्वारा जातम् ।

( इति स्वमुद्रयाऽङ्कितं विधाय प्रमाणपत्रं ददाति । स पत्रं गृहीत्वा निष्क्रामति । )

पटीक्षेपः

( ततः प्रविशति पटं विक्रेतुं क्रेतुं च कश्चित्तन्तुवायः, श्रेष्ठिनौ च )

श्रेष्ठी—तन्तुवाय ! किमस्य पटस्य मूल्यम् ।

तन्तुवायः—विंशत्यधिकं शतम् ।

श्रेष्ठी—नहि नहि किञ्चिदधिकमेतत् । शतं मूल्यं गृहाण ।

( ततः प्रविशति सानुचरो वैदेशिको गौराङ्गः । स राजमुद्राङ्कितं प्रमाणपत्रं दर्शयित्वा श्रेष्ठिनौ तन्तुवायं च भर्त्सयति ) ।

गौराङ्गः—तन्तुवाय ! पश्य राजमुद्राङ्कितं प्रमाणपत्रम् । न त्वं विक्रेतुं प्रभुः ।

तन्तु०—किमहमेनं पटं कुर्याम् ।

गौराङ्गः—इमं पटं मह्यं देहि । अहमेनं पटं विक्रेष्ये । गृहाण इमाः पञ्चाशन्मुद्राः ।

( इति पञ्चाशन्मुद्रा ददाति ) ।

तन्तु०—(साश्चर्यमिव पश्यन्) किमिदं विधीयते ? कथमेतेन मम कुटुम्बस्य भरण-पोषणे भविष्यतः । षण्मासैः कथमपि रात्रिंदिवपरिश्रमेण निष्पादितोऽयं पटः ।

गौराङ्गः—इमा मुद्रा गृहीष्व, नाहं किमपि जानामि, मौनमास्ताम्, गच्छ, अपरं पटं च निर्माय मत्समीप एवानय ।

युष्मत्कुटुम्बरक्षायै न प्रतिज्ञां करोम्यहम् ।
कथं रक्षा भवेदेतत् त्वं जानीहि व्रजाधुना ॥ ९ ॥

( स मुद्रा न गृह्णाति । अथापरस्तन्तुवायः पटविक्रयार्थं प्रविश्य पटक्रयार्थं श्रेष्ठिनं लक्षयति ) ।

तन्तु०—श्रेष्ठिन्, गृहाण पटम् ।

श्रेष्ठी—( भ्रूसंज्ञया ) अयं गृह्णातु । नाहं ग्रहीतुं शक्नोमि ।

तन्तु०--कस्मात् ?

श्रेष्ठी—अस्य समीपे राज्ञः प्रमाणपत्रम्। अयमेव ग्रहीष्यति नापरः।

गौराङ्गः--इत आगच्छ। ( तन्तुवायमाह्वयति, प्रमाणपत्रं दर्शयति, पटं च गृह्णाति)।

गृहाणेमाश्चत्वारिंशन्मुद्राः। (इति मुद्रा ददाति )

तन्तु०—महाराज ! किमिदं विधीयते ? किमयमेव न्यायः ?

गौराङ्गः--गच्छ, नाहं न्यायमन्यायं वा जानामि। यन्मया निश्चीयते दीयते च तदेव मूल्यम्। (उभौ-तद्दत्तमेव मूल्यं गृह्णीतः )

उभौ तन्तुवायौ। नावामतः परं पटं निर्मास्यावः। ( इत्युक्त्वा गच्छतः )।

गौराङ्गः—(अनुचरमुद्दिश्य) एताभ्यां बहवो मुद्रा ग्रहीष्ये। अनिर्वचनीयमेतत्पटयोः सौन्दर्यम्। अतिसूक्ष्मतरोऽयं पटः। पश्य पञ्चषैरपि पटलैः परिवेष्टितमपटमेव प्रतीयतेऽङ्गम्। आः कथमेतत्समक्षमस्मद्देशीयानां पटानां विक्रयो भविष्यति ? इति हतमस्मद्देशीयं वाणिज्यम्। ( पुनर्विचिन्त्य )।

एतत्सूक्ष्मपटस्य निर्मितिविधेरुन्मूलनेऽहं क्षमो
निर्मातॄनपि दण्डताडनपरस्तान् मोचयिष्याम्यतः।
कौशल्यं ह्रियतामधस्तदधिकं वाणिज्यमभ्युन्नतं
देशस्यास्य समुन्नतिः क्षितितले क्षिप्रं समाधीयताम् ॥

दौवारिकः-( प्रविश्य ) ( सलाम करता हुआ )

(१) जय हो

गौराङ्गः—सत्वरं त्रिचतुरांस्तन्तुवायान् समानय।

अनुचरः—जो हुकुम। (२) ( वहिर्गत्वा चतुरस्तन्तुवायान् समानीय प्रविशति)।

(१) जयतु २ देवः। (२) यद् देव आज्ञापयति।

गौराङ्गः--(तन्तुवायानुद्दिश्य) भोः ! निर्मितान् पटान् मह्यं दत्त।

तन्तुवायः—न वयमयोग्यमूल्यत्वात् पटान् निर्मामः।

गौराङ्गः--अस्तु शोभनं पटं निर्माय मह्यं दत्त। योग्यं मूल्यं भविष्यति। इमा गृहाण मुद्राः। ( इति पञ्चदश मुद्रा ददाति, ते न गृह्णन्ति। हठात्तेषां वसने निबध्य गलहस्तेन तान् निष्काशयति )।

तन्तु०--( द्वारि स्थिताः ) महाराज ! न वयं शतमूल्यं पटं पञ्चदशभिरेव मुद्राभिर्निर्मास्यामः।

गौराङ्गः—( साक्षेपम् ) क इमे कोलाहलं कुर्वन्ति। ( द्वारिगत्वा सामर्षम्, कशया तांस्ताडयति ) गच्छत, अपरं शोभनं पटं निर्माय समानयत। ( ते गच्छन्ति )।

गौराङ्गः----(अनुचरमुद्दिश्य ) भोः ! अपराँस्त्रिचतुरांस्तन्तुवायानानय।

( अनुचरो निर्गत्य, चतुरस्तन्तुवायानानीय ) महाराज ! एते समागताः।

गौराङ्गः--( तन्तुवायानभिलक्ष्य ) निर्मितान् कौशेयपटान् मह्यं दत्त।

तन्तु०—न वयं पटान्निर्मामः।

गौराङ्गः--मिथ्यैतत्, यूयं पटान् निर्माय श्रेष्ठिनां सविधे विक्रीणीध्वे।

तन्तु०—यदि मिथ्या भवेदत्र न स्वर्गः स्यात्कदाचन।
सर्वपापैश्च लिप्येम यद्यसत्यं भवेदिदम् ॥११॥

गौराङ्गः—नाहमिदं जानामि। जिह्वयैव तदुक्तम्, जिह्वयैवेदमुच्यते। इति सर्वं मम प्रलम्भार्थं मिथ्यैव। ( सर्वान् कशया ताडितुं भर्त्सयति )।

सर्वे०—न वयं निमर्मामः ( बद्धहस्तपुटाः कम्पते।

गौराङ्गः—कथमत्र प्रत्ययः स्यात् ?

सर्वे—अस्माकमङ्गुष्ठच्छेदनेन तु प्रत्ययो भविष्यति।

गौराङ्गः—युज्येत चैवम्।

( सर्वे तन्तुवायाः—स्वं स्वमङ्गुष्ठं कर्तयन्ति ) यथा युष्माकं प्रत्ययः स्यात्तथैव विधास्यामः। अतः परं कृषिं करिष्यामः।

गौराङ्गः—तथास्तु। युक्तं जातम्।( इति वदन्निष्क्रान्तः सानुचरो वैदेशिको गौराङ्गः ) ( ततः प्रविशति भारतमाता सखीसहिता, सर्वे तन्तुवाया वेदनया खिन्ना भारतमातरं प्रणम्य निर्गच्छन्ति )।

भारतमाता—हा हा किं मम पुत्रकेषु विहितं !
हा प्रत्ययात् किं कृतम् ?
हा देशस्य दशा किमस्य
भविता व्यापारनाशो गतः।
हा दीनानपि वित्त-लोलुपतया
निघ्नन्त्यमी मत्सुतान्—
सर्वे मे प्रलयँ गताः सुतनया
निर्वीरसूरस्म्यहम् ॥१२॥

( स्वकीयमुरस्ताडयति )।

ने० सखी—( गृह्णती ) १ कित इस समय बंगाल को निमित्ती अपनी छाती को पिटत छेऊ। तिमे वीर को जन्मावने वाली हउ। तिमले नईं रघु नहुष सगर हरुको पैदा करेउ। तिलक लाजपतिराय जवाहरलाल गांधी हरुको उत्पन्न गरने छउ। यही दास खुदीराम सुभाषचन्द अब्बुलकलाम आजाद वगैरह वीर तिमेर हेरू सुपुत्र होने छन।

भार०—हला ! कथं त्वयैतदवगतम्।
एते सुपुत्रा ममौरसा भविष्यन्ति ?

ने० सखी—(२) जोतिषशास्त्र का बल बाट हमीले जान्दा छन। सूर्यसिद्धान्त-परासर-जैमिनी-सूत्र वगैरह हमले संपूर्ण जोतिषशास्त्र पढ़ेम।

भार०—तव वचनप्रत्ययादाश्वसिताऽस्मि।

( ततः प्रविशति सानुचरो वैदेशिको गौराङ्गः )
( सखी सहिता भारतमाता अन्तर्हिता तिष्ठति )।

गौराङ्गः—( इतस्ततोऽवलोक्य ) दौवारिक ! कथमद्यापि न ते पटं निर्मायानीतवन्तः। तान् सत्वरं समानयत।

दौवा०—(३) जो हुकुम। ( ग्राहितमूल्याँस्तांस्तन्तुवायानानयति )।

गौराङ्गः—(सक्रोधम्) कथं न कौशेयपटा निर्मायानीताः ?

तन्तु०—न वयं पञ्चदशभिर्मुद्राभिर्निर्मातुं पारयामः। गृहाण स्वकीया मुद्राः।

गौराङ्गः—चक्रवृद्ध्या त्रिगुणिता ददत।

तन्तु०—न वयं तावतीर्दातुं पारयामः।

गौराङ्गः—( कशया सर्वांस्ताडयति )।

तन्तु०—( बद्धाञ्जलिपुटाः) महाराज ! एतत्प्रतिनिधित्वेन समस्तान्यपि मम वस्तूनि गृहाण।

गौराङ्गः—कियन्मूल्यं वो वस्तूनाम्।

एकस्तन्तु०—विंशतिर्मम वस्तूनां मूल्यम्।

अपरे—पञ्चविंशतिरस्माकं वस्तूनां मूल्यम्।

गौराङ्गः—अन्यन्।

तन्तु०—इमाः स्वकीया मुद्रा गृहाण ( इति सर्वे गृहीतधनं ददति )

---

(१) सं०—किन्तु इदानीं बङ्गदेशस्य कृते आत्मनो वक्षस्थलं ताडयसि। भवती वीरप्रसविनी। युष्माभिरेव रघु-नहुष-सगर-प्रभृतय उत्पादिताः। उत्पादयिष्यन्ते च तिलक-लाजपति-जवाहिरलाल गाँधी प्रभृतयः। इहैव दासखुदीरामसुभाषचन्द्राब्बुलकलामांजादादयो वीरा युष्माकं सुपुत्रा भविष्यन्ति।

(२) ज्यौतिषशास्त्रबलेन वयं जानीमः। सूर्यसिद्धान्त-पराशर—जैमिनीसूत्रप्रभृतिकमस्माभिः संपूर्णं ज्यौतिषशास्त्रं पठितम्।

(३) यद्देव आज्ञापयति।

गौराङ्गः—दौवारिक ! एषां गृहं गत्वा सर्वाण्यप्येषां वस्तूनि गृहाण।

दौवारिकः—एवमेव करिष्यामि।

गौराङ्गः—( तन्तुवायानभिलक्ष्य ) चक्रवृद्ध्या संजातमपरमवशिष्टं धनं दत्त।

तन्तुः—नातः परं दातुं शक्नुमः। अतः परं किञ्चिदपि नास्माकं सविधे।

गौराङ्गः—( कशया ताँस्ताडयति ) अवशिष्टं धनं दत्त। यूयं पटान्निर्माय श्रेष्ठिनां सविधे दत्थ।

तन्तु०—न वयं पटान्निर्मामः।

गौराङ्गः—कथमत्र प्रत्ययः ?

तन्तु०—( परस्परमभिलक्ष्य ) अस्माकमङ्गुष्ठच्छेदनेन तु प्रत्ययो भविष्यति।

गौराङ्गः—एतद् युज्यते। ( सर्वे स्वं स्वमङ्गुष्ठं छित्वा निर्गच्छन्ति )।

व्यापारसंपदः सर्वाः समूलोन्मूलिता हठात्।
भारतीयानिमान् सर्वानथ दासान्विदध्महे ॥१३॥

( निर्गच्छति सानुचरो गौराङ्गः ) (पुनर्भारतमाता, उपेत्य, इतस्ततोऽवलोक्य च )।

भार०—हलासखि !
हा हा मयैव विहितः प्रथमापराधो
यत्प्रत्ययादिह सुखेन निवासितोऽसौ।
तस्यैतदेव फलमस्ति परं प्रपन्ना-
यस्मान्मदीयतनया विपदं प्रयान्ति ॥१४॥

( इति दुःखादुच्छ्वसिति )

पटाक्षेपः।

---

# अहो विरक्तानां व्यामोहः !

*शङ्कराचार्याणां दुर्व्यवस्था*

[ गतज्येष्ठमासे धर्मसङ्घ-पञ्चममहाधिवेशनसभापतित्वं विधातुं समागताः शारदापीठाधीश्वराः श्रीमदभिनव-सच्चिदानन्दतीर्थ-स्वामिमहोदयास्तत्प्रसङ्गेन वाराणसीं समागमन्। अत्र तेषां भूयान् समादरः समजनि। विद्वद्भिर्हस्ताक्षराण्यपि कृतानि। एवमेव पूर्वं श्रीमतां शारदापीठाधीश्वराणां श्रीमद्राजराजेश्वराश्रमस्वामिपादानामपि-अभिनन्दनादिकमभूत् हस्ताक्षराणि च। अनयोर्द्वयोरप्याचार्ययोः शारदापीठाधिकाराय न्यायालये व्यवहारः प्रचलति। अत्र कैश्चन हिन्दी-गुर्जर-संस्कृतभाषापत्रैः-उभयत्र हस्ताक्षरं कृतवतां काशीस्थ-विदुषां महती निन्दा कृता। अन्यैरपि गुर्जर-देशीयैस्तत् पक्षपातिभिः सनातनधर्मावलम्बिभिः पण्डितैश्च। सुप्रभातेनापि द्वयोरभिनन्दनं कृतम्। तदपि तेषां कोपभाजनमभूत्। इत्ययं विषयः सुप्रभातस्यानभिमतोऽपि विवशतया विशदीक्रियते—सम्पादकः ]।

भारतवर्षे शाङ्कर-वैष्णव-भागवत-रामानुज-माध्व-निम्बार्क-वल्लभ-रामानन्दादि-विविध-साम्प्रदायिकानां यत्रतत्राचार्यपीठाः सन्ति। प्रायः सर्वत्र पीठेषु तत्तत्साम्प्रदायिकैः स्वमर्यादानुकूलं पीठानां संरक्षणं क्रियते। तत्राचार्यपरम्परा नियमिता नियन्त्रिता च प्रचलति। परं सर्वतः प्राचीनानां महत्वपूर्णानाञ्च श्रीशङ्कराचार्य-पीठानां महती दुरवस्था समालोक्यते।

प्रधानतः श्रीमद्भगवत्पादैर्भाष्यकारैश्चत्वार एव पीठाश्चतुर्दिक्षु संस्थापिता आसन्। तेषु मैसूरराज्याधीनस्य शृङ्गेरी-पीठस्याचार्य-परम्परा, मर्यादा चाक्षुण्णा नियमिता च प्रचलति। उत्तराम्नाय-वदरिकाश्रमस्थ-जोशीमठस्य-परम्परा परःशतेभ्यो वर्षेभ्यो विच्छिन्ना टेहरी-गढवालराज्याधीना विद्यते। पूर्वाम्नाय-जगन्नाथपुरीस्थ-गोवर्द्धनमठस्य व्यवस्थाऽपि ब्रह्मीभूतानां श्रीमन्मधुसूदनतीर्थस्वामिनां कैवल्यानन्तरं विकृतप्रायैवासीत्। परं श्रीमद्भिर्भारतीकृष्ण-

तीर्थस्वामिभिस्तत्राक्रमणं विधाय तस्योद्धारः कृतः, परं न जाने ते तत्र कथं न तिष्ठन्ति। इतस्ततः परिभ्रमन्ति। कमपि खरे-महाशयं शिष्यं विधाय तत्र नियोक्तुमिच्छन्ति। अपरे च काशीस्थाः श्रीपुरुषोत्तमतीर्थस्वामिनस्तत्र स्वाधिकाराय बद्धपरिकराः श्रूयन्ते। श्रूयते च तत्र स्वामिनां किमपि गुप्तभियोगादिकं प्रचलति, येन तद्विषये यतस्ततो निन्दैव भवति श्रीमदाचार्यपीठस्य।

एवं जोशीमठ-परम्परां पुनः प्रवर्त्तितुं भारतधर्म-महामण्डलेन श्रीमन्तो ब्रह्मानन्द-स्वामिपादाः प्रथमशङ्कराचार्यत्वेन नियुक्ताः। परन्तेऽपीतस्ततः आहिण्डमाना अस्थिराः, टेहरी-राज्येनानङ्गीकृता एवेति समाकर्णयामः।

एवं पश्चिमाम्नाय-द्वारकापुरीस्थ-शारदामठेऽपि कियतः कालात महान् विवादः प्रचलति। तस्य पीठस्य व्यवस्था बडोदरा-राज्याधीना विद्यते। बडोदरा-नरेश्वराश्च समाज-सुधार-पक्षपातिनः सन्ति। अतस्तैः सह तत्कालीन-पीठाधीश्वराणां श्रीमन्माधवतीर्थ-स्वामिनां धार्मिको विवादः संवृत्तः, येन ते बडोदरा-राज्यं परित्यज्य डाकोर-नाम्नि स्थाने स्वीयमावासमकल्पयन्। ब्रह्मीभूतेषु तेषु तच्छिष्याः श्रीमद्राजराजेश्वराश्रम-स्वामिनस्तदुत्तराधिकाराय प्रायतन्त। परं राज्येन तत्र विविधभाषा-विशारदा महाविद्वांसः श्रीशान्त्यानन्दस्वामिनः संस्थापिताः, इतश्च धार्मिकजनतया श्रीराजराजेश्वराश्रमस्वामिनः शारदापीठाधिकृतत्वेन स्वीकृताः। बडोदरा-राज्येन सह तेषां न्यायालयेऽभियोगश्च प्रचलितः। नडियाद-न्यायालये पराजिताः श्रीराजराजेश्वरस्वामिनो मोहमयीस्थ उच्चन्यायालये प्रार्थनां कृत्वा तत्राभियोगं चालयन्तिस्म धार्मिकजनता-प्रदत्तेन धनेन। एतदभ्यन्तरं ब्रह्मीभूतेषु श्रीशान्त्यानन्द-महोदयेषु तत्र श्रीचन्द्रशेखराश्रमस्वामिनो नियुक्ताः, तेषु च ब्रह्मीभूतेषु वर्तमानाः श्रीमदभिनव-सच्चिदानन्द-तीर्थ-स्वामिनः साम्प्रतमभिषिक्ताः।

श्रीमद्राजराजेश्वराश्रमस्वामिनश्च मोहमयी-न्यायालयात् पराजिताः। एवमिदानीं यावत् बहुभ्यो वर्षेभ्यः जनतासु, भारतवर्षे यत्रतत्र धार्मिक-समारोहेषु, वाराणस्याञ्च श्रीराजराजेश्वराश्रम-स्वामिन एव तत्पीठाधीश्वरत्वेन सुचिरं प्रसिद्धाः सन्मानिताश्चाभवन्। काशीस्थैर्विद्वद्भिर्बहुवारं ते समभिनन्दिताः, स्वीयैः हस्ताक्षरैश्च तेषामाचार्यत्वं स्वीकृतम्। परं न्यायालयस्तद्-विपक्ष एवाभूत्।

एतस्मिन्नन्तरे ज्येष्ठमासे धर्मसङ्घ-पञ्चममहाधिवेशनावसरे सभापतित्वेन निमन्त्रिताः श्रीमदभिनव-सच्चिदानन्दतीर्थमहोदया वाराणस्यां समागताः। एतेषां विद्वत्त्वं भाषण-पाटवं नववयस्कतां महोत्साहताञ्चालोक्य, तेषाञ्च वृद्धस्वामिनां न्यायालयात् पराजयं समाकर्ण्य काशीस्थैर्विद्वद्भिरेतेषां पीठाधिपतित्वमुररीकृतम्, सादरञ्च समभिनन्दिता इमे।

विषयममुमवलम्ब्य वृद्धस्वामिपक्षपातिभिः कैश्चन पण्डितैरेतेषां विरोधः कृतः, तत्पक्षपातिभिः पत्रैश्च काशीस्थ-पण्डितानां टकादासादिशब्दैर्महती भर्त्सना सम्पादिता। अस्माकमपि मित्रैः क्रूरतमैः शब्दैरस्माकं सुप्रभातस्य च निन्दा कृता। बहवो लेखाः प्रकाशनार्थं समागताश्च सन्ति।

अत्रास्माकं किमपि स्वल्पतरं वक्तव्यमस्ति। यत् काशीस्थैर्विद्वद्भिर्बहुशः श्रीमद्राजराजेश्वराश्रमस्वामिनामभिनन्दनं विहितम्, विधातुं प्रयताश्च सन्ति। ते सदाचाराः, तपस्विनः, वयोवृद्धाः, पूजार्हाः, जनता-शङ्कराचार्याः सन्त्येव। नात्र कस्यापि वैमत्यम्। परमिदानीन्ते जराजर्जरिताः सञ्जाताः। न्यायालयश्च तेषां विपक्षः। यदि ते प्रीवी-कौन्सिल-न्यायालये गमिष्यन्ति, तदा तत्रापि वर्षचतुष्टयं पञ्चकं वा लगिष्यति। तावत्तेषां जीवनं स्थास्यति न वेति सन्देह एव।

शारदापीठे गायकवाड-नरेश्वराः कमप्याचार्यं स्थापयिष्यन्त्येव। जनताया बहुमतमुभयपक्षे भविष्यति। यतस्तत्र नियामक एव कश्चन नास्ति। एवं विवादस्य कलहस्य चोपशमः कदापि न भविष्यति। प्रत्युत शङ्कराचार्याणां विषये जनतायाः श्रद्धा-विघात एव स्यात्। जनता-श्रोत्राणि साम्प्रतं राजनीति-दुन्दुभिनादेन पूर्णानि साधारणधर्मस्य वार्तामपि श्रोतुं न समर्थानि, का कथा शङ्कराचार्याणाम्?

यदि धर्मदृष्ट्या विलोक्यते चेत् सर्वस्वत्यागिनो दण्डिनः, स्वामिनः, आचार्याश्च परस्परं कलहायमानाः पङ्कप्रक्षेपं कुर्वन्ति, केवलं सिंहासनैषणया विधर्मिभ्यो वैदेशिकेभ्यश्च न्याय-भिक्षामटन्तो जनताधनं न्यायालयादिषु दुर्व्ययीकुर्वन्ति।

देश-काल-समाज-प्रताडिताः, पठनपाठनमन्तरा नान्यत् कार्यं कर्तुं क्षमाः, ऋजुबुद्धयः, स्वकुटुम्ब-पोषण-भार-भुग्नाः वराकाः पण्डितास्तु भवद्भिर्दशभिः पञ्चभिर्वा मुद्राभिः हस्ताक्षराणि कारयित्वा-आजीवनं स्वायत्तीक्रियन्ते, वन्धकीक्रियन्ते, स्वार्थहानिमालोक्य तिरस्क्रियन्ते च । अधार्मिकाः, मर्यादा-भञ्जकाः, अर्थलोलुपाः, अप्रामाणिकाश्च गण्यन्ते ।

परमस्माकं धर्माचार्याणां, त्यक्तैषणात्रयाणां, धृत-दण्डानां शिखा-सूत्रपरित्यागिनां कामिनी-काञ्चनदर्शनमपि परिहरतां विरक्तानां का दशा वर्वर्ति—इत्यपि विचारणीयं परोपदेशकुशलैस्तत्पिण्डपूरित-तुण्डैः । हन्त भोः ! एतेषां विरक्तानां सर्वाऽपि चर्या राज्ञामिव दृश्यते । यमनियमाद्यष्टाङ्गयोगानुष्ठान--निष्ठादि--विविध--लम्बायमान-विशेषणावच्छिन्ना आचार्यपादाः, न्यायालय-( कचहरी ) धनालय-( बैंक )-कार्यालय-( आफिस )-भूमि-भवनादिव्यवहारनिष्ठाः समालोक्यन्ते । परमहंस-परिव्राजकाचार्यवर्याः सोपधान-तूलिका-समलंकृत-सिंहासनाधिष्ठिता दृश्यन्ते, भिक्षाटनोचिताः कौपीनधारिणः कौशेयाम्बर-परिवृताः द्वारपाल-चारण-वन्दि–भृत्यामात्यादि–राजोचिताचार-विचार–व्यवहार-परायणाः सन्ति, कामिनी-काञ्चन-परित्याग-कृतप्रतिज्ञा अहर्निशं तासु तेषु च आपादमस्तकं निमग्नाः समालोक्यन्ते। किमेतत् विरक्तधर्मोचितम् ? भगवद्भाष्यकार-निबद्ध-मर्यादानुकूलम् ? वेदशास्त्र-विहित-यतिधर्मानुरूपं वा ?

हन्तभोः ! त्यक्तैषणात्रया धर्माचार्याः सिंहासनाधिरोहणाय किं किं न कुर्वन्ति ?

सर्वप्रथमं विदेशिशासकानां विधर्मिन्यायाधीशानां शरणं गत्वा स्वीयं न्यायं कारयन्ति । को न जानाति मूर्खोऽपि यत् न्यायालये सत्यस्य स्वप्नमेव नास्ति । असत्यमन्तरा, कपटं विना ब्रिटिश-न्यायालयेभ्यो विजयः कथमपि नास्ति । अस्माकं न्यायाधीशाः धर्माचार्याः स्वीयं न्यायमन्येभ्यो वाञ्छन्तीति किं न हृदयं विदीर्य्यते सनातनधर्माभिमानिनाम् !!

एत एव धर्माचार्याः समधिक-धन-तृष्णया पीठात् पीठान्तरम्, सम्प्रदायात् सम्प्रदायान्तरम्, आचार्यादाचार्यान्तरं स्वीकुर्वन्ति । सिंहासनाधिकारम् राजपुत्रा इव दुरितैरपि कर्तुमात्मसात् प्रयतन्ते । न वयं तेषां नामोद्घाटनं कुर्मः । परं प्रायः सर्वेऽपि जानन्ति । किमेतदेव विरक्तानां कर्तव्यम् ? तत्र किं दृष्टिनिक्षेपः क्रियते समालोचकैः शङ्कराचार्य-भक्तैः, पत्रैर्वा !

एवं वस्तुतो विनष्टा पीठानां मर्यादा । जनताऽपि विद्यते प्रबुद्धा । एतत्सर्वमुपद्रवमालोच्य न केऽपि श्रद्धया समवलोकयन्त्याचार्यान् । आसन् पुरा वाराणस्यां पूज्यचरणाः दण्डिनः स्वामि-विशुद्धानन्दपादाः, प्रत्यहं सहस्रशो धनं तेषां पार्श्वे समागच्छति स्म । प्रत्यहञ्च ते तद्धनं विद्वद्भ्यो ब्राह्मणेभ्यो याचकेभ्यश्च वितीर्य, अशौचस्तिका रात्रौ शेरते स्म । साम्प्रतमपि सन्ति सनातनजनतायाः परमश्रद्धा-भाजनभूताः पूज्यपादाः कृष्णबोधाश्रमस्वामिनः, श्रीकरपात्रि-स्वामिनश्च येषां चरणेषु लक्षशो धनानि लुण्ठन्ति, परन्तु कौपीनमात्रपरिच्छदाः केवलं ब्राह्मणेभ्य एव भिक्षां गृह्णन्ति । एतल्लक्षणं विरक्तानाम्, एष आदर्शो भगवच्छङ्करपादानाम्, एतदेव स्वरूपं दण्डिनाम् । तथापि तेषां विषये जनता क्षोद-क्षेमं करोत्येव । सत्स्वेतादृशेषु विरक्तेषु गृहस्थेभ्योऽप्यधिकं रक्तानां आदर्श-पतितानाम्, त्यागतपःस्वाध्यायरहितानाम्, भोगैषिणां धर्माचार्याणां तु कथैव का ?

एवं सत्यपि पीठ-विप्लवे काशीस्थैर्विद्वद्भिरभियोग-रहस्यादि-प्रपञ्चानभिज्ञैः, श्रीधर्मसङ्घस्य, वर्णाश्रमस्वराज्य-सङ्घस्य, भारतधर्म-महामण्डलस्य, अन्येषाञ्च प्रोफेसर-दुरकाल-प्रभृति-सनातनधर्मस्तम्भत्वेन प्रसिद्धानां व्यक्तीनां प्रामाण्येन स्वनगरे समागतानां श्रीमदभिनवसच्चिदानन्दतीर्थस्वामिनामभिनन्दनं यदि दण्डित्वेन, आश्रमगौरवेण, संस्कृत-विद्वत्त्वेन कृतं चेत् किं नामात्याचरितम् ? एभिः संस्थाभिरेव पूर्वं श्रीमद्राजराजेश्वराश्रमस्वामिपादानामपि सम्मानना विहिताऽसीत् । एतेषां परिवर्तनेनैव वस्तुतः पण्डितानां मतपरिवर्तनं सम्भाव्यते । अतः पण्डितानामुपरि भयङ्कराक्रमणकारिभिः प्रथमं तत्तत्संस्था-सञ्चालकाः प्रष्टव्याः, भर्त्सनीयाश्च ।

तथापि श्रीकाशी-पण्डित-सभा, यया श्रीमद्राजराजेश्वराश्रमस्वामिनां बहुशोऽभिनन्दनं कृतम्, सा तु तटस्थैवासीदत्राभिनन्दन-संप्लवे । सा तु श्रीमद्राजराजेश्वर-पक्षपातिन्येव चापि ।

सुप्रभातेन यदभिनन्दनं द्वयोरपि विहितम्, तत्केवलं संस्कृत-पक्षपातेनैव । धार्मिकेषु साम्प्रदायिकेषु च विषयेषु सुप्रभातं सदा ताटस्थ्यमेवावलम्बत इति विदितमेव

पाठकानाम् । तस्य सर्वेष्वपि धर्मेषु, सम्प्रदायेषु, आचार्येषु च समैव श्रद्धा । तत् सर्वेषामेव प्राचीनां मर्यादामभिनन्दति । तस्य तु आर्य-संस्कृति-आर्यभाषा-आर्यवाङ्मय-संरक्षणे प्रचारणे चाभिनिवेशः । तस्य मतेन तु संस्कृत-विदुषां जागरणेन संग्रन्थनेनैव च हिन्दूसमाजस्य सम्यक् शोधनं भवितुमर्हति । अतस्तस्य नास्ति कुत्रापि धर्माचार्यादिष्वभिनिवेशः । एष विषयस्तु तत्तत्साम्प्रदायिकैरेव निर्णेतव्यः । सुप्रभातन्तु संस्कृत-पक्षपातिनः यस्य कस्यापि व्यक्तिविशेषस्य सम्माननं कर्तुमुद्युक्तमेव । तन्मते यथा श्रीमद्राज राजेश्वराश्रमस्वामिनः प्राचीन-संस्कृति-संरक्षकत्वेनाभिमतास्तथैव श्रीमदभिनवसच्चिदानन्दतीर्थस्वामिनोऽपि संस्कृत पक्षपातितया सभाजनीया एव ।

केश्चन मित्रैरयमाक्षेपः कृतो यत् सुप्रभातेन प्रचुरतरं धनमुत्कोचरूपेण गृहीत्वाऽभिनन्दनं कृतमिति । अत्र तु तावेव स्वामिनौ प्रत्यक्षप्रमाणभूतौ, यत् प्राचीन-स्वामिना कियद्दत्तम् ? अभिनवस्वामिना वा कियत् प्रदत्तमिति । येन यद्दीयते तत्सादरं प्रकाश्यते । सुप्रभाताय यत्स्वामिभ्यां प्रदत्तं तत्तैः प्रकाशनीयम् । सुप्रभातं तु सुस्पष्ट-समालोचनायां प्रसिद्धमेव । अत एवाक्षेपादिना व्याकुलीभूय स्वीयं मतं स्पष्टीकर्तुं सुप्रभातेनानिच्छताप्यनभिमतेऽस्मिन् विषये महता कष्टेन लेखनीव्यापारं विधाय सुप्रभाते शङ्कराचार्याणां विषये सुस्पष्टमतप्रदर्शनं विहितम् । आचार्या भवन्त्वसन्तुष्टाः, न तेषां मिथ्याचाटुकारितां कर्तुं स्वप्नेऽपि समुद्यतं सुप्रभातम् । केवलं प्राचीन-परम्परा-परिरक्षणाय प्रयतेन सुप्रभातेन यतिलिङ्गधारिणामाश्रमगौरवेणाभिनन्दनं क्रियते ।

सुप्रभात-मतेन तु कश्चन वृद्धतमो विद्वान् विद्वद्भिः सुपरीक्ष्य सर्वसम्मत्या पीठेषु नियोक्तव्यः । परमेतत्तु विधर्मिणां वैदेशिकानां राज्ये दुष्करमेवेत्यहमहमिकया प्रवृत्तेषु सिंहासनैषणया व्याकुलेषु नास्ति विश्वासः सुप्रभातस्य ।

साम्प्रतमु विषयमुपसंहरन्तो वयमिदमेव निवेदयामो यत्ते पीठमर्यादा-संरक्षणाय त्यागं कुर्वन्तु, शास्त्रानुशासने तिष्ठन्तु, स्वीयं सुदृढं सङ्ग्रन्थनं कृत्वा पीठानामुत्तराधिकारे सर्वेऽपि शङ्कराचार्याः सम्मिलिता भूत्वा कस्यापि योग्य-व्यक्तेर्निर्वाचनं विदधतु । अस्माकं जगद्गुरवो न्यायालये मा गच्छन्तु । मा च परस्परं रागद्वेषादिकं पङ्कप्रक्षेपादिकं वा विदधतु । सनातनधर्मक्षेत्रे सर्वमनियतम्, अनियन्त्रितम्, अव्यवस्थितञ्च । यस्य यतः स्वार्थसाधनं भवति, स तमेव सनातनधर्मं मनुते । साम्प्रतयुगे नैतद् धौर्त्यं प्रचलितुं शक्नोति ।

शारदापीठ-विषयेऽप्यस्माकमिदमेव वक्तव्यम् यत् पूज्यपादाः श्रीमद्राजराजेश्वराश्रम-महोदयास्त्रिंशद्वर्षेभ्यः शारदापीठाधिपतित्वेन बहुशो वाराणस्यां यत्रतत्र महासम्मेलनेषु सम्मानिताः समभिनन्दिताश्च सन्ति । वर्तमान-शङ्कराचार्येषु वयोवृद्धाः, तपोवृद्धाः, आचारवृद्धाश्च सन्ति । गुर्जरदेशीयाः प्रजास्तेष्वनुरक्ता विद्यन्ते । अतस्ते जनता-निर्वाचिताः शारदापीठाधीश्वराः भवन्तु । श्रीमदभिनवसच्चिदानन्दतीर्था अपि राजशक्त्या सम्मानिताः नवयुवका अपि ज्ञानवृद्धाः परमोत्साहवन्तः, कर्तव्यपरायणाश्च सन्ति । अतस्तेऽपि शारदापीठाभिषिक्तत्वेन सम्माननीया एवेति नात्र परस्पर-विरोध-प्रदर्शनम्, मर्मोद्घाटनम्, पङ्कप्रक्षेपणं वा भवतु । प्राचीनाचार्या अभिनवाचार्येभ्य आशिषं दत्वा तथा प्रयतन्तां यथा शङ्कराचार्यपीठाधिकारो राज्ञां न्यायालयानां हस्ते न भवेत् !

केचन चाटुकाराः, कलहप्रियाः पत्राजीवनाश्च कलहं वर्द्धयन्ति धनार्जनाय । परं सुप्रभातं दुष्कृत्यमिदं विरुणद्धि । प्रार्थयते च धर्माचार्याणां चरणेषु यत्ते स्वकीय-नग्न-ताण्डव-प्रदर्शनेनान्धश्रद्धावतामस्माकं श्रद्धा-विघातं मा कुर्वन्तु । अस्माकं दृष्टावादर्शत्वेन तिष्ठन्तु । तत एव सनातनधर्म-मर्यादा स्थास्यति ।

---

## उत्तेजना

कथं कीर ! त्वम्मौनमालम्बसे ?
निबिडपिंजरे किन्त्वमवतिष्ठसे ?
संजागृता सर्वभूमिः समन्तात्
कथं, त्वां समुद्वेलयति, चिन्तसे ?
सन्त्रोटय त्वं हि पिहितान्कपाटान्
किमवलोक्य रुद्धः पुनर्लोकसे ।

*सूर्यभूषण मिश्रः, शास्त्री 'भूषण'*

# स्वाभाविक-स्वास्थ्य-संहिता

लेखकः—

श्रीभवानीप्रसाद-महाशयः

[ कांगडी-गुरुकुले प्राकृतिकचिकित्साध्यापकः ]

[ पञ्चभूतात्मक-शरीरस्य तैरेव प्रकृतिभूतैः पञ्चतत्त्वैश्चिकित्सा, स्वास्थ्य-संरक्षणं वा समुचितम्। वैदिकयुगे प्राय एतस्य प्रचुराणि प्रमाणानि समुपलभ्यन्ते। शनैः शनैः शतशश्चिकित्साप्रकाराः प्रादुर्भूताः, भवन्ति च। परं कियतः कालात् पाश्चात्यैस्तदनुकरणशीलैर्भारतीयैश्च साम्प्रतं प्राकृतिक-चिकित्सा-विषये किमप्यवधानदानं क्रियते। यत्रतत्र प्राकृतिक-चिकित्सा-केन्द्राणि, पुस्तकानि, साधनानि च प्रस्तुतानि सन्ति। साम्प्रतं महात्मा गान्धी प्राकृतिक-चिकित्सा-प्रणाली-प्रचारे संलग्नो दृश्यते। भारतीयानान्तु स्वाभाविक्येव प्रणालिरियम्। परं संस्कृत-वाङ्मये नास्ति कोऽपि प्रबन्धः, किमपि पुस्तकं वा। तदत्र विषये गुरुकुलस्थायुर्वेद-महाविद्यालये प्राकृतिक-चिकित्साध्यापकैः ( Proffessor Of Naturopathy ) महोत्साहैः श्री भवानीप्रसादमहाशयैः कोऽपि प्रथमः प्रयत्नः सम्पादितः। सुप्रभात-पाठकानां मनोविनोदाय तस्य प्रारम्भिकोंऽशः प्रकाश्यते। अत्र विषये वैद्यैरपि स्वीयमभिमतं प्रकटीकरणीयमिति—सम्पादकः ]

उपोद्घातः

अथ प्रणम्य विश्वेशं सर्व-स्वास्थ्य-विधायकम्।
सहज-स्वास्थ्य-शास्त्रस्य संहिताऽत्र वितन्यते ॥१॥

प्रशान्ताऽशेष-विघ्नाय दर्पसर्पापसारणात्।
सत्यामृत-निधानाय स्व-प्रकाश-विकाशिने ॥२॥

संसार-व्यतिरेकाय हृतोत्सेकाय चेतसः।
प्रशमामृतसेकाय विवेकाय नमोनमः ॥३॥

गीर्वाणवाण्यां विरल-प्रचार-
कदर्थितायामपि सुस्थिरायाम्।
एतन्निबन्ध-प्रथने स्थिरत्वं
स्वान्तःसुखं चैव ममात्र हेतुः ॥४॥

प्राकृतिक-चिकित्सायाः प्रादुर्भावः

सहज-स्वास्थ्यशास्त्रस्य बीजं वेदेषु दृश्यते।
वैदिके वाङ्मये चापि तद्विचारः प्रवर्तते ॥५॥

---

१—प्रबन्ध-प्रारम्भे संसार-सञ्चालकं सर्वव्यापकं सर्व निमित्तकारणत्वेन स्वास्थ्यसम्पादकान्तःशक्तिरूपेण च सर्वदेहान्तर्विद्यमानं सर्वेषां स्वास्थ्यविधातारञ्चेति विश्वेशं शिष्टपरम्परागत-मङ्गलाचरणरीत्या प्रणमति।

२—द्विविधा हि चिकित्सा—प्रचलितमिथ्योपचारमयी, युक्तियुक्तोपचारमयी प्राकृतिकी चेति। तयोर्विवेचन-साधन भूतां विवेकदेवतां प्रस्तौमि महाकविक्षेमेन्द्र-प्रणीत-दर्पदलन-ग्रन्थस्योद्धृतेन पद्येन।

३—सोऽयं विवेकः विघ्नान् शमयति, दर्प-सर्पमपसारयति, सत्यरूपममृतमस्मिन्नेव निहितं स्व-प्रकाशेन विकसति।

४—सम्प्रति दुर्दैवात् स्वल्पप्रसरायामपि सुस्थिरायां देववाण्यामेतन्निबन्धबन्धने प्रतिपिपादयिषितस्य प्राकृत स्वास्थ्यसिद्धान्तसंग्रहस्य च स्थिरत्वं मनस्तोषश्च हेतुरिति।

५—वैदिकयुगे ह्यार्याणां जीवनं प्राकृतिकमेवासीत्। पञ्चमहाभूतेषु पवनजलाग्निमृत्तिकास्तेषां प्रधानकार्यसाधन भूता अभवन्। एतैरेव तेषां सततं सम्पर्कोऽभूत्। एतैरेव तेषां कृषिः, स्वास्थ्यम्, धर्मकृत्यञ्चासाध्यत। तदानीं वैदिकयुगे नागरिकी सभ्यता नोदियाय। आधुनिक-सभ्यता संकुलं जीवनं तदा नानाविधरोगान्नोत्पादयामास। यदि कदाचिन्नैसर्गिका रोगाः समुद्भूताश्चेत्तदा ते स्वदेहघटक-महाभूतसाधनैः प्राकृतैरेवोपचारैरचिकित्स्यन्त। ततएव तैर्गीतासु वैदिकर्चासु सूर्याग्नि-पवनापः प्राचुर्येणास्तूयन्त। तेषां स्वास्थ्यसाधका गुणा अगीयन्त। संक्षेपतः पञ्चषा मन्त्रास्तद् गुणवर्णनपराः प्रदर्श्यन्ते। जलस्य यथा—

सहज-स्वास्थ्य-विद्यायाः प्रकीर्णांशा हि कुत्रचित् ।
आयुर्वेदस्य ग्रन्थेषु प्रत्नेषु चरकादिषु ॥६॥
पञ्चकर्माङ्गरूपेण वस्तिना वमनेन च ।
स्वेदेन स्नेहनेनाऽपि निर्दिष्टाः सन्ति भूरिशः ॥७॥
कुरु-पाण्डु-सुतानां हि महायुद्धादनन्तरम् ।
कलौ कराल-कालेऽस्मिन् भारते तिमिरावृते ॥८॥
विद्वत्सु भारतीयेषु निजज्ञानस्य वृद्धये ।
आविष्काराय विज्ञाने विश्वस्य हितसाधके ॥९॥
प्राकृतानां पदार्थानां परीक्षण-निरीक्षणात् ।
अनुशीलन-सद्रीतिं त्यक्तवत्सु च सर्वथा ॥१०॥
धन-धान्य-समृद्धेषु भोगासक्तिरतेषु च ।
साधारण जने तावद् ज्ञान-विज्ञान-वञ्चिते ॥११॥
क्षुद्रकार्यपरे नित्यं प्रभुसेवा-परायणे ।
प्राकृतस्वास्थ्य-शास्त्रे तद् वृद्धिं लेभे न भारते ॥१२॥
परं पाश्चात्य-भूखण्डे हरिवर्षेति संज्ञके ।
महानुभाव-शीलानां प्रकृत्याः सन्निरीक्षणे—
निरतानां प्रतीच्यानां मानसेषु मनीषिणाम् ।
प्राकृत-स्वास्थ्य-शास्त्रस्य प्रशस्तस्याङ्कुरा अपि ॥१४॥
इतरासां सुविद्यानां कलानामिव निश्चितम् ।
प्रादुर्भूय समापेदुः स-पुष्प-फल-वृक्षताम् ॥१५॥
मनीषिणस्त एतस्य शास्त्रस्य प्रकृतस्य वै ।
साक्षात् कृत-सुधर्माणो मन्त्रद्रष्टार एव च ॥१६॥
तस्य ते मर्मवेत्तारः कर्म्मकाण्डमुपादिशन् ।
प्रचारं चास्य पाताले[1] महाद्वीपे प्रचक्रिरे ॥१७॥
हरिवर्ष-महाद्वीपे शर्मण्यो[2] विश्वविश्रुतः ।
विज्ञाने कोविदा वीरा यत्र जन्मानि लेभिरे ॥१८॥

क्रमशः

(क) आपोहिष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे । ऋक्, मं० १०, सू० ९, मं० १.

(ख) यो वः शिवतमो रसः । तस्य भा जयते हनः । उशतीरिव मातरः ।—मं० २.

(ग) आप इद्वा उ भेषजी राषो अमीव चातनीः ।
आपः सर्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् ।
ऋक्, मं० १०, सू० १३७, मं० ६.

(घ) अप्सु मे सोमोऽब्रवीत्, अन्तर्विश्वानि भेषजा ।
अग्निं च विश्व शम्भुवमापश्च विश्वभेषजीः ।
—सू० ९, मं० ६

पवनस्य यथा —

(क) आ वात वाहि भेषजं विवात वारि भद्रयः ।
त्वं हि विश्वभेषजो देवानां दूत ईयसे ।
१०, १३७, मं० ३.

(ख) वात आवातु भेषजं शम्भु मयोभु नो हृदे ।
प्रण आयूंषि तारिषत् । —१०, १८६, १.

अग्नेः, सूर्यस्य च यथा—

(क) अग्निर्हिमस्य भेषजम् । यजुः, २३, १०.

(ख) अग्निः कृणोतु भेषजम् ।

(ग) हृद्रोगं मम सूर्य हरिमाणञ्च नाशय । १. ५०, ११,

(घ) उद्यन्नादित्यः कृमीन् तन्तु निम्रोचन् हन्तु रश्मिभिः

(ङ) सा नो भूमिः प्राणमायुर्दधातु ।

वेदेषु निहितं चिकित्साबीजमुत्तरकाले विकसितं दृश्यते । उपनिषद्ग्रन्थेषु उपवासस्य, आहारस्य च विधानानि वैशद्येन वर्णितानि ।

६, ७—साम्प्रतं प्राकृत-चिकित्सायां प्रयुज्यमानाः पञ्च-तत्त्वमया उपचाराः पाश्चात्यदेशेषु विगतशताब्द्यां यथा सविस्तरं प्रादुर्भूता, तथा प्राचीनग्रन्थेषु साकल्येन क्वापि न प्राप्यन्ते । तथापि तेषामुपचाराणां केचित् प्रकीर्णांशाः, खण्डखण्डरूपाः प्रक्रियाश्च स्वेदन-वमन-वस्ति-विध्यात्मकाः स्थूलरूपेण समुपवर्णिताः सन्ति । यथा वमनाय मदनफल क्वाथ-पानम् । तदार्त्तानामसह्यं भवति । नवीनैस्तु साधा-रण-लवण-मिश्रितस्य कवोष्णस्य शीतलस्य च जलस्य पात्रद्वयस्य प्रचुरमात्रायां पर्यायेण पानमनायासेनैव वमन-मावहति । वस्तिविधावपि चरकादिषु छागबलीवर्दादीनां मूत्राशय-चर्मनिर्मित-वस्तीनामौषधक्वाथ-पूरणेन गुदमार्गद्वारा मलाशयशोधनादिकं दुष्कर क्लेशजननं चेति साधारण-कवोष्णजलादिभिरुदरप्रक्षालन-क्रिया सुकरा समुद्भूता ।

१—अमरीका

२—जर्मन इति प्रसिद्धः

# विविध-वार्ताः

## मोहन-जो-दडो

—०—

भारतवर्षे सभ्यताया विकासश्चतुःसहस्रवर्षेभ्यः प्राङ् नासीदिति पाश्चात्यगवेषकाणामैतिहासिकविदुषां मतमासीत्। यतो भूगर्भाद् यानि चिह्नानि समुपलभ्यन्ते तानि चतुःसहस्रवर्षादधिकानि न सन्ति। परं पञ्चापप्रान्तीय हरप्पा-स्थाने सिन्धुप्रान्तीय-'मोहन-जो-दडो' नाम्नि-स्थाने च भूगर्भान्नगराणामुद्धारो भारतीय-पुरातत्त्वविद्भिः कियत् कालात् पूर्वमेव कृतः। ततो यानि वस्तूनि, ये च लेखाः, याश्च मुद्राः समुपलब्धास्तदवलोक्य पुरातत्त्वविदां पूर्व-सिद्धान्तो भ्रमरूपेण परिणतः। तत्र या लिपिः समुपलब्धा सेदानीं यावन्न केनापि पठितुं शक्या। यावल्लिपिर्नज्ञायते तावत्तन्नगर-निर्माण-कालः केनापि न निर्णेतुं शक्यः। प्राच्याः पाश्चात्याश्च पुरातत्त्वविदस्तस्याः पठन-प्रयत्नं कुर्वन्ति। परमेतत्तु निर्णेतुं न शक्यते यद् भारते सभ्यता-प्रचारः कियत्सहस्रवर्षेभ्यः पूर्वमासीदिति।

एतत्स्थानं सिन्धुप्रान्ते 'लरकाना' मण्डले विद्यते। 'डोकरी'-नाम्नो धूम्रयानस्थितिस्थानात् (Station) क्रोशचतुष्टयदूरेस्ति हययानेनाऽत्र गन्तुं शक्यते। 'मोहन-जो-दडो' इत्यस्य सिन्धुभाषायां 'शव-कूटम्' इत्यर्थो भवति। भारतीय-पुरातत्व-विभागाध्यक्षः स्वर्गीय-राखालदास वन्द्योपाध्यायः १९२२ खिष्टाब्दे शवकूटस्यान्वेषणं विधातुं तत्र गतवान्। धूलिसमुद्रे पादचारेण विचरतस्तस्य पादे सहसा सर्पदंश इवाऽभवत्। अन्वेषणायां तदेकं पाषाणं रजोनिमग्नमासीत्। तत एव वन्द्योपाध्यायेन तस्या भूमेः खननं प्रारब्धम्। क्रमशस्तत्र प्राचीनकालीनं सम्पूर्णं नगरमिवादृश्यत।

मध्य एव स्वर्गतेषु तेषु तद्विभागाध्यक्षेण सिद्दीकनाम्ना यवन-पुरातत्वज्ञेन, ततश्च दीक्षितनाम्ना पुरातत्त्वाधिकारिणा खनन-क्रमोऽक्षुण्ण एव संस्थापितः। तयोर्नाम्ना तत्र विभाग-द्वयं विद्यते—सिद्दीक-विभागः, दीक्षित-विभागश्च।

दीक्षित-विभागे पुरातन-वस्तूनामुपलब्धिराधिक्येन संजाता। तत्र ईशाब्दारम्भतः २७०० पूर्वकालीनाः स्वर्ण मुद्राः समुपलब्धाः। यत्र हरिण-धेनु-सिंह-महिष-व्याघ्र-चित्रकादि-पशूनां मूर्तयः समुपलभ्यन्ते। एवं नृत्यन्तीनां युवतीनां पाषाण-प्रतिमाः, मृद्भाण्डानि च समुपलब्धानि। मृत्तिकानिर्मिता मणिकाः (मटके), बालकानां पानभाजनानि (गिलास), लताभिः पुष्पैश्च चित्रिता नेत्राञ्जनधान्यः (सुरमेदानी), विचित्रा घटाः, घट-पिधानानि (ढक्कन), पानपात्राणि (प्याले), जलप्रवाहार्थमावृता नलिकाः (पाइप) सद्योनिर्मिता इव समुपलब्धाः। एवं पाषाण-ताम्र-पित्तल-निर्मितानि पात्राणि, शस्त्राणि, खननोपयुक्तानि कृषिसाधन-शस्त्राणि च सन्ति। वर्तुलास्ताम्रमुद्राः, रमलोपयुक्ताः पाशकाः (पासे) ताम्रपित्तलनिर्मिताः स्थाल्यः दर्व्यश्च सन्ति। सर्वेभ्यः सुन्दर्यस्ताम्रपित्तल धातुमय्यो हण्डिकाः (हाँडी)।

बहुमूल्य-प्रस्तर-गुलिका-निर्मिता रुचिरा हाराः, ताम्रस्य चिक्कणाः स्वच्छा मुकुराः, विविधान्याभूषणानि, हस्तिदन्त निर्मिताः केश-प्रसाधिन्यः (कंघियाँ), ताम्रसूचिकाः (सूई) केश-संयमिन्यः सूचिकाः (हेयरपिन) प्रभृतयश्च प्राप्ताः सन्ति।

एतदतिरिक्तं बहुमूल्य-पाषाणानां मापकाः (बटखरे), पञ्चसहस्रवर्ष-पुरातनं गोधूमान्नमपि दृश्यते कृष्णवर्णतां गतम्।

बालकानां क्रीडनकानि (खिलौने), शकट्यः, कुक्कुट प्रभृतिपक्षिणां मूर्तयः, काष्ठपुत्तलिकाः, चतुरङ्ग-क्रीडा-साधन भूताः गुटिकाः, सूत्रनिर्माणयन्त्रञ्च लभ्यन्ते। फेनैरन्यैश्च साधनैर्यन्त्रनिर्मिता मानवानां पशुपक्षिणां मूर्तयश्च सन्ति। तासु स्त्रीणां केश-प्रसाधन-कला, वस्त्राभूषणपरिधानकला च रमणीया दृश्यते। पुरुषमूर्तयः काकपक्षधराः, स्त्री-प्रतिमाश्च वेणी-वाहिन्यः समालोक्यन्ते।

स्त्रीणामधोवस्त्रमुत्तरीयञ्च परिधानमासीदिति प्रतीयते। पुरुषाश्च धौतवस्त्रोपरि प्राचीनावीतं यज्ञोपवीतमिवोत्तरीयं वस्त्रं धारयन्तिस्म।

प्रस्तरनिर्मिताः क्षौर-कर्म-क्षुराः, वडिशाः, कुद्दालाः, असिधेनुकाः, ताम्रनिर्मिता चापाः, वाणाः, लोहकारोपयोगिशस्त्रकलापश्चापि समुपलभ्यते।

'मोहन-जो-दडो' स्थानं सुन्दरतरं नगरं प्राचीनपरि-

वेष्टितम्, प्रशस्ततर-राजपथैरलङ्कृतं समालोक्यते। येषु राजपथेषु त्रि-चतस्रो वृषभ-शकट्यः सहैव गन्तुं शक्नुवन्ति। पञ्चषा वर्तुलमुखाः कुक्कुटाण्डसममुखा वा कूपाः समुपलब्धाः। जनतास्नानाय पाषाणकुट्टिम-सोपान-निर्मिता वाप्यः, विस्तृताः, स्वच्छाः पवन-पूरिता गृहाः, एकस्यामेव सरलपङ्क्तौ विनिर्मिता दृश्यन्ते। गृहाणां प्रधानद्वाराणि राजमार्गोपरि सन्ति। गृहाङ्गणे चतुर्दिक्षु प्रकोष्ठाः सन्ति। केषुचन गृहेषु वातायनानि कूपाश्च वर्तन्ते। सर्वेऽपि गृहाः सुपक्वेष्टिका रचिताः सन्ति। इष्टिकानां लौहवर्णत्वाद् गृहाणां लौहदुर्गं इति संज्ञा विद्यते। अत्रत्या निवासिनो यव-गोधूम-कार्पासस्य कृषिं कुर्वन्तिस्म। ते वृषभ-कच्छप-सूकर-हरिण-आवि-मांसाशिन आसन्निति पुरातत्व-विदां कथनम्। सचक्राः शकट्यः, अश्वयानानि, रथाश्चासन्।

अत्र शवानां दाहप्रथा अभूत्। अत्रत्यानां व्यापार अफगानिस्तान-तुर्कस्तान-ग्रीस-देशवासिभिः सहासीत्। सूत्रनिर्माण-वस्त्रवयन-कला, ताम्र-पित्तल-यसद-धातूनां-भाण्ड-निर्माण-कला, शुक्तिका-वस्तुनिर्माण-कला चेति व्यापार साधनान्यासन्। एतेषां विचित्र-निर्माणकलायाः प्रभावोऽद्यापि विलोक्यते।

भूमेरुपासना, पशुपक्षिमूर्त्तिधारिणां देवनामुपासना, लिङ्गपूजा-इत्येतेषां प्रचलनमासीत्। पद्मासन-बन्धेन स्थितानां मूर्तीनां लाभेन ज्ञायते-यद् योगाभ्यासस्यापि परिचिता आसन्नत्रत्याः।

मिश्रसभ्यतायाः, असुराश्च सभ्यतायाः समकालिकत्वमनुमीयते पुरातत्त्वज्ञैः। यतः द्वयोरपि मुद्रा-साम्यं विद्यते। एषा सभ्यता-'सिन्धुसभ्यता'नाम्ना व्यवह्रियते। पश्चात्यानां-पुरातत्वविदां हाल-वुली-चाइल्ड-प्रभृतीनां मतेन सर्वप्रथमं सिन्धुदेशे सभ्यतायाः प्रादुर्भावः समभूत्। केषाञ्चिन्मतेअत्रत्या द्रविडा आसन्। अपरेषां मतेन गुर्जर-महाराष्ट्र-अन्तर्वेद-देशीयानां पूर्वजा आसन्निमे।

यावत्तत्रत्या लिपिः पुरातत्त्वज्ञैर्न पठ्यते तावदत्रविषये किमप्यव्यभिचार्यनुमानं कर्तुं न युज्यते। एतदेव वक्तुं शक्यते यदिमानि चिह्नानि सर्वतः प्राचीनानि, पाश्चात्यविदुषां सिद्धान्तं खण्डयन्ति, भारतीय-सभ्यतायाश्च प्राचीनतमतामुद्घोषयन्तीति।

× × ×

## तक्षशिला—विश्वविद्यालयः

पाश्चात्याः पुरातत्त्वविदो वदन्ति यत्प्राचीनभारतीयाः ख्रिष्टजन्मनः किञ्चित् पूर्वमेव सभ्याः सञ्जाताः। तेषामिदं मतं 'मोहन-जो-दड़ो' स्थानमेव खण्डयति। अपरमपि प्रत्यक्षप्रमाणभूतं तक्षशिला-विश्वविद्यालयस्य भग्नावशेषं वरीवर्त्ति, पञ्चापप्रान्ते रावलपिण्डी-नगरात् षट्क्रोश-दूरे दक्षिण-पूर्वस्यां दिशि सिंधु-वितस्ता-नद्योर्मध्यवर्ति 'ढेरीबसान'—नामा ग्रामो विद्यते, यः साम्प्रतं 'तक्षशिला'-नाम्ना प्रसिद्धः। तस्य नातिदूरे धूमगन्त्री-स्थानमपि विद्यते 'टैक्सिल' इति ख्यातम्।

एतदपि भूगर्भ-विद्याविशारदैः कियद्भ्यो हायनेभ्यः पूर्वमन्विष्टमासीत्। रामायणप्रमाणानुसारं रामेण देशोऽयं भरताय विसृष्ट आसीत्। तत्पुत्रस्य तक्षराजस्य नाम्ना तक्षशिलेति प्रसिद्धा राजधान्यासीत्। तत्रैव भारतस्य सर्वप्राचीनो विश्वविद्यालय समवर्तत। अत्र समस्तभारतवर्षस्य छात्राः समागत्य पठन्तिस्म। सिकन्दराख्यस्य नृपतेर्भारताक्रमणकाले तक्षशिला-नरेश्वरस्तेन सन्धाय, तत्साहाय्यञ्चकारेति-प्रसिद्धम्। भगवतो बुद्धस्य जन्मनः प्रागेवायं विश्वविद्यालयः परं प्रसिद्ध आसीत्। अस्मिन् विद्यालये वेद-वेदाङ्ग-दर्शन-व्यवहारशास्त्र-राजनीति-अर्थशास्त्र-संगीतशास्त्र-आयुर्वेद-धनुर्वेदादीनां शिक्षा प्रदीयतेस्म।

चाणक्य-पाणिनि-जीवक-चरक-प्रभृतय आचार्या अस्यैव विद्यालयस्य स्नातका आसन्। बिन्दुसारेण भारतसम्राजा युवराजोऽशोकः प्रथमं तक्षशिलायामेव शासकत्वेन नियुक्त आसीत्।

पुरातत्त्व-विभागेनास्य यदा खननं कारितम् तदा षट्क्रोशायामे तक्षशिलानगरस्य भग्नावशिष्टं समुपलब्धम्। अत्रापि विशाल-विस्तृता राजमार्गाः, प्रसादाः, छात्रालयाः, आपणाः साम्प्रतमपि भारतस्यातीतं गौरवं स्मारयन्ति। एतद् विषये पुनः कदापि निवेदयिष्यामः।

× × ×

*मरौ जल-प्रवाहः*

महाकविना कालिदासेन रघुदिग्विजये लिखितम्—

'मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः।
विपिनानि प्रकाशानि शक्तिमत्वाच्चकार सः॥'

का नाम सा शक्तिः ? यया मरुपृष्ठानि प्रोद्भूत-सलिलान्यभूवन्नित्यविज्ञाय भारतीयैः केवलं कविकल्पना चातुर्यमेवावोधि। परमिदानीन्तनैर्वैज्ञानिकैर्बुद्धिशक्त्या मरुपृष्ठानि प्रत्यक्षमुदम्भांसि क्रियन्ते। आरब्यदेश सविधे 'सहारा' नामको महान् भूभागः सहस्रशो हायनेभ्यः प्रसिद्धो विद्यते, ऋग्वेदेऽप्यश्विनी-कुमार-सूक्ते भुज्युनाम्नो नरपतेर्जलयानैर्मरुभूमावाक्रमणं वर्णितम्। कदाचिदियमेव सा मरुभूमिस्तदानीं कालात् प्रसिद्धाऽस्ति। केनापि फ्रांसदेशीयेनाध्यापकेन 'समानिन-' नाम्ना तस्य धन्वदेशस्याधस्ताद् लयजलाशयस्यान्वेषणं विहितम्। एतत् परिणामस्वरूपमस्यां भूमौ ५०० उद्यानानि निर्मापयितुं शक्यन्ते। अस्या ऊषरभूमेः स्वरूपमेव परिवर्तितं स्यात्। अनादिकालादियमूषरा भूमिः कतिपयैरेव वर्षैः शस्य-श्यामला, जनधनसमाकीर्णा च भविष्यति।

अस्माकं संस्कृताध्यापकास्तु प्राचीनैराचार्यैराविष्कृतानप्याविष्कारान् धर्म-लोप-बुद्धया स्वीकर्तुमपि बिभ्यति। अतएव ते शासकाः, वयञ्च दासाः।

—'द्विरेफः'

# संस्कृत-समाचाराः।

*राष्ट्रिय-पञ्चाङ्ग-प्रकाशन योजनम्।*

एतत्तु विदितचरमेव श्रीमतां यत् सुभात-कार्यालय इदानीं "सुप्रभात-लिमिटेड"-नाम्ना व्यापार-संस्था-रूपेण परिणतः। दीपावली-दिने सुप्रभात-यन्त्रालयोद्घाटनमपि भविष्यति। इयञ्च संस्था सर्वप्रथमं "राष्ट्रिय-पञ्चाङ्ग"-नाम्ना धर्मकर्मोपयुक्तं वीजसंस्कार-संस्कृतं विशुद्धपञ्चाङ्गं प्रकाशयिष्यति। तस्य निर्माणमपि प्रारब्धम्। अत्र विषये काशीस्थ-ज्योतिर्विदां विदुषां पाश्चात्य-गणितज्ञानाञ्च विचार-सभा, भाद्रशुक्ल-द्वादश्यां रवौ सायं पञ्चवादने मारवाड़ी-संस्कृत-महाविद्यालये सम्पन्ना। सभापतेरासनं हिन्दूविश्व-विद्यालयीय-धर्मविज्ञान-विभागाध्यक्षैर्महामहोपाध्याय-चिन्नस्वामिशास्त्रिभिः समलङ्कृतमासीत्।

प्रारम्भे सभोपक्रमं कुर्वता सुप्रभात-सम्पादकेन-धार्मिककार्येषु सामाजिक-राष्ट्रियकार्येषु च विदुषां शैथिल्यमकर्मण्यताञ्च प्रदर्शयद्भिरुक्तम्, यत्

"हिन्दू-समाजे अस्माकं नियन्त्रणं नास्ति, धर्मक्षेत्रेऽपि शनैः शनैरन्येषामेव प्रभावो वर्द्धते। वयञ्च केवलं धर्माजीवा एव सञ्जाताः। जनता न श्रद्धत्तेऽस्मासु। वयमात्मना सह स्व-विज्ञानम्, स्वधर्मम्, शास्त्रञ्च सदैव कलङ्कितम्, असत्यम्, अश्रद्धेयं सम्पादयामः। वाराणसी हि नाम विश्वभूमण्डले सनातनधर्मकेन्द्रभूता। पञ्चाङ्गमपि धर्मस्य मूलम्। परं वाराणस्यामपि धर्मकर्मोपयोगिनां पञ्चाङ्गानां प्रामाण्यं नास्ति। विदेशीय-पञ्चाङ्गानुसारमत्र पञ्चाङ्ग-निर्माणं भवति। पञ्चाङ्गेष्वैक्यं नास्ति। अस्य प्रवादस्य दूरीकरणाय विशुद्धस्य राष्ट्रियपञ्चाङ्गस्य प्रकाशनमपेक्षते 'सुप्रभातं लिमिटेड'—द्वारा सञ्चालितः सुप्रभात कार्यालयः। तदत्र विषये विमृशन्तु विद्वांसः।" —इति

अस्यैव विशदं विवरणं कुर्वद्भिः श्रीकेदारदत्तज्यौतिषाचार्य-महोदयैः ( हिन्दूविश्व-विद्यालये ज्यौतिषाध्यापकैः ) पञ्चाङ्गानां स्थौल्यं वैषम्यञ्च सोदाहरणं प्रदर्शितम्। तदनन्तरमत्र विषये क्रमशः दैवज्ञकेशरी सीतारामझा—सरस्वतीभवनस्थ—सिद्धान्तमार्तण्ड—श्रीबलदेव मिश्र-श्रीमधुकान्तझा-महोदयानाम्, विश्वपञ्चाङ्ग-सहसम्पादक-राजमोहनउपाध्यायानाम्, ज्यौतिषमार्तण्ड-

रामानन्दमिश्र–हिन्दू-विश्व-विद्यालयाध्यापक-श्रीविन्ध्येश्वरी-प्रसाद–महोदयानाम्, स्वर्गीयश्रीबापूदेवशास्त्रि (सी० आई० ई०)-तनूजन्मनां श्रीगणपतिदेवशास्त्रिणाम्, डा० राखाल-दासराय-महोदयानाम्, हिन्दूविश्वविद्यालयाध्यापक–श्रीबाबूलालत्रिपाठी-एम० ए०-महोदयानाम्, बनारस-मैथमेटिक्स–एशोशियशन–सञ्चालकानां प्रोफेसर-चण्डीप्रसाद-महोदयानाञ्च भाषणानि समभूवन्।

अन्ते च पञ्चाङ्गनिर्माणसमितिरेका सङ्ग्रथिताऽभूत्। अस्या इमे सदस्याः सन्ति—श्रीदाऊजी दीक्षिताः, श्री सीताराम-झा-शास्त्रिणः, श्रीबलदेवमिश्राः, श्रीगणपतिदेव शास्त्रिणः, श्रीपद्माकरद्विवेदाः, श्रीकेदारदत्तज्योतिर्विदः, डा० राखालदासरायाः, श्रीचण्डीप्रसादाः, श्रीराजमोहन उपाध्यायाश्च (संयोजकाः)।

समुपस्थितेषु विशिष्ट-विद्वत्सु श्रीकाशीराम एम० ए०-महामहोपाध्याय-नारायणशास्त्रिखिस्ते-श्रीगोपालशास्त्रीदर्शन-केसरि-श्रीश्रीनिवासशाह-प्रभृतय आसन्।

श्रीकेदारनाथशर्म्मभिः प्रदत्ते धन्यवादे सभाविसर्जनमभूत्।

× × ×

## आवश्यकता

एकस्य गणित-फलित-ज्यौतिषाचार्य-परीक्षोत्तीर्णस्य, तत्समयोग्यस्य, संस्कृत-हिन्दी-निबन्धादिलेखनसमर्थस्य ज्योतिर्विद आवश्यकताऽस्ति। वेतनं योग्यतानुसारम्। पत्र व्यवहार सङ्केतः—

श्रीस्वाध्याय-सम्पादकः, श्रीस्वाध्याय-सदनम्, पो० सोलन, जि० शिमला, (पंजाब)।

× × ×

## अभिनन्दनम्

गत २५, ८, ४६ दिने सायं बम्बईस्थमाधवबागस्थाने श्री-मनुभाई चं० पराड्या–सोलीसिटरमहोदयानामध्यक्षतायां भारतीय विद्याभवनाध्यापक–सुप्रसिद्धलेखक–श्रीशास्त्रिरेवाशङ्करमेघजी–पुरोहितस्य श्रीशारदापीठाधीश्वरजगद्गुरुशङ्कराचार्य-श्रीमद्राज-राजेश्वराश्रमस्वामिमहाराजेभ्यः 'पण्डितमार्तण्ड' इत्युपाधिप्राप्त्युपलक्षेऽभिनन्दनसभाऽभूत्।

सभायां बहवो मान्या जना उपस्थिता आसन्।

मङ्गलाचार-सङ्कीतानन्तरं सभापतिमहोदयैः श्रीशास्त्रिभ्यः "पण्डित-मार्त्तण्ड" इतिपदवी, तथा हरिशङ्करशास्त्रिभ्यश्च ज्यौतिषाचार्य-पदवी समर्पिता।

अन्ते सद्गृहस्थेनैकेन पं० रेवाशंकरशास्त्रिणे समर्पितैका रत्नमञ्जूषा। प्रायः ५० संस्थाभिः पुष्पहाराः समर्पिताः। एतस्मिन् प्रसङ्गे समुपस्थितैः श्रीमहेश्वरानन्दमण्डलेश्वरस्वामिभिः श्रीशास्त्रिणे समर्पितायां "पण्डितमार्तण्ड" पदव्यां हर्षः प्रकटीकृतः साशीर्वचनम्।

—देवकृष्णदवे, बम्बई

* * *

## कृतज्ञता-प्रकाशः

विगतमासे मिर्जापुरस्थ-विजयपुर-राज्याधिपतिभिः श्रीमद्रीराजा-वेणीमाधवसिंह-महोदयैः सुप्रभातस्य संरक्षकत्वं स्वीकृतमिति तेभ्यः साधुवादान् धन्यवादांश्च वितरामः। इमे स्वयं संस्कृतज्ञाः, संस्कृतविदुषां प्रणयिनश्च सन्ति। प्राय एतेषां समयः संस्कृत–पुस्तकानामध्ययने संस्कृत-विदुषां सत्सङ्गे च व्यत्येति। एतेषां संस्कृत–प्रणयं वयं सानन्दमभिनन्दामः।

मिर्जापुरस्थ-प्रसिद्धव्यापारिभिर्वदान्यवरैः श्रीप्रयागदास-महोदयैः (बड़कू–साबेति विख्यातैः) सुप्रभातस्य संरक्षकत्वं स्वीकृतम्। इमे परमधार्मिकाः सदाचार–परायणाः संस्कृत-प्रणयिनश्च सन्ति। सुप्रभातमेतेषां महतीं कृतज्ञतामुररीकरोति-आशीर्वादान् धन्यवादांश्च वितरति।

मिर्जापुरे सुप्रभात-प्रचारे परं प्रेमाणं वितरद्भिः तत्रत्य-प्रधान-विद्वद्भिर्महोत्साहैः श्रीशिवशङ्करत्रिपाठी ज्यौतिषाचार्य-महोदयैः सनातनधर्म-संस्कृत-पाठशाला-प्रधानाध्यापकैस्तथा-बाबा–पण्डितेति प्रसिद्धैः श्रीमद्भिर्महत् साहाय्यं समनुष्ठितम्। एतेषां महान्तमुपकार-भारं बिभृमः।

'सन्मार्ग'—कार्यालयः समये समये चित्र-फलक (ब्लाक) प्रदानेन सुप्रभातमुपकरोतीति वयं 'सन्मार्ग' कार्यालस्य कृतज्ञतां वहन्तो धन्यवादान् दद्मः।

—सम्पादकः

## स्वागतम्

*मधुरवाणी*

यदा सुप्रभातस्य पुनर्जन्माभूत् तदा नासीदस्माकं सम्यक् परिचयः संस्कृत-पत्राणां यत् कानि पत्राणि साम्प्रतं प्रचलन्तीति। विगतमासे समालोक्य सरस-स्नेह-सम्भृत-स्वान्ताम्, संस्कृत-ज्ञानामकर्मण्यतया नितान्ततान्ताम्, यन्त्रालयादि-पराधीनतया क्लान्तामपि गाम्भीर्यगौरवादिगुणैः शान्तां दक्षिणभारतीय-संस्कृत-साहित्य-सम्मेलन-कान्तां मधुर-वाणीं मधुरवाणीं सानन्दं समुच्छ्वसितमस्माभिः। अस्या लेख-सौष्ठवम्, भाषा-सौन्दर्यम्, भाव-गाम्भीर्यञ्चावलोक्य, सम्पादकानां सुरभारती-समृद्धौ चानवरत-प्रवणतामवगत्यास्माकमपि समुदभून्महानुत्साहः। पत्रिकायां दक्षिणभारतीय-संस्कृत-साहित्य-सम्मेलनस्य चतुर्था-धिवेशन-विवरणं तत्सभापतीनां भाषणञ्च मननीयमेव सुर-भारती-प्रणयिभिः। अस्माभिस्तु प्रथममेवावलोकितोऽयं मधुरवाणी-सम्पादकानां श्लाघ्यतरः प्रयत्नः। सङ्ग्रन्थनमन्तरा नास्मिन् युगे गतिरन्या। परं सहैव 'विहङ्गम'-महोदस्य 'विहङ्गम-विहार'दर्शं दर्शं संस्कृत-विदुषां विषये दुनोतितरां चेतः। 'विहङ्गम'-महाशयेनास्माकं हृदयेनामन्त्र्येव लिखितम्। साधु, स्पष्टतरम्, यथार्थञ्च तत्। संस्कृत-पण्डितानामालस्यमसह-योगमाकर्मण्यतामसमर्थताञ्चालोक्य महोत्साहा अपि हतोत्साहाः जायन्ते। अस्तु।

अत्र युग्माङ्के शिन्त्रे-शिवरामशास्त्रिणां देवतासंभोग-वर्णनमनुचितमिति शीर्षको लेखः प्रौढतरो युक्तियुक्तो विवेचन-पुरस्सरं लिखितो लेखकस्य प्रौढिमानं प्रकटयति। नैषधकारस्य श्रीहर्षस्य काव्यालोचनमपि गभीरया दृशा विहितं मदयति मानसं सहृदयानाम्।

मधुरवाणी-सम्पादकैः सुप्रभातालोचने यदौदार्यं सहृद-यत्वञ्च प्रकटीकृतं तत्तेषां महत्वमेव व्यनक्ति। वयं तेषां कृतज्ञताभारमुररीकुर्मः। तेषां सरसमसृणा सालङ्कारा प्रसन्न-मधुरा संस्कृतलेखन-सरणिः स्पृहणीया, रमणीया च विद्यते। वयमस्याः प्रियसख्या उत्तरोत्तरमभिवृद्धिमुत्तर भारते चाधिकां प्रसृतिं कामयामहे। उत्तरभारतीयैः संस्कृत-प्रणयिभिश्छात्रैश्च भाषा-लेख-सौष्ठवाय मधुरवाणी नूनं ग्रही तव्या, मननीया च। वार्षिकं मूल्यम्-मुद्राचतुष्टयम्। 'मधुर-वाणी'-कार्यालयः, १६९८ वेलगाँव-इतिसङ्केतेन लभ्या। वयमस्याः सहर्षं स्वागतं कुर्मः।

× × ×

*संस्कृतरत्नाकरः*

अस्मिन्नेव मासे संस्कृत-रत्नाकरस्यापि दर्शनं जातमित्यहो सौभाग्य-परम्परा सुप्रभातस्य। अस्माकमुत्तरभारते प्राचीन तममुत्कृष्टतरञ्च संस्कृतपत्रमिदम्। अस्य सञ्चालकाः श्रीमन्तो-गिरिधरशर्म्म-चतुर्वेद-महोदयाः, सम्पादकाश्च श्रीमन्तो भट्ट मथुरानाथशास्त्रिणो निखिल-भारतीया विद्वांसः, सुरसरस्वती-प्रणयिनश्च सन्तीति पत्रस्यास्य महद् गौरवं वर्वर्ति। सम्पादन-दृष्ट्याऽपि रत्नाकरो रत्नाकर एव। इदमपि पत्रं न केवलं पत्र-मात्रम्; प्रत्युत संस्कृत-समाज-जागरणपरं संस्था-स्वरूपम्। अत्र सम्पादकीया विचारा गभीराः प्रौढतराः सर्वथा देशकालोप-युक्ताः संस्कृतज्ञानां मननीया भवन्ति। वयन्तु संस्कृते आदर्श-पत्ररूपेणास्य महत्वं गौरवञ्च मन्यामहे।

वर्तमान-युद्धजन्य-दुष्परिस्थितिवशात् पत्रमिदं षण्मा-सानन्तरं प्रकाशितम्। एतस्मिन् दीर्घतरे समये ग्राहकैर्व्याकुली-कृताः सम्पादकाः क्षुब्धा इव, व्याकुला इव चाङ्कमेनं प्रकाशित-वन्त इति तेषां लेखैः प्रतीयते। अस्यामेव व्याकुलतायां सुप्रभा-तेऽपि क्षोभलेशस्तेषां दृश्यते-प्रेषण-प्रबन्धादौ। परमत्र तैः स्वकार्यालय-व्यवस्था सम्पादनीया। नवीनास्तु भ्रमन्त्येव। परं प्राचीनैस्तु मर्यादा-संरक्षणं विधेयम्। पत्रस्य मूल्यम्-मुद्रा-त्रयम्। 'खूंटेंटों का रास्ता, जयपुर' इति सङ्केतेन लभ्यते। श्रीमद्भिश्चतुर्वेद-महोदयैरतोऽवकाशग्रहणं कृतमिति केवलं भट्ट-महोदयानामुपरि महान् भारो रत्नाकरस्य। रत्नाकरस्य भारोऽपि मथुरानाथेनैव बोढव्यः। वयमस्य श्रद्धेयस्य चिरजीवित्व-मुत्तरोत्तरमुत्कर्षञ्च कामयामहे। सादरं स्वागतञ्चास्य कुर्महे।

× × ×

*संस्कृतम्*

अष्टोत्तरशतश्लोकात्मिका, अनुष्टुप्छन्दोबद्धा लघ्वी पुस्तिका क्षीरपुरी-वासिना साहित्यशिरोमणि-कर्णवीरनागेश्वर रावनिर्मिता, चतुराणक-मूल्या, तत एव च लभ्या। अस्यां संस्कृतभाषाया महत्वम्, केषाञ्चन संस्कृत-विदुषां संस्कृत-प्रणयिनां तत्पक्षपातिनाञ्च वर्णनं विद्यते। अत्राप्रसिद्धाना-मपि लेखकाभिमतानां केषाञ्चन वर्णना दृश्यते। लेखकः संस्कृत-प्रचार-परायणो महोत्साहश्चाग्रेऽप्येतादृश-लघुपुस्ति-कानां प्रकाशनं विधास्यतीति सुरभारती-प्रेमाणमस्य सर्वथा-भिनन्दामः। प्राप्तिस्थानम् संस्कृत-साहित्य-प्रचारसभा, चीराला, गुन्टूर, ( मद्रास )। —सम्पादकः

× × ×

# सम्पादकीयम्

## महात्मा तुलसीदासः

श्रवणशुक्ल-सप्तम्यां महात्मनस्तुलसीदासस्य निर्वाण-दिवसः प्रायो हिन्दीभाषाभाषिप्रान्तेषु महता समारम्भेण समुत्साहेन, भक्त्या, श्रद्धया, प्रेम्णा च हिन्दी-साहित्यानुरागिभिः सम्पाद्यते । हिन्दीपत्राण्यपि तस्य महामहिमशालिनो भक्त प्रवरस्य महाकवेः सङ्कीर्तनेन कलेवरं पावयन्ति । वयमपि तस्य श्रद्धेय-चरणयोर्भक्तिपुष्पाञ्जलिं समर्पयन्तः स्वात्मानं पुनीमहे । तुलसीदास-विषये किमपि कथनं प्रदीप्तकिरणाय सहस्रभानवे दीपदानमिव वर्तते । तथापि प्रेमावेशेन वयं संस्कृतविदुषोऽस्य महान्तमुपकारं न विस्मर्तुं प्रभवामः । दुर्दान्तैर्विधर्मिभिर्यवनैराक्रान्ते समुत्पीडिते च हिन्दू-समाजे, प्रायः शोषमुपगच्छति वैदिक-विज्ञान-पारावारे, विधर्मिवलाहकैराच्छाद्यमाने भारतीय-धर्मदिवाकरे, शैव-वैष्णव-शाक्तादि-विविध-साम्प्रदायिकता-विष-मूर्छिते धर्माचार्याणां निकुरम्बे, राग-द्वेष-मात्सर्य-लोभादि-कलिधर्मैरापादमस्तकं व्याप्ते भारतीय-विद्वत्समाजे, किंकर्तव्यता-विमूढायां पथ-भ्रष्टायां व्याकुलायाञ्च जनतायां, निखिल-निगमागम-पुराण-काव्य-नाटकादि-विविध-शास्त्र-मर्मज्ञेन, परमकारुणिकेन, भक्त-प्रवरेण महात्मना तुलसीदासेन देशस्य, धर्मस्य, समाजस्य, जातेश्च यदुपकृतं सद्युपकारभार आकल्पं हिन्दूजात्या विस्मर्तुं न शक्यते ।

यदि तुलसीदासस्य हृदये धर्मरक्षायाः सुदृढोऽभिनिवेशः, श्रीमद्रामचरणयोश्च निरुपमा भक्तिर्नाभविष्यत्तदा तस्य रामचरितमानसरयापामार-साधारणम्, आबाल-वृद्ध-वनितम्, आ समुद्रोपकण्ठं प्रचारोऽपि नाभविष्यत् ।

तदानीं काले संस्कृत-विदुषां देश-धर्म-समाज-शास्त्ररक्षायै यद् वास्तविकं कर्तव्यमासीत्तन् महात्मना तुलसीदासेन कृतम् । परं संस्कृतज्ञाः 'भाखा-भाखा-' इति व्याहरन्तस्तस्य महत्त्वं न गणयन्ति । यदि तुलसीदासः संस्कृतभाषायामेव रामचरितमानसं प्राणेष्यत् तदा तेन स्त्री-शूद्रादीनां न कोऽप्युपकारोऽभविष्यत् । न च संस्कृतसमाजे तस्य भूयान् समादरोऽभविष्यत् । नापि तस्योद्देशोऽप्यसेत्स्यत ।

अतो देश-कालानुकूलया भाषया देशकालोपयोगि कार्यं कुर्वता भगवता तुलसीदासेन, उपदेशकस्य, नेतुः, धर्माचार्यस्य, विदुषश्चानुरूपमेव कार्यं सम्पादितम् ।

कविद्दृष्ट्याऽपि कालिदासादनन्तरं तुलसीदासस्यैव स्थानं वर्वर्ति भारते । वैदेशिकैरपि सबहुमानमस्य कवेरध्ययनं कृतम् । संस्कृतविद्भिरपि-आदर्श-महापुरुषस्यास्य सम्मानं विधेयमिति ।

× × ×

## राजकीय-संस्कृत-परीक्षा-समितिः

वाराणसेय-राजकीय-संस्कृत-महाविद्यालयाधीना काचन शिक्षा-विभाग-नियन्त्रिता समितिर्विद्यते या परीक्षापाठ्य-निर्धारणं परीक्षक-निर्धारणञ्च करोति । साच "बोर्ड ऑफ संस्कृत-स्टडीज, यू० पी०" इति नाम्ना प्रसिद्धा । तस्यां समितौ शिक्षासचिव-निर्वाचिताः सदस्याः सन्तिष्ठन्ते । अत्र केचन सदस्याः भिन्न २ विश्वविद्यालयेभ्यो गृह्यन्ते, केचन स्वातन्त्र्येणाधिकारिणां विशिष्टाधिकारेण च । एतेषां सदस्यानां महदुत्तरदायित्वं भवति । तेषां सदाचारो निष्पक्षता च सर्वाधिकाऽपेक्षते । परमिदानीन्तन-समितौ कश्चनेदृशः सदस्योऽपि विद्यते येन विद्यालयीय-नियमविरुद्धमधिकारिणां प्रवञ्चनं कृतमासीत् । तत्कालीन-परिषदध्यक्षैः, परीक्षाध्यक्षैश्च महामहोपाध्याय-गोपीनाथकविराज-महोदयैस्तद्विरुद्धविज्ञापन-प्रकाशन-द्वारा तस्य महाशयस्य परीक्षा-दापनं परीक्षकत्वञ्च विनिरुद्धमासीत् । परमिदानीं स एव पण्डितः परमप्रामाणिके सदस्यपदे प्रतिष्ठित इति गुप्तपत्रद्वारा वयं केनापि सूचिताः शिक्षा—सञ्चालकेभ्यो निवेदनं कुर्मो यत्ते तस्यान्वेषणं विदधतु । तस्य पुनः प्रामाणिकत्वे च सन्तोषजनकं प्रमाणमुपस्थापयन्तु । एतादृशैः सदस्यैः समितेर्महती गौरवहानिः सम्भाव्यते । संस्कृत जनतायाञ्च महानसन्तोषः प्रादुर्भवेदिति । किं प्रान्ते न तादृशा योग्याः सदस्याः सन्ति ? यदसौ दूषितः सदस्यस्तत्र संस्थापितः । मन्ये, अधिकारिणः सत्वरमस्य प्रतिक्रियां विधास्यन्तीति ।

× × ×

## राष्ट्रिय-पञ्चाङ्गम् ।

सुप्रभात-कार्यालयः सुप्रभात-यन्त्रालयात् सर्वप्रथमं राष्ट्रियं पञ्चाङ्गं प्रकाशयिष्यतीति तदर्थमेका विचारसभा समभूत् । केचन-निमन्त्रिता अपि पञ्चाङ्ग-व्यवसायिनो नाऽत्र सम्मिलिताः । अत्रविषये केषाञ्चन मनसि मिथ्याधारणाऽपि

पदमादधाति यत् कीदृशमिदं राष्ट्रियं पञ्चाङ्गं स्यादिति। केचन रुष्टा अपि सन्ति। वयमत्र सुस्पष्टं निवेदयामो यत् पञ्चाङ्गेषु परस्पर-विरोधो विद्यते। स्थूलया दृष्ट्या व्यापार-बुद्ध्या वा पञ्चाङ्ग-निर्माणं भवति।

एतदपि वदन्ति दैवज्ञा यत् स्थूलमानतो ग्रहसाधनेन सम्यक् फलादेशो न भवति। केचन वदन्ति यत् स्थूल-मानतो ग्रहसाधनेनैव धर्मकर्मोपयोगिता भवति पञ्चाङ्गस्य। तदिदं राष्ट्रियं पञ्चाङ्गमुभयदृष्ट्या निर्मितं भविष्यति। येन कस्यापि वैमत्यं न स्यात्।

अन्यच्च-पञ्चाङ्गं नाम प्रायः सर्वेषामेव हिन्दू-पारसी-जैन-यवनादीनां ब्राह्मणेभ्य आरभ्य सर्वव्यवसायिनामुपयुक्त वस्तु। आप्रासादादापर्णशालमस्य प्रचार आवश्यकता च। परमिदानीं पञ्चाङ्गानि प्रायः संस्कृतज्ञानामेवोपकारकाणि प्रकाश्यन्ते। न सर्वसाधारणैर्नापि सर्वसाम्प्रदायिकैर्वा तदुपयोगः कर्तुं पार्यते। सर्वेषां पृथक् पृथक् साम्प्रदायिकं पञ्चाङ्गं प्रकाश्यते।

वाराणसीतः ईदृशं पञ्चाङ्गमपेक्षते यत् स्थूलदृशां सूक्ष्म दृशां दैवज्ञानाम्, धर्मकर्ममात्रार्थिनाम्, तत्तत्साम्प्रदायिकानाम्, विभिन्नधर्मिणामपि-उपकार-जनकं स्यादिति नाऽत्र कस्यापि विरोधः स्यात्। व्यापारिभिः केवलं गड्डलिका-प्रवाहेण विशुद्धव्यापारिक-बुद्ध्या यत् क्रियते तत् सुप्रभातेनान्वेषणं विधाय सर्वलोकोपकारिता-सम्पादन-द्वारा क्रियते। अयमेव विशेषः। नात्र कैश्चन रुष्टैर्भाव्यम्। यावच्छक्यं विदुषामधिकाधिकं समर्थनं लब्ध्वैव पञ्चाङ्ग-प्रकाशनं भविष्यति। यद्यपि पञ्चाङ्गस्य सर्वाङ्गीणता-सम्पादनं शनैः शनैः पञ्चषवर्षेषु भविष्यति। तथाप्यस्यां दिशि प्रथमः प्रयासः समालोकनीयः समालोचन-चतुरैः। अस्य प्रकाशनं संस्कृतभाषातिरिक्तमन्यास्वपि भाषासु भविष्यति। अतएवाऽस्य राष्ट्रियत्वमपि स्यात्। अथापि ये प्रकृत्यैव मत्सराः, निन्दकाः, परकार्य-विघातप्रियास्ते के न जानीमहे ?

× × ×

*महान् शोकावसरः*

वाराणसीतः सुयोग्याः, प्रौढतरा आदर्श-पण्डिताः शनैः शनैः परलोकं प्रयान्ति-इत्येष शोक-शङ्कुरविषह्यां वेदनामातनोति चेतसि। विगताङ्के न्याय-धुरन्धराणां-श्रीशङ्करतर्करत्न-महोदयानां शोकसमाचारः प्रकाशित एव। अस्मिन्मासे द्वयोः पुनः शोक-सम्वाद अश्रूयत। राजकीय-संस्कृत-महाविद्यालयस्य ज्यौतिषाध्यापकाः पण्डित उमाकान्त-झा-महोदयास्तथा साहित्यशास्त्राध्यापकाः श्री-विद्याविलासशुक्ल-साहित्य-व्याकरणाचार्याः परलोकं प्रस्थिताः। श्रीविद्याविलासशुक्ल—महाशयाः पूज्यचरण-गोस्वामि-दामोदरलालशास्त्रिणां शिष्याः व्याकरण-साहित्यन्यायेषु समं व्युत्पन्नाः योग्यतमा अध्यापका आसन्। संस्कृत-विदुषामाकरेऽस्मिन् काशीक्षेत्रे काव्यप्रकाश-रस-गङ्गाधर-व्यक्तिविवेकादि-ग्रन्थानां पाठनक्षमा द्वित्रा एव विद्वांसः सन्ति। अग्रे च परीक्षा-पिशाचिनी-ग्रस्तारछात्राः केवलसङ्कलनायैव पठन्ति। परीक्ष्यग्रन्थानां सम्यग् ज्ञानं सर्वथा विलुप्तमेव। एतस्मिन्नवसरे प्रौढपण्डितानामभावो सविशेषं व्याकुलयति मानसम्। तद् वयमनयोः सद्गतिं कामयन्तो भृशं विदूयामहे।

× × ×

*सुप्रभातम्-लिमिटेड*

सुप्रभातं विगत-वर्षेषु बहुशः प्रचलितमवरुद्धञ्च। तस्य कारणं धनाभावो ग्राहकाभावश्चासीत्। उभयोरन्योन्याश्रयत्वात्कार्यसञ्चालनं न भवतिस्म। इदानीं सुप्रभातस्य पुनः प्रकाशनावसरे कैश्चिन्मित्रैरवधारितं यत् सुप्रभातपत्रस्य प्रकाशनं तदुद्देश्यपूर्त्तये भवतु; परं तस्य सञ्चालनं कयापि संघटितया प्रकाशन-संस्थया विधेयम्। येन पत्रस्यापि सुव्यवस्था सुसम्पादनं दीर्घजीवनञ्च स्यात्। अर्थाभावोऽप्यन्तरायं न कुर्यादिति 'सुप्रभातम्-लिमिटेड' नाम्ना महती व्यापार-संस्था संघटिता। सा च राजकीय-सम्मिलित-व्यापारसंस्था-नियमानुसारं युक्तप्रान्ते राजेष्टिता च। अस्या मूलधन-मेकलक्षमितमिदानीं विद्यते। तच्चैकैकशतस्य सहस्रभागेषु विभक्तं स्यात्। इयं संस्था सुप्रभातपत्रस्य सञ्चालनम् संस्कृतमुद्रणपरस्य यन्त्रालयस्य सञ्चालनम्, विशुद्धराष्ट्रिय पञ्चाङ्ग-प्रकाशनं विधास्यति साम्प्रतमेव। एतदनन्तरं संस्कृतपुस्तकानां विशुद्धतरं मनोहरं प्रकाशनम्, हिन्दी-संस्कृत-मासिक-साप्ताहिक-पत्राणां सञ्चालनमपि विधास्यति।

संस्कृत-संसारे सर्वं प्रथमैवेयमीदृशी सम्मिलित-व्यापारसंस्था वरीवर्त्ति। यद्यपि नेयं संस्था सर्वसाधारणी; केवलं सञ्चालक-समित्या स्त्रीकृता एवास्यां भागं ग्रहीतुं शक्नु-

वन्ति । परं संस्कृत-संसारे नूतनाया अस्याः वयं सादरं हार्दिकं स्वागतं कुर्मः । अभिलषामश्चास्या उत्तरोत्तरां समुन्नतिम् । योरपदेशे तु सर्वेष्वपि चैत्रेषु सहयोगिन्यो व्यापारसंस्था एव कार्यं कुर्वन्ति । भारतीया अपि साम्प्रतमत्र—अस्यां दिशि दत्तावधानाः सन्ति । परं संस्कृतज्ञास्तु पारस्परिकाऽविश्वास-राग-द्वेषादि-मलीमस-चित्ताः नेदृशव्यापारेषु प्रवर्त्तन्ते । येन तेषां दुर्गता परिस्थितिः शोभना भवेत् । औदार्यं हृदि स्यात् । स्वाभिमान-संरक्षणं स्यात् । साम्प्रतं संस्कृताध्ययनं हृदय-परिष्काराय, ज्ञानवृद्धये, लोकसेवायै, धर्माय च कर्तव्यम् । एतेनाजीविकानिर्वाहो बन्ध्यापुत्रानुन्धानमेव ।

× × ×

## हिन्दूविश्व-विद्यालये पण्डित-नियुक्तिः

विगते वत्सरे हिन्दूविश्वविद्यालयीय-संस्कृत-विभागे, जयपुर-संस्कृत-विद्यालये प्रधानाध्यापकपद-प्रतिष्ठितानां श्रीपट्टाभिरामशास्त्रिणां मीमांसाध्यापकस्थानम्, दिवंगतानां श्रीशङ्करतर्करत्नमहाशयानाञ्च न्यायाध्यापक-पदं रिक्तमासीत् । अत्र क्रमशः श्रीरामचन्द्रशास्त्रि-षणङ्ग-महाशयानाम्, श्रीवामाचरणतर्काचार्य महोदयानां च नियोगोऽस्मिन्नेव मासे सञ्जात इति वयं परं प्रसन्नतामनुभवामः । उभावपि स्व-स्व-विषये सर्वथा योग्यतमाविति न कस्यापि वैमत्य-लेशोऽपि । अत्र निर्वाचकास्तदधिकारिणो योग्यगुण-पक्षपातेन सर्वथा धन्यवादार्हाः सन्ति ।

श्रीमतां महामान्य-मालवीय-महोदयानां सञ्चालनकालेऽपि प्रथमं योग्यतमानामध्यापकानामन्वेषणं संस्थापनञ्च भवतिस्म; परं शैथिल्यमुपगतेषु तेषु दल-बद्धता-पक्षपातादिपरैः कैश्चन-चाटुकारैरत्र संस्कृत-विभागे विचित्रैव परिस्थितिः सम्पादितासीत् । माननीय-मालवीय-सदृश-महापुरुषाणामनुग्रहस्य महान् दुरुपयोगः समभूत् । तेऽपि जराजीर्णाश्चाटुप्रियाः समभूवन् । अतएव संस्कृत-विभागे पारस्परिक-कलह-क्षोभ-घात-प्रतिघातादि-विविधोपद्रवाः प्रचलन्तिस्मेति न तिरोहितं तत्त्वविदाम् । इयं महती भारतीया पवित्र-संस्था रागद्वेष-मलीमसा नाद्यापि महर्षिकल्पानां मालवीय-महोदयानां महनीयं लक्ष्यं पूरयितुं प्राभवत् । प्रत्युत समालोचनीया, विचारणीया, नातिविश्वनीया चाभूत् । परं श्रीमतां राधाकृष्णन्-महोदयानां कार्यकाले किञ्चिदिव सुव्यवस्थिता समालोक्यते । यद्यपि भस्माच्छन्न इवानलः पारस्परिको विरोधो वर्तत एव । तथापि तस्य प्रखरता प्रचण्डता वा शान्तिमुपगता विद्यते ।

तद् वयं विद्वद्वरेण्यमध्यापकद्वयमपि निवेदयामो यत्ते संस्कृतविद्यालयीयाभ्यन्तरिक-राजनीति-वातावरणैनात्मानं संगोप्य योग्यतम-सच्छात्र-सम्पादनेन हिन्दूविश्व-विद्यालयस्य वास्तविकीं सेवां विधाय तस्योद्देश्य-पूरण-प्रवणा भवन्तु । मुग्ध-मत्स्या इव धीवराणां जाले मा पतन्त्विति ।

× × ×

## लेखकेभ्यो निवेदनम्

लेखकैर्महत्वपूर्णा लेखाः प्रहीयन्ते । परमक्षराणि सुवाच्यानि न भवन्ति । यन्त्रालयीयाक्षर-संयोजकानां सौकर्याय तस्य सुस्पष्टा प्रतिलिपिः सुतरामपेक्षते । अस्मादेव कारणात् बहवो लेखा न प्रकाशयितुं शक्यन्ते, विलम्बेन च प्रकाश्यन्ते इति लेखका अत्र विषये दत्तावधाना भवन्तु । विलम्बञ्च क्षाम्यन्तु । क्रमशः प्रकाशनीया दीर्घ-कलेवराः लेखाः सम्पूर्णा एव प्रेषणीयाः । नोचेन्न प्रकाशमायास्यन्ति ।

अयमङ्को महता कष्टेनास्माभिः सम्पादितः । बहवो लेखा आवश्यका अपि न मुद्रिताः । तल्लेखकैः क्षन्तव्यम् ।

× × ×

## ग्राहकाः प्रार्थ्यन्ते

अस्याङ्कस्य प्रकाशने यथा कष्टानुभवोऽस्माभिः कृतः,स तु वचनपथादतीत एव । सर्वस्य मूलकारणं पराधीनतैव । "सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्" । कृतेऽपि शतशः प्रयत्ने, पूर्वं प्रदत्तेऽपि मुद्रण-व्यये साम्प्रतं यन्त्रालयाधिकारिणः किमपि न शृण्वन्ति । यथेच्छमाचरन्ति । मासिकपत्राणां मुद्रणमपि राजकीय-नियमानुसारमेकस्मिन्नेव मुद्रणालये भवितुमर्हति । अन्यस्मिन् मुद्रणालय-मुद्रापणे पुना राजकीयाज्ञाप्राप्तिरावश्यकी भवति । अतएव विवशतया तस्मिन्नेव यन्त्रालये मुद्रापणमावश्यकं भवति । इति महता विलम्बेन मुद्रितोऽयमङ्कः । अग्रिमाङ्कप्रकाशनं त्वरयैव विधास्यन्ति-यन्त्रालयीया इति तैः प्रतिज्ञातम् । एतदभ्यन्तरे सुप्रभात-यन्त्रालयोऽपि कार्यारम्भं विधास्यति । तदैव यथासमयमस्य प्रकाशनं भविष्यति । इति ग्राहकैः किञ्चित् कालं क्षन्तव्यम् ।

× × ×

## हिन्दी सेवक-मण्डलम्

श्रीनागरी-प्रचारिणी-सभा-संस्थापकैः साम्प्रतञ्च तत् प्रधानमन्त्रिभिः 'श्रीरामनारायणमिश्र-महोदयैरयं प्रस्तावः कृतो यत् यथा श्रीगोखले-महोदयैः पूना नगरे, श्रीलाला लाजपतराय-महोदयैश्च लवपुर-नगरे लोक-सेवक-समिति-संस्थापनद्वारा राजनैतिक-सामाजिक-क्षेत्रे कार्यं कर्तुमिच्छतां युवकानां कृते आकर्षणं कृतमासीत् तथैव हिन्दी-संसारे कार्यक्षेत्रं चिकीर्षूणां युवकानां कृते हिन्दी-सेवक-मण्डल-स्थापनमपि विधेयम्। प्रस्तावोऽयं नागरी प्रचारिणी-सभया सहर्षं स्वीकृतः।

यस्य मण्डलस्यैकं केन्द्रं वाराणस्याम्, अपरञ्च हरद्वारस्थ-सत्यज्ञान-निकेतने भविष्यति। प्रधानकार्यालयः प्रायस्तत्रैव स्थास्यति। एतत्स्थानं परिव्राजकवर्य-श्री सत्यदेवस्वामिनामौदार्येण सभया लब्धम्। नागरी-प्रचारिणी-सभयाऽत्र स्थाने पश्चिम-भारतीय-हिन्दी-प्रचार-केन्द्रं संस्थापितमस्ति। अस्य सर्वोऽपि सञ्चालनभारः श्रीमद्भिर्मिश्रमहोदयैः स्वीकृतः। तत्रैवास्य मण्डलस्य प्रधान स्थानं भविष्यति।

अत्र मण्डले विद्यापीठ-गुरुकुल-विश्वविद्यालयानां ते स्नातकाः कार्यं कर्तुं शक्नुवन्ति, ये संस्कृतभाषायां प्रौढाः, आँग्लभाषायां उर्दूभाषायां वा व्युत्पन्नाः, कस्या अपि प्रान्तीयभाषायाः परिचिता भवेयुः। सुवक्तारः, सुलेखकाः, राष्ट्रियभावापन्नाः, साम्प्रदायिकता-दोषरहिताश्च भवेयुः।

ते यथारुचि प्रान्तेषु भ्रामं भ्रामं साक्षरता-प्रचारम्, एकलिपि-( देवनागरी )-विस्तारम्, प्राचीन-हिन्दी-वाङ्मयान्वेषणम्, राष्ट्रभाषा-विद्यालय-पुस्तकालय-वाचनालयादि स्थापनम्, हिन्दीभाषा-विरोधिकार्याणां विरोधम्, आक्षेपाणामुत्तरम्, तत्प्रचारायान्दोलनञ्च सम्पादयेयुः।

अत्र परमोत्साहिनाम्, त्याग-तपःस्वाध्यायशीलानाम्, स्वार्थरहितानाम्, देशभक्तानाम्, हिन्दी-साहित्यनुरागिणाम् निर्वाहमात्रं धनमभिलषताम् युवकानामावश्यकता विद्यते।

एष तेषां महानुद्योगः सर्वथा श्लाघनीयोऽनुकरणीयश्च संस्कृतज्ञानामपि। वयमिमं मिश्र-महोदयानांस्तुत्यमत्यावश्यकञ्च प्रयत्नमभिनन्दामः।

आशास्महे च हिन्दीसाहित्यानुरागिणो धनिका अत्र कार्ये मुक्तहस्तं धनसाहाय्यं विधास्यन्तीति।

× × ×

## अपूरणीया क्षतिः

अवधप्रान्तीय-रायबरेली-मण्डलस्थ-खजूरग्राम-राजधानीश्वराः श्रीमन्तो महाराणा उमानाथसिंह-देव-महोदयाः कैलाशवासमवापुरिति समाचारोऽयं सनातनधर्मिणां संस्कृतज्ञानाञ्च कृते नितरां हृदय-विदारको वर्तते। साम्प्रतकालीना, राजानो धनिकाश्च पाश्चात्य-संस्कृति-पिशाचिनी-ग्रस्ताः, आपादमस्तकं दुर्विलासिता-पङ्के निमग्नाः-स्वीय-धर्म-शास्त्र-संस्कृति-विमुखा विनाशोन्मुखाश्च समालोक्यन्ते। परमद्यापि केचनाङ्गुलिगणनीयाः प्राचीन संस्कृति-धर्म-पक्षपातिनो विदुषामाश्रयभूताः सन्ति। तेष्वस्माकं महाराणा-महोदयाः प्रसिद्धा आसन्। प्रतिवत्सरमेतेषां राजधान्यां शतशो विदुषां सम्मेलनं, शास्त्रचर्चा, धार्मिक-व्याख्यानानि च भवन्तिस्म, विदुषां यथेष्टः सत्कारोऽपि। एतेषां निधनेन वस्तुतोऽपूरणीया क्षतिः सञ्जाता संस्कृतपक्षपातिनाम्। इमे न केवलं संस्कृत-प्रियाः, प्रत्युत भारतीय-दर्शन-शास्त्राणां मर्मज्ञा आसन्।

वयमेतेषां कुमारैस्तथा पितृपदानुयायिभिर्वर्तमान महाराणा-शिवाम्बरसिंह-महोदयैः सह हार्दिकीं समवेदनामावेदयामः।

× × ×

## ज़कोन्दा

ज़कोन्दा नाम्नी कविता सुप्रभातस्य पृष्ठे मुद्रितास्ति स्थानाभावात्तस्याः परिचयः कवयित्र्या लिखितोऽपि तत्र न प्रकाशितः। सच लेखिकायाः शब्दैरेवात्र प्रकाश्यते—"श्रूयते खलु "दनन्झियो" नाम्ना प्रसिद्धिमान्, 'इटलि' देशजः कविराधुनिकः। तेन बहूनि नाटकानि रसालङ्कार-परिप्लुतानि प्रणीतानि। 'ज़कोन्दा' नाम नाटकमनल्प लोकोत्तर-गुण-विशिष्टतया सहृदय-हृदयन्यावर्जयतितराम्। तत्र चरमाङ्कस्यसामग्रीमुपजीव्य-उदाहरणरूपेण मया श्लोकनां पञ्चदशीयं समुपनिबद्धा विदुषां मुदे भूयादित्याशास्यते"—इति

× × ×

एम० ए०—इत्युपाधिधारि श्रीराधाविनोद गोस्वामिना अमरभारती-यंत्रालये काश्याम् मुद्रितम्।

सम्पादकः—केदारनाथशर्म्मा सारस्वतः, प्रकाशकः—रामलालशास्त्री.

संयुक्त—विहार-प्रान्तयोः शिक्षाविभागेन प्रान्तीय-स्कूल-कालेज-पुस्तकालय-पाठशालानां कृते स्वीकृतम्।

त्रयोदशाब्दे ] सौर-भाद्रपदः, २००३ वैक्रमाब्दाः [ षष्ठ-संख्या

भारतवर्षस्य सर्वोत्कृष्टम्, काशीस्थ-विद्वत्समाजानुमोदितम्

संस्कृत-मासिक-पत्रम्

# सुप्रभातम्







भारत-राष्ट्रिय-मन्त्रिमण्डलस्य प्रधान-नायकः—

परिडत जवाहरलाल नेहरू

सम्पादकः—
श्री केदारनाथशर्मा सारस्वतः।

व्यवस्थापकः—
रामलाल शास्त्री—

प्राप्तिस्थानम्—सुप्रभात-कार्यालयः,
सुप्रभातम् - लिमिटेड, बनारस

वार्षिकम्मूल्यम्—४) [ सेप्टेम्बर, १९४६ ] छात्रेभ्यः पुस्तकालयेभ्यश्च—३)

## लेख-सूची



## पाठकेभ्यः प्रार्थनम्

अयं षष्ठोऽङ्कः पूर्वप्रकाशित-सूचनानुसारं सत्वरं प्रकाशनीय आसीत्। परं यन्त्रालय-परवशतया तदधिकारिणाञ्च प्रमादेन त्रासेन च महता कष्टेन च मासत्रयविलम्बेन प्रकाशित इति वयं शीघ्रतया सम्यक्तया संशोधनमपि कर्तुं न प्राभवामः, खिन्नचेतसा सम्यक् सम्पादनमपि नाद्यावधि कृतमस्माभिः।

स्वीय-यन्त्रालय-साधन-सम्पादनमपि साम्प्रतकाले दुर्लभमेव। साम्प्रदायिक-परिस्थितिवशात् विदेशेषु यातायातयोरपि साहसं नासीत्तथापि कथंकथमपि सम्पादितैः साधनैरिदानीं सुप्रभातस्याक्षरयोजनादिकार्यं स्वाधीनतया प्रारब्धम्। शनैः शनैः द्वित्रमासेषु यथासमय-प्रकाशन व्यवस्था स्यादिति पाठकैर्दयालुभिर्मर्षणीयम्।

सप्तमाङ्कतः सुप्रभात-सम्पादन-व्यवस्थायामपि शनैः शनैरावश्यकं परिवर्तनं परिवर्द्धनञ्च भविष्यति। साम्प्रदायिकोपद्रवाः, वस्तूनां दौर्लभ्यम्, महर्घता चेति विविधकारणान्यपि नवीनकार्य-सञ्चालने प्रतिबन्धकतामायान्ति।

अस्माभिः प्रायः संस्कृतविद्यालयेषु, संस्कृताध्यापकानाञ्च सविधे प्रायः सुप्रभातमादर्शरूपेण प्रहीयते। प्रायः प्रतिशतं पञ्चषा एवोत्तरं ददति। अन्ये तु पत्रोत्तरदानेऽपि कृपणाः मौनमेवालम्बन्ते। तैः कृपया शिष्टाचारपरम्परया किमपि श्वेतं कृष्णं वा समुत्तरणीयम्। संस्कृतज्ञानामनया परिस्थित्याऽपि वयं हतोत्साहा भवामः। तत्तैरिदानीं पत्रोत्तर-प्रदान-शिष्टता तु नूनं प्रदर्शनीया।—सम्पादकः

# सुप्रभातम्

त्रयोदशाऽब्दे | सौर-भाद्रपदः, २००३ विक्रमाब्दाः | षष्ठ-संख्या

## गीतम्

मेघमल्लाररागः

जयति कविमुखकमलवासिनी शारदा । स्था०—

क्षीरहिमहीरनिभतनुविभाभर-विजित-हारहसहारघनसारशशिपारदा ।

कच्छपीवादिनी स्वच्छखगसादिनी विधिहृदयमादिनी विबुधमतिसारदा ।

अक्षगुणधारिणी तरुणजडतातिमिर-हारिणी हारिणी कौतुकविशारदा ॥

करकलितपुस्तका स्फुटमुकुटमस्तका शस्तकारुण्यकणसेवककविकारदा ॥१॥

जयति कविमुखकमलवासिनी शारदा । स्था०—

—संस्कृतगीतरत्नावली

श्री बदरीनाथ ( झा ) शर्मणः

# संस्कृत-शिक्षा

महामहाध्यापक—
परिडतराज-श्रीगोपालशास्त्री, दर्शनकेशरी

सम्प्रति भारतीय-स्वातन्त्र्ययुगेऽस्मिन् सर्वत्रैव समाजे नूतनभावोद्रेकः परिलक्ष्यते । सर्वत एव जागरणध्वनिः संश्रूयते । कियानेव समयो गतः स्यात् यत् संयुक्त-प्रान्तीय-शिक्षामन्त्रिभिरेतत्प्रान्तीयायव्यय-—स्वीकृतिप्रस्ताव-प्रसङ्गतो निजभाषणे "अरबीभाषायाः संस्कृतभाषायाश्च सर्वथाऽभ्युदय कृतेऽहं सर्वदा प्रयतिष्ये"इत्यभिप्रायस्स्वीयः प्रकाशितः । यं श्रुत्वा एतत्प्रान्तीयेष्वरबीभाषाभिज्ञेषु संस्कृतज्ञेषु च महत्युत्सा-हवृद्धिर्विद्यते । अधुनैव च शिक्षामन्त्रिणो वाराणस्यां केनापि निमित्तेनागता आसन् तदा संस्कृतज्ञाः सर्वेऽपि तेषां स्वागतं द्विगुणितेनोत्साहेन कृतवन्तस्तदानीं शिक्षामन्त्रिणोऽपि काशिकराजकीय-संस्कृतपरीक्षापाठ्यपद्धति-परिवर्तनं प्रतिज्ञातवन्तः । अत्रविषये यावत् काशिकराजकीय-संस्कृतपरीक्षा-पाठ्य-पद्धति-परिवर्तनायोजनं भवति तावदहं शिक्षामन्त्रिणः पुरस्तात् विज्ञानां संस्कृतानुरागिणाञ्च पुरतः किञ्चित् विज्ञापयितुमिच्छामि । तच्चैवमेवं विद्यते यत् विदेशीयशासकानां संस्कृतभाषासु अरबीभाषासु च सार्द्धशताब्दीं समान एव प्रहार आसीत्; परन्तु तत्र राजनीतिनिपुणैर्मोहम्मदीयैस्सर्वतः सम्पादितम् तत्र विषये जागरूकैः स्वभाषायास्संरक्षणं यथा वसरम् । संस्कृतज्ञैस्तु सर्वथा पाश्चात्य-पैशाचिक-राजनीतिज्ञानापरिचितैः सर्वदोपेक्षितमेव; येन संस्कृतभाषायाः शतमुखो ह्रासः संजातः । सम्प्रत्यपि इमे अरबीभाषाभाषिणामग्रे नगण्याः पाश्चात्य-पैशाचिकराजनीति-ज्ञानशून्यास्ततो बहिर्मुखा एव सन्ति । अरबीभाषाभाषिणस्तु स्वीयभाषायाः प्रचारस्य कृते सर्वथा सन्नद्धाः सन्ति । ते हि अरबीभाषाज्ञानेन सहैव तस्याः पाठ्यपद्धतौ देशकालोपयोगिनामितिहास भूगोलगणितादिविषयाणामपि पर्य्याप्तं ज्ञानं कारयन्ति । यतश्च अरबीभाषापरीक्षोत्तीर्णा मौलवीप्रभृतयो देशकालात्मविदो विद्वांसो भवन्ति । येन ते लोकव्यवहारमाधुनिकीं पाश्चात्यपैशाचिकीं राजनीतिञ्च सम्यग् विदन्ति । दृष्टान्तरूपतो मौलाना-अब्दुलकलाम-आजादमहाशय एव विद्यते । यो हि अरबीभाषायाः पारगो विद्वान् भूत्वा भारतीय-राष्ट्रियमहासभायाः प्रधानराष्ट्रपतिपदे समासीन आसीत् । तत्रैव संस्कृतभाषाया दिग्गजा महामहोपाध्याया विद्वांसस्तु सर्वतः सर्वथा सर्वदा राष्ट्रियमहासभाया नाम श्रुत्वापि नासिकाभ्रुवौ सङ्कोचयन्ति । अरबीभाषा-संस्कृत-भाषाभिज्ञयोर्मध्ये कियदन्तरं विद्यते—इति इदानीन्तनैर्वालैरप्यनायासेनैव साक्षात्कर्तुं पार्य्यते । एवं स्थितौ संयुक्त-प्रान्तीय-शिक्षामन्त्रिभिः प्रतिज्ञातस्य संस्कृतारबी-भाषयोः समानाभ्युदयस्य फलं अरबीभाषा-विदस्तु विद्वांसो मौलवीप्रभृतयः सम्यगुपभोक्ष्यन्ति । इत्यत्र नास्ति सन्देहलेशोऽपि ।

किन्तु अत्र संस्कृतभाषाविदामस्माकं पक्षे विवेचनीयं विद्यते । यत् शिक्षामन्त्रिभिः प्रतिज्ञातस्य संस्कृतभाषाभ्युदयस्य फलं किमस्माभिर्लब्धुं शक्यते ? मम तु सन्देहो विद्यते । यतो हि अत्र समाजे पश्चाद्दर्शिनामेव संख्या अधिका विद्यते । अत्र हि भूयांसो विद्वांसः कथयन्ति यत्—

"जन्म-संस्कार-विद्यादेः शक्तेः स्वाध्यायकर्मणोः
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्"

"कलिरयमत्र तु दैनन्दिनं ह्रास एव भविष्यति, नास्ति किञ्चित्करणस्य प्रयोजनम् ।यथाहि पूर्वं महान्तो विद्वांसोऽभूवन् तथेदानीं कथमपि कोऽपि भवितुं नार्हति । अतो हि यथा भगवान् चालयति तथैव चलनीयम्, कियानपि स्वीय उद्योगो न कर्तव्यः, जगदिदं अदृष्टनिबद्धं विद्यते, अदृष्टेनैव चाल्यमानाः सर्वे प्राणिनः पदमपि स्वतन्त्रतया गन्तुं नार्हन्ति । जीवोऽयं स्वप्रारब्धनिबद्धो यथा प्रारब्धं गमिष्यति । व्यर्थमेव पौरुषप्रयोगं मूर्खा नास्तिका एव कुर्वन्ति, तस्य च किमपि फलं न भवति । ईश्वरोपरि विश्वासं कृत्वा यथाप्राप्तेन सन्तोषं कृत्वा प्रारब्धमग्रे कृत्वा गन्तव्यम् । जगत्तु उत्तरोत्तरं कलिना ग्रस्यमानं विनाशोन्मुखं ह्रासपथे गच्छत्येवेत्यादि" किं किन्न कथयन्ति । तत्कथनस्य सर्वथेहानुवादः स्थानाभावात्समयाभावादसम्भव एवेति सुप्रभात-पाठकानां पुरतोऽहमन्यमपि पक्षमुपहर्तुमिच्छामि ।

किं भोः पश्यन्तु भवन्तः, किमयमेव ह्रासपक्षो यदि साधीयान् ? तर्हि भवन्तो वैयाकरणा यथोत्तरं मुनीनां प्रामाण्यमिति कथं सङ्गिरन्ते । पाणिनितोऽल्पज्ञस्य तदुत्तरभवस्य ह्रास-

क्रमेण तत्पश्चाज्जायमानस्य वररुचेः कात्यायनापरनाम्नो वार्तिककारस्य वचसि कथं ततोऽपि प्रामाण्यादरः । ततोऽप्युत्तरकालभवस्योभयापेक्षयाऽप्यल्पज्ञस्य पतञ्जलेर्वचसि च कथं प्रामाण्याग्रहः । इत्यहो ! 'यथोत्तरं मुनीनां प्रामाण्यम्' इति विडम्बनामात्रमेव । अन्यच्चाश्वघोषकथितं बुद्धचरितनिबद्धमुत्तरोत्तरमभ्युदयसूचकं पद्यजातमपि मत्त प्रलाप एव प्रतिभाति । पश्यन्तु—

यद्राजशास्त्रं भृगुरङ्गिरा वा न चक्रतुर्वंशकरावृषी तौ ।
तयोः सुतौ तौ च ससर्जतुस्तत् कालेन शुक्रश्च बृहस्पतिश्च ॥
सारस्वतश्चापि जगाद नष्टं वेदं पुनर्यं ददृशुर्न पूर्वे ।
व्यासस्तथैनं बहुधा चकार न यं वशिष्ठः कृतवानशक्तिः ॥
वाल्मीकिनादश्च ससर्ज पद्यं चकार यन्न च्यवनो महर्षिः ।
चिकित्सितं यन्न चकार चात्रिः पश्चात्तथात्रेय ऋषिर्जगाद ॥
यच्च द्विजत्वं कुशिको न लेभे तत्साधनं सूनुरवाप राजन् ।
वेलां समुद्रे सगरो बबन्ध नेक्ष्वाकवो यां प्रथमं बबन्धुः ॥
आचार्य्यकं योगविधौ द्विजानामप्राप्तमन्यैर्जनको जगाम ।
ख्यातानि कर्माणि च तानि शौरेः शूरादयो येष्वबला बभूवुः
तस्मात्प्रमाणं न वयो न कालः
कश्चित् क्वचिच्छ्रैष्ठ्यमुपेति लोके ।
राज्ञामृषीणां च हितानि तानि
कृतानि पुत्रैरकृतानि पूर्वैः ।

इत्यादि दैनन्दिनं विकाशपक्षोऽपि संस्कृतशास्त्रेष्वेवास्ति ।

सत्येवं संस्कृतज्ञेषु परस्परविवादे कथं संस्कृतभाषायाः सर्वथाऽभ्युदयः साधितः स्यादिति विमर्शनीयो विषयो विद्यते । मम दृष्टौ तु समायाति यद् यथाहि हितेच्छुर्मर्मज्ञश्चिकित्सको रोगिणो रोगं परिज्ञाय तमनादृत्यापृष्ट्वैव च तदीयरोगचिकित्सां करोति । तथैवाद्यत्वे संस्कृतभाषाया अभ्युदयाभिलाषिभिः संस्कृतज्ञान् परस्परं विवदमानाननादृत्यापृष्ट्वैव च संस्कृत-पाठ्य-पद्धति-परिवर्तनरूपा संस्कृतज्ञाभ्युदयकरी संस्कृत-ह्रास-रोग-चिकित्सा विधातव्यैवेति । तत्र संयुक्त-प्रान्तीय-शिक्षामन्त्रिणो यदि वस्तुतः संस्कृताभ्युदयमभिलषन्ति तर्हि तेषां प्रधानमिदमिदानीं कर्तव्यं विद्यते यत्ते स्वयं संस्कृतज्ञाः सन्ति; अतश्च साधिकारं तत्राभिनवानां ग्रन्थानां निवेशं कारयन्त एव शिक्षासुधारसमितिसम्पादितं संस्कृत-पाठ्य-पद्धतिविवरणमविलम्बितं स्वीकृत्यागामिनि एव वर्षे तत्परीक्षायां परिणमयन्तु इति । तत्समिति-सदस्याश्च देशकालात्मविज्ञानकरम् साम्प्रतिक-संस्कृत-पाठ्यपद्धतेरामूलचूडं परिवर्तनं कृत्वा नवीनां संस्कृत-पाठ्य-पद्धतिम् अतिप्राचीनार्षग्रन्थानां तथाऽधुनिकानां व्यावहारिकप्रवृत्तिजनकानां ग्रन्थानां च सन्निवेशं कृत्वा देशकालोपयोगिनीं विधायैव—शिक्षामन्त्रिपार्श्वे प्रेषयन्तु । समितिसदस्यानामिदमावश्यकं कर्तव्यं तैर्न विस्मर्तव्यम् । विशालां स्फारां दृष्टिं प्रवेशयन्तु । शताब्दी-द्वय-निर्मितानां ग्रन्थानामध्ययनाध्यापनमनादृत्य प्राचीनविद्वद्धुरीणाभ्यस्तां चतुरस्रां संस्कृतशिक्षापद्धतिमेव पुनः प्रतिष्ठापयन्तु । यतश्च पुनरप्याधुनिका विद्वांसः पूर्ववत्—

"सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च
सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति"

इति मानवोक्तिं चरितार्थयन्तु । पुनश्च संस्कृतज्ञा विद्वांस इतिहास-भूगोल-राजशास्त्र-धर्मशास्त्रादिसर्वविषयाणां ज्ञानं कुर्वन्तः—

"इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथि—
र्धौम्यो धर्मनृपस्य वैन्यनृपतेः स्वौजा निमेर्गौतमिः ।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य विश्वात्मन—
स्तद्वत्तस्य विभोरभूत्कुलगुरुर्मन्त्री महान्माधवः"

इति प्राचीन-संस्कृतज्ञ-विद्वत्समाजवत् नवीन-संस्कृत-पाठ्य-पद्धतिजुषो विद्वांसश्चतुरस्रं पाण्डित्यं दधाना महान्तो विद्वांसो देशकालात्मविदो भवन्तः सर्वमपि राजनीति-समाज-नीति-धर्मनीति-सम्बद्धं व्यवहारं चालयितुं कारयितुं स्वयमपि कर्तुं च समर्था भवन्तु-इति । एतच्चाधुनिक-संस्कृतशिक्षा-पद्धतेरामूलचूलपरिवर्तनं विना नैव भवितुमर्हति ।

पश्यन्तु बहुज्ञानामुक्तिम्—

"एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम् ।
तस्माद्बहुश्रुतः शास्त्रं विजानीयात्परीक्षकः ।

मल्लिनाथोऽपि चतुरस्रमेव पाण्डित्यं प्रशंसति—

"वाणीं काणभुजीमजीगणदवाशासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुराम्
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः"

इत्येवं पूर्वकाले संस्कृतज्ञाः सर्वज्ञा भवन्तिस्म । के जगति

विषयास्तैरनधीता आसन्। पश्यन्तु महाभारतम्—यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्। इत्येव हि व्यासदेवस्य पाण्डित्यं तद्वदेव वाल्मीकेरपि। पाण्डित्यवलेन श्रीविश्वनाथकविराजादयः सम्राजां सान्धिविग्रहिक पदमलङ्कृतवन्तः। यस्य संस्कृतसाहित्यस्य पाण्डित्यप्रकर्षतश्चाणक्यश्चन्द्रगुप्तस्य साम्राज्यं प्रतिष्ठापितवान्। तस्यैव संस्कृतसाहित्यस्य पाण्डित्यमिदानीं "शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै रित्यादिपद्यानामर्थज्ञानमात्रे, पञ्चषाणां समस्यानां परिपूरणे, क्वचित्-क्वचित् केषांचिदिभ्यानां प्रशस्तिवर्णने, क्वापि पाठशालायां सप्ताष्टानां व्याकरण-ग्रन्थानामध्यापनमात्रे परिसमाप्तम् भवति। इत्यहो कालमाहात्म्यम्? नाग्रे लेखनी प्रचलति। अद्यत्वे संस्कृतज्ञानां पाश्चात्यैः सर्वतः सर्वथा दयनीयदशाम्प्रापितानां दीनदीनामवस्थां दर्शं-दर्शं विदूयतेऽन्तःकरणम्। दृष्टावन्धकारो दण्डायते। नातःपरं किञ्चिल्लिखितुं शक्नोमि। केवलं शिक्षामन्त्रिणमनुरुणध्मि। यद्भवान् ब्राह्मणान् सावधानान् कर्तुमभिलषति चेत्संस्कृतपाठ्यपद्धतिं सर्वथा परिष्करोतु। संस्कृतशिक्षासुधारसमितिसदस्यानपि साग्रहमभ्यर्थये यन्निर्भयं भवन्तः तैलकार-वलीवर्दन्यायगां परिगणितेषु अर्वाचीनग्रन्थेषु वाभ्रम्यमाणां संस्कृतशिक्षापद्धतिम् आमूलचूडं परिवर्त्य झटित्येव संस्कृतज्ञानां विदुषां पन्थानं प्रशस्तं कुर्वन्तु इत्योम्—

शान्तिः ३

---

# ज्योतिश्शास्त्रानुसारेण फलं कस्मान्न लभ्यते?

दैवज्ञमार्त्तण्डः श्री केदारदत्तजोशी, ज्यौतिषाचार्यः ( गणिते, फलिते च )
[ प्रोफेसर—हिन्दू-विश्वविद्यालय, काशी ]

प्राचीनकालादेव वेदाङ्ग-ज्योतिषस्त्रीण्यङ्गानि प्रचलितानि सन्ति तदुक्तं शास्त्रान्तरेषु—

*सिद्धान्त-संहिता-होरा-रूपस्कन्ध-त्रयात्मकम्।*
*वेदस्य निर्मलं चक्षुर्ज्योतिश्शास्त्रमकल्मषम्॥*

सिद्धान्त-संहिता-होरेतिक्रमेण होराक्रमाङ्कोऽन्तिमोऽस्ति। तथापि होरोत्पत्तिः प्रथममेव सिद्धा। मनुष्यः यं कञ्चिदपि वस्तुविशेषं दिदृक्षति सोऽप्रत्यक्षरूपेण तद्भविष्यत् फलस्य भावनां कृत्वा तत्स्वरूपाभिमुखो भवति। महर्षयो ग्रहैर्भाविफलानुभवं कृत्वा तन्मूलतत्त्वं सिद्धान्तं तदनन्तरं होराशास्त्रं जग्रन्थुः। तस्मात्कालादारभ्य वर्तमानसमयं यावद् होराशास्त्रं जगति प्रचलितं दृश्यते।

प्रकृतेर्नियमानुसारं ग्रहाणां प्रखररश्मिभिरेव चराचरस्य जगतः प्रत्येकस्य वस्तुन उत्पत्तिर्लयश्च सञ्जायते। इति तु न केवलं पुराणग्रन्थेभ्य एवापितु-आधुनिक-वैज्ञानिकानां सूक्ष्मवीक्षणयन्त्रैरपि, प्रामाणिकतामागतम्। विविध देशभ्रमणेन तत्तद्देशस्थानामाकृत्याहार-व्यवहार-वेषभूषा भोजनादिभिरथ च तेषामन्नविशेषोत्पत्तेर्मानमप्यगम्य निश्चीयते यन्नूनमेव निखिलप्राकृतिकवस्तुषु ग्रहाणां प्रभावो नियमेन प्रभवति। अब्धिपूराणां लीला तु जनतायाः प्रत्यक्षमेव सत्यं वरीवर्ति। प्रत्येकस्य विज्ञानवेत्तुरिदमेव सम्मतम् यदब्धौ पूराणामुद्गमस्य चन्द्रमा एव हेतुः। ग्रहैरेव रुजमुत्पद्यते। चन्द्रमसैव (फायलेरिया) नाम्न रुज उत्पत्तिर्जायते। चन्द्रकलानामुपचयापचयानुसारमेव मार्जारचक्षुषोः पुत्तलिकाऽपि वर्द्धते क्षीयते च। सरस पदार्थेषु चन्द्रमाऽधिकं प्रभवति। यथैव ग्रहाः प्राकृतिकेषु वस्तुषु प्रभवन्ति तथैव नक्षत्राण्यपि। किन्तु तस्यातिसूक्ष्मत्वात् तद्वर्णनम् ज्योतिश्शास्त्रे विशदं नोपलभ्यते। किरणानां सम-तिर्यक् भावेन च स्रवणेन तथाच स्रवणमात्रायामल्पाधिक्यभावात् जगतो निखिलवस्तुषु भिन्नतायाः स्वाभाविकत्वमुपगम्यते। किरणैर्भाविनमेव तत्फलं यद्विविधं जायते तत्प्राक्तनाः महर्षयो दुरूहपरिश्रमेणानुभूय

लोकोपकाराय प्रचालितवन्तः। प्रतिक्षणं समयस्य गतेर्भिन्नत्वात् क्रमशो मनुष्येष्वपि परिवर्तनं समजनि। ते च शनैः-शनैस्तदनुभवस्य दुरुपयोगं कुर्वाणा अद्यत्वे तं विनाशाभिमुखीकृत्य विनाशसमुद्रतटे चानीतवन्तो दृश्यन्ते। तदस्तित्वनाशस्त्वधुना नातिदीर्घं वायुवेगं समीक्षते।

अस्मिन् भारते वर्षे ज्योतिश्शास्त्रोद्देशः फलकथनाय वरीवर्ति। शुभाशुभफलप्राप्तौ ज्योतिश्शास्त्र-धर्मशास्त्रयोः परस्परमङ्गाङ्गिभावसम्बन्धादेव व्रतोपवासमुहूर्त्त-जातक ताजिकफल-प्रश्नफल-कृषि-व्यापारादि-कार्याणि धर्मशास्त्रानुसारं निर्मितैरेव पञ्चाङ्गैः संस्कृतानीति समुल्लेखाः प्राप्यन्ते। स्वरशास्त्रानुसारं फलादेश-कथने त्वतिसूक्ष्मपञ्चाङ्गान्यपेक्षन्ते।

अद्यत्वे तादृशस्य कस्यचिदृष्यार्षसिद्धान्तस्यानुसारं विनिर्मितानां सूक्ष्माणामथ च शुद्धानां पञ्चाङ्गानां प्रायो निखिलेऽपि देशेऽभाव एव दरीदृश्यते। फलादेशाशुद्धावित्येव हेतुः। पूर्वं तावदेषु पञ्चाङ्गेषु दृश्यादृश्ययोर्विवादोऽस्ति। दुःखस्य तावदेष विषयो यद् दृश्यादृश्येषु पञ्चाङ्गेषु चापि परस्परं वैषम्यं वरीवर्ति। वर्तमानकालिकेषु केषुचित्पञ्चाङ्गेषु मिथुनराशेरेव शनिः प्रचलितोऽवलोक्यते। केषुचिच्च वृषराशेश्शनिः प्रचलति। अनेनान्तरेण फलादेशः कियत् सत्यं भवेत्तत्तु विचारणीयम्। सिद्धान्तकृद्भिरुक्तं यत्फलादेशेन निरयण-गणितानुसारमेव भवितव्यम्। फल वैषम्ये पञ्चाङ्गगणितस्य वैषम्यमेव हेतुः। अत्र तु वैषम्याधिकोल्लेख अनावश्यक एव। दिग्दर्शनमात्रेणैव कृतं स्यात्।

आर्यपरम्परानुसारं मार्तण्डमण्डलार्धोदयात्स्फुटेष्ट सावन-समये जन्म इति जन्मपत्रेषु संस्कारकालीनपत्रेषु वा लिख्यते। अतः सूर्योदयात् प्रसवसमयावधि उपनयन विवाहादि-संस्कारसमयावधि वा यो हि समयः स एवेष्ट समय इष्टकालपदवाच्यो भवति। शुद्धमिष्टमेव फलाफलस्य शुद्धतां बिभर्त्ति। लोकाः प्रायशो निर्धारितसमयमेव सार्द्धद्विगुणीकृत्येष्टसमयं निर्धारयन्ति। इष्टकालेन तु सूर्यघटिकानुसारमेव भवितव्यम्। सूर्यघटिकायां तथाचाधुनिक घटिकायामेकक्षणतः पञ्चदशक्षणानामन्तरः प्रायशः सञ्जायते। सूर्यघटिकयैवेष्टकालो बोद्धव्य इति। सूर्य सिद्धान्तस्योत्तरार्द्धे ज्यौतिषोपनिषदध्याय वास्तविकेष्टकाल ज्ञानाय कपालयन्त्रस्य रचना कृता।

साचैवं—ताम्रपात्रमधश्छिद्रं न्यस्तं कुण्डेऽमलाम्भसि।
षष्टिमर्ज्जत्यहोरात्रे स्फुटं यन्त्रं कपालकम्॥

अत्र तथाच्छिद्रं कार्यं यथाऽमलजलपूर्णे कुण्डे न्यस्तं सदहोरात्रे षष्टिः षष्टिवारं मज्जति। यथा मलादिना प्रवेश छिद्राऽवरोधो न भवेत्, अतोऽमलाम्भसि कुण्डे न्यस्तमित्युक्तम्। इत्थं शुद्धयन्त्रेण कालज्ञानं कर्त्तव्यम्।

साम्प्रतं समयज्ञानाय निर्मितघटी (घण्टा) यन्त्रेषु चतुर्विंशति होरा (घंटा) मानं मापितमस्ति। ग्रहगणितादि-सिद्धान्तग्रन्थेषु षष्टिघटिकानां यन्मानं वर्णितमस्ति तासामपि २½ सार्धद्वयघटीभिरेका होरा भवतीत्यनुसृत्य चतुर्विंशतिहोरा अहोरात्रे भविष्यन्त्येवेति नात्र सन्देहः। अहोरात्रशब्दस्य पूर्वापरवर्णलोपात अहोरात्र-शब्दस्यात्र होराशब्दो विकल्पको भवतीति वराहमिहिरः। तन्मुखोक्तं यथा—

*होरेत्यहोरात्रविकल्पमेके, वाञ्छन्ति पूर्वापरवर्णलोपात्;*

अथ च 'राशेरर्धं होरा' इत्यभिप्रायेणाहोरात्रे द्वादश राशीनां समुदयस्तेषामर्धं चतुर्विंशतिर्भवति। अतएवाहोरात्रे चतुर्विंशति होरा भवन्तीति-अस्माकीनेषु शास्त्रेषु वर्णनमस्ति। एवमेव मूलं गृहीत्वा चतुर्विंशतिहोरा (Hour) अहोरात्रे मापिताः पाश्चात्यैः समयज्ञैः स्वीय-घटीयन्त्रेषु। आधुनिकघटिकाः देश-देशान्तरेषु सर्वत्र समानरूपेण प्रचलितास्सन्ति। आधुनिका ज्योतिर्विदो यद्यपि रेलवेघटिकासु कालसमीकरणसंस्कारं तथा देशान्तरसंस्कारं विधायेष्टकालज्ञानं कुर्वन्ति; तथापि तत्र स्थूलतादोषः समापतत्येव। संस्कारमेनमपि नाखिलाः ज्योतिर्विदो विजानन्ति। कलिकत्तायां पञ्चवादनवेलायां जातस्य शिशोस्तात्कालिक-काशीतो देशान्तर संस्कार-दानानुसारं लग्ननिर्मातारो ज्योतिर्विदो न सुलभा इति। अत्रापि शुद्धलग्नपरिज्ञानमसम्भवमेव। किं पुनस्तत्तद्देशविशेष-गतेष्ट-परिज्ञानं सुकरं स्यात्। अतएव कपालयन्त्रावलम्बिनां कूर्माचलीय-नयपाल-प्रभृति-पर्वत वासिनां ज्योतिर्विदां विचारे स्वल्प एव फलभेदो भवति।

अन्यच्च—प्राक्तनसंस्कारवशाज्जीवो यस्मिन्समये गर्भे समायाति तात्कालिकग्रहस्थितेः फलमपि तद्भावि जीवने समापतति। अतएव गर्भाधानमुहूर्तस्यैव विचार आद्याचार्यैः प्रथमं कृतोऽस्ति। गर्भाधानकालीनेष्टं स्वा-

धीनम्। तच्चैवं शुभमुहूर्त्तानुसारेण पुत्रकामनया कन्यका-कामनया वा कर्तव्यं भवति। तदुक्तं मुहूर्त्तग्रन्थेषुः—

स्वस्त्रीं प्राक्छिट्चतुष्कासम-दिन-विवर-श्राद्ध-तत्प्रागदिनानि
त्यक्त्वा मूलं तथान्त्ये वसु-कलि-जनिभाह।नि पर्वाणि चर्तौ
याहीज्यार्केन्दुलग्नैर्विषम-
भलवगैरुद्वलैभौः सुतार्थिन् !
व्यस्तैरेतैरिहैवायुगहनि-
मुदितः कन्यकेच्छोः सुचन्द्रे ॥

अत्र विषमलग्ननवांशस्य गर्भाधानस्य फलं पुत्रोत्पत्त्यै भवतीत्युक्तम्। विषमलग्ननवांशौ किमपीष्टसमयाधीनौ भवतस्तदिष्टमन्वेष्टव्यम्। इदं गर्भाधानेष्टं स्थिरीकृत्यैव तद्वशेन शास्त्रोदितप्रणाल्या प्रसवेष्टज्ञानं सुशकम्। तच्चैवमुक्तमावन्तिकाचार्येण

तत्कालमिष्टसहितो द्विरसांशको य-
स्तत्तुल्यराशिसहिते पुरतः शशांके।
यावानुदेति दिनरात्रिसमानभाग-
स्तावद्गते दिननिशोः प्रवदन्ति जन्म ॥

एवं प्रकारेण गर्भेष्टकालात्प्रसवेष्टकालो ज्ञातव्यः। प्रतीक्षितव्यश्चोक्तप्रकारेण प्रसवकालः। अमुमिष्टकालमवलम्ब्य प्रसवेष्टकालीन-दिनवारनक्षत्रयोगकरणादिभिः फलादेशोपयोग्युपकरण-समारम्भणेनावश्यमेव गणितागते काले प्रसवो भविष्यति। दैवाद्यदि तत्र गणनात्रुटिवशादन्यस्मादपि वा कारणादन्तरमापतेत् तदापि तत्र स्वल्पमेवान्तरं लप्स्यते। गर्भेष्टात्प्रसवेष्टं यथातथमायाति चेदस्मादधिका सूक्ष्मा शुद्धा चेष्टसाधनप्रणाली नान्या भवितुमर्हति। गर्भेष्टं च स्वाधीनमत एव प्रसवेष्टमपि स्वाधीनं सम्भवति। प्रसवकालेऽपि पूर्वं जलप्रस्रावो भवति पश्चाद्बाल उत्पद्यते। अत्र जलप्लावकाल एव शुद्धेष्टकालः; नतु बालस्य भूम्यवतरणकालः।

उक्तञ्चः—उत्तमं जलप्लावः स्यान् मध्यमश्चांगदर्शनम्।
अधमं पृष्ठाख्यातं यथा गर्भाच्च्युतिर्भवेत् ॥

मध्यमोऽपीष्टकालोऽग्राह्यः। उत्तमोऽपीष्टकालः कपाल यन्त्र-द्वारा ग्राह्यः। अथवा 'दिनं खरामैरधिकं' मित्यादि वराहमिहिराचार्योक्तप्रकारेण चेष्टं ग्राह्यम्। सैव घटी तस्याः पष्टिलवो पलस्तस्य षष्ठांशो असुरित्येतादृशसूक्ष्मावयवरूपो घटी-पलात्मकः काल इष्टसंज्ञको भवति। स ग्राह्यः। तस्मादेव सूक्ष्मेष्टकालाल्लग्नं विधाय जातकगतसूतिकाध्यायोक्तप्रकारेण लक्षणानि विचारणीयानि। अनुलक्षणमिष्टं परिज्ञाय जातकस्य शुभाशुभं विनिर्देश्यम्। तानि च यथा-तत्रादावेव पितुः सन्निधावसन्निधौ चाजात इत्याह वराहमिहिराचार्यः—

पितुर्जातः परोक्षस्य लग्नमिन्दावपश्यति।
विदेशस्थस्य चरभे मध्याद् भ्रष्टे दिवाकरे ॥

इन्दौ चन्द्रे लग्नमपश्यति सति पितुः परोक्षस्य जनकस्यासन्निधौ जात इति वाच्यम्। एवमेव सर्पवेष्टितं जन्म, नालवेष्टितं जन्म, जारजातं जन्म, पितृबन्धनयोगः, उदकमध्ये प्रसवयोगः, पोतगत-प्रसवादयो योगाश्चैवं सूतिकाध्यायोक्ता ज्ञेयाः। यदि लभ्यन्ते लक्षणानि तदा पूर्वागतमिष्टं शुद्धमन्यथेष्टे संस्कारान्तरं कृत्वा अनुलक्षणमिष्टं परिज्ञाय जातकस्य शुभाशुभं विनिर्दिशेत्। यस्मिंल्लग्ने निगदितान्युपर्युक्तानि लक्षणानि संघटन्ते। तत्कालीन-लग्नार्काभ्यां ग्रहगणितसिद्धान्तोक्त-रीत्या अभीष्टकालः साधनीयः। कृते साधनेऽवश्यमिष्टशुद्धिर्भविष्यति। तदनुसारं फलादेशे फललाभे न कश्चित्सन्देहः। अन्येऽपि सन्ति बहव उपाया गुलिक—प्राणपदादयो यैरुपायैरिष्टं शुद्धमस्तीति प्रतीतिर्भवति। ते सर्वेऽप्युपायास्सन्ति प्रयाससाध्याः। प्रयासेन शोधनस्य प्रथाऽपि लुप्तप्राया सञ्जाता।

यदीष्टकाले किञ्चिदप्यन्तरमायाति तेन त्रिविधग्रहाणां दशासु प्रत्येकस्वस्ववर्षप्रमाणानुपातेन निश्चयमेव मासानां वर्षाणां वाऽन्तरमायाति। यदि जन्मपत्रिकाया मूलमेवाशुद्धं तदा युक्तियुक्तफलस्य प्राप्तिः सम्भाव्यते किम्? [क्रमशः]

× × × ×

## सूक्तम्

लोकोत्तरं चरितमर्पयति प्रतिष्ठां
पुंसां कुलं नहि निमित्तमुदारतायाः।
वातापितापनमुनेः कलशात् प्रसूति-
र्लीलायितं पुनरमुद्र-समुद्रपानम् ॥

× × ×

तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः।
पुरुषस्तावदेवासौ यावन् मानान्न हीयते ॥

# आध्यात्मिकं स्पन्दनम् ।

लेखकः—श्रीदेवीनारायणः विद्यासागरः
एडवोकेट, शास्त्राचार्यः

योगविद्या हि भारतवर्षस्य परमा विद्या । निखिलेऽपि भू-मण्डले भारतीययोगविद्या-महत्वं सादरसामनन्ति वैज्ञानिका अपि विद्वांसः ।

अस्माकं देशे शिव-कृष्ण-प्रभृतिमहतां देवानां महत्वं योगेनैव विद्यते । 'महायोगेश्वरो हरिः,' 'यत्र योगेश्वरः कृष्णो' इत्यादि महायोगित्वेनैव कृष्णस्य महत्वं गीतायां बहुशः प्रतिपादितम् । महायोगी भगवान् शङ्कर एव हठयोग-राजयोग-विद्यायाः संसारे प्रथमः प्रवर्त्तकः । प्राचीनभारते मत्स्येन्द्रनाथ गोरक्षनाथ-प्रभृतयो योगिवर्य्याः प्रसिद्धा बभूवुः । साम्प्रतमपि केनापि रूपेण बहवो हठयोगक्रियां कुर्वन्त्येव । प्राणायाम-ध्यानादिकन्तु त्रैवर्णिकानां सन्ध्याकृत्यरूपेण दिवसे वारद्वयं सर्वेषामनिवार्यमेवास्ति । तदस्यैव सङ्क्षिप्ततमं रूपम् यदाधुनिकैस्तदनभिज्ञैस्तिरस्क्रियते—

योगशिखोपनिषदि उक्तम्:—

"योऽपान-प्राणयोरैक्यं स्वरजोरेतसोस्तथा ।
सूर्याचन्द्रमसोर्योगो जीवात्म-परमात्मनोः ।।
एवन्तु द्वन्द्वजालस्य संयोगो योग उच्यते ।"

देवीभागवतेऽपि निर्दिष्टम्:—

न योगो नभसः पृष्ठे न भूमौ न रसातले ।
ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः ।।
हकारः कीर्तितः सूर्यष्ठकारश्चन्द्र उच्यते ।
सूर्याचन्द्रमसोर्योगाद्धठयोगो निगद्यते ॥

योगाभ्यासं कुर्वद्भिः प्रथमं हठयोग-क्रियायां पूर्णत्वं प्राप्तव्यम् ।

'हठं विना राजयोगो राजयोगं विना हठः ।
न सिद्ध्यति ततो युग्ममानिष्पत्तेः समभ्यसेत् ॥

केवलं राजयोगसिद्धये हठयोग-क्रिया कर्त्तव्या । मत्स्येन्द्रनाथ-शावर-आनन्दभैरव-चौरङ्गी-मीननाथ-गोरक्षनाथ-भगवच्छङ्कराचार्यादयो महासिद्धाः कालदण्डं खण्डयित्वा हठयोगप्रभावतो ब्रह्माण्डे स्वच्छन्दतया विचरन्ति हि ।

अनेके हठयोगच्छात्राश्चित्र-पुस्तकावलोकनं कृत्वा हठयोगाभ्यासं कुर्वन्ति । तेषां विनाशो निश्चित एव । गुरुं विना योगक्रिया कदापि न कर्तव्या । उक्तञ्च—

प्रशान्तचित्तस्य जितेन्द्रियस्य
गुणान्वितस्याऽऽगुरुसेविनश्च ।
नूनं भवेद्योग-समस्तसिद्धि-
र्नात्येतरासक्तजनस्य कस्य ॥
गुरुप्रसादाल्लभते योगमष्टाङ्गसंयुतम् ।
शिवप्रसादाल्लभते योगसिद्धिं च शाश्वतीम् ॥

सन्न्यासिनान्तु प्रधानमिदं कर्तव्यम् । योगानुष्ठानमेव सन्न्यासग्रहणफलम् । परमिदानीन्तु ते तद्विरुद्धमेव योगासक्ताः स्मयदूषिताः, प्रभवश्च परम्परागत-योगमार्गं परित्यज्य रागद्वेषाभियोगादिपराः दृश्यन्ते ।

योगाभ्यासस्याग्निहोत्रापेक्षया श्रेष्ठत्वं नासिकेत-पुराणे प्रोक्तम्—

अग्निहोत्रमिदं तात ! संसारस्य तु बन्धनम् ।
जन्म-मृत्यु-महामोहाः संसारे पततां ध्रुवम् ॥
योगाभ्यासात् परं नास्ति संसारार्णव-तारणम् ।
न कार्य्यमग्निहोत्रं तु योगाभ्यासं कुरु प्रभो !

कूर्मपुराणेऽपि:—

योगाग्निर्दहति क्षिप्रमशेषं पापपञ्जरम् ।
प्रसन्नं जायते ज्ञानं ज्ञानान्निर्वाणमृच्छति ॥

अत्रिसंहितायामपि—

योगात् संप्राप्यते ज्ञानं योगो धर्मस्य लक्षणम् ।
योगः परं तपो ज्ञेयस्तस्माद् युक्तः समभ्यसेत् ।।
न च तीव्रेण तपसा न स्वाध्यायैर्नचेज्यया ।
गतिं गन्तुं द्विजाः शक्ता योगात् सम्प्राप्नुवन्ति माम् ॥

इदानीन्तनाः बहवो बाह्याडम्बरमात्रेण योगिलिङ्गधारिणो किम्प्यासनादिकं प्रदर्श्य परमपवित्रां योगक्रियां स्वोदरपूरण-व्यापाररूपेण परिणमन्ति । परमेष उपहास अन्यायो वा । उक्तञ्च—

न वेषधारणं सिद्धेः कारणं न च तत्कथा ।
क्रियैव कारणं सिद्धेः सत्यमेतन्न संशयः ।।

क्रियायुक्तस्य सिद्धिः स्यात् अक्रियस्य कथं भवेत्।
न शास्त्रपठनादेव योगसिद्धिः प्रजायते॥

महर्षिभिर्योगायाष्टाङ्गानि निर्दिष्टानि। केचन "षडङ्गो योग" इति वदन्ति।

पतञ्जलियोगसूत्रे:—

"यम-नियमासन-प्राणायाम-प्रत्याहार-धारण-ध्यान-समाधयोऽष्टावङ्गानि।"—इत्याहाष्टाङ्गानि।

गोरक्षपद्धत्यान्तु—

आसनं प्राणसंरोधः प्रत्याहारश्च धारणा।
ध्यानं समाधिरेतानि योगाङ्गानि वदन्ति षट्॥

इति यम-नियमयोर्बाह्यसाधनमात्रं प्रदर्शितम्।

## आध्यात्मिक-स्पन्दनम्

योगाभ्यासे सर्वदैवाध्यात्मिक-स्पन्दनस्य प्राधान्यं विद्यते। उक्तं हि योगशास्त्रे:—

कार्यं यत्र विभाव्यते किमपि तत् स्पन्देन सव्यापकम्
स्पन्दश्चापि तथा जगत्सु विदितः शब्दान्वयी सर्वदा।
सृष्टिश्चैव तथेयमाकृतिविशेषत्वादभूत् स्पन्दिनी
शब्दश्चोदभवत्तदा प्रणव इत्योङ्काररूपः शिवः॥

योगाभ्यासिभिः सत्स्पन्दनधारणार्थं प्रचारार्थञ्च मनसा वाचा कर्मणा सत्कार्यं कर्तव्यम्। प्रायो योगाभ्यासरताः सिद्धगणा अत एव तीर्थस्थानेष्वेकान्त एव निवसन्ति। तैरेव महापुरुषैस्तपस्विभिश्च पुण्यक्षेत्राणि तीर्थ-स्थानानि च पवित्रीकृतानि, आध्यात्मिक-स्पन्दनैः प्लावितानि च। उक्तञ्च शुद्धितत्त्वे:—

प्रभावाददद्भुताद्भूमेः सलिलस्य च तेजसः।
परिग्रहान्मुनीनाञ्च तीर्थानां पुण्यता स्मृता॥

कैलाशशिखरस्थ-मानसतीरवासिभिः स्वामिप्रणवानन्दैः "आध्यात्मिक-स्पन्दन"—नाम्नि पुस्तके तीर्थानां स्पन्दनस्य तालिका प्रदत्ता। सा चेदृशी:—

| | | | |
|---|---|---|---|
| १ कैलाशः—१०० प्रतिशतम्, | | | |
| २ मानसरोवर—१०० | | ,, | |
| ३ गङ्गोत्री—७८ | | ,, | |
| ४ केदारनाथ—७५ | | ,, | |
| ५ बदरीनाथ—६६ | | ,, | |
| ६ रुद्रनाथ—६५ | | ,, | |
| ७ यमुनोत्री—६४ | | ,, | |
| ८ ओंकारनाथ | ६४ | ,, | |
| ९ आबू | ६४ | ,, | |
| १० शेषनाग | ५४ | ,, | ( कश्मीरे ) |
| ११ श्रीशैल | ५० | ,, | ,, |
| १२ अमरनाथ | ५० | ,, | ( कश्मीरे ) |
| १३ शारदा | ५५ | ,, | ( कश्मीरे ) |
| १४ पशुपतिनाथ | ५० | ,, | ( नेपाले ) |

# ज्यौतिष-दर्शनम्।

लेखकः—डा० राखालदास रायः, एम० बी०, डी० पी-एच०
श्री राजमोहन उपाध्यायः, ज्यौतिषाचार्यश्च

यथा संसार ऐहलौकिक-पारलौकिककेति द्विविधो भेदः श्रूयते, तथैव राशिचक्रेऽपि द्विविधो भेदः। मेषादिकन्यान्तमैहलौकिका राशयः सन्ति। तुलातो मीनान्तञ्च पारलौकिका राशयः सन्ति। विगते चतुर्थाङ्के—ऐहलौकिकजीवनस्य भेदविषया वर्णिता एव। तत्र च मेषादिषु पशुभावस्य पूर्णत्वं प्रत्यक्षमेव प्रतीयते।

अथेदानीं पारलौकिक-जीवनस्य विचारस्तथा तुलादि षड्राशिसाफल्येन विकाशः समुपस्थाप्यते। पारलौकिक-जीवनस्य मूलाधारभूता विचारशक्तिरस्ति। ऐहिकपारलौकिकयोर्मध्ये कः श्रेष्ठतम इत्ययं निर्णयो विचारवलेनैव लभ्यः। विचारस्य तुलनामूलत्वादस्य राशेस्तुलेति संज्ञा। अत इदं ज्ञायते यत्तुलायामुत्पन्ना विचारशक्तौ प्रवला भवन्ति। भोगात्मक-विचारमन्त्री शुक्रोऽस्य राशेः स्वामी।

विचारशक्तेर्विकाशानन्तरं पशुभावस्य निकृष्टता, पारलौकिक-जीवनस्य चोत्कृष्टत्वमवलोक्य मनसि व्यामोहात्मिका क्षुब्धता जायते यन्मया वहुजीवनं वृथा यापितम्, मम का गतिर्भवितेत्यनुशोचन् वृश्चिकदंशनतुल्यं कष्टमनुभवति, अतोऽस्य राशेर्वृश्चिक इति नामधेयम्। पारलौकिक-जीवनस्य प्राप्तिः कथं स्यादित्यनुसन्धान-परायण इतस्ततो धावति, तच्च रजोगुणक्रियाविकाशरूपमतो रजोगुणशक्तेर्विकाशस्वामी भौमश्चास्याधिपतिः। अस्य फलञ्च नृणां बुद्धि-विचारशक्ति-युक्तकार्यदक्षता, शान्तिरहित उद्योगश्च।

'यादृशी भावना यस्य सिद्धिर्भवति तादृशी'—इति न्यायेन वृश्चिकान्ते गुरोराविर्भावः। यतो गुरुं विना पारलौकिकजीवन-प्रवेशो दुष्कर इति केवलमेकाग्रतैव तत्र प्रवेशद्वारम्। अतोऽस्य राशेर्नाम धनुरिति। यथा धनुर्धर एकाग्रतामुपगम्य शर-सन्धान-दक्षो भवति, तथैव विक्षिप्तचित्तो वृश्चिकराश्युत्पन्नजीवो गुरुकृपयाऽएकाग्रतां लभते। अतोऽस्य राशेः फलमनुसन्धानपूर्ण-कार्य-दक्षत्वम्।

'अल्पा विद्या भयङ्करी'—अर्थात् गुरुकृपया धनुषि एकाग्रतां लक्ष्यवेधञ्चावगत्य शिक्षार्थिनः कृतकृत्यतां मन्यन्ते। अधीतस्य शास्त्रस्य परीक्षणमत्यावश्यकं भवति। अत एव दशमो राशिर्मकरनाम्ना विख्यातः। अयं दशमः कर्मराशिः, कर्मभूमावेव कर्मवीरस्य परीक्षा भवति। परीक्षको यदा परीक्षां करोति, तदा स यमरूपः प्रतीयते। अतस्तस्य राशेः स्वामी शौरिः, यमः, शनिरिति कथ्यते। जीवभ्रमणरथस्य मनोदेहात्मकं चक्रद्वयं वर्तते। ज्यौतिषे-लग्न-चन्द्र-इति नाम निर्दिष्टमस्ति। भाग्यवशात् यस्य जन्मलग्नं मकरराशिर्भवति; स जीवः परीक्षायोग्यो भवतीति बोध्यम्। परीक्षायां यस्य देहो मनश्च यत् स्थानोपयुक्ते भवतः स; जीवः पुनः कर्माधीन-दशमक्षेत्रे जायते। पूर्वं व्याख्यातं यत् परीक्षा-समये परीक्षको यमराज इव प्रतीयते। परञ्च यदा स परीक्षायां योग्याङ्कं ददाति तदा छात्रैः संस्तूयते। अत एकादशराशेः स्वामी शनिर्धर्मराज नाम्ना शास्त्रे प्रसिद्धः। अतः शनैश्चरस्य धर्मराज-यमराज इति नामद्वयं साधु।

अत्रेदमवधेयम्—यद् यथा नदीजलं वायुना ताडितं तरङ्गाकुलं भवति परं घटस्थं जलं वायु—सङ्घर्षरहितं निश्चलं भवति तथैव घट-कुम्भ-राश्युत्पन्नो लग्न-चन्द्र-युतो जीवश्चित्तस्थैर्यशाली मृदुभाषी च भवति। स्थिरचित्ते हि ब्रह्म प्रतिभासते। अतः स जीवो ब्रह्मज्ञान-लाभोपयुक्तो भवति।

संसारचक्रमुक्तो जीवः कारणसलिलरूपे ब्रह्मणि प्रविशति। गुरुरेव ब्रह्मस्वरूपः, स एवास्य मीनराशेरधिपतिः। ब्रह्मभावस्थितस्य जीवस्य सर्वे दोषा लयं यान्ति। तस्य कायः प्रेमभावे परिवर्तते। अतोऽयं शुक्रस्योच्चराशिः। ब्रह्मभावोऽवाङ्मनसगोचरः। अतः सति ब्रह्मज्ञाने वागभावः। अत एवात्र वाक्पतेर्बुधस्य नीचैः स्थानम्। यस्य कस्यापि मीनराशेर्मीन-नवांशे लग्नचन्द्रयोः संस्थानं भवेत्तदा तस्य मोक्षमादिशेत्।

इत्येवं द्वादशराशीनामुत्पत्तिस्तथा तेषां दोषाः व्याख्याताः। विभिन्नराशीनां गुण-दोषा स्वाष्टमस्थाने लयं प्राप्नुवन्ति—इति प्रत्यक्षं दरीदृश्यते। यथा—

मेषस्य गुणः क्रोधः स्वाष्टमे वृश्चिके-अनुतापदशायां लयमेति। वृषस्य गुणः कामः स्वाष्टमे धनुषि—एकाग्रतायां लीयते। मिथुनस्य गुणो लोभः स्वाष्टमे मकरे-संयमे लयः प्राप्नोति। कर्कटस्य गुणो मोहः स्वाष्टमे कुम्भे—चित्तस्थैर्ये—लीयते। सिंहस्य गुणोऽहङ्कारः स्वाष्टमे मीने-ब्रह्मज्ञानेविनश्यति। कन्याया गुणो मात्सर्यं स्वाष्टमे मेषे-क्रोधे शाम्यति। तुलायाः गुणो विचारः स्वाष्टमे वृषे-कामे क्षीयते। वृश्चिकस्य गुणो अनुशोचना-स्वाष्टमे मिथुने-लोभे क्षयं याति। धनस्य गुणो-एकाग्रता स्वाष्टमे कर्कटे-मोहे विनश्यति। मकरस्य गुणः संयमः स्वाष्टमे सिंहे-अहङ्कारे विलीयते। कुम्भस्य गुणः चित्तस्थैर्यं स्वाष्टमे कन्यायां-मात्सर्ये क्षीयते। मीनस्य गुणः ब्रह्मज्ञानं स्वाष्टमे कन्यायां कुतर्के नश्यति।

अतएव ज्यौतिषशास्त्रे सर्वत्राचार्यैरष्टमं मृत्युस्थानमुदीरितम्। तस्येदमेव रहस्यम्।

इदानीं यावदस्माभिर्देशविचारः क्षेत्रविचारश्च कृतः । साम्प्रतं काल-विचारः प्रस्तूयते—

तत्र प्रथमं वामकेश्वरतन्त्रे सेतुबन्धाख्यटीकायाम् "लोके स्त्री-पुंसयोः सामरस्य-दशायां यथा ब्रह्मरन्ध्रस्थितः शुक्लविन्दुः काममन्दिरं प्रविष्टः शोणविन्दुनैकीभवति तदैव बाह्यान्तरमानन्दमात्रावशेषब्रह्मैव भासत इत्यनुभवसिद्धम् । श्रुतिरपि— "यथा प्रियया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति । सुषुप्तिदशायामज्ञानवृत्तिरस्ति । सामरस्य-दशायां तु न साऽपि तिष्ठति । एवं सति तादृश-सामरस्यनिष्ठस्याऽऽनन्दात्मकत्वे सति गर्भोत्पादकत्वरूपसाधारणधर्मस्य सृष्टिप्रावकालीन-शिव-शक्ति-सामरस्येऽपि दर्शनाल्लौकिकप्रक्रियाऽप्यूह्या । कामविन्दोः शोणविन्दुना सह परस्परानुप्रविष्टत्वे सति विस्पष्टत्वे विन्दुद्वयं विसर्गो हकारो विमर्श इत्यादिसंज्ञा । इयं हकाररूपा शक्तिरेव च कलेत्युच्यते । सेयं कामकलेत्युच्यते । सैव कालचक्रादौ स्थिता ।"—इति ।

कालस्त्वयमनन्तोऽखण्डरूपात्मकश्च । परञ्च सृष्टिज्ञाने तस्य सगुणब्रह्मकल्पनाधारेणैव कालखण्डस्य प्रयोजनम् । तत् खण्डारम्भस्थानं सृष्ट्यारम्भे पूर्वोक्तकामकलाचक्रस्यादिमं विन्दुस्थानम् । अत्रेदमवधेयं यत् यथा कामकलाचक्रे विन्दुत्रयं दृश्यते । तथैव कालचक्रेऽपि भूतवर्तमानभविष्यदादयो त्रिविध-भेदाः सन्ति ।

अवाङ् मनसगोचरब्रह्मसत्तायां प्रवृत्तिनिवृत्तिरूपा द्विविधा शक्तिः समुपलभ्यते । आधारशून्ये सति शक्तेर्विकाशो नैव जायते । क्षित्यप्तेजोमरुद्व्योमेति पञ्च आधाराः पूर्वं प्रतिपादिताः । ब्रह्माण्डे सन्त्यनन्ताः शक्तिभेदाः । परं दशभिरेवेन्द्रियैस्तेषां ग्रहणं भवति । आगमशास्त्रे त एव दश महाविद्यारूपेण व्याख्याताः । पञ्चतत्वानामुपरि दशविधशक्तिसंचारेण ५×१०=५० विकाशा जायन्ते । इमे भेदाः संस्कृतभाषायां पञ्चाशन्मातृकावर्णरूपाः सन्ति । तेषां पुनः प्रवृत्ति-निवृत्ति भेदेन ५०×२=१०० भेदाः जगति कारण-शरीरे वर्तन्ते । कारणोपरि पुनर्दशविधशक्तेर्लीलाप्रभावेण १००×१०= १००० मिता भेदा भवन्ति । ते च सूक्ष्मशरीरे सहस्रार पद्मनाम्ना शक्ति-विकाश-केन्द्र-स्वरूपाः सन्ति ।

कालज्ञाने मूलसूत्रम्—

नलिनीपत्र-संहत्या सूक्ष्म-सूची-विभेदने ।
दले दले तु यः कालः स कालो लवसंज्ञकः ।
अति सूक्ष्मतमः कालो नोपलभ्यो रघूद्वह ।

अत्र श्लोकोक्त-नलिनीदल-सूक्ष्म-शरीरे सूक्ष्मशरीरे सहस्रदल-कमलस्य एकैकं शक्तिकेन्द्र-रूप-दलं चास्ति । त्रिंशल्लवे त्रुटिरेका । त्रिंशत् त्रुटिभिरेका कलभा । त्रिंशत् कलाभिरेका काष्ठा, त्रिंशत् काष्ठाभिरेको निमेषः, अष्टनिमेषाणामेक अंशुः । एवं सूक्ष्म-काल-विभागः । उक्तञ्च प्रपञ्चसारे प्रथमपटले—

"यो हि सूक्ष्मान्तविन्दुः स एवस्थूलादिविन्दुः ।"

पूर्वोक्त-सूक्ष्म-देहस्थ-सहस्राधरोपरि पुनर्दशविधशक्ति सञ्चारेण स्थूले १००×१०=१००००—विकाशाः सम्भवन्ति । गुणदृष्ट्या शक्तेश्चतुर्विधा अवस्था भवति । त्रिगुणात्मिकावस्था । सत्वरजस्तमात्मिका एता एवावस्थाः शास्त्रे—परा, पश्यन्ती, मध्यमा, वैखरीति । १०००० दशसहस्रविकाशोपरि चतुर्णां सञ्चारेण ४०००० मिता भेदा भवन्ति । स्वरोदयशास्त्रे एकैकगुणभोग काल एकैकं दिनमुक्तम् । अतः४०००० सहस्रदिने ब्रह्मणः सृष्टिस्थितिलयाः पूर्णत्वमुपयान्ति । ब्रह्मकल्पेनैव सृष्टि-विकाश-लयाः भवन्ति । अत ४०००० दिने एककल्पपूर्त्तिर्भवति ।

क्षेत्र-विभागस्य सूक्ष्मतमांशा विकला इत्यभिधीयन्ते । ६० विकला =१कला, ६० कला =१ अंशः, ३६० अंशः= एकचक्रपूर्त्तिः । भगणो वा भोग इति कथ्यते ।

[ क्रमशः ]

## "वेदामृतं पीयताम्"

शुद्धार्ष-प्रतिभा-प्रसून-महसा ज्ञानश्रियं हासयद्-
यत्सन्मौक्तिकधीषु जीवनरसं सञ्चारयद् राजते ।
सत्यान्वेषणतत्परागमगणे जीवातुरेवात्मन—
स्तद्दिव्यात्मगुणौजसैकममलं वेदामृतं पीयताम् ॥

—श्रीशैलेन्द्रपाठकः, ( तराना )

# स्वाभाविक-स्वास्थ्य-संहिता ।

लेखकः—

श्री भवानी प्रसाद महाशयः

( क्रमागतः )

तत्रैव सर्वप्रथमं सिलीषा-प्रान्त-पर्वते ।
ग्रामे ह्यधिवसन् बालः प्रसन्नतनुरित्यभूत् ॥१८॥
अष्टवर्षवया बालो नदी-शोभा-विमोहितः ।
मृगीं निभालयामास खञ्जां चरण-विक्षताम् ॥ १९ ॥
स्थितां मुहूर्त-पर्यन्तं जानुदघ्ने नदी-जले ।
मनोज्ञ-लोम-शोभाढ्यां सुनेत्रां नेत्रहारिणीम् ॥ २० ॥
तत्कारणस्य जिज्ञासा-तत्परो बाल-मानसः ।
अन्येद्युरपि तत्रैव प्रसन्नतनुराययौ ॥ २१ ॥
तत्रागत्य मृगीमेतां नियते समये स्थिताम् ।
ददर्श दर्शने दक्षः प्रकृत्याः पर्यवेक्षकः ॥ २२ ॥
सप्ताहानां त्रयं यावत् एवमेव तु सा मृगी ।
नियमेन जले तत्र तिष्ठन्ती तु शनैः शनैः ॥ २३ ॥
लभमाना स्वपादस्य स्वास्थ्यं द्वाविंशवासरे ।
पादनीरोगतां प्राप्य प्लुत्या मृगनिसर्गया ॥ २४ ॥
प्रद्रुता पूर्णवेगेन प्रसन्नतनुसम्मुखे ।
निविडं हि महारण्यमनायासं समाविशत् ॥ २५ ॥
अष्टवर्षायुषस्तस्य बालस्य हृदयेऽनया ।
प्रसन्नतनु-संज्ञस्य कृतं घटनया पदम् ॥ २६ ॥
पञ्चानां हि महाभूतानां तृतीयस्य वारिणः ।
सर्वश्रेष्ठगुणं स्वास्थ्य-कारितां हि विवेद सः ॥ २७ ॥
अष्टवर्षेष्वतीतेषु षोडशाब्दवया असौ ।
प्रसन्नतनुरिध्मार्थं वनात् काष्ठं समाहरन् ॥ २८ ॥
प्रचण्ड-हिमपातस्य घोरवात्या समाहतः ।
अन्धप्रायः पथभ्रष्टोऽन्विष्यन्निज-निकेतनम् ॥ २९ ॥
वात्या-वेगो यदा शान्तस्तदात्मानमधोमुखम् ।
पर्यस्तायास्तृणच्छाया अधस्तान् पतितं वत ॥ ३० ॥
प्रायः प्रपीडितास्तस्य चतस्रः पर्शुकास्तथा ।
प्रविष्टा विक्षता जाताश्च्युताः स्थानात् स्वकीयतः ॥३१॥
अधस्तात् पतितश्चर्यां संस्मरन् हरिणीं स ताम् ।
मृगीकृत-चिकित्सायाः निरचैषीत् परीक्षणम् ॥ ३२ ॥
उद्धृतश्चात्मनस्तोय-चिकित्सा-तत्परोऽभवत् ।
हरिणीवज्जले स्थातुं नाशकद्भग्न-पर्शुकः ॥ ३३ ॥
न्यधात्तस्माज्जलेनार्द्रं क्षते प्रगुणितं परम् ।
शुष्कं शुष्कमिदं भूयो भूयस्तोयेन चार्द्रयत् ॥ ३४ ॥
एवं दिनेषु गच्छत्सु पीडाह्रासे क्रमेण हि ।
विक्षतांगो बलं लब्ध्वा पूर्णं स्वास्थ्यं स लब्धवान् ३५
इत्थं सभ्य-समाजात् स दूरापास्तो निरक्षरः ।
कृषीवलसुतो दीनो निजबुद्ध्या सुतीक्ष्णया ॥ ३६ ॥
प्रखरप्रभया युक्तः स्वानुभूति-बलेन च ।
अभूज्जल-चिकित्सायाः आद्याविष्कार-कारकः ॥ ३७ ॥
धारोष्णं गोपयः शाक-फलासेवन-देशिनीम् ।
प्रचारयन् यशो लेभे निसर्गाहार-पद्धतिम् ॥ ३८ ॥
आपश्चिकित्सकस्यास्य प्रसिद्धस्य निकेतनम् ।
आराज-रंकस्याबाल-वृद्धस्याखिलरोगिणः ॥ ३९ ॥
प्राप्य मानवसंघस्य शरण्यागारतां ध्रुवम् ।
प्राकृतस्वास्थ्य-सद्माख्यां ययार्थामाससाद तत् ॥ ४० ॥
परं प्राचीन-रूढौ तु सक्ता अन्ये चिकित्सकाः ।
नाविष्कारमिमं नूत्नं सहमाना असूयया ॥ ४१ ॥

१—सिलीशिया ( Silesia ) प्रान्ते ग्राफेनवर्ग ( Grabenberg ) इति प्रसिद्धायां पार्वत्य-ग्रामटिकायां १७९९ तमे खिष्टाब्दे, केषांचिन्मते १७९० तमे वत्सरे समुत्पन्नः ।

२—प्रेसनीट्जेति ( Presnitz ) नामा । प्रसन्ना तनुरिति तस्य रूपान्तरम् ।

ईर्ष्याज्वाला-कवलिताः सर्वे तस्यापकारिणः ।
दूषणारोपणैस्तस्य कारार्थमभिसन्दधुः ॥ ४२ ॥
सत्यस्यासीज्जयोऽन्ते तु प्रसन्नतनुरप्यसौ ।
दोषावलि-विनिर्मुक्तः प्राप्तवान् निर्मलं यशः ॥ ४३ ॥
जलोपचार-मुख्यास्ति प्रसन्नतनुपद्धतिः ।
अतो जलचिकित्सेयं यथार्थैव निगद्यते ॥ ४४ ॥
ततश्च परमाचार्याः प्रणिधान-परायणाः ।
अनेके भावितात्मानः चिकित्सा—शास्त्र-पद्धतौ ॥ ४५ ॥
अस्यां विवर्द्धयामासुर्लघनं वस्तिकर्म च ।
विज्ञान-सम्मतं पथ्यं मृत्तिकायाश्च लेपनम् ॥ ४६ ॥
चिकित्सां सूर्यकिरणैरुपचारञ्च विद्युता ।
नानासनानि व्यायामं विविधं चाङ्गमर्दनम् ।
देहमानस-विश्रामं वाष्पस्नानं तथैव च ।
सर्वं प्रधानभूतं हि प्राकृतं जीवनं तथा ॥ ४८ ॥

× × × ×

## जल-चिकित्साया विकासः ।

प्रसन्नतनुचिकित्सापद्धत्या औषध-कोषे (निघण्टौ) विष-बहुलवटिकाः, कटुतिक्त-क्वाथाः, कषायाश्च प्रवेशं न प्रापुः । प्रत्युत; चिकित्सा-सरणिः सा प्रत्यग्र-पार्वत्य-पवन-सेवन-समन्विता, अन्वर्थ-जीवनापरपर्याय-गिरिनिर्झरिणी-शीतल-स्वास्थ्य-प्रद-जलोपचारा, स्वच्छ-स्रोतःसलिल-पान-परायणा, सुस्वादु-फल-मूल-शाकाहारा, सतुष-समग्राङ्ग-गोधूमादिसाधारणान्नाहारपरा, वनविहारिणीनां नव-शष्प-परिपालितानां धेनूनां धारोष्ण-पयसश्च पथ्येन पर्युपेता । विपुल-व्यायाम-संयुक्ता चासीत् जीवनस्य नैसर्गिक्या सरलया संविधयाऽनया निसर्गत एवापगतरोगाणां रोगचिकित्सार्थिनां नानान्तिक-दूर-देशादागतानामाराजरङ्काणामाबालवृद्ध-वनितानां च स्वास्थ्य-सद्म-पदवीं प्राप प्रसन्नतनोर्वनान्तनिकेतनमचिरेणैव । नवाविष्कृत-प्राकृतिक-चिकित्सा-शिक्षार्थिनोऽपि बहुसंख्यका जनास्तं परिवेशयाम्बभूवुः । निरौषध-प्राकृतिक-जल-चिकित्सा-प्रणालीयमचिरादेव प्राप्तप्रचारा पितृभूम्यां शर्मन-मह्यामेव श्रद्धाधनान् पटू पटुशिष्याना-चकर्ष । ते हि [1] भेषज-विक्रयी हानः ( Hahn ), तन्तुवायो लुई काहनेः ( Luis Kuhne ), शिल्पकारो [3] रिक्लिः ( Rikli ), पौरोहित्यकर्म्मा क्नाइप [4] (Jather Knepp ), भिषक् [5] लाहमानः ( Lahmann ) शरीर-समुन्नतिकला-संस्थापकः टर्नवाटर-जानः( Juan Vater Juhn) इतीम आसन् । साक्षात्कृत-कर्म्माणस्ते सर्वे प्राकृतिक-चिकित्साया विस्तीर्णभूभ्याः किमप्येकैकं क्षेत्रं स्वानुशीलनप्रयत्नेन समर्द्धयामासुः । एकस्तेषां जलोपाचारेण सह प्राकृतिक-पथ्य-प्रणालीं बहु मेने । अन्यो मृत्तिका-चिकित्सां । कश्चिद् वायु-चिकित्सां । कोऽपि सूर्य-रश्मि-चिकित्सां, अपरः प्रकाशचिकित्सां । अन्ये विद्युतदुपचारम्, अन्ये मानस-चिकित्सां व्यायाम-चिकित्सां चेत्येवं कमपि विशिष्टप्रकाशं चिकित्सापद्धतिमाविश्चक्रुः ।

एतेषु जलचिकित्सायाः परमोद्धारकः प्रबलप्रचारकस्तस्यां स्वास्थ्याभिनवविज्ञानाभिधायाः पद्धत्याः प्रादुर्भावकः श्रीलूईकोहने प्रधान पद-भाक । स शर्मण्य देशान्तर्गत-लेपजिक नगर निवासी । तस्यपद्यमयं पुण्यं चरितमग्रे लिखिष्यामि । [क्रमशः]

× × × ×

# लीला-पद्मम्

( १ )

यमुना-पुलिनाभिमुखं
शृङ्गाटक-सङ्गि-तुङ्ग-निलयस्य
अवतीर्य्य मन्द-मन्दं
प्रासादात्, काऽपि कमलिनी चलिता।

( २ )

कुरुते चरणन्यासं
सरणौ, कुतुकेन, चिन्तयन्तीति—
रमते जल-खेलायां
मनो निदाघस्य सान्ध्य-वेलायाम्।

( ३ )

हरितः सम्प्रति परितः
पांशववगुण्ठनवृता, नवीनेयम्—
लोकं लोकं ललना
स्फुट-वदना सुस्मितं तनुते।

( ४ )

नन्दन-वनेऽप्यलभ्यं
लब्ध्वा विकसित-शिरीष-सौरभ्यम्
अन्धो गन्धवहस्तां
चञ्चल-हस्तां पलायितः स्पृष्ट्वा।

( ५ )

प्रतिपदमुन्मद-नयना
निरीक्षते साऽयनान्तराल-गता
रवि-कर-मृदितावयवा
सन्तप्ता पांसुला धरा कीदृक्?

( ६ )

संसर्गज-दोष-गुणाः
भवन्ति, सम्यग् जनश्रुतिस्तावत्,
कालिन्दी-कूलस्थाः
कथमथ कृष्णास्तमाल-तरव इमे।

( ७ )

तेजोमयस्य दाहक-वृत्ते-
श्श्यामा च शीतला यमुना
सूर्य्यस्यापि विचार्य्यं,
कथमात्मा नात्मजा बभूवेति।

( ८ )

कल्लोल-ध्वनिरेषोऽध्वनि
यमुनायास्समाह्वयति सर्वम्
"किमु धरया सह तपसे,
विहरस्व तुषार-धारया सह मे।"

( ९ )

एवं विचारयन्ती
गौरी शुक्लाम्बरा समेत्य तटम्
गङ्गेव साङ्गभङ्गि-
र्यमुना-सङ्गं मनाग् लेभे।

## संस्कृत-शिक्षोन्नतेः किमप्यौपयिकं कर्म

चन्द्रकिशोरपति त्रिपाठी, व्याकरणाचार्य्यः

जीवनस्योज्जीवनमेव शिक्षाया मुख्यं प्रयोजनम्। एवञ्च यया आधिभौतिक्य आधिदैविक्य आध्यात्मिक्यश्चोन्नतयः प्राप्ताः स्युः; सैव शिक्षा शिक्षापदव्यपदेश्या भवितुमर्हति। यद्यनया दृष्ट्या साम्प्रतिकी संस्कृतशिक्षाऽऽलोचनीया स्यात्; तदाऽस्य असफलता सपद्येव दृष्टिपथे पथिकायते। सा चापूर्णताऽसफलता वा वर्तमान-शिक्षासरणेरेव दुष्परिणामः। महर्घताया अस्मिन् सर्वग्रासिसमये विहाय पञ्चषपण्डितान् न कोऽप्येतादृशो विद्वानस्ति यस्य सपरिवारस्योदरपोषणमपि साधु सम्पद्येत। एवञ्च यत्र भोजनेऽपि सन्देहस्तत्रापरस्य कस्यापि भौतिक-सुखस्यानुसन्धानं नूनं शशशृङ्गायमाणमेव। तथा चान्नप्रधाने,

स्मिन् युगे तेषामाध्यात्मिकाधिदैविकोन्नतेर्न काप्याशा, अत्रोदाहरणानि न परोक्षाणि। सार्वत्रिक्युन्नतिस्तु दूरे तिष्ठतु नाम, साम्प्रतिकी संस्कृतशिक्षासरणिस्तु तावती दूषिता जाता यदद्यत्वे यत् पठ्यते तदपि न ज्ञायते; तदा तस्य सारस्यस्य अविस्मरणीयस्य कथैव का ? अद्यत्वे बहुविधाः शिक्षा अन्वेषणादन्यत्रापि प्रदीयन्ते, याभिः काप्युन्नतिः प्राप्यते; किन्तु संस्कतशिक्षामन्तरा एतादृशी निरर्थिका तु कापि शिक्षैव नास्ति यया यत् पठ्यते तदपि न ज्ञायते, कथञ्चिद् ज्ञानमपि अस्तु नाम। परञ्च ये ग्रन्थाः पाठ्यन्ते शास्त्रि-आचार्य्यविभागे ते तु लोकत एतावन्तो बाह्याः सन्ति यत्र लीनास्ते न स्मरन्ति स्मरणीयमपि विषयम्। अद्यत्वे संस्कृतशिक्षा-संस्थासु सार्वत्रिक्येवेयं व्यवस्था दृश्यते, यदध्यापकः कमपि पाठमेकवारमेवाध्यापयति, अन्यस्मिन् दिने पुनरन्यः पाठः प्रचलति। यः पाठोऽध्यापितः; सोऽध्येतृभिर्बुद्धो न वेति प्रश्नो नोत्थाप्यते तैः। तत्राध्यापकानामपि न दोषस्तेषां समय एतावानेवावशिष्यते; यस्मिन् एते पाठनमात्रमेव कर्तुं प्रभवन्ति। यदि ते पाठनेन सह पाठश्रवण-लेखनेऽपि कुर्य्युस्तदा परिक्षापर्य्यन्तं पाठ एव न समाप्यते। अयं तु समग्रो दोषः संस्कृत-शिक्षा-सरणेरेव। दोषो यस्य कस्यापि वा भवेत्; किन्तु अनेनच्छात्राणां यादृशः सर्वतो विनाशो भवति तस्य स्मरणेनापि हृदयं विदीर्य्यते। व्याकरणन्यायात्मकस्य संस्कृतसाहित्यस्य दुरवबोधता सर्वविश्रुतैव। एकवारस्य श्रवणेनैव तस्य ग्रन्थियुता फक्किका सर्वस्य स्मृतिपथमापतेत्—इति त्वसम्भवि; किन्तु सर्वत्रापि विद्यालयेऽस्यैवासम्भवि वस्तुनः प्रचलनमस्ति-इत्यहो पतनस्य पराकाष्ठा !

एकतस्तु पठनवेलायामेव पाठोऽनवबुद्धो भवति, तत्रापि खण्डशः परीक्षादानेन सा दुरवस्थाऽऽयाति यन्नवदशवर्षाणि यावदनावृत्तोऽनालोचितश्च तिष्ठति। यदि मध्यमायाश्चतुर्थखण्डीयाश्छात्राः प्रथमखण्डस्य विषयं विस्मरन्ति; तदाऽऽचार्य्यसमाप्तौ तस्मिंस्तस्य लेशोऽपि कथमवशिष्येत ? अत्रबुद्धोऽपि पाठो यदा नवदशवर्षानन्तरं विस्मरति तर्हि का तु कथानवबुद्धस्य पाठस्य। आचार्योत्तरं पूर्वमवबुद्धः पश्चात् विस्मृतोऽपि पाठः श्रमात् पुनरुज्जीवनार्हः कथञ्चिन्नाम, किन्तु यः पाठः पठनवेलायामेवानवबुद्धस्तस्य स्मरणस्य पुनः पठनमन्तरा क उपायः ? अतएवाद्यत्वे ये आचार्य्या निस्सरन्ति ते द्वादशवर्षाणि पठित्वाऽपि आत्मानं तत्रैव पश्यन्ति यत्र ते द्वादशवर्षेभ्यः प्रागासन्। किमियं शिक्षापि शिक्षापदव्यपदेशार्हा ? इदं पठनमपि पठनमेव ? किमस्यैव नाम प्रगतिः ? किमेषाऽपि दशाऽप्रतर्क्याऽक्षोभ्या च ? किं शिक्षाया यन्मूलं प्रयोजनमुज्जीवनमस्ति तस्यैव हत्यायतन-प्रचलिति-शिक्षया न भवति ?

अनया शिक्षया यो दुष्परिणामोऽजनि स न तिरोहितः कस्यापि। संस्कृतशिक्षायाः केन्द्रीभूतायां काश्यामेव तेषां विद्वद्वरेण्यानां गतिविधिं पश्यन्तु ये संस्कृतशिक्षायाः सुधारस्य चर्चामपि श्रुत्वा कुप्यन्ति, गालीदानैरात्मतुष्टिं प्राप्नुवन्ति। किं तेऽपि स्व-बालकान् संस्कृतमेवाध्यापयन्ति ? ईषत् काशीं विहायान्यस्थानेषु संस्कृतपाठशालायाः स्थितिं पश्यन्तु विद्यार्थिनामध्यापकानाञ्च समा संख्या दृश्यते। साम्प्रतं लेखकस्य पुरः गोरखपुर-बलिया-गाजीपुर-बनारस-मण्डलस्य ग्राम्याः संस्कृतविद्यालयाः, येषां संख्या काशीतः कतिगुणा अधिकाः सन्ति; वर्तन्ते, तत्रापि केवलं कालेजेषु एव अधीयानानां छात्राणां संख्याः पर्य्यालोच्य संस्कृतविद्याया महान् ह्रासकालः स्पष्टं प्रतीयते। सत्यमस्ति यत् कामाशामादाय संस्कृताध्ययने जनप्रवृत्तिः स्यात् ? यदा तु आचार्य्योत्तरमपि संस्कृतभाषायामेकस्य पत्रस्य लेखनमपि न सम्भाव्यते, न च सम्भाव्यते भाषणेनाऽपि स्वाभिप्रायप्रकटनम्। पुनः काऽऽशा तच्छिक्षा-शिक्षितैः ?

कथयिष्यन्ति केचन यद् वाराणसेय-राजकीय-संस्कृत महाविद्यालयस्य 'क्विन्सकालेज'—पुष्टाचार्य्य-परीक्षा स्व-स्व-विषयस्य पुष्ट्यर्थं किमु न निर्धारिता ? किन्तु तस्यापि गतिविधिं वीक्ष्य मदीयमुत्तरं नकारात्मकमेव भविष्यति। नाद्यावधि कस्यापि पठितविषयस्य पुष्ट्यर्थं प्रयतनमभूत, न चाचार्य्यपरीक्षाभ्यन्तरे यासां शिक्षाणामावश्यकता स्वयमेव ग्रिन्सिपल-महोदयेनानुभूयते तत्रापि प्रगतिरभूत्। इत्थमत्रापि वर्षत्रयं मुधैव याप्यते। सत्यन्त्विदमस्ति यत् आचार्य्यपरीक्षा द्वादशवर्षेभ्यः प्रागेव छात्रान् पातयति, किन्तु पुष्ट्याचार्य्य-परीक्षा नूनं तत्र वर्षत्रयं योजयति।

तत्रत्यस्य साधोलालानुसन्धान-विभागस्य दशाप्येवमेव। एतावन्ति वर्षाणि व्यतीयुस्तेन विभागेन किमनुसंहितं मद्यावधि ! प्रतिवर्षं मुद्राणां सहस्रं व्ययीकृत्यापि संस्कृतसमाजस्य किमुपकृतम् ? किं तस्याधिकारिणः सन्तोषप्रदमुत्तरं दास्यन्ति !

मदीयस्त्वयं विचारो यत् पुष्टाचार्य्यानुसन्धान-विभागयोः परीक्षाविभागस्य च धनमादाय एकोऽध्यापकविद्यालयः

[ १३५ पृष्ठे द्रष्टव्यम् ]

# पारसीक-धर्मतत्त्वम्



सङ्कलयिता—रेवाशङ्कर मेघजी शास्त्री, परिडतमार्त्तण्डः

[सुप्रभातस्य द्वितीयाङ्क उपयुक्त-शीर्षकेण केचन पारसीक धर्म-सम्बन्धिनः श्लोकाः प्रकाशिता आसन्। ते च प्रियवराणां पण्डितमार्त्तण्ड–रेवाशङ्कर मेघजीशास्त्रिणां सकाशात् समुपलब्धा आसन्। तत्राष्टौ श्लोकाः प्रकाशिताः। अवशिष्टा अष्टौ श्लोकाश्च साम्प्रतं तैः संप्रेषिताः पुनः प्रकाश्यन्ते। एतेन हिन्दू-परसी-धर्मयोः प्रचुरं सामञ्जस्यं प्रतीयते।

—सम्पादकः ]

येषामेवाङ्गना या ऋतुसमय-दिनात् सप्तरात्रैर्भवेयुः
पूताः, सूताश्च मासे प्रसवन-दिनात् शुद्धदेहास्तथैव॥
रम्याचारेण गौरा नवकनकनिभा वीर्यवन्तो बलिष्ठाः
पूतात्मानश्च नित्यं विकसितवदनास्ते वयं पारसीकाः॥९॥

वेश्यास्त्रीभिर्न सङ्गः पितृषु शुचिमुखं श्राद्धमग्निश्च सेव्यः,
नो मांसं यज्ञबाह्यं नहि स्वपिति महीं जातपुष्पा च नारी।
वैवाह्या लग्नशुद्धिर्न च भवति शुचिर्भर्तृहीना पुरन्ध्री
येषामाचार इत्थं प्रतिदिनमुदितस्ते वयं पारसीकाः॥१०॥

चत्वारिंशद्दिनानि प्रचरति न वधूः पाककार्ये प्रसूता
मौनाढ्या स्वल्पनिद्रा जपविधि-निरताः स्नान–सूर्यार्चनेषु।
नित्यं ध्यायन्ति चैवं मरुदनलधरातोयचन्द्रार्कयज्दान्
येषां वर्णे विहीनाः सततमभिमतास्ते वयं पारसीकाः॥११॥

पानीयं व्योमचन्द्रौ हुतवहमनिलं भूमिमादित्यमेवं
श्रीहोर्मिज्दं च दातारमचलममलं चेतसा चिन्तयन्ति।
नित्यं ये न्यास-पाठं विदधति जयदं धर्मदं कर्म्मदं च
आहारे मौनभाजस्तनुशुचिकरणे ते वयं पारसीकाः॥१२॥

उर्णामय्यां धृतां यामतिफलबहुलां जाह्नवी-तोय-तोल्यां ?
योषाणां चैव पुंसां वनगुणरचितां हेमवर्णां सुरम्याम्।
योगाकारां विशालां गुरुजनवचनैर्मेखलां धारयन्ति—
शास्त्रोक्तां श्रोणिदेशे हृदि कवचमथो ते वयं पारसीकाः १३॥

प्रायश्चित्तं सदोषे विदधति दुरितक्षालनार्थं सगव्यम्
गोमूत्रं स्नानपूर्वं बहुतर-दिवसैः शुद्धिरेवं मनोज्ञा।
स्नानं नित्यं गुरूणां सुवचन-करणं कल्मषक्षालनार्थं
येषामाचार इत्थं प्रतिदिनमुदितस्ते वयं पारसीकाः॥१४॥

पूर्वाचार्य-प्रबद्धैर्विरचित-रुचिरैर्मोक्षमार्ग-प्रदात्री
संस्कारैः संस्कृतानां विरचित-विधिना कथ्यते व्योमदा या
सर्वेषाञ्च त्रयाणां दहनवसुमती-भास्कराणाञ्च पूजा
शुद्धे रम्या च तस्याः प्रगदितमहिमास्ते वयं पारसीकाः॥१५

श्री होर्मिज्दः सुखं वः सकलविजयकृत् पुत्रपौत्रादिवृद्ध्यै
दाता श्री आतशोऽयं स भवतु भवतां पापनाशाय नित्यम्।
श्रीसूर्यः सानुकूलो बहुतरफलदो न्यासजाप्याय पञ्च
हे यूयं पारसीकाः! असुरविजयिनो यान्तु मान्यञ्च नित्यम्

---

'Training college' योज्यः। तत्राचार्य्योत्तरैर्मेधाविच्छात्रैः पठितविषयस्यार्षग्रन्थस्यैव पोषणपुरस्सरं लोकोपयोगिशिक्षायै यतितव्यम्। अनया रीत्या विद्यायाः संरक्षणं तु स्यादेव; योग्याध्यापकानामुपलब्ध्या भावि-छात्रवर्गा अपि अन्येषां छात्राणां समक्षे न पश्चात्पदा भविष्यन्ति। अन्यथा अन्धेन नीयमाना यथान्धा' इति लोकोक्तिं चरितार्थयन्त नामतोऽपि न स्थास्यन्ति। आशासे, शिक्षामन्त्रिणो संस्कृतज्ञानामस्माकं दशाः पर्य्यालोच्य सावधाना भविष्यन्ति।



# को वेदानुरिष्यति ?

श्री लालचन्द्र शर्म्मा, आयुर्वेदाचार्यः

[ शेषांशः ]

अथ खलु पण्डितजवाहरलाल–नेहरूं प्रति न किञ्चिदपि वक्तव्यमस्ति। स हि महाशयो महामहिमः, अमुकुटो भारतीय-जनता-हृदय-सम्राट्, भारतीय-पराधीनता-निगडोत्त्रोटन-तत्परः, महातपस्वी। अथ च

सर्व-सम्पत्सम्पन्ने कुले जातः, जन्मनः प्रभृति पाश्चात्य-शिक्षा-दीक्षितः, तत्संकृतौ पालितः, पोषितः, चिकित्सितः, राजनीतिक-कार्य-व्यापृतः, आयुर्वेदानभिज्ञश्च "अवैज्ञानिकोऽयमायुर्वेदः"--इति वदेत् चेत् न तस्य कोऽप्यपराधो दोषश्च। तथापि १५-२-४६ तमे दिवसे हिन्दू-विश्वविद्यालये भाषमाणेन तेन स्वीकृतमायुर्विज्ञानस्य वैज्ञानिकत्वमित्यलमतिप्रसङ्गेन। यद्येवं विधा अन्येऽपि कदाचिदेवं वदेयुः, भाषेरन् वा; तदा नते दोषभाजो न वाप्यपराधिनः। परन्तेषामेवंविधवादस्य प्रतिवादस्तु नितरामावश्यक एव। येनान्येऽपि गड्डलिकाप्रवाहेणैवं वक्तुं नोत्सहेयुः, भाषण-लेखन-स्वातन्त्र्यस्य च दुरुपयोगं मा कुर्वन्तु। यद्येवं कश्चित्स्वदेशीयः परदेशीयो वा तन्महत्वानभिज्ञो भाषणस्य लेखनस्य दुरुपयोगं कुर्यादपि, तदा न स सह्यः, क्षम्यो वा भवितुमर्हतीति विदाङ्कुर्वन्तु विद्वांसो वैद्याः।

सखेदं निवेद्यते यदधुना ईदृशी प्रणाली प्रचलिता; या आयुर्वेदीय-विचार-निर्मल-धारां मलिनयन्ती, डाक्टरी-वाटिकां सिञ्चन्ती, भारतीयमनोमत्स्यान् बलपूर्वकं पश्चिमाभिमुखं प्रवाहयन्ती प्रवलवेगेन प्रवहति। तद् यथा--

आयुर्वेदीय-पत्रपत्रिकासु एलोपैथी-चिकित्सापद्धतिमनुसृत्य लेखा लिख्यन्ते, तत्पुस्तकानामनुवादाः पुस्तकाकारेण प्रकाश्य वैद्यानां शिरसि प्रसभमारोप्यन्ते; तान्येव च पुस्तकानि-आयुर्वेदविद्यालयेषु पाठ्यत्वेन सबलं सच्छलं साग्रहञ्च स्वीकृत्य स्वीकार्य वा भाविवैद्यानां विद्यार्थिनां कोमलहृदयेषु निवेश्यन्ते। भाषणेषु च--'वयमप्यायुर्वेदभक्ताः,' 'अस्माकमपि हृदयेषु जागर्ति श्रद्धा-आयुर्वेदे यथान्येषामित्यादि विविधवाक्यानि प्रयुज्य प्रारम्भे; पश्चात् वदन्ति यत् "आयुर्वेदे महती त्रुटिर्विद्यते, प्रतिसंस्कर्तॄणामज्ञानात् आयुर्वेदग्रन्थेषु विकृतिरायाता। प्रतिलेखक-मुद्रकादीनां प्रमादात् पाठव्यत्ययाश्च सञ्जाताः। भारतीयायुर्वेदेऽदो नास्ति, इदं नास्ति, एतन्नास्ति, नासौ विषयः पूर्णतां गतः, नाऽत्र विषये तेषां ज्ञानमासीत्"-इत्यादि।

इत्येवं यन्मनसि समायाति तद् बहुधा बहुशश्च स्वैरं विकथ्यते वाचालया निरर्गलया च वाचा यत्र तत्र सर्वत्र। आस्तामेषा कथा। श्रूयतामपरादपि—

अयिभोः ! सुविज्ञातायुर्वेदराद्धान्ता आयुर्वेदाराधकाः विद्वांसः ! शान्तेन दान्तेन च चेतसाऽवदधतु भवन्तोऽवधानपूर्वकम्। निकष्यन्तेऽधुना विमर्श-निकषे पश्यतोहराणामलङ्कारा इवाक्षेपकाणामाक्षेपाः।

श्रीगणनाथसेन-महाशयो वदति:—

"सेयं चरकसंहिता साक्षादग्निवेशतन्त्रमेव-इति न युज्यते वक्तुम्।" इति।

(१) प्रत्यध्यायान्ते—"अग्निवेशकृते तन्त्रे" इति लिखितम्।

(२) आदौ च—"इतिह स्माह भगवानात्रेयः" इति च। अस्य टीकायाम् चक्रपाणिरपि लिखति—

"अत्र 'स्माह' इति शब्दप्रयोगेण भूतमात्र एव लिडर्थे 'लटः स्मे' इति लट्, न भूतानद्यतने परोक्षे, आत्रेयोपदेशस्याग्निवेशंप्रति अपरोक्षत्वात्।

--चरक, सूत्रस्थान, अ० १, सू० १

(३) आरम्भतोऽन्तपर्यन्तं सर्वत्र-आत्रेयाग्निवेशयोः सम्वाद-परम्परा।

(४) सर्वस्मिन् तन्त्रे कुशल-वादकेन वाद्यमाना वीणेव मधुरतरतारमन्द्र-कल-काकली-कलिता एकैव विसम्वादिनी वाणी आहिमालयादामहोदधि प्रवहमाना पतितपावनी गङ्गेवार्ष-भावना-भावित-भावानुद्भावयन्ती श्रूयते, दृश्यते, अनुभूयते च।

(५) प्रतिसंस्कर्त्रा च स्वयं स्वीक्रियते—"तन्त्रस्य कर्ता प्रथमं अग्निवेशो यतोऽभवत्।"

एवमिह सति नानाप्रमाणसंप्लवे सेयं चरक संहिता साक्षात् अग्निवेशतन्त्रमेवेति कथं न युज्यते वक्तुम्—इति स्वर्गीयः सेन-महोदय एव जानातु।

अथ द्वितीय आक्षेपः सेन-महाशयस्य। स यथा—न चास्याः ( वर्तमान–सुश्रुतसंहितायाः ) प्राचीन-सौश्रुत तन्त्राद् वृद्धसुश्रुतापरपर्यायात् अभेदः कथमपि सम्भाव्य इति।

अयमप्याक्षेपः ससारो निस्सारो वेति विचार्यते तावत् (१) प्रत्यध्यायं यथोवाच भगवान् धन्वन्तरिः सुश्रुताय—इति सुस्पष्टो निर्देशः।

(२) चतुर्विधानि सूत्राणि सन्ति सुश्रुतसंहितायाम्। तानि यथाः—गुरुसूत्रम्, शिष्यसूत्रम्, स्वकीय-सूत्रम्, प्रतिसंस्कर्तृसूत्रञ्चेति।

(३) नहि तावदस्यां सुश्रुत-संहितायामुपदिष्टानांमुपदेशानां भगवान् धन्वन्तरिरेव प्रथमोपदेष्टा। यतः स स्वयं कथयति—"इह खल्वायुर्वेदमष्टाङ्गं कृतवान् स्वयम्भूः"—इति कथयति। तथा तत्प्रतिसंस्कर्त्ता "स्वयम्भुवा प्रोक्तमिदं सनातनं पठेद्धि यः काशिपति प्रकाशितम्" —इति सुस्पष्टं वदति। एतेनैतदपि निःसन्देहं ज्ञायते यत् एष खलु ज्ञानराशिर्ब्रह्मसंहितातः समायातो वर्त्तते। तत्रापि च स्मृत्या एवोपलब्धः; नतु अभूतपूर्वो निर्मित इति सुदृढो विश्वासः सर्वेषामपि नवीनानां पुरातनानाञ्च भारतीय-विदुषामित्यलं सुविज्ञात-ज्ञापनेन।

(४) एषा च सुश्रुत-संहिता सूत्रस्थानादारभ्योत्तरतन्त्रपर्यन्तं सूत्रस्थानीय-तृतीयाध्यायोक्तानुक्रमणिकानुसारं सुव्यवस्थित-स्थानाध्यायादि-व्यवस्थया सुव्यवस्थिता, सप्ताङ्गैरुपेतापि शल्यतन्त्रप्रधाना, विविधहित-क्षाराग्निकर्म-जलौका-शृंग-अलाबू-शिरावेधादि-विधाना, नानालङ्कारालङ्कृता, सर्वाङ्गसुन्दरी युवतिरिव वृद्धाप्यद्यापि विराजतेतराम्।

(५) प्रतिसंस्कर्त्ता स्वयमेव प्रतिजानाति यत् यत्किञ्चिदप्यस्यां संहितायां लिखितं वर्ततेऽर्थजातं तत्सर्वमपि—

"ऋषेरिन्द्रप्रभावस्यामृतयोनेर्भिषग्गुरोः।
धारयित्वा सुविमलं मतं परमसम्मतम्॥
उक्ताहार-समाचारः इह प्रेत्य च मोदते।"

(६) तथा च भगवान् धन्वन्तरिरपि तत्र तत्र सर्वत्र संहितायां "वत्स! सुश्रुत!" इत्यादि सस्नेह-सम्बोधनैः सम्बोध्य सुश्रुतमध्यापयन् दरीदृश्यते।

इत्येवं सत्सु नानाप्रमाणेषु वर्तमानायाः सुश्रुत-संहितायाः प्राचीन-सौश्रुततन्त्रात् कथंकारं भेदः सम्भाव्येत इति सावधानेन मनसा समालोचनीयं सुधीधौरेयैरिति प्रार्थ्यते।

कियल्लिखामः, कियदुत्तरयामः, कियत् खण्डयामः, कियच्च मण्डयामः भारतीय-स्वास्थ्य-सुधार-योजना निर्माणार्थं केन्द्रीय-शासक-मण्डल-द्वारा नियुक्ता 'भोर-समितिः, कथयति—

"भारतात् भारतीया चिकित्सापद्धतिस्तथैव निस्सारणीया यथा रूस-चीनादि-देशेभ्यस्तदीया चिकित्सा-पद्धतिर्निस्सारिता।"

युक्तप्रान्तीय-स्वास्थ्य-मन्त्रिपदे प्रतिष्ठिता विजय-लक्ष्मीर्वदति यत्

"ये भवन्तोऽद्य स्वदेशीय-चिकित्सां प्रशंसन्ति, ते भवन्तः कुतो न स्वसदन-समीप-समुत्पन्नानि 'जड़ी-बूटी'-नामानि औषधान्युत्पाट्य स्वीयां स्व-सम्बन्धिनाञ्च चिकित्सां कुर्वन्ति।"—इति।

एवमेव चान्येऽपि बहवो भारतीया अप्यभारतीया इवायुर्वेदविरोधिभावना-भावितान्तःकरणाः सञ्जाता इत्यत उपसंह्रियतेऽसौ लेखः पुनरुक्ति-पुरस्सरम्—

*'को वेदानुद्धरिष्यति' ? इति*

# " अहो विरक्तानां व्यामोहः !"

*अयि मान्याः सुप्रभात—सम्पादकाः !*

सुप्रभातस्य पञ्चमेऽङ्के 'शङ्कराचार्याणां दुर्व्यवस्था' शीर्षकेण भवद्भिर्लगुडप्रहारेणेव सुधारपक्षमवलम्ब्य परा भूताः सर्वेऽपि शङ्कराचार्याः। स्वयं विदुषां स्पष्टतरं क्रूरतमञ्चालोचनं कुर्वताऽपि भवता 'वयं पञ्चोत्तरं शत' मिति न्यायेन काशीस्थ-पण्डितानां मानरक्षाऽपि महता चातुर्य्येण विहिता। श्रीकरपात्रि-कृष्णबोधाश्रम-स्वामिनां हार्दिक-पक्षपातिभिर्भवद्भिरेतेषामादर्शदण्डित्वमपि प्रख्यापितम्। स्वयञ्च समदृष्टिना भवता सर्वेऽपि शङ्कराचार्या एकस्यामेव कोटौ संस्थाप्य संमोचित आत्मा। हन्त ! लेखन-कौशलम् ! अहो सम्पादन-चातुरी-तुरी; यया बुद्धि-वैमनः सहकारेण महान् बुद्ध्यावरणपटः प्रणीतः ! तदर्थं धन्यवादाः !

एतदस्माभिरपि निष्पक्षमूरीक्रियते यत् कियतः कालात् कैश्चन सिंहासनाधिरोहण-लोभेन महान् कूट-कपट- व्यवहारं कृत्वा मर्यादा-विघातो विहितः। यद् भवद्भिर्लिखितं यत्केवलमेकलः शृङ्गेरीपीठ एव प्रचलति, तदपि भ्रमास्पदमेव। यथा श्रीशान्त्यानन्द-श्रीचन्द्रशेखराश्रम-श्रीमदभिनवसच्चिदानन्दतीर्थादिभिर्गायकवाडराज्यस्य प्रतिज्ञापत्रे हस्ताक्षराणि कृत्वा तस्य दासता स्वीकृता, तथैव शृङ्गेरी-मठाधीश्वरेणाऽपि महिसूर-राज्यस्य दासता स्वीकृताऽस्ति। महिसूरराज्ये प्रचलितानामधार्मिकनियमानां तैः कदापि विरोधः कर्तुं न पार्यते। यद्येवमेव बडोदराशासकस्य प्रतिज्ञापत्रं स्वीकृत्य तद्दासतामकरिष्यत् श्रीराजराजेश्वराश्रमो वृद्धयतिस्तदा चन्द्रशेखरसच्चिदानन्दतीर्थादीनां नामापि नाश्रोष्यत। गायकवाड़नरेश्वरेण बहुधा प्रार्थिता अपि श्रीवृद्धतपस्विनो राजराजेश्वराश्रमस्वामिनस्तस्य दासतां स्वीकर्तुं नोद्यताः। प्रत्युत त्रिंशद्वर्षेभ्यः केवलमेतदर्थमेव विवादं कुर्वन्ति यत् बडोदरानरेश्वरस्य नास्त्यधिकारः शङ्कराचार्य-प्रतिष्ठापने। मोहमयीस्थ-महान्यायालयेनाऽपि साम्प्रतमेष निर्णयः प्रदत्तो यत् 'बडोदराशासकस्य शङ्कराचार्य-निर्माणे नास्ति कोऽप्यधिकारः। प्रजाया एवाधिकार' इति।

अतएवाभिनव-सच्चिदानन्दतीर्थैर्जनता-बहुमत-लाभाय श्रीस्वामिकरपात्रिणां करग्रहणं कृतम्।

इतः श्रीकरपात्रिस्वामिनामपि स्वसभा-सम्मेलनादिकार्यसञ्चालनार्थमेकः शिखण्डी पीठाधीश्वर अपेक्षते। चिरकालं यावज्ज्योतिष्पीठाधीश्वरेणैव गुरुणा कार्यं समचालयत् स्वामिप्रवरः। साम्प्रतं तत उद्विग्न अभिनवमेवाग्रहीत्। स्व-स्वस्वार्थसाधनाय द्वयोः सम्मेलनमभूत्।

यद् भवद्भिर्लिखितम्—"एते धर्माचार्याः समधिकधनतृष्णया पीठात् पीठान्तरम्, सम्प्रदायात् सम्प्रदायान्तरम्, आचार्यादाचार्यान्तरं स्वीकुर्वन्ति।"—इति सर्वथा सत्यमेव केषाञ्चनवर्तमानाचार्याणां विषये संघटते। भारतीकृष्णतीर्थ-महोदयैः श्रीत्रिविक्रमतीर्थ-महोदयानां शिष्यत्वं विहाय पुरीस्थ-गोवर्धनमठाधिकाराय तच्छिष्यत्वं स्वीकृतम्। श्रीमतामेवाभिनवसच्चिदानन्दतीर्थैरपि प्रथमं विष्णुस्वामिसम्प्रदायस्याभिनवकृष्णानन्दतीर्थस्य शिष्यत्वं स्वीकृतम्। तदनु तं परित्यज्य प्रभासस्थ त्रिविक्रमतीर्थस्य गुरुपरम्परा स्वीकृता। ततश्च द्वारकापीठलोभेन मर्यादा-विरुद्धं तृतीयवारं शान्त्यानन्द-गुरु-परम्परा स्वीकृता।

एतदतिरिक्तमेभिश्चातुर्मास्यव्रतं विहाय स्वपितृ-पितृव्ययोः समीपे गमनं कृतम्। एतदपि विश्वस्तरूपेण ज्ञातमस्माभिर्यत् शान्त्यानन्द-चन्द्रशेखराश्रमवत् बड़ोदराधीश्वरेण सह प्रतिज्ञापत्रद्वारा समयं कृत्वा द्वारकापीठाधीश्वरत्वं प्राप्तवन्तः। किमेतत् सर्वं यतिधर्मानुरूपम् ? यद् भवद्भिरुक्तं ततोऽप्यधिकं विधीयते दण्डधारिभिः सन्न्यासिभिः।

भवन्तो लिखन्ति यत्—"शङ्कराचार्यपीठाधिकारो राज्ञां न्यायालयानां वा हस्ते न भवेदिति"—इत्येतदर्थमेव श्रीमद्भी राजराजेश्वराश्रमस्वामिभिस्त्रिंशद्वर्षेभ्योऽभियोगः सञ्चाल्यते गायकवाड-नरेश्वरेण सार्द्धम् यत् शङ्कराचार्यनियुक्तौ नास्ति राज्ञोऽधिकारः। मोहमयी न्यायालयेनाऽपि तदनुकूलमेव निर्णीतम्। इदानीं शङ्कराचार्य-निर्माणे सनातन-जनताया अधिकार एव स्वीकृतो न्यायालयेनाऽपि। अतएव व्याकुलाः श्रीमदभिनवसच्चिदानन्दस्वामिनो जनताया बहुमतमवाप्तुं सर्वत्र स्वीयं प्रचारं कुर्वन्ति। वस्तुतस्त्विमे बड़ोदरा-वेतन-भोगिनः कर्मकराः शङ्कराचार्याः सन्ति। नास्त्येतेषां तत्र कोऽप्यधिकारः।

इमे, एतेषां पूर्वाचार्याश्च बड़ौदा-राज्येन सह प्रतिज्ञाबद्धाः सन्ति यत् विधवाविवाहादि-राज्यसम्मत-विषयेषु विरोधं न विधास्यामः। नच राज्यानभिमतं-सनातनधर्म-प्रचारं

करिष्याम इति तस्य प्रतिज्ञापत्रस्य प्रतिलिपिरपि प्रहीयते सहैव सम्पादकानां भवतां सविधे।

अथापि धर्मसङ्घस्य धर्मधुरन्धराः सञ्चालकाः करपात्रिस्वामिनः, वर्णाश्रमस्वराजसंघ-स्वामिनः, भारतधर्ममहामण्डल प्रभृतयः सिद्धान्तहीनाः, दक्षिणा लाभ-लुब्धाः काशिकाः पण्डिताः यदि तस्यैवाभिनव-स्वामिनः पक्षपातं कुर्वन्ति, तदा कृतं सनातनधर्माभिमानेन। एतेन सुस्पष्टमेवेदं यदिमे सर्वेऽपि बडोदरा-राज्यानुकूला एव धार्मिकाः। तदा व्यर्थमेव धर्मश्रद्धावतां धनिनां धनानि, धूम्रयान-वाष्पयान-वायुयान-सभा-सम्मेलन-यन्त्रालय-पत्र प्रकाशनादि-स्वप्रचार-साधनेषु व्ययीकुर्वन्तः स्वार्थसाधन-निरता मिथ्या वासुदेवाः दाम्भिका एव सन्ति सनातनधर्मनेतारः। यद्येवं तदा आर्यसमाजेन, हिन्दूसभया वा किमपकृतम् धर्मस्य। एतत्सर्वं भोजनभट्टानां लीलायितमेवेति प्रतीयते।

भवन्तः काशिकपण्डितानां पक्षमवलम्ब्य यद् वाक्कीलतां कुर्वन्ति, तदपि न हृदयेन। तत्रैवाङ्के भवन्तः पण्डितानां स्थितिमपि वर्णयन्ति यदिमे मुद्राद्व्यलोभेन सर्वमप्यनर्थजातं कर्तुं सन्नद्धाः सन्तिष्टन्ते। एष तु तेषां व्यवसाय एव। एतेषामियमनर्थ-परम्परा चिरप्ररूढा, प्रसिद्धा च भवद्भिः प्रयत्नशतेनाऽपि नापनेतुं न वा परिमार्ष्टुं शक्या।

महामण्डलादिसंस्थानां विषये किं बहु वदामः। प्रायः सर्वेऽपि जानन्ति तल्लीलाम्। वस्तुतस्तु सनातनधर्मक्षेत्रे न कोऽपि विद्यते नियामकः, नापि नियमः, न चापि नियम्यः। सर्वेऽपि तादृशा एव।

स्पष्टवादितायां सिद्धान्त-दृढतायां सुप्रसिद्धोऽपि भवान् करपात्रिस्वामिनां काशीस्थ-विदुषाञ्च संसर्गेण तस्मिन्नेव प्रवाहे पतित इत्यत्रापि न सन्देहः। भवतैव नैकवारं श्रीमतां राजराजेश्वराश्रमस्वामिनां वाराणस्यामभिनन्दनं विहितम्। भवतामनुरोधेनैव च ते धर्मसङ्घ-यज्ञे वाराणस्यां समागताः, तत्रच भवतैव तेषां चिर-निवास-प्रबन्धः कृत आसीत्। सुप्रभात-कार्यालये च तेषामभ्यर्थनाऽपि कृता पण्डितसभा-सहकारेण। तथापि भवन्तस्तेषामाचार्यत्वे विप्रतिपन्नाः।

भवता परस्पर-प्रेम-प्रचाराय या व्यवस्था समादिष्टा, सा तु समीचीनैव; तथापि विचारणीयम् यत् त्रिंशद्वर्षपर्यन्तं गुर्जरप्रान्तीयैरन्यप्रान्तीयैश्च सनातनधर्माभिमानिभिः सश्रद्धं धनं दत्वा यस्याचार्यत्वं संरक्षितं स्वीकृतञ्च। येन च केवलं गायकवाडनरेश्वरस्य निरङ्कुशतां मिथ्याधिकारञ्च निर्मूलयितुं प्रयतितम्, स वृद्धतपस्वी, न सिंहासनाधिरोहणाय यतते; प्रत्युत मर्यादा-संरक्षणायैव यतते। धर्माय यतते। विवशतया सामयिक-साधनानामुपयोगं करोति। न श्रीराजराजेश्वराश्रमस्वामिनामाचार्येण सह विरोधः, तेषान्तु केवलमुच्छृङ्खलस्य धर्ममर्यादा-भञ्जकस्य बडोदरा-राज्येन सह विरोधः।

छत्रचामरादिराजोचिताचार-व्यवहार-परायणतां यद्विनिन्दन्ति भवन्तस्तन्मठाम्नायानुकूलमेव। आचार्यैर्देववत्, राजवद्वा व्यवहर्तव्यम्। तत्र प्रजाभ्यः करग्रहणमप्यादिष्टमाचार्याणाम्। तत्रापि द्वारकापीठाधीश्वराः श्रीमद्राजराजेश्वराश्रमस्वामिनो नितरां सरलाः, तपस्विनः, फलाहाराः, आडम्बरशून्याः, धनालय-कार्यालयादि-व्यापार-विरता अशौवस्तिका एवेति भवद्भिरपि शतशोऽनुभूतमेव।

अभिनवाचार्यास्तु स्वगृहमपि गच्छन्ति, पितृ-पितृव्यादीनामपि सम्बन्धं स्थापयन्ति। मूलबागलु-मठस्यापि प्रबन्धं कुर्वन्ति। एतत् किं यतिधर्मानुरूपम्? एवं विचारणायान्तु श्रीमतां श्रद्धाभाजनभूताः करपात्रिस्वामिनो यत् कुर्वन्ति द्रव्यसंग्रहम्, प्रेस-पत्र-प्रकाशनादिकम्, सङ्घर्षम्, विविधयानैर्गमनागमनम्-किमेतदपि दण्डिधर्मान्तर्गतं मन्यन्ते भवन्तः?

किमधिकम्, कृपया पत्रमेतत् प्रकाश्य भवद्भिः स्वीया निरपेक्षता संरक्षणीया। पत्रेण सहैव बहूनि पत्राणि साधनानि च प्रहीयन्ते-शारदापीठ-विषये, तदप्यालोच्य पुनर्विचारणीयं सुधीधौरेयैः सम्पादकैरित्यलमतिप्रसङ्गेन।

१२५, गुलालबाड़ी, बंबई — भवतामेव— रेवाशङ्कर मेघजी शास्त्री

[ अस्मत् प्रियसुहृद्भिः शास्त्रिभिः प्रेषितं पत्रं प्रकाशितम्। एभिः पत्रेण सह बहूनि प्रमाणानि च प्रेषितानि। तत्सर्वमालोच्य पत्रस्यास्य विषये स्वीयमभिमतमग्रिमाङ्के प्रकाशयिष्यामः। वयं नात्र विवादमभिलषामः, परं विषयस्यास्य स्पष्टीकरणमपि वाञ्छामः—सम्पादकः ]

# शैव-वैष्णव-लीला।

लेखकः--पण्डित दुण्ढिराज शास्त्री, न्यायाचार्यः,

पुरातत्व-संग्रह-कर्ता

वैष्णवाः शैवाश्च परस्परतः स्वाभिमतदेवता-पक्षपातिनोऽन्यदेवतापक्षद्विनो-मिथो विवदन्ते। तत्रप्रथमतो वैष्णवाः शिवादिदेव-पूज्यचरण-कमलं निजनाथं। श्रीकृष्णं स्तुवन्ति—

श्रुतीनामुद्धर्ता सकल-धरणी-भार-वहनः
स्वभक्तानां त्राता बलिसदन-संरक्षण-करः॥
प्रदाता सिद्धीनां कुशलकरणो देव-सुखदः
प्रहन्ता दुष्टानां जयति हरिरीशप्रियपदः॥ १॥

ततः शैवाः स्वभिमतेश्वर-पूज्यपाद-हरिस्तुतिमाकर्ण्य व्यकुलितान्तःकरणाः परमेश्वरमकिञ्चित्करत्वान्निदन्ति

अहो मत्स्यः कूर्मो वनभुवि विहर्ता पशुरयं
छली मातुर्द्वेष्टाऽवनि-सुत-निहन्ता रणमुखे॥
परस्त्रीणां हर्ता श्रुतिविहित-हिंसां विघटयन्
परोत्कर्षासोढः कथमिह हरिः सेव्यचरणः॥ २॥

एवं विष्णुमभिनिन्द्य स्वमनीषित-देवमीशं नमस्कुर्वन्ति

सुधाधारो भाले शिरसि सलिलं पापहरणं
वपुर्गौरं यस्य प्रवरनटनालम्बनकरम्॥
यदर्धाङ्गे नारी-सकल-रमणी-रूपजननी
कथं वन्द्यो न स्याच्छिव शिव शिवो न त्रिजगताम्॥३॥

अथ वैष्णवाः शैवोक्त-शिवस्तुतिमाकर्ण्य तं प्रत्यवयवतोऽभिनिन्दन्ति।

कलङ्की यन्मौलौ तदनु निटिले कृच्छ्रसरणी
विषं कण्ठे घोरं विषधर-युतं बाहु-युगलम्।
शिरोधारी हस्तः पितृवनभवं भस्म वपुषि
प्रभुर्नः श्रीमान्कथमिह जनानां पशुपतिः॥ ४॥

तमेव देवं प्रत्यभिनिन्द्य स्वमतं देवं ततः स्तुवन्ति—

ललाटे कस्तूरी-तिलक-ललितं वक्षसि मणि-
र्गले रम्या माला नयन-युगलं पद्मसदृशम्।
श्रुतिद्वन्द्वं नानामणिगणलसत्कुण्डलयुतं
स लक्ष्मीशः शैवैर्न खलु परिहास्योऽखिलगुरुः॥५॥

ततः शैवाः विष्णुं विनिन्द्य शिवं स्तुवन्ति—

घृतादीनां चौरः प्रथमवयसि स्त्रीवधकरः
सुहृद्गोपालानां तदनु जननी-भ्रातृ-वधकृत्।
सरुक्मिण्याहर्ता शिवशिव परस्त्रीगतमनाः
कथं शास्त्रातीतो न खलु भवदीयो हरिरयम्॥६॥

यदीया तन्वङ्गी जगति जगदम्बेति विदिता
यदीयः पुत्रोऽसौ सकलजनताविघ्नहरणः।
यदीयं सन्धानं जगदुदरसम्पोषणकरं
तुलां को वा देवो व्रजति विभुनाऽनेन सहसा॥७॥

ततो वैष्णवाः शिवं विनिन्द्य विष्णुं स्तुवन्ति-तथाहि—

पयोराशेर्वामा शिरसि विधृता येन तटिनी
श्रुतिप्रोक्तं ध्वंसं गमितमखिलं कर्म सरुषा।
समुल्लङ्घ्याचारं विहितमधिकं ब्रह्महननं
न जानीमः कोऽयं वयमिति कुकर्मा पशुपतिः॥ ८॥

धनुः शैवं भग्नं करविधृतिमात्रेण शिशुना
कपिर्भूत्वा रुद्रो भजति चरणौ यस्य दृढधीः।
यदंघ्रिस्पृष्टोऽश्मा झटिति रमणीयं वपुरितः
स रामः किं वर्ण्यो दिशि विदिशि विस्फारितयशाः॥९॥

एवं शैव-वैष्णव-प्रोक्त-शिव-विष्णु-स्तुति-निन्दे श्रुत्वाऽऽचार्या उत्तरयन्ति—

द्वयोर्भक्ताः यूयं शृणुत वचनं भो हितकरं
वृथा द्रोहं मोहं त्यजत भजत द्वौ समतया।
तयोर्भेदं पश्यन्पतति नरके रौरव इति
श्रुतिस्मृत्योरुक्तं त्विह भवति दुःखी हतमतिः॥१०॥

ततोऽवोचन्नित्यं हर कमलपाणे स्मरहर !
प्रभो काशीनाथ व्रजयुवतिभोगिन्पशुपते !
हरे शर्व श्रीश त्रिपुरहर विष्णो गिरिपते !
गदापाणे पायादनुचितविधानात् गिरिश ! नः ॥११॥

## शोकाश्रुविन्दवः



रामावनीश-रमणी-जननी-विभूषा-
दासीकृता गुणगणैर्निखिलैः सुरम्यैः,
लक्ष्मीश्वरस्य रमणी रमणीयशीला
हा हन्त ! हन्त ! सुरसद्म गताऽद्य नूनम् ॥१॥

छायातरोर्गमनमेत्य समित्रवर्गाः
छात्रा विदेह-नगरावनिजा हि खिन्नाः ।
संघीकृताश्च वत ! सम्प्रति शोकतप्ताः
दीनाननाः कथय कस्य पुरः प्रयान्तु ॥२॥

यस्या गुणौघ-गणना-निरताब्जयोनि-
ज्योतिर्गणस्य च मिषेण नभोऽभ्यभूषत् ।
मुक्तिं गताऽद्य जगतीं सहसा स्म विद्व-
द्वागैकगोचरपथे पथिकायमाना ॥३॥

यस्याः प्रयाणसमये महिलाजनानाम्
दीर्घाः कवोष्णविगलन्नयनाम्बुधाराः,
मुक्ताकलाप इव सम्प्रति शोभमाना,
तद्वक्षसि स्थिरतया नु विलोकयामि ॥४॥

यस्या विदेह-नगरी बुधवृन्दकाऽन्ते-
वासि-प्रवास-सदनाशन-वारि-दानात् ।
उत्फुल्ल-कीर्त्ति-लतिका जनताभिनन्द्या
सा किं समाश्रितवती परमं पदं तत् ॥५॥

के किम्वदन्ति कति वा किमहो रुदन्ति
किं शोककोकनदमद्य विकाशमेति
अन्तःपुरावनितले वरवज्रपातात्
कोलाहलः कलयति प्रलय—प्रलापः ॥६॥

हा ! हन्त ! हन्त ! परितो विलपन्ति छात्रा
अन्तःपुरावनिगता महिलाश्च नूनम् ॥
अत्र स्थिता बुधजना वत ! भाग्यहीनाः,
मूकीभवन्त इव भान्ति सुचित्रकल्पाः ॥७॥

आत्मा तदीय उदितादितिनन्दनस्य
विम्बं विभिद्य तमसः परतामुपेत्य ।
जीवस्वभावमपहाय निजं स्वरूपम्-
नैर्वाणमद्य "जगदीश" पदं प्रयातु ॥८॥

—श्रीजगदीशचन्द्रमिश्रः "सुयशाः"

## जयति विजयलक्ष्मीः

### गीतिका—

चलति मन्दानिले सरसि सरसीरुहे
कनक-कुड्मल-मिलन-मञ्जुकल-भाषिणी ।
जयति भुवि भारते यशसि नवभारती
नेहरु-विजय-साम्राज्यपददायिनी ॥
वसति वृन्दावने मञ्जु-सेवावने
चन्द्रमुख—चन्द्रिका-शरन्नवयामिनी ।
कलित-कुसुमाकरे राष्ट्रपति-नायके
गायति मुदा नभसि सित-हंस-गामिनी ॥
इन्दिरा लसित-सौभाग्य-कलयानया
मञ्जुकर-कञ्ज-कलिता कमलवासिनी ।
क्षीरनिधि-तीरगा जनक-सदने यथा
मालती-विमल-वनमालया रञ्जिता ॥
लसति विजयाऽजया भारतश्रीर्वरा
लक्ष्म-लक्षणयुता विजयलक्ष्मीः शुभा ॥

—धरणीधरपाठकः, कविः

# "यदर्थं ब्राह्मणी सूते तस्य कालोऽयमागतः ।"

प्रेयांसो महीयांसश्च विद्वांसः !

त्यजत मोह-निद्राम्, भजत प्रबोधम्, उत्तिष्ठत, अवतरत कार्यक्षेत्रे । यदि स-सम्मानं जीवितव्यम्, यदि विद्यते धमनीषु आर्य-महर्षीणां क्षीणतरोऽपि शोणित-सञ्चारः । यदि जाजागरीति विदग्ध-हृदये धर्म-प्रेमा, यदि जाज्वलीति कुत्रापि हृदयकोणे स्वाभिमानवह्नेर्विस्फुलिङ्गः, यदि वरीवर्त्ति शास्त्रभयम्, ईश्वरभयं वा, यदि विद्यते आत्मनि ब्राह्मणत्वाभिमानः, यदि संस्मर्यते नवराष्ट्र-निर्माण-करिणाम्, अभिनव समाज-सङ्ग्रन्थन-करिणाम्, धर्ममर्यादा-संरक्षण-विचक्षणानाम्, कृष्ण-बुद्ध-चाणक्य-शङ्कराचार्यादीनां नेतॄणां सुचरितम्, कार्यकलापश्चेत्तर्हि सोत्साहं सोल्लासं साभिमानञ्च समवतरन्तु कार्यक्षेत्रे ।

अद्यापि कोटिशो हिन्दूजनतानां हृदये वर्वर्ति भवतां कृते असीमा श्रद्धा, अनन्त-विश्वासः, अद्यापि भवतः प्रतीक्षन्ते नेतृत्वं भारतीयाः, अद्यापि विद्यते समयः समवतरणस्य ।

भगवता श्रीकृष्णेन तत्कालीन-दुष्टानां कंस-जरासन्ध-शिशुपाल-कालयवनादीनां विनाशाय किं किं कर्तव्यमकर्तव्यं वा, का का कूटनीतिर्वा, किं किं वा कौशलं नाचरितम् । भगवता बुद्धेन वाष्पयान-जलयान-व्योमयान-तडित्सम्बाद-समाचारपत्र-निस्तन्त्रीक-विद्युद्वार्ता-प्रभृतिसाधनविरहितेऽपि काले न केवलं भारते; चीन-जयप्राण-( जापान )-यवद्वीप-( जावा ) सुमात्रा-कम्बोज-( कम्बोडिया )—सिंहल-( सिलोन ) प्रभृतिदूरतम-देशेषु भीषणकष्टपरम्परामनुभूयापि महान् प्रचारः कृत आसीत् । नीतिनिपुणेन चाणक्येन ग्रीक-जातीयानामाक्रमणतो भारत-वसुन्धरां परिरक्षितुं कया कूटनीत्या नूतन-साम्राज्य-स्थापनं विहितम्, सेल्यूकस-नाम्नस्तच्छासकस्य कन्यापि चन्द्रगुप्ताय गृहीता। भगवता-शङ्कराचार्येण आसेतुहिमालयम्, आकामरूपादाकाश्मीरम् भ्रामं-भ्रामं कथं धर्मप्रचारं कृत इति नाविदितं कस्यापि ।

सृष्टेरारभ्य महाभारतकालं यावत् शापानुग्रहसमर्थाः पण्डिता ब्राह्मणा एव राष्ट्रनियामकाः, राज्ञामप्याज्ञापकाः, धर्म-प्रतिष्ठापकाः, समाज-सञ्चालकाश्चासन् ।

तदनन्तरं तादृश-त्याग-तपोविहीनैरपि ब्राह्मणैः नीतिशास्त्र-धर्मशास्त्रादीनां परश्शतान् ग्रन्थान् निर्माय स्वयञ्च तादृशमादर्शमाचरणञ्च विधाय राष्ट्र-समाज-धर्मरक्षण-प्रयत्नः समयानुकूलो विहितः ।

ततोऽपि भयङ्करे काले विदेशिभिर्दुर्दान्तैः यवनापसदैः समाक्रान्ते भारत-भू-मण्डले तत्कालोचित-कर्तव्य-परायणैः—तुलसीदास-भूषण-रामदाससमर्थप्रभृतिभिर्विद्वद्भिरभिनव-साहित्यनिर्माण-द्वारा हिन्दूधर्मरक्षायै-हिन्दू-राष्ट्र-रक्षणाय च श्लाघनीयः प्रयत्नो विहितः । तदानीन्तनैर्विद्वद्भिश्च तत्र कार्येषु यावच्छक्यं महत् कार्यमनुष्ठितम् । ब्राह्मणा विद्वांस एव परः सहस्रवर्षेभ्यो प्रधानामात्याः, न्यायधीशाः, राज्ञां गुरवः, राष्ट्र-समाज-व्यवस्था-सञ्चालका आसन् । आँग्ल शासनादारभ्य विदुषां पतनं प्रारब्धम् । सार्द्धशताब्द्यां वैदेशिकैः कूटनीतिज्ञैरस्माकं समूलोन्मूलनायालं साफल्यमासादितम् । अस्माकं बालकान्, अस्माकं पालकांश्चापि पाश्चात्य-शिक्षा-दीक्षा-संस्कृतिसंस्कृतान् विधाय अस्माकमेव विनाशाय सज्जितान् कृतवन्तः, अस्माभिः सह सुखेन सुचिरं निवसतो यवनान्

हिन्दूनां विनाशाय प्रोत्साह्य भारतीयं पवित्र-जीवनं नारकीय-यातनामयं कृतवन्तः । न केवलमस्माकमेव, प्रत्युत अस्मद्देशस्य, संस्कृतेः, धर्मस्य, अस्तित्वमेव विलोपयितुं कृतयत्नाश्च सन्ति ।

एष महान् दोषो विदुषामेव । स्वदेशीय-शिक्षा-दीक्षा-संस्कारादीनां नियन्त्रणं स्वदेशीया एव शिक्षकाः, आचार्याश्च कर्तुं प्रभवन्ति । एतदेव जीवितजातेर्जीवनम् । तदिदानीं भारतीय-नेतॄणां कर्तुमकर्तुमन्यथा-कर्तुं समर्थानामस्माकं शिक्षणमपि वैदेशिकानां हस्ते तन्नियन्त्रितानां तादृशानामेवाधिकारिणां हस्ते वा विद्यते। ये जगतोऽपि शिक्षका भवितुमर्हास्ते विदेशिपरिचालित-क्षुद्रतम-शिक्षा-चक्रेऽहमहमिकया बम्भ्रम्यमाणा मरीम्रियन्ते । अहो विडम्बनम् ! किमिदमाश्चर्यम् !! इयमेव बुद्धिदासस्य चरमा सीमा ।

पुराकाले शिक्षायां राजनियन्त्रणं नासीत् । विद्वांसो महर्षयः स्वाश्रमेषु यथेच्छं देशोकालोपयोगिशिक्षा-सत्रं प्रवर्त्तयन्तिस्म । तत्र राज्ञां मनागपि हस्तक्षेपो नाभूत् । अतएव विविधविधविद्यारत्नैर्विद्योतमानः संस्कृत-वाङ्मय-महार्णवो भासते । अनियन्त्रितत्वात् शिक्षापद्धतर्भारतीय-गुरुकुलेषु दर्शन-आयुर्वेद-ज्यौतिष धर्मशास्त्र-अर्थशास्त्र-कामशास्त्र-न्याय- वैशेषिक-सांख्य-योग-पातञ्जल-मीमांसा-प्रभृतिविविध-नवनवाविष्कृत शास्त्राणां पठन-पाठनं भवतिस्म । सर्वोऽप्येष महर्षीणामनियन्त्रितशिक्षाप्रणालीसञ्चालनेन भवतिस्म । यदीदानीमपि स्वतन्त्रा शिक्षा स्यात्तदा किं न भवेदाधुनिकानां देशकालानुकूलानां विविधाभिनवशास्त्राणां प्रादुर्भावः ? परमिदानीमेकस्यैव कस्यापि स्थूलशास्त्रस्य दश पञ्च वा पुस्तकान्यधीत्य; आजीवनं तेष्वेव बुद्धिव्ययं कुर्वतां कूपमण्डूकानामिवास्माकं कथंकारं प्रतिभा-विस्फारः स्यात् ?

एतदन्यन्महदाश्चर्यकरमसह्यञ्च विद्यते यत् संस्कृतभाषाध्ययनाय भारतीय-विद्यालयेषु पाश्चात्य-पण्डिताः सहस्राधिक-मासिक-वेतनेन समायान्ति। तत्रैव संस्कृतविद्वांसस्त्रिंशन्मुद्राभिः पाठयन्ति । भारतीय-दर्शन-साहित्य-संस्कृतीनामध्ययनाय विदेशीय-विद्यालयेषु गच्छन्ति भारतीयाश्छात्राः, तत आगत्य दर्शनसाहित्यादिविषयेष्वगाध-पाण्डित्यवतामपि विदुषामुपरि शासनं कुर्वन्ति, संस्कृत-शिक्षा-प्रणालीं निर्मान्ति । नास्ति भारतीय-संस्कृत विदुषामेको ऽपि विश्वविद्यालयो यत्र निखिलविश्वस्य जिज्ञासवश्छात्राः सविनयं समेत्य-भारतीयशास्त्राणामध्ययनं भारतीय-विद्वद्भ्यः कुर्वीरन् । किमतः परमपि दास्यं दौर्बल्यञ्च भवितुमर्हति । अस्माकं पूर्वजानाममूल्या ज्ञान-विज्ञान-सम्पत् वैदेशिकानां हस्ते विद्यते, वयञ्च मणि-विहीनाः सर्पा इव तन्मुखापेक्षिणस्तत्प्रदत्तैः कणैर्जीवनं यापयामः । कियद्दौर्भाग्यमस्माकं बुद्धिदासानाम् ? अपि नाम सह्या दुर्दशेयम् ?—किं कदापि विषयेऽस्मिन् स्वप्नेऽपि ध्यान-प्रदानं कृतमस्माभिः ? अस्माकं देशे अस्माकं पैतृकसम्पत्तेरुपभोगः—अन्यैः क्रियते, वयञ्च तानेवोपजीवामः सादरमिति चरमा सीमा पतनस्य ।

एतदतिरिक्तं धर्मक्षेत्रेऽपि विदेशीया विधर्माणो यथेच्छं हिन्दुप्रजाः स्वधर्मे प्रवेशयन्ति, स्वच्छन्दं विलुण्ठन्ति, निर्दयमत्याचरन्ति, निष्करुणं व्यवहरन्ति, चतुर्दशकोटिमिता आर्य-नरनार्यो विधर्मे गताः, प्रत्यहञ्च गच्छन्ति । तत्र किमस्माभिः क्रियते ? अस्माकं धार्मिकं नेतृत्वमपि परेषां हस्ते समुपगतं विद्यते । हिन्दूसभा-कांग्रेस-आर्यसमाज-प्रभृतयः संस्थाः पण्डितानामसहयोगेनताननादृत्य यथेच्छं व्यवस्थां कुर्वन्ति । वयं तत्राप्युदासीनाः केवलं गालिप्रदानेनात्मानं सम्बोधयामः ।

सनातनधर्मक्षेत्रेऽपि न जाने कियन्तो धूर्त्ताः संस्कृत-

पाठशाला-सत्र-छात्रवृत्ति-व्याजेन लक्षशोऽर्जयित्वा दशमुद्राभिः पण्डितान् कर्मकररूपेण संस्थाप्य प्रभवन्ति, भवद्भिस्तत्र किं प्रतिविधीयते ? यत्रास्माकं देशेसहस्रशः पण्डिता वृत्तिकर्षिता इतस्ततो बुभुक्षा-पीडिता म्रियन्ते, तत्रैव लक्षशः सधर्मिणो विधर्मिणश्च हिन्दूजनता धनेनामन्दमानन्दं विन्दन्ति । एतदपि महद्दौर्भाग्य-दुर्विलसितम् ।

एवमेव न जाने किं किं भवति । अस्माकं भागधेयमन्येषां हस्ते विद्यते । सर्वतो विलुण्ठितास्तिरस्कृता बहिष्कृता एव भारतीय-धर्म-जाति-देश-नेतारः ।

तदिदानीं न दौर्बल्येन सारल्येन, मौनेन, आलस्येन केवलमौखिक-विरोधेन वा चिरप्ररूढाः प्रबलाः शत्रवो विजेतुं शक्याः । कूटनीतिज्ञैः सह कूटनीत्या वर्तितव्यम्, बलवद्भिः सह बलेन, निष्करुणैः सह निर्दयतया, मायाविभिः सह मायया, कापटिकैः सह कपटेन, सरलैः सह सारल्येन वर्तितव्यमस्माभिरपि । सुचिरादेव प्रबलतरपरहस्त-पतितां सम्पत्तिमानेतुं प्रबलतमः प्रयत्नो विधेयः । उक्तमेव नीतिशास्त्रज्ञैः—

"व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः ।"

अन्यच्च—

"मा जीवन् यः परावज्ञा-दुःखदग्धोऽपि जीवति ।
तस्यत्वजनिरेवास्तु जननी-क्लेशकारणः ॥"
"पादाहतं यदुत्थाय मूर्द्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद् वरं रजः ॥"
"काकोऽपि जीवति चिराय बलिञ्च भुङ्क्ते ।"

इत्यादि-नीतिशास्त्रानुसारं संग्रन्थनं विधाय कार्यक्षेत्रे समवरन्तु । कार्यक्षेत्रञ्च ५९ वर्षेभ्यः सञ्चलितया श्रीपण्डितसभया नवीनायोजनपुरस्सरं निर्मीयते । तत्र च समवेतैः सर्वैरपि भारतीय-विद्वद्भिरिदानीमन्तिमेऽपि काले सन्नद्धीभूय समुत्थातव्यमिति साग्रहं विनिवेदयामः । सा च योजनाऽग्रिमाङ्के प्रकाशिता स्यात् । ततः कर्तव्यनिर्देशं भूयः समाचरिष्यामः ।

सम्पादकः

## सूचना

**आश्विन-कार्तिकयोः संयुक्ताङ्को विंशतिदिवसाभ्यन्तर एव प्रकाशितो भविष्यति । मार्गशीर्षाङ्को मालवीयाङ्कः, पौषाङ्कश्च वाराणसेय-राजकीय-संस्कृत-महाविद्यालयस्य ( बनारस-गवर्नमेन्ट संस्कृत कालेज ) सार्द्धशताब्दी समये वसन्तपञ्चम्याम्-प्रकाशितः स्यात् ।**

—व्यवस्थापकः

एम्० ए०—इत्युपाधिधारि श्रीराधाविनोद गोस्वामिना अमरभारती-यंत्रालये काश्याम् मुद्रितम्।
Published by Ramlal Shastri for the Suprabhatam Ltd. Benares.

संयुक्त-विहार-प्रान्तयोः शिक्षाविभागेन प्रान्तीय-स्कूल-कालेज-पुस्तकालय-पाठशालानां कृते स्वीकृतम् ।

त्रयोदशाब्दे ]  सौर-आश्विन-कार्त्तिकौ, २००३ वैक्रमाब्दाः,  [ सप्तमाष्टम-संख्ये

भारतवर्षस्य सर्वोत्कृष्टम्, काशीस्थ-विद्वत्समाजानुमोदितम्

संस्कृत-मासिक-पत्रम्

# सुप्रभातम्



जगद्गुरु-बाबा श्री १०८ श्रीवैष्णवाचार्याः
तपोनिधि-गोकुलदास—महोदयाः ।

सम्पादकः—
श्रीकेदारनाथशर्मा सारस्वतः

व्यवस्थापकः—
रामलाल शास्त्री

प्राप्तिस्थानम्—सुप्रभात-कार्यालयः, काशी ।

वार्षिकम्मूल्यम्—४)  [ अक्टूबर-नवम्बर, १९४६ ई० ]  छात्रेभ्यः पुस्तकालयेभ्यश्च—३)

# लेख-सूची



## सूचना

नूतन-यन्त्रालय-साधन-सम्पादन-व्यग्रमानसैः कथमपि युग्माङ्कोऽयं श्रीमतां पाठकानां सेवायां समुपढौक्यते। अस्य मुद्रणं कथं जातमिति वक्तुं न शक्यते। अतोऽत्र मुद्रण-सौन्दर्य-प्रकाशन-वैशिष्ट्य-सम्पादन-स्वारस्यादिकं न मनागपि चिन्तनीयम्। शनैः शनैः सर्वं सुसम्पन्नं स्यात्। पुरातनाक्षरैः पुरातनतरे मुद्रणालये कथमपि मुद्रितस्यास्य संशोधनमपि न समीचीनतया जातम्।—क्रमश इदानीं पुनरपि सर्वं सुसम्पन्नं स्यात्। विशिष्ट-विवरणं सम्पादकीये समालोकनीयम्।

व्यवस्थापकः



त्रयोदशाऽब्दे ] सौर-आश्विन-कार्तिकौ, २००३, विक्रमाब्दाः [ सप्तमाष्टम-संख्ये

## गीतिः

सोरठरागः

जय गिरिजातनुज ! गणेश ! स्था०

खर्व लम्बोदर ! सहोदर शक्तिधर ! विघ्नेश !
दानमण्डित-गण्डयुग ! शशिखण्ड-पेशलकेश !

परशुधर मदहरण शुण्डादण्ड-रुचिरनिवेश !
गजवदन ! मतिसदन ! शैशवकेलिसुखितमहेश !

एकरदन विभाविभावित-मानहति-राकेश !
तिरय 'बदरीनाथ'-विपदं दलितविबुध-क्लेश !

—श्रीबदरीनाथ झा,

—०—

## शक्ति-स्तवः

श्रीविन्ध्येश्वरीप्रसाद शास्त्री, धर्माचार्यः ।

जयति जयति विश्वजननि ! निखिल-भुवन-पालिनी !
दुःख-दाह-दग्ध-देह—मधिवसामि बन्धगेह—
भवतु जननि ! सर्वदेह, भवतु मे सहायिनी ।१।
जयति०

इह निशाचराश्चरन्ति, जन्मभुवमुपद्रवन्ति ।
आर्यवृन्दमार्त्तयन्ति, विपदियं प्रमाथिनी ॥२॥
जयति०

दानव-दल-दमननीति—रतिभयं प्रचकेरीति ।
जगति यदि तवास्ति प्रीति-रेतु सिंहवाहिनी ।३।
जयति०

स्वं स्वतन्त्रमस्तु धाम समयो बहुरतिजगाम ।
महिष-मर्दिनीति नाम सार्थयतु सनातनी ॥ ४ ॥
जयति०

—०—

## श्रीदुर्गाद्वादशिका

—:※:—

साहित्यवाचस्पतिः
महामहोपाध्यायः श्रीनारायणशास्त्री खिस्ते

— —

आयाहि देवि दुर्गे! दुर्गत-भक्तावनोत्सर्गे।
क्षमता त्वमेव भर्गे दर्शय तामद्य भारते सर्गे॥

जय जय हिमवत्तनये! विनयेनाद्यैकमम्ब! याचे त्वाम्।
जडतां विधूय सद्यो द्रागुष्ठान्ति वनाय नः पततात्॥

नास्ते सम्प्रति तादृग् भूयाद्योऽस्माकमादर्शः।
वचसा तपसा महसा चरितेनात्युज्ज्वलेन यो धुर्यः॥

स्वार्थापजाप-दुर्गत पाप-पराभूतचेतसां पुंसाम्।
अहमहमिकैव सैका दलयति मर्माणि दारुणं दृष्टा॥

सततं पण्डितमानी सर्वः शर्वायते गर्वात्।
अहमम्ब! मूढमानी शिष्यं मां शाधि गुरुरूपे॥

कालकलानाकलितः सर्वगुरुर्यः शिवः साक्षात्।
मातस्त्वमेव राजसि तस्य प्राणप्रदा शक्तिः॥

अहमात्मना स्फुरन्तामोतप्रोतामिमामभितः।
तारक-शक्ति-महत्तां सद्गुरुरूपां प्रपद्येऽहम्॥

भित्त्वा भूतलमधुना व मद्या निर्गता असुराः।
करवालवल्गनैस्तान् खण्डय हे कालिके! त्वरितम्॥

तारिणि! तारय तूर्णं दानवरचिताद् भयाम्भोधेः।
अभयं कुरुष्व मातर्हत्वा हत्वाऽसुरान् दृप्तान्॥

राकाशशाङ्कवदने! सुन्दरि! सौन्दर्य-सारजीवातो!
मामक-मानस-मन्दिरमरमरमेह्येहि वत्सले मातः!

त्वदनुग्रह-शक्ति-विनाकृतमिदमधुना पतत् परितः।
भारतमम्ब! भवत्याः पाण्यवलम्बं समीहते त्वरितम्॥

इत्थं यदेति पूर्वं कृतां प्रतिज्ञां त्वयैव हे दुर्गे!
सम्प्रति किन्न स्मरसि त्वरसे कस्मान्न शूलमादाय?

दुर्गाद्वादशिकेयं सद्गुरु-चरणे समर्प्यते प्रेम्णा।
नारायणेन कविना कविकुलममता-मनोज्ञेन॥

श्रीरामशास्त्रिगुरुवर-चरणकृपाप्राप्तकविशक्तेः।
नारायणस्य रचना वचनादर्वाङ् मनो विशतु॥

——

## ललिताभ्यर्थनम्



श्रीबटुकनाथ शास्त्री खिस्ते; साहित्याचार्यः।

मधुपालिलालितशरं, रसोल्लस—
त्तरचापशालि, मणिमालिकांचितम्।
सृणिपाशधारि, हृदयापहारि तत्
परमेश्वरस्य कुतुकं भजामहे॥ १॥

करुणार्द्र-लोचन-विलोकनैरलं
नवपुण्डरीकनिवहं वितन्वती।
शिवदीपदीप्तिरिह काचिदन्तरे
विहरेत्तमःपटल-मेदुरे मम॥ २॥

परिफुल्लनीपकवनान्तरोदिते
मणि-मन्दिरे किरण-पुंज-बंधुरे।
स्थितमिन्दुवृन्द-सितिमाऽधक-स्मितं
स्मर! धाम कामशिव-संस्तुतं मनः॥ ३॥

अवलम्बमम्ब! सकलं विधूय यत्
भवतीमनन्तकरुणा—तरङ्गिणीम्।
समुपाश्रयामि शिवकामिनीं ततः
परितापमापदुदयं च संहर॥ ४॥

कलयन्ति केचन चिदात्मनः कला—
मपरे स्वरेण विदितामुपासते।
परिपूर्ण-बोध-परमामृत प्रदां
शिवदेशिकाकृतिमुपास्महे वयम्॥ ५॥

न नयं न चाऽपि विनयं भजाम्यहं
क्व न यन्त्रणाविरहितश्चराम्यहम्?
सकलं कलङ्कमयमम्बिके! परं
प्रणयं त्वदङ्घ्रिकमले श्रयाम्यहम्॥ ६॥

अतिवेलमित्थमरुणारुणाकृतौ
विहरेर्मनो! मम दिवानिशं कृतौ।
सफलीभवेत्सकलमीहितं ततो
कुलकामधेनुरियमाश्रिता यतः॥ ७॥

शिवसुन्दरी—चरण—भक्ति—माधुरी
मकरन्दबिन्दुनिकुरम्बवर्षिणी।
इयमस्तु निस्तुलगुणोन्नतात्मना
कृतिरिष्टदा स्तवन-मञ्जुभाषिणी॥ ८॥

# "इदं श्रेष्ठं ज्योतिषां ज्योतिरागात्"

ऋ०, सं० १-११३-१

महामहोपाध्याय-पं० चिन्नस्वामिशास्त्री
[ प्रिन्सिपल—धर्मविज्ञान-विभाग, हि० वि० वि० ]

—०—

महदिदं प्रमोदस्थानमस्माकं सुरगवीसमुपजीविनां यदिदं सुप्रभातं पत्रं पुनर्यथावदात्मानमाविर्भावयितुं प्रावर्त्ततेति। पूर्वं विषये रूपे च सर्वाङ्गसुन्दरमिदं यथासमयमाविर्भूय पाठकानां मनःप्रसादयदासीच्चिरम्। परं परिपोषक-परिलोपात् मध्ये कञ्चिन् कालं घनघटाच्छादितमिव, दौर्भाग्य-वातूलावृतमिव यथा समयमुदेतुमनलंभवन्मनांसि विदुषामुद्विग्नान्यकरोत्। पुनरपि पारमैश्वरेण परमेण प्रसादेन प्रसादितं कुतोऽपि समुपलब्धसञ्जीवनं पुरेव, ततोऽप्यधिकतरगौरवगाम्भीर्यवैशद्यादिपरिष्कृतमेव वा बहिरात्मानं प्रकाशयितुमारेभ इति कियन्तमानन्दमुत्पादयति? समयेऽत्र सर्वोऽपि पत्रिकालोकस्संवृत्तः। पत्रिकयैवालोकते, पत्रिकैवालोकयति च। सति चैवमास्माकीना तादृशी यदि काचित् पत्रिका न स्यात्; आस्माकीनविषयविवेचनपरिशीलनपरिपोषणादिविधासु किं वा साधनमवलम्बेमहि? कथं वाऽऽधुनिकसभ्यजनसंसदि संसीदेम? कथंच वा तैरात्मसममवलोक्येमहि? अत आधुनिक-संग्रामसागरसन्तितूर्षूणामस्माकमनतिकर्कशया नातिमृद्व्या च कयाचित् पत्रिका-तरण्या भाव्यमवश्यम्। तदिदमुद्देश्यं साधु साधयितुमीष्टे सुप्रभातमिदमित्यास्माकीनस्सुदृढो विश्वासः। अद्यत्वे हि स्वरूपतः, विषय-गाम्भीर्येण, लेखन-परिपाट्या, पर्ण-सौष्ठवेन, भाषा-वैशद्येन च प्रायशस्सर्वा अपि संस्कृतपत्रिका अतिशेते सुप्रभातमित्यत्र मन्ये न कस्याऽपि विवादेन भाव्यम्। अस्य वैरपि संस्कृतज्ञैस्तदनुरागिभिर्वा साभिमानमस्मिन्नात्मीयताऽऽपादनीया उषसीव लोकैस्सर्वैः।

विषयमिममधिकृत्य सुप्रभातस्य गते पञ्चमेऽङ्के सम्पादक-महोदयैः "संस्कृताध्यापकेभ्यः" इति शीर्षकं गृहीत्वा स्वमतं किञ्चन प्राकाशि। तत्र तैः प्रकाशननीतिपथात् क्रियांश्चनाग्रे गतोऽध्वा। तेन च खेदोऽपि समजनि केषाञ्चिद्विदुषां मनसीति सत्यम्, परं तत् स्वार्थसत्यतां न मनागपि जहातीत्यपि विभावनीयम्। "यदर्थं ब्राह्मणी सूते तस्य कालोयमागतः।" केनाऽपि वचनीयेनावचनीयेन वा कारणकलापेनास्माकं विषयेऽत्र जोषंभावस्सर्वथाऽस्माकं, अस्मदवलम्बिन्यास्तपस्विन्यास्सुरभारत्याश्च महत्यै हानय एव कल्पते।

अयि, वयस्या विद्वद्वरेण्याः! जानीम एव वयम् यदयं कोलाहलस्यैव कालः, मिथ्याभूतमपि विषयं कञ्चनोपाददानः, बहुतरं कोलाहलं कुर्वन्, जनतादरपात्रीभूयाऽन्ततः प्राप्नोत्येव साफल्यं स्वोपात्ते कर्मणि इति प्रत्यहं करबदरवदवलोकयामो वयम्। यद्येवं किमर्थं तर्हि तूष्णीमास्महे सत्यैकस्वरूपे जगत्कल्याणैकनिलये प्राणपणेनाऽपि प्रसाधनीये कार्येऽभेद्यमौदासीन्यं भजन्तो नहि तत्रभवन्तः पश्यन्ति? बह्वी आङ्गलभाषासंस्पर्शमात्रेण परस्सहस्राणि रूप्यकाणि वेतनं लभन्ते, सुखमेधन्ते च। वयन्तु चुलुकित-सर्वतन्त्रसारा अपि; वाचस्पतिसदृशवाग्विभवा अपि; अकुण्ठितलेखिन्यग्रभागा अपि; पञ्चविंशतयेऽपि रूप्यकाणामनर्हा इत्युद्घोष्यामहे इति दिङ्मात्रमिदम्। परश्शतानि कष्टान्युट्टङ्कितानि सम्पादक-महोदयैः। एतदास्माकीनस्यालसभावस्याऽपुरुषप्रयत्नभेद्यस्यैव चिरात् फलितं फलमिति किं बहूक्त्या।

तत्तद्भाषाभाषिणः; ते च ते च व्यवसायिनोऽस्मिन् परिवर्तिनि समये नैकविधैर्व्यापारैरात्मनस्समुन्नतये यतन्ते, प्राप्नुवन्ति च प्रयत्नानुरूपं स्वमनोरथतरोः फलम्। वयमेव च किञ्चिदपि कर्त्तोऽकुर्वन्तो हस्तं पिहितनेत्रास्सुखमास्महे। लब्धे चाऽवसरे परस्परगर्हासूयासमासादितमनस्तोषपरस्परा एव स्थातुमीमहे, न ततोऽधिकं किञ्चिदपि विधातुं वाञ्छामः।

अयि प्रेष्ठतमा विद्वन्मुकुटमणयः, यद्येवमेवेतोऽपि स्यामः, तर्हि भारतजीवातुरियं भारती कथं वाऽऽनात्मानमनुशोचेदस्मान्, निस्सत्वान्, निरुद्योगान्, निर्ममान्, आत्मघातैकहेतूनासाद्य। कथं च वा न परिजिहासेद्चिरेणैवानेहसाऽस्मान्? अन्येषु सर्वेष्वपि स्वस्वाभि-

लाष परिपूरणायेतस्ततो दिक्षु विदिक्षु च सर्वासु; न केवलं धरणौ, न च केवलं तरणौ, वयसां सरणावपि निश्शङ्कमुड्डयमानेषु, वयं शयने परिवर्तितुमपि नेच्छामः, स्थानाच्चलितुमपि न वाञ्छामः, विस्फार्याक्षि विलोकयितुमपि न मनः कुर्मो यदि, तर्हि को वास्मान् गणयेत्? को वा स्वगोष्ठीषु परिगणयेत्? को वा स्वसदृशान् मन्वीत? कथं वाऽस्माभिस्संलपितुं न जिह्रेतु? सर्वमिदमस्माकं ह्रासकारणमास्माकीनमेव दर्शं दर्शं स्मारं स्मारं च विदीर्णचेतोभिरेव सुप्रभात-सम्पादकैः खेदातिशयाल्लिखितं यत्किञ्चिदपि। न तु दोषोद्घाटनधिया विगर्हणैकबुद्ध्या वा। अतस्तत्रान्यथाभावमुज्झित्वा, हितबुद्ध्यैव तत् गृह्णाना उत्तिष्ठेम, यतेमाह स्वोन्नत्यै, प्रेषयाम चेतस्ततो वक्तृवरान्, पातयेमाऽऽस्मीयां दुरवस्थां नेतृजनकर्णेषु, पुनः पुनः श्रावयेम च तां तेभ्यः, सञ्चिनुयाम तेषामनुकम्पामनुतापं वा। युगद्वयसन्धिरयम्। उत्थानस्यायं समुचितः कालः। यदिदानीमपि स्वपिमः, तर्हि गतो वयं निरवधये कालाय। गते नीरे न सेतुकरणं बुद्धिमता बुद्धिमतुरञ्जयेत्। अतस्त्वरितमुत्थाय कर्तव्यकरणाय सज्जीभवामः।

न केवलं जागरयति, न च केवलं प्रेरयति, त्वरयत्यपि चास्मान् सुप्रभातमिदं स्वकर्तव्यविधौ। सन्नह्यति चात्मनः परिकरमस्माकं सर्वप्रकारमपि साह्यमाधातुमिति तदीयेन स्वेन कर्मणा च स्फुटमवगम्यते। अद्यत्वे चास्माकमाशयं तात्त्विकं वा स्वरूपं करणायजातं प्राप्तव्यमर्थं वा यथातथमवबोधयितुमिदमेव सुप्रभाताख्यं ज्योतिरेकं पुनरुदितमस्माकं पुरतः। "इदं श्रेष्ठं ज्योतिषां ज्योतिरागात्"। अतस्तदिदं यथावदुपयोज्य स्वकार्यं साधयेम यदि नोच्चभावम्, समानतां तु सर्वैस्सहाऽऽत्मानं प्रापयेम इति हार्दो भावः प्रणयिनां सुधियां पुरतः स्थापितः।

——

# प्रान्तीय-शिक्षाधिकृता अवदधतु

श्री—महादेवशास्त्री, साहित्यशास्त्राचार्यः
[ साहित्यविभागाध्यक्षः—हिन्दूविश्वविद्यालये ]



गगनमध्यमारूढस्य भगवतो भास्करस्य सत्त्वे कः सन्दिहीत, को वा विकल्पेत हिमालयस्य शिखरसहस्रसंच्छादित-विशालनभोऽवकाशस्य लोकोत्तरोत्तुङ्गत्वे, कश्च विमृशेत् प्रथित-पदार्थसार्थ-संभृतोदराया वसुन्धरायाः शश्वद् वचेय-रत्न-निचय-निचित-गर्भत्वे, का नु सशयीत विश्व-प्रसिद्धि-धुर्यतामासेदुषा हिन्दूविश्वविद्यालयस्य सर्वमान्यत्वे, कैरप्यनालोचनीये, मनसाऽप्यप्रधृष्ये तस्मिन् नैकया चर्चया नतरां नैजैर्गोष्ठीबन्धैर्नतमां स्वीयैर्मनोराज्यैः केचन न्यभान्त्सुरात्मपुस्तिकायां, न्यदीदृशन्नक्षरमालायां, प्राचीकटन् विद्यावतां पुरस्ताद् यन्न मामकीना मध्यमापरीक्षा समर्हेति विश्वविद्यालयस्य शास्त्रिपरीक्षासमतुलामिति।

मान्या मनीषिणः, उद्घाट्य कर्णौ, विस्फार्य विलोचने, अवधान-दानेन शृणुत! निभालयत! किमिदं शोभनम्? उचितमेतद् वोदात्तं वा? वक्तव्यमदः द्रौपदीकेशाकर्षणमिव भीष्मप्रभृतयो भवादृशा निमील्य नेत्रे, विनमय्य शिरांसि, तादृशं दुर्नयं दुर्विपाकं तूष्णीमुपेक्षेरन्, निवर्त्तेरन्नेव वास्मादपध्यानात्। तत्रापि प्रहार इव वैद्युतः क्षते क्षारमिव वा दुष्प्रसह्यं समुद्गीर्णं समर्थनमिव प्रतिभाति। नवम्बरमासस्य प्रथमतारिकायां निःसृतवति संयुक्त-प्रान्तीय-पाक्षिकसमाचारपत्रे 'राजकीय-संस्कृत-पाठशालिकायाः परीक्षा देशे सर्वोपरि मन्यन्ते' इति। नम्रतया किंचिद् वच्मि, किमीदृश गड्डलिकाप्रवाहो वाचयति; हेत्वन्तरं वा? न द्वितीयः, चिरं चिन्तयतामप्यनुपलम्भात्। प्रथमस्तु यथाकथंचित् प्रचलन्, कियन्तंचन कालं कोलाहलयन् सद्यो वारणीय एव नीतिविदांवरैर्धार्मिकधौरेयैश्च निर्भरस्य निषिध्यमानत्वात्।

अपिच, सौभाग्याद्दौर्भाग्याद् वा भारतीय-सर्वप्रान्तीयसंस्कृत-परीक्षाणां प्रायः सर्वा नियमावलयस्तत्तदा-

वश्यककृत्य-संपिपादयिषया तत्तदधिकारिवर्यैः प्रहिताः सन्निदधते, न तासामेका अपि सावधानया दृशा वैयग्र्य-वैराग्येण मनसा पुनः पुनः प्रतिपत्रं प्रतिपंक्ति गवेष्यमाणा अपि काशिकपाठशालिकापरीष्टि-प्राधान्यं कथमपि कथयितुमीहन्ते। न च सन्निकृष्टतमोऽपि विहारप्रान्तः पाठशालिकाचार्यं स्वीयायां मध्यमायामपि प्रवेष्टुमनुमन्यते, कथं प्रधानमङ्गीकुर्यात ! पञ्जाम्बुप्रान्तीया तु परीक्षा साधीयसी, यदीयः शास्त्री, केवलया गौराङ्गगिरा समासादयितुमीष्टे बी० ए० ( कलाकुमार ) पदवीमथंकराम्। किंच समादरणीया अन्तर्वाणयः, किंचिदिव तौलिकदृशं दीयमानामत्र प्रार्थये तत्रभवद्भिः !

१—विश्वविद्यालयपरीक्षा दशमासान् आधिष्ठाय छात्रावास, नियमेनाधीयानैः पार्यते; यदा परा त्रिचतुरैव तैः प्रवेशपत्र-प्रेषणसमनन्तरभाविभिः।

२—एकत्र विशिष्टशिष्टा अध्यापका एवाध्यापयन्ति यदान्यत्र प्रथमामात्रपरीक्षितोऽपि क्वचिद् ग्रामादौ निवसन् समनुतिष्ठति पाठन-समारम्भम्।

३—एकस्यां शतद्वयाङ्कानां निपुणं निरीक्षणीयो निबन्धः, शताङ्कस्य वाक्परीक्षा च चूडान्तविद्यावद्भिः क्रियमाणा; परस्यां नामापि न श्रूयतेऽनयोराचार्य-पर्यवसानायाम्।

४—प्रतिशतं पञ्चसप्ततय उपस्थितय एकत्रावश्यमपेक्षिताः; परं परत्र बम्बईकलिकातादिनिष्ठा अभ्युपस्थिता एव गण्यन्ते।

५—एकत्र सम्यगध्यापिता एवान्तेवासिनोऽधिक्रियन्तेऽन्यत्र परीक्षायन्त्रे साधु प्रचाल्यमाने वस्तुतो दृष्टिः।

६—एकत्र बोर्ड-फैकल्टी-सिंडीकेट-सिनेट-कौंसिल समितिभिः समवेत-प्राच्य-पाश्चात्य-देशविदेशनिर्देश्य-भूयोविदद्भिः सुसंघटित-सुव्यवस्थिताभिर्ग्रन्थनिर्वारण-परीक्षक-निर्वाचनाध्यापकनियोजन-कर्मकौशलम्; इतरत्र दयनीयसमितिभिः १५-१०-४६ मुद्रितसम्मार्ग-वर्णितविभूतिभिः कृत्यनैपुण्य-पटाक्षेपः।

स्वीयाया एव संस्थायाः प्राग् विश्रुतमाहात्म्य-चरमसीमायाः साम्प्रतमनादृश्या अपि समालोचना-नीरसतः विस्तरेणालम्। प्रकृतं विचारयामः।

विद्वद्ग्रेसराः संयुक्तप्रान्तीय-शासकमहोदयाः ! संस्कृतपरीक्षाया विश्वविद्यालयसंपर्कमनुभवन्त्याः, मान्यतां पुरस्कृत्य किञ्चिद् विचारयितुमारभन्ते भवन्तः, तदिदं कृपास्पदं भवताम्। तदर्थं तत्रभवद्भ्यो ददतः शतशो धन्यवादान् नैव तृप्तिं लभामहे। विशेषतो विज्ञाप्यं वरिवर्त्ति श्रीश्रीमतः शिक्षामात्यान्मनीषिमान्यानुपष्टभ्य यत् समितिरेका संघटिता परीक्षयोरुभयोः साम्य-संपादनार्थं गवर्नमेंटसंस्कृतमहाविद्यालये कतिपयानां विदुषाम्! परं वर्षं प्रायो व्यतीतं, न स्मरति संयोजकस्यात्मनोऽधिवेशनं चिकीर्षतः। प्रेरणयापि तदीयां वार्त्तां न कर्णेऽपि सन्निधापयति संयोजक-महोदयः। नियमावल्यामपि तदीय एव मनोहारिणि समये परीक्षयोर्वैषम्यविषमबीजमङ्कुरितं विलोक्यते तेषामेवाध्यक्षपदमलङ्कुर्वाणानां कृपाकटाक्षतो नियुक्तिसमाचारे विश्वविद्यालयस्य शास्त्राचार्याः चर्चयापि निवर्त्तिताः।

यदा देशस्य स्वीये शासने स्वस्मिन्प्रचलति संस्कृतसंख्यावन्तः समे संजिघटयिषिताः, तेषां बलं संविवर्द्धयिषितम्, परीक्षाक्षोभस्य एकस्मिन् सूत्रे संजिघृक्षिताः; तदा केयं कृतिः, क उद्देशः, कश्चारम्भः ? सम्भावनीयाः शिक्षामन्त्रिणः !

यदि न सपदि समीकर्त्तुं शक्यन्ते भारतस्य सर्वप्रान्तानां संस्कृतपरीक्षाः, यथा इङ्ग्लिशपरीक्षाः यदि न प्रभूयते तत्संपादनक्षमं शिक्षाविशेषज्ञानां, सम्मेलनं सद्यो विधातुम्, यदि न समर्थ्यते कार्यान्तरव्यग्रतया तत्क्षणम् तदर्थं अवकाशं प्रदातुम्, इष्यते विदुषां संघटनम्, वाञ्छ्यते बलम्, काङ्क्ष्यते तेषां देशसेवा, ईह्यते विद्यान्तरवद् गीर्वाणवाण्या अपि समुन्नतपदाधिष्ठानम्, तदा सोपानमादिमं तदीय द्वयोः काशीस्थपरीक्षयोः समानता-स्थापनं न विलम्बसहिष्णु सम्पाद्यमनवद्यम्। न वा कस्यापि दाक्षिण्यमनुरोधतो न्याय्यम्। येनैव समर्थेन श्रद्धेयेन च हस्तेन विद्यापीठस्य परीक्षा बी० ए० समकक्षतां नीता; तस्य कृते कियानयं संरम्भः। 'दधता किमु मन्दराचलं परमाणुः कमठेन दुर्धरः ?'

———

# संस्कृतप्रचारश्च संस्कृतपण्डिताश्च ।

## [ सुप्रभातस्य सुपरामर्शः ]

कविशिरोमणिः
भट्टमथुरानाथ शास्त्री,साहित्यवाचस्पतिः
'संस्कृत-रत्नाकर'-सम्पादकः,

"अस्माकमियं संस्कृतभाषा सर्वाभ्यः पुरातनी, सर्वासां जननी, देवानां भाषा, वेदोपनिषदां प्रसवित्री, आदौ मानवसभ्यतायाः पदाङ्कानियमेव दर्शितवती, गीतासदृशान्विश्वसाहित्यग्रन्थानियमेव प्रसूतवतीत्यादि संस्कृतस्य महत्वं निष्पक्षपाता राजनैतिक-चक्राद्बहिर्भूय साहित्यं सृजन्तः सर्वे वैदेशिक विद्वांसोऽपि स्वीकृतवन्तः । परं विजेतृजातिभुक्ताः सन्तः स्वीयामाङ्गलभाषां गौणीकृत्य संस्कृतभाषायाः प्रचारं ते कथं वा शक्नुयुः कर्तुम् ? सप्तसमुद्रपारात्समागत्य विदेशानां वशीकारो न नूनं सहजः। एतदर्थे गूढ-गूढतमा नीतयोऽङ्गीकर्तव्या भवन्ति । भाषा तत्साहित्यं च सर्वतः प्रधानं शासनस्याङ्गम् । अतएव न कोऽपि शासकः कां चद्वैदेशिकीं भाषां स्वहस्तेन जातुचित्प्रचारयेन्नाम। तदिदं हि पर्वतसमानं स्थूलं सत्यम् ।

भारतस्य संस्कृतिरक्षार्थं सभ्यतायाः स्थिरीकारार्थं आर्याणां जीवितभूतस्य धर्मस्य जीवनार्थं च यदि सेयं संस्कृतभाषा मा भूत्सर्वस्मिन् भूमण्डले, अपितु केवलं भारत एव साहित्यभाषारूपेणाऽपि प्रचारयितुमिष्यते श्रीमद्भिस्तर्हि तत्प्रचाराय यत्नोऽपि श्रीमद्भिरेव कर्तव्यः स्यान्न राजमुखमवेक्षणीयं स्यात्। ये महाभागाः संस्कृतं राष्ट्रभाषां कर्तुं डिण्डिममाघोषयन्ति यत् 'अस्यामेव शताब्द्यां संस्कृतं राष्ट्रभाषा भवेत्'इति बहूनि वर्षाण्यभिव्याप्य स्वीयं व्रतं गगने गुञ्जयन्ति तेषां समक्षमेव सेयं विंशी शताब्दी [ सं०२००० ] संपूर्णा, यस्या महोत्सवो भारतस्य स्थाने स्थाने समभवदिति विदितं सर्वैरपि । एतदुपर्यपि व्यतीतानि वर्षाण्यपि त्रीणि । अपि न विदितमिदं डिण्डिमघोषकाणाम् ? किन्तु अप्रियमपि सत्यं श्रोतुं यदि साहसं श्रीमतां तर्हि प्रत्यक्षमवेक्ष्यतां यत् उत्तरोत्तरं संस्कृतस्याध्ययनं लोकेषु प्रचारः परिचयश्च दिनं दिनं हीन एव । यस्याङ्काः ('आँकड़े') साम्प्रतमेवास्माकं 'शिक्षापरिष्कारकसमित्याम् ('कमीशन')" आगराविश्वविद्यालयस्य परीक्षाध्यक्ष (रजिस्ट्रार) पदमधितिष्ठद्भिरुपस्थापिताः सर्वेषामग्रतः ।

अस्तु, यदि वस्तुत एव संस्कृतस्य यावत्साध्यः प्रचारश्चेतसा कर्तुमिष्यते तर्हि पठन-पाठनयोः संस्कृतस्य प्रसारः प्रकामं प्रवर्द्धनीयः स्यात् । शिक्षाप्रसारश्च शिक्षोपयोगिपुस्तकानि विना न साम्प्रतं साध्यः। तत्रापि प्रथमामारभ्य मध्यमां यावद्ये किल वर्त्तमानयुगोपयोगिनः शिक्षणीयाः साधारण-विषयाः सन्ति तत्संबन्धिपुस्तकानां कृते तु संस्कृते शून्यतैव । कामं 'त्रिस्तनी कथावर्जम्' इति प्रतिपदं वर्जनीयतामप्याच्छादयन्तु; परं न सम्प्रति पञ्चतन्त्रमात्रेण निरुह्यते मध्यमशिक्षा कार्यम् । भूगोलादिविषयः कश्चिद्देशभाषया पठ्यतेऽपि किन्तु मध्यमशिक्षामधिगच्छतो विद्यार्थिनो हृदये, वर्तमानयुगीयाविष्कारैः [ विद्युद् रेडियो-वायुयानादिभिः ] स्वत एव संप्ररूढः पश्चिमदेशप्रभावः कथं वा तावत्कालमंशतोऽपि निरोधनीयो यावत्कालं निजदेशस्य [ भारतस्य ] आध्यात्मिकं महत्त्वं नाङ्कितं भवति शिक्षार्थिनां हृदये । किन्तु क्व तादृक पुस्तकानि संस्कृतभाषायाम् ? शिक्षापरिष्कारं विमृशन्तीभिः सर्वाभिरेव समितिभिः निष्पक्षपातैरालोचकैश्च तदिदमेकमुखेन स्वीकृतम् । एतद्युगीयाः समालोचकाः संघोषयन्ति सर्वतः—वर्तमानकाले सर्वेऽपि शिक्षिताः स्वदेशस्योद्धाराय स्वातन्त्र्याय च प्राणान्पणीकृत्यापि प्रवर्तन्ते राष्ट्रीयकार्येषु,किन्तु संस्कृतज्ञास्तमेनं विषयं तथाऽऽकर्णयन्ति यथाऽन्यदेशीयं वृत्तं कौतुकविधया श्रु ं स्यात् । देशेन सह एमत्वं भवेदपि कथम् ! पञ्चतन्त्रमारभ्य भाष्यान्तपाठिनोऽपि भारतभुवो महत्त्वं तु न कुतश्चिदधिगच्छन्ति । पाठ्यरटनमन्तरा अन्यदध्ययनं हि न तेषामभ्यासारूढम् ।अपि तथ्यस्यास्य शक्यो नाम निह्नवः ?

तदेव किम्, स्वयं संस्कृतभाषैव भगवती नूनमन्धकारगर्भे पतिता। अतिप्रगलभानामनुभवशालिनां मुखाद्वार्द्धके श्रुतम्—"संस्कृतभाषा साम्प्रतमस्माभिः किञ्चित्परिचिता" । हन्त ! या भाषा ईदृशी महती,

गभीरा, गुणशालिनी च, यां सर्वभाषाणां जननीम्, देवतानां गिरं वयमाचक्ष्महे तस्याः स्वरूपं महत्त्वं सामान्यं वृत्तान्तं च न केवलमधीयानो विद्यार्थ्येव, अपि तु बहवोऽध्यापका अपि न परिजानन्ति। वैदेशिकभाषाशिक्षितास्तां 'मृतभाषाम्' संगिरन्ते; वयं क्रोधाद्धक्षसि वल्गन्तोऽपि विवशाः श्रृणुमः। तदुत्तरे दुर्वचनमात्रं तु विवेकिनामालोचनां न शक्नोति समाधातुम्। हिन्दीभाषाशिक्षितानां कृते तद्भाषास्वरूपादिपरिचयाय, "हिन्दी भाषा क्या है?" "हिन्दीभाषा की उत्पत्ति" "हिन्दी का महत्त्व" इत्यादीन्यनेकानि पुस्तकानि। किन्तु वयं संस्कृतभाषाद्वारा नानाविषयान्पठन्तोऽपि हन्त स्वयं संस्कृतस्यैव स्वरूपादिकं न परिचिनुमः! अपि इदमपि तर्हि करद्वयेनाऽक्षिपिधानम्? सारमिदमेव यत्संस्कृतानुरागिभिर्यदि संस्कृतं जीवितमाकाङ्क्ष्यते तदा तदर्थे युगोचितानि शिक्षापुस्तकानि निर्मातव्यान्येव।

## सुप्रभातस्य मन्त्रणा

त्रयोदशवर्षात्प्रक्रान्तं 'सुप्रभातम्' संस्कृतभाषाहिताय वर्तमानयुगमभिवीक्ष्य समुचितं सूचयति, समञ्जसं चेष्टते च। चतुर्थ्यां संख्यायां (पृ०९३) संस्कृतभाषा प्रचारोपायेषु सरलानां नवीनपुस्तकानां निर्माणमभिसूच्य-'एतादृशपुस्तकानां निर्माणं यदि कैश्चन विद्वद्भिः कृतं स्यात्तर्हि तत्सूचना सुप्रभाते देया" इत्यभिलिखता हितोचितमेकम् पूर्ववृत्तम् स्मारितम्। पुरा "संस्कृतरत्नाकरेणाऽपि" पत्रपाठकेभ्यो निवेदितमासीदेकम् कर्तव्यम्। आसीत्तस्मिन् समये संस्कृते "व्यावहारिकशब्दकोषस्याऽऽवश्यकतोद्घोषः"। यानि वस्तूनि प्राचीनकोषनिर्माणोत्तरम् प्रचलितानि तेषां नामानि [ यथा ग्रामोफोन, तार, रेडियो, टेलिफोन इत्यादि ] यदि सर्वपण्डितसम्मतानि स्थिरोकरणीयानि; तर्हि संस्कृतपत्रेषु बहुश्रुतपण्डितैर्नवीनाः प्रतिशब्दाः स्वस्वसम्मताः पूर्वम् सूच्येरन्। ततो यदि तदपेक्षया विशिष्टः शब्दो यद्यन्येन पण्डितेन सूच्यते तर्हि स संग्राह्यः, अन्यथा पूर्वपण्डितसूचितः शब्दः सर्वसम्मतया स्थिरीकरणीयः। एवं किल व्यावहारिशब्दाः सर्वसम्मता अञ्जसा स्थिरीक्रियेरन्। यथा ह्यद्यावधि "रेल" शकट्याः कृते केचन "धूमयानम् धूमशकटिः" इत्यादि, अन्ये "वाष्पयानम्, वाष्पशकटिः" इत्यादि, अपरे च रेलशकटिरित्येव प्रयुञ्जते। नवीनप्रविष्टाः सन्देहाकुला भवन्ति, तत एव सर्वतः सम्मतिरावश्यकी। किन्तु धीरगभीरैः पण्डितैः सर्वमिदमाकर्णितम्, न केनचित्किञ्चित्प्रस्तुतम्।

अस्तु, सुप्रभातस्य सोऽयम् सुपरामर्शः साम्प्रतम सर्वैरेव महतावधानेनाऽवधारयितव्यो नूनम्। स्वदैशिकैः प्रक्रान्तेऽस्मिन् स्वराज्यशासने संस्कृतस्य राष्ट्रभाषात्वम् मा भूत्; परम् धर्मभाषात्वेन वा साहित्यभाषात्वेन वा येन केनापि वा रूपेण भारते समयोचितः प्रचारस्तु कर्तव्य एव। प्रचारश्च युगोचितैः शिक्षापुस्तकैर्विना न कथञ्चित् साध्यः। युगानुसारम् च स्वदेश-( भारत ) स्वभाषा-( संस्कृत ) महत्वसूचकानि तादृक्पुस्तकानि संस्कृते सुतरामावश्यकानि यानि मध्यमपरीक्षायामनुशील्येरन्। तदिदं बहुधाऽखिलभारतीयेषु सम्मेलनेषु, अस्माकं शिक्षाविभागे च मुहुर्मुहुराघोषितं सर्वैरपि। तदनुसारं निम्ननिर्दिष्टानि पुस्तकानि निर्मापितान्यधिकारिभिः—

१—भारतवैभवम् [आदिकालादारभ्य वर्तमानकालपर्यन्तस्येतिहासस्य स्थूला रूपरेखा, आर्याणामयमेवादिदेशो न तु ते आगन्तुका-इति गवेषणा, ततो वर्तमानयुग-प्रचलिताभिः कथाभिः (गल्प, कहानी) भारतीयपूर्वपुरुषाणामतिशयसूचनम् येन स्वदेशस्य (भारतस्य) महिमा हृदयेऽङ्कितो भवेत्। कथानामासां वर्णिका (बानगी) रत्नाकरे प्रकाशिताभिर्लघुकथाभिः शक्येत परिज्ञातुम्। यथा चन्द्रहासः, पौरवराजस्य पौरुषम्, मातृसेवावेदिकाया चिरममरे द्वे बलिदाने, भारतध्वजः, सामन्त-संग्रामः, इत्यादि ]

२—संस्कृतभाषा ( आर्याणामादिभाषा )[संस्कृतस्य प्राचीना परिस्थितिः, स्वरूपम्, वैयाकरणकृतासंस्कृतिः, सा मूलभाषेतिपदेव्यशमर्हति न वेति विमर्शः साहित्यादिकृतं महत्त्वम्, इतरभाषापेक्षया विशेषाः, तत्प्रचारस्योपायाः, तत्सेवकानां कर्तव्यमित्यादि ]

३—निबन्धविद्या (वर्तमानयुगे प्रचलितानां निबन्धानां शिक्षापुस्तकम्) [ यत्र पूर्वम् रचनाविधिः

तदुपकरणानि, ततस्तदादर्शभूतानां निबन्धानां संकलनं तदुपयोगी संग्रहश्च ।

४—व्युत्पत्तिविकासग्रन्थमाला [ अस्यां पाठावलि 'रीडर' रूपेण मध्यमशिक्षोचितो नवीनसंग्रहः कतिपय-भागविभक्तः? अस्यैव भागेषु शिक्षोपयोगिकथा (कहानी) नां सग्रहः ।

५—काव्यपरिचयः । पञ्चकाव्यातिरिक्तकाव्यानां तत्कवीनां च रचनाप्रकारादेः परिचयः । तुलनात्मकमालोचनम् । तत्र वर्णिकारूपेण 'काश्मीरक-महाकविर्विह्लण स्तत्काव्यं च' इति पुस्तक सज्जीभूतम् । अत्र कवेरितिवृत्तं तत्सामयिक इतिहासः, काव्यविषये शिलालेखादेरन्वेषणम् । विह्लणरचनायाः साहित्यानुगता समालोचना ।

६—ऐतिहासिकानां मतम्, तस्यालोचनं चेत्यादि सर्वमपि शिक्षा-परीक्षोचितमुपकरणम् ।

उपरिलिखित ग्रन्थानां स्थूलस्वरूपमासूच्य सुभ्रूशमाशासे यत्सपादक-महाभागो ग्रन्थानां वर्णविषये परिवर्तन-परिवर्धनादेर्वर्तमानयुगमनुसृत्य सूचनां दास्यति, समर्थानन्यांश्चैतद्विषये प्रेरयिष्यति येन 'पत्रे' प्रकाशनस्य फलं संपद्येत । यदि समुचिताः प्रकाशकाः अपि संपद्येरंस्तर्हि तत्प्रबन्धोऽपि प्रस्तूयेति ।

——

## गीतम्

——

मा विलोकय मेघं सखि हे ! —मा० ।

सायं रक्त मध्ये श्वेतं भीषण-चित्रमजस्रम्,
रचयति देहं गौति विचित्रं भाति विकल इव तथ्यम् ।
एकाकी किल हृदयं होष्यति कथयति रूपमनेकम्,
विरहिजनानां सकलं लुण्ठति विध्यति मनसा प्राणम् ।
सततमहो यश्चातकचित्तं बिन्दु-विरह-संतप्तम्,
कुरुते कान्ता-वृन्दं निखिलं विरहे धीरमधीरम् ।
शिवधृतभूषणमहो कदाचित् गणयति नैव विशिष्टम् ।
मा विलोकय मेघं सखि हे !

—उपेन्द्रनाथ झा, व्याकरण शास्त्री

—०—

## गीति-युगलम्

—१—

व्यक्त-वेदनया हतोऽहम् ।
ये स्म रे, स्पृहयन्ति मह्यम्,
तेऽधुना द्रुह्यन्ति मह्यम्,
का कथा गरलस्य, सुधया—
मूर्च्छितावस्थां गतोऽहम् !
व्यक्त-वेदनया हतोऽहम् !
दुर्लभा क्व नु मधुर-वाणी,
पश्य—बद्धावुभौ पाणी,
आत्मनो बान्धव-जनानाम्—
आविलैः व्यङ्ग्यैः क्षतोऽहम् !
व्यक्त-वेदनया हतोऽहम् !
शोषितानामश्रु-मुक्ताः
अकथनीय-विषाद-युक्ताः,
गीतिका-व्याजेन ग्रथनन्—
भारती-सेवा-रतोऽहम् !
व्यक्त-वेदनया हतोऽहम् !

—२—

धिग्जीवनम्, जीवति नरः !
भुक्त्वैव कृतकृत्यः परम्—
शेते सुखेन निरन्तरम्,
भारं वहन्नप्यात्मना
यतते न हन्त ! यथा खरः !
धिग्जीवनं जीवति नरः !
जित्वा चिरं चिन्तामयम्,
हित्वा स्व-परिवारान्, स्वयं—
दास्यं दुरास्यं सेवते—
श्वैको यथाऽकिञ्चित्करः !
धिग्जीवनम्, जीवति नरः !
चेतः प्रयातमधीनताम्,
धीर्यस्य याता हीनताम्,
चाटूक्ति-शुश्रूषण-विधौ—
सोऽयं परेषां तत्परः !
धिग् जीवनम् जीवति नरः !

—रामनाथ पाठकः, 'प्रणयी'

# स्वाभाविक-स्वास्थ्य-संहिता

——

( क्रमागता )

[हरद्वारसमीपस्थकाँगड़ीगुरुकुलविश्वविद्यालये प्राकृतिकचिकित्सोपाध्यापेन पण्डित—भवानीप्रसादेन प्रणीता ]

——

जलचिकित्सायाः परमोद्धारकस्य स्वास्थ्याभिनवविज्ञाना' भिधायाः पद्धत्याः प्रादुर्भावकस्य शर्मण—देशान्तर्गतलेपजिक— नगर—निवासिनो महामुनेः श्रीलुईकूने महोदयस्यात्मचरितम्पद्यबद्धमधो वर्ण्यते ।

शार्मण्यो हि लुईकूनेऽभिधानो निज-पुस्तके ।
"स्वास्थ्याभिनवविज्ञाने" भूमिकां यामगीरचत् ॥ १ ॥
तदीयैरेव शब्दैस्तां देव्यवाणी-निवेशितैः ।
उपस्थापयितुं तावत्प्रस्तुताः स्मो यथायथम् ॥२॥
वयसा विंशवर्षस्य ममाङ्गानि यथासुखम् ।
अकार्षुर्न क्रियां, मूर्ध्नि फुप्फुसेऽभूच्च मे व्यथा ॥ ३ ॥
अनन्यगतिको भूत्वा भिषजां शरणं गतः ।
यद्यप्यासीन्न मे श्रद्धा तेषु, लाभोऽपि नाभवत् ॥ ४ ॥
जननी चिररुग्णा मे वर्षिष्ठा मामजिज्ञपत् ।
भिषग्भ्यस्तु त्वयाऽऽत्मायं सावधानं सुरक्ष्यताम् ॥ ५ ॥
सर्वेषां मम रोगाणां निदानं भिषजः परम् ।
तेषामेवोपचारेण मृतः किंच पिताऽपि ते ॥ ६ ॥
आमाशय-व्रणेनाथ बर्धमान-गदस्तदा ।
नैसर्गिक-चिकित्साया विषये श्रुतवानहम् ॥ ७ ॥
तस्य शास्त्रस्य विज्ञानमुपचारं क्रिया-क्रमम् ।
सततं चिन्तयन्नेव कञ्चित्कालमयापयम् ॥ ८ ॥
ख्रीष्टस्य वत्सरे तावद्वेद-शास्त्र-वसु-प्रभौ ।
समासदत्स जिज्ञासुस्तच्चिकित्सकसंसदम् ॥ ६ ॥
श्रुतं तत्र मनोहारि, तेषां व्याख्यानमुत्तमम् ।
अराचततरान्तन्मे, हृद्यं पीयूषसन्निभम् ॥१०॥
तेषामन्यतमस्याहं, भिषजो मतमास्थितः ।
चिकित्सामात्मनोऽकार्षं,लाभ-लेशो मयार्जितः ॥११॥
मदीयफुप्फुसे पीड़ा, पूर्वमासीत् सुदारुणा ।
तस्यापचारमात्रेण कथामात्रावशेषिता ॥१२॥
अष्टषष्ट्युत्तरे ख्रीष्टे अष्टादशशतोत्तरे ।
सहोदरो मम भ्राता प्रबलं रोगमाप्तवान् ॥१३॥
यदा तज्जीवनस्याशा दूरापास्ताभवत्तदा ।
थियोडरहान-नामानं स्वाभाविक-चिकित्सकम् ॥१४॥
उपासीदन्मते तस्य संस्थितस्य चिकित्सया ।
समूलकाषं तं रोगमकषन् स भिषग्वरः ॥१५॥
ततः प्रभृति विश्वासो मम भूयोऽभ्यवर्धत ।
अमुष्यां यच्चिकित्सायां श्रेयस्तन्निश्चितं मया ॥१६॥
इतो मेऽस्यां चिकित्सायां विश्वासो वृद्धिमाप्तवान् ।
अन्यतस्तु शरीरं मे भृशं रोगेण पीडितम् ॥१७॥
पितृभ्यां रोगबीजानि यानि लब्धानि तानि मे ।
प्रत्यहं वृद्धिमाप्तानि शोचनीया दशाऽभवत् ॥१८॥
जीविते च निराशोऽहं दृक् च मेऽसत्यतामगात् ।
आमाशये मदीये च, विद्रधिः कश्चिदुद्गतः ॥१९॥
पिता मे पीड़ितः पूर्वमासीद् विद्रधिनाऽमुना ।
तस्मादेव मया प्राप्तो व्यक्ततामधुनाऽगमत् ॥ २० ॥
ततो विकृतिमापन्नो,रूपमेतस्य दारुणम् ।
जातं, पुनः शिरःपीड़ा सर्वदा मामबाधत् ॥ २१ ॥
पीनोऽहं दृश्यमाणोऽपि व्याधि-पीडित-विग्रहः ।
मूर्तिमानिव रोगाणां समूह इति तर्कये ॥२२॥
एतस्मिन्नेव काले तु श्रान्तश्चान्य-चिकित्सितैः ।
नान्यं शरणमन्विच्छन् लाभमप्राप्य चान्यतः ॥२३॥
स्वाभाविकीं जलमयीं चिकित्सां च प्रयुक्तवान् ।
या मया संश्रुता पूर्वं साऽधुना स्व-तनौ कृता ॥ २४ ॥
तदानीं तदनुष्ठानं दुःसाध्यं नेदृशी क्रिया ।
यथा तस्याः प्रकारेषु सरलत्वं मया कृतम् ॥ २५ ॥
मदाविष्कृत-पद्धत्या, किंचिदासीत् समैव सा ।
एतावाँस्तु तया लाभः पीडा मे सह्यतां गता ॥ २६ ॥
परन्तु नहि मे व्याधिर्दूरीभूतश्च मूलतः ।
भवने नैव मे चेतो लभते स्म रतिं तदा ॥२७॥
वायुसेवनमुद्दिश्य, ततोऽहन्नगराद्बहिः ।
अनावृत-प्रदेशेषु, शस्यालंकृतभूमिषु ॥ २८ ॥
कृतवान् भ्रमणं शश्वद्दूनं चेतो विनोदयन् ।
सौन्दर्यं प्रकृतेः पश्यन्, स्वीयं कालमयापयम् ॥२९॥
तदानीमेव चाकार्षं स्वदशायां विमर्शनम् ।
स्वाभाविक-चिकित्सायास्तत्वेषु च निरन्तरम् ॥३०॥

क्रियमाणेऽनया रीत्या वारं वारं विमर्शने ।
स्वाभाविक-चिकित्सायास्तत्वं मद्बुद्धिमाविशत् ॥३१॥
दिवसेष्वथ गच्छत्सु विज्ञाता रोगहेतवः ।
तद्दूरीकरणोपायाः सम्यक् च विदिता मया ॥३२॥
अहं स्वीयं चिकित्सायाः सिद्धान्तान्कृतवान् स्थिरान् ।
केषांचिदृजुयंत्राणा-माविष्कारमपि व्यधाम् ॥३३॥
यानि रोगोपचारेषु प्रयुज्यन्ते चिकित्सकैः ।
पूर्णं यैरुपयुक्तैश्च, निवर्त्तन्ते गदा नृणाम् ॥३४॥
एवं स्वकीयसिद्धान्तैः स्वाचिकित्सा मया कृता ।
लब्धा सफलता, रोगाः सन्न्यवर्तन्त मूलतः ॥३५॥
पूर्णे स्वास्थ्ये ततो लब्धे, प्रमोदो मे महानभूत् ।
अन्येऽपि निजपद्धत्यां क्रमशो दीक्षिता मया ॥३६॥
कृतं परीक्षणं तैस्तु, प्राप्ता सफलता पुनः ।
जातो मम च विश्वासः, सत्यमेतच्चिकित्सितम् ॥३७॥
केनाप्यत्र न भेतव्यं, न प्रयोगोऽन्यथा भवेत् ।
चिकित्सा सेव्यमानेयं, लाभायैव प्रकल्पते ॥३८॥
एवं सुदृढविश्वासे, जाते मे सर्वतोऽधिके ।
जनतायां प्रचारार्थं, बद्धः परिकरो मया ॥३९॥
अन्यां पद्धतिमाश्रित्य ये चिकित्सन्ति तैः सह ।
अभवन् मम संलापो विपरीतं तु तत्फलम् ॥४०॥
केनाप्याकर्णिता नैव, भारती गदतो मम ।
श्रुत्वापि च न विश्वासमकरोत्कोऽपि मानवः ॥४१॥
श्रावं श्रावं जनाः सर्वे, संजाता विस्मयान्विताः ।
उन्मत्तोऽयं जनैरुक्तः प्रायशोऽहमितस्ततः ॥४२॥
निरपेक्षाश्च भिषजः, सावहेलं निरीक्ष्य माम् ।
जुगुप्सां दर्शयन्तश्च, रोषं प्राकाशयन् मयि ॥४३॥
अपनेतुमविश्वासं तेषां तु मम पद्धतौ ।
मूल्यं विना मया तेभ्यः, स्वीययन्त्रार्पणं कृतम् ॥४४॥
अनुरुद्धाः परीक्षार्थं मया सविनयश्च ते ।
परन्तु शृणुयात्को मे, कृताममभ्यर्थनामिमाम् ॥४५॥
मदर्पितानि यन्त्राणि, क्षिप्तानि तिमिरावृते ।
कक्षाप्रदेशे कस्मिंश्चिद् दुर्भगा इव मानवाः ॥४६॥
लूतातन्तु-परीतानि पांसुलिप्तानि तानि च ।
स्वकीयमिव दौर्भाग्यं, विलपन्ति च शेरते ॥४७॥
खेदोऽवश्यं मनसि मे, दृष्ट्वा यन्त्रदशामिमाम् ।
तथापि धैर्यं नामुञ्चं, धैर्यमापत्सु भूषणम् ॥४८॥

विदितं तु मया चेत्थं, निश्चितं सुदृढं तथा ।
जाते मय्येव नीरोगे, मम चाऽपि कुटुम्बिषु ॥४९॥
सुहृत्सु गतरोगेषु, सर्वेषां प्रत्ययः कथं ?
स्वाभाविक-चिकित्सायास्तत्वेषु च भवेदिति ॥५०॥
यावन् मया न बहवः, क्रियेरन्निर्गदा जनाः ।
तावत् कस्यापि विश्वासो, मयि नैव भविष्यति ॥५१॥
सिद्धान्तस्थापनं चेदं विधातव्यं मया जने ।
यच्चिकित्सा-प्रणाली मेऽतिशेते पूर्व-पद्धतीः ॥५२॥
पीडितान्विविधै रोगैर्दृष्ट्वा लोकान्मनो मम ।
कारुण्येन द्रवीभूत, मया चैतद्विचिन्तितम् ॥५३॥
अमी वराका न स्वीयं, जानन्त्यपि हिताहितम् ।
अन्तरेण परीक्षां मां, मूर्खं प्रख्यापयन्ति च ॥५४॥
अपराध्यन्ति नात्रैते, नूतनाऽविष्कृतिज्ञनाः ।
श्रुत्वा दृष्ट्वा च संत्रस्ताः, प्राक् पलायनतत्पराः ॥५५॥
कुत्सयन्ति च तां पूर्वं, कृते यत्ने सहस्रशः ।
विश्वसन्ति न तत्राशु, लोकप्रकृतिरीदृशी ॥५६॥
अतो मनुष्य-जातेस्तु, लाभार्थं दृढचेतसा ।
यतितव्यं मया क्लेशाः, सोढव्या विविधाः पुनः ॥५७॥
सोढव्याः क्षतयश्चापि, सह्या लोकतिरस्क्रिया ।
विपदो विविधाश्चान्याः, आक्रमिष्यन्ति मामिह ॥५८॥
मुहुर्मुहुर्विचिन्त्येत्थमुद्योगे कृतचेतसः ।
जलोपचारभवनोद्घाटने मे स्पृहाऽभवत् ॥५९॥
परञ्च भाविनी हानिर्मामितस्तु न्यवारयत् ।
व्यवसालयः कोऽपि, ममान्योऽप्यभवत्तदा ॥६०॥
चतुर्विंशतिवर्षाणि, पूर्वं समचलन्मम ।
लाभो येन च मेऽतीव, सोऽधुना विलयं व्रजेत् ॥६१॥
नवे चिकित्साभवने, भवेयं यदि तत्परः ।
तदा पूर्वतरं द्रष्टुं, न कालो लप्स्यते मया ॥६२॥
नातस्तथोन्नतिः सिध्येत्, प्रत्युतावनतिर्भवे ।
सोढव्या च मया व्यर्थं, हानिरत्रेति चिन्तितम् ॥६३॥
परं हृदिस्थः कश्चिन्मे, प्रेरणामकरोन्मुहुः ।
शश्वदुत्तेजयन्तश्च पूर्णोत्साहमजीजनत् ॥६४॥
स मां जलचिकित्सायाः, प्रचारार्थं पुनः पुनः ।
तत्सद्मोद्घाटने सज्जं, व्यदधान्मामलक्षितः ॥६५॥
जातं फलमिदं तस्य यदक्टूबरमासिके ।
दिवसे दशमे ख्रीष्टे त्र्यसीत्युत्तरसंख्यके ॥६६॥

अष्टादशशते वर्षे, चिकित्साभवनं नवम् ।
पुरे लैप्जिगवर्गाख्ये रम्यं समुदघाटयम् ॥६७॥
उद्घाटितेऽपि भवने, चिकित्स्या विरला जनाः ।
कियन्तिचन वर्षाणि, चिकित्सार्थमुपागमन् ॥६८॥
यदि केचिदुपागच्छन्, स्नानमुद्दिश्य केवलम् ।
तेषां जलचिकित्साभिः, किञ्चिन्नासीत्प्रयोजनम् ॥६९॥
परं क्रमेण संख्यापि, मन्दमन्दमवर्धत ।
आगच्छतां रुजार्त्तानां, प्रायशो दूरवासिनाम् ॥७०॥
तत्पश्चात्तु समीपस्था आजग्मुर्बहवो जनाः ।
विशेषतश्च लैप्जीगवासिनोऽपि समागमन् ॥७१॥
अत्रान्तरे मया कश्चित् सिद्धान्तों योऽवधारितः ।
यत्र दृष्ट्वा मुखाकारं, क्रियते व्याधिनिश्चयः ॥७२॥
भाविनां वर्तमानानां, भूतानाञ्च विशेषतः ।
मुखदर्शनमात्रेण, रोगाणां निर्णयो भवेत् ॥७३॥
एतद्विषयको ग्रन्थो† मया कोऽपि प्रकाशितः ।
सर्वेषामवबोधार्थं, संसार-हितकाम्यया ॥७४॥
अनेनैव प्रकारेण, देशदेशान्तरेषु मे ।
चिकित्सानवनोदन्तः, प्रसारं दिक्षु लब्धवान् ॥७५॥
सहस्रशो रोगनिपीडिताङ्गाः,
प्राप्ताश्चिकित्साभवनम्मदीयम् ।
गृहं निवृत्ता गत-रोग-शोकाः,
सुधन्यवादं ददतश्च मह्यम् ॥७६॥
शनैः शनैर्मेऽनुभवो विवृद्धोऽ-
साध्योऽपि रोगोऽजनि छिन्नमूलः ।
कार्ये प्रभूते सुचिरं कृतेऽपि,
श्रान्तिश्च खेदश्च न बाधते माम् ॥७७॥
असाध्य-कल्पान् चिररोगिणश्च,
हीनान् मुमूर्षन् विकलेन्द्रियांश्च ।
येनोपचारेण चकार सर्वान्
रोगैर्विहीनान् बल-सत्व-युक्तान् ॥७८॥
इह तदिदमुपस्थस्नानमाहुः प्रसिद्धं,
जगति निखिल-रोगा येन शान्तिं प्रयान्ति ।
इदमभिनव-वारि-स्नानमातङ्कहारि
चिरमुपचितनाडीस्थांश्च दोषान्निहन्ति ॥७९॥

† मुखाकृतिनिदानाभिधो ग्रन्थः

इयं महाविष्कृतिरेव बोध्या,
मूर्ध्नि स्थिता वारिचिकित्सितानाम् ।
रोगा मृगेन्द्रार्दितजम्बुकाद्या,
धावन्ति दूरे विधिनोक्तनाम्ना ॥८०॥

[ क्रमशः ]

——

## भारत-गीतम्—

—:※:—

जननि जन्मधरणे !
तिमिर-सिन्धु-मग्न-जगज्—
ज्योतिर्मय-तरणे ।

लङ्का-शतदलममलं
लसति चुम्बदङ्घ्रितलम्
स्तवन-शील-नील-सिन्धु—
सलिल-धौत-चरणे !

तृण-तरुवल्ली-वसने
विकसित-सुमनोहस्ते
गङ्गाज्योतिर्जलकण —
कृत-कण्ठाभरणे

तुहिन-मुकुट-मञ्जुतरे
कनकशस्य-कमलधरे
भारति, मतिरस्तु सतत—
मयि, तव परिचरणे ।

—आद्याप्रसाद चतुर्वेदः

——

# क्रोधावसान-व्यायोगः

श्रीवामाचरणभट्टाचार्यः, न्यायाचार्यः

( नान्दी )

गंगाधौतजटस्य यस्य महतो देवस्य विश्वात्मनो
विश्वाराध्यपदारविन्दयुगलं ध्यायन्ति ते योगिनः।
यं दृष्ट्वा जनता त्यजत्यतितमां याम्यां पुनर्यातनाम्
सोऽयं शंकर एव पातु भवतः शार्दूलचर्माम्बरः॥

अपिच

प्रभूतभूतचीत्कारैर्भीतयेवास्थिरश्रिया।
चिरमालिंगितो देव्या सदा पातु सदाशिवः॥

अपिच

यस्या जातो विधाता सृजति जगदिदं वस्तुभूतं प्रभूतम्
पश्चाद् भूतो रमेशस्तदपि चिरदिनं पालयत्येव सत्यम्।
यस्या वा प्राप्तभूतिः कुसुमशररिपुः संहरत्येव सर्वम्
अव्यादम्बाम्बिका वस्त्रिभुवनजननी सर्वदा सर्वदा सा॥

( प्रविश्य ) नान्द्यन्ते सूत्रधारः। अलमधिकेन। ( नेपथ्याभिमुखमवलोक्य ) आर्ये! त्वरितमिहागम्यतां त्वरितमिहागम्यताम्!

(प्रविश्य नटी)(संस्कृतमाश्रित्य) आर्य! इयमहमागताऽस्मि। आज्ञापयत्वार्यः, किमिदानीं करणीयमिति।

सूत्रधारः—आर्ये, दृश्यतां तावत् भगवतो रामचन्द्रस्येव सूर्यवंशसम्भूत-क्षत्रिय-चूडामणेः,साहित्यरससागर-पारगतस्य, प्राच्य-पाश्चात्य-विद्या-विभूषितस्य, डूंगरपुराधिपतेर्गुहिलौत-राजवंशाकाशचन्द्रमसः, श्रीमतो रायरायां महीमहेन्द्र-महाराजाधिराजमहारावल-श्री सर लक्ष्मणसिंहसाहिबबहादुरस्य, के.सी.एस. आई. उपाधि-समलंकृतस्य,अतुलन-गुणधाम्नः मृगयाकुशलिनो वीरस्य, रजतजयन्ती-महोत्सवे तदीयानुजैः श्रीमद्भिर्विदितवेदितव्यैः वीरभद्रसिंहादि-महोदयैः प्रधानमन्त्रिभिरन्यैश्च द्विजराजन्यवर्यैः परिशोभितेयं सभा। अस्याञ्च नवेन वाराणसेय-धर्मशास्त्रप्रधानाध्यापक श्रीशशिभूषणस्मृतितीर्थ-भट्टाचार्यात्मज-श्रीवामाचरण भट्टाचार्य-विनिर्मितेन क्रोधावसान-नामकव्यायोगेनैतेषां समस्ततत्वाभिज्ञानां मनस्तुष्टिरवश्यं सम्पादनीया। अतोऽत्र विशेषयत्नो भवत्या विधातव्य इति मन्यते॥

नटी—आर्य! रमणीयमद्वितीयमिदं राजकुलम्, कथं वर्णयितुं शक्यते?

सूत्रधारः—आर्ये! किं बहुना—

मातेव विदुषी यस्य राज्ञी प्राज्ञी सरस्वती।
राजस्थानेषु जनकः ख्यातविद्यः प्रशंसितः॥
तस्य राज्ञोऽतिवैदुष्यं वीरत्वञ्च समादृतम्।
पूर्वजादागतं सर्वं कथामात्रेण वर्ण्यते॥

भवतु; गीतेन तावदियं सभा सम्बर्धनीया।

नटी—अथ कीदृशं कालमाश्रित्य गास्यामि।

सूत्रधारः—आर्ये!

शरदिन्दु-विभात-शवरी रमणीनां प्रियसंगमे प्रिया।
नव-कैरव-कोरक-श्रिया समयानां शरदेव शोभते॥

तदिदानीं शरत्कालमाश्रित्यैव गीयताम्।

नटी—तथास्तु ( गायति )।

गतवति मेघे प्राच्यविभागे स्फुरति च दिनमणि-यानम्।
मञ्जुनिकुञ्जे कोकिल-पुञ्जा गायति सुमधुरतानम्।
चञ्चलसंगश्चुम्बति भृंगो विकसित-मधुमय-पुष्पम्।
स्वविरहदीना शयन-विहीना विसृजति नयनज-वाष्पम्।
मलय-समीरे प्रवहति घोरे वहति च चन्दन-गन्धम्।
मनसिजवाणे प्रणय-निदाने विचलति युवजन-वृन्दम्।
सुविमल-कान्ति वितरति शान्तिम्विधुरिह हरति च चित्तम्
कलकलनादं हंसनिनादं रचयति जलमतिसत्यम्।
शरदि भवानीमिति निजवाणीं कथयतु जनगणतूर्णम्।
अपगत-हर्षं भारत-वर्षं कुरु कुरु सुख-परिपूर्णम्॥

सूत्रधारः—आर्ये! मधुरमिदं गीतम्, श्रुतवती चेयं सभा चित्रपुत्तलिकेव विभाति। तदिदानीं किं करणीयमस्ति?।

नटी—ननु पूर्वमेवार्येणावेदितं यत् क्रोधावसान-नामकव्यायोगेन सभा-शोभा विधातव्येति।

सूत्रधारः—आर्ये! सत्यमभिहितम्। भवदीय-गीतरागेण विस्मृत-वृत्तान्तोऽहं सम्वृत्तः। तदिदानीं पश्यतु।

देवराज इवेन्द्रोऽयं चिन्तान्वित-कलेवरः।
अपश्यन्, शारदीं शोभां सकुवेरः समागतः।

( इति नटीसहितः सूत्रधारो निष्क्रान्तः )

( प्रस्तावना )

## अथ प्रथमदृश्यम् ।

—:※:—

( ततः प्रविशति सकुवेरो देवराजः )

इन्द्रः— धनपते !

श्रीहीनमेतदधुना वत दैवराज्यम्,
दिव्याङ्गना-नयनतः पततीव वारि ।
प्राणप्रियाणि मम तावदनन्तचिन्ता-
वासं गणा विरतनृत्यविशेष-शोभाः ॥

अपिच—

इन्दुप्रभा-विरहिणी वनितेव भाति,
प्रेम्णा न वाति मलयाचल-धीर-वातः ।
त्यक्त-प्रसून-मुकुलो मम पारिजातो-
नैरावतश्चलति भीतमतिः प्रमादी ॥

कुवेरः—देवराज ! किं बहुना—

गन्धर्वास्तव किन्नराश्च सहसा गायन्ति नृत्यन्ति न
श्रेष्टं शिष्टवशिष्ठ-गौतम-मतं द्वेष्टीव सा देवता ।
दैवं वाद्य-निनादमद्य विवुधा सद्यस्त्यजन्तीच्छया,
सर्वे स्वर्ग-निवासिनां हृदयजा गर्वाश्च खर्वीकृताः॥

अपिच—

यस्मिन् सुरेऽपि धनदत्वमतिप्रसिद्धम्
तस्मिन् मयि प्रथम-निर्धनतां विलोक्य ।
प्राप्त-प्रभूत-गुरुताद्दत-देवताना—
माराधनं कथमहो न जहाति लोकः ॥

इन्द्र—भोः कुवेर ! किं त्वां कथयिष्यामि ।

नयन-नीरद-नीर-निपीडितं, हृदयमादधतीव-सुरांगना।
ननु मृतेव सती समुपस्थिता प्रतिदिनं भवतां भवना-
न्तिकम् ॥

कुवेरः—सुरपते ! अन्यदपि किञ्चित् पश्यतु ।

विविधदेव-बधूसधुनातनी-
मतिविकारवतीञ्च विलासिनीम् ।
त्यज पति यदि तेन न मेलन-
मिति सभास्वसतीमिव भाषिणीम् ॥

अपिच

गतमितो भवतो बहुगौरवं बहुलमानधने च गते पुनः ।
परिणतिःसमुपैति विभीषणे तव वने गमनं मरणं विना॥

इन्द्रः—धनपते !

समवलोक्य पुनः सुरबालकं हृतमतिःसहसैव वुभुक्षितम्।
विगत-मूलतरोरिव बल्लरी पतति देवबधूर्धरणीतले ।

कुवेरः—अयि देवेन्द्र !

चिरकालसुखे सुखप्रिये ननु देवेऽसुखता कथं भवेत् ।
प्रतियोगिमता स्वभावतः सहसाऽभाववता न भूयते॥

इन्द्रः—( अशृण्वन्नेव स्वगतम् ) अयि विधे !

अविधिना बिधिना प्रतिपादितम्,
सुखपयोधि-निमज्जन-वर्जनम् ।
करुणता-सरसी-जलधारया
शिशिरता भवता न निषेविता ॥

कुवेरः --देवराज ! किं विचिन्त्यते । अत्र केनाऽपि कारणेन भवितव्यं येनास्माकमीदृशी दशा समुपस्थिता ।

( नेपथ्ये )

नृपमुखाब्ज-विराजितभारती-
महरहः कमला च विलोक्यताम् ।
गिरिपुरेश्वरगेहमहर्निशं
चलमतिः कुरुतेऽपि निजालयम् ॥
अथ तदासितकीर्तिरचञ्चला
गुणवतो नृपतेर्भयतो द्रुतम् ।
गतवतीव विलङ्घ्य पयोनिधिम्,
निरवधि भुवनात् भुवनान्तरम् ॥

इन्द्रः—कुवेर ! श्रुतं श्रुतं भवता ?

कुवेरः—अथ किम् ?

इन्द्रः—( सक्रोधम् ) किं कथयसि ?

मेवाडान्तर्गतगिरिपुर-ख्यात-राजन्यवर्य !
स्मेरास्येतां मुरहर-वधूं भारतीं वर्त्तमानाम् ।
दृष्ट्वा रोषादपरवनिता चञ्चला मञ्जुलाङ्गी
रम्ये हर्म्ये वसति कमला भूपतेः सौम्यमूर्त्तेः॥

कुवेरः—भोभोः देवाः !

विद्याहीना भवति भवतां देवता सेवमाना,
लक्ष्मीहीनं निजगृहमहो ! कष्टमिष्टप्रदानाम् ।
तस्मादासां निखिलविपदां हन्त नाशं विधातुम्,
श्रेयो यत्नो विदितभुवने शान्तिमद्भिर्भवद्भिः ॥

अपिच—

निद्रां मुञ्चत सञ्चितां शयनतस्तूर्णं समुत्तिष्ठत
स्वर्गाद्यातमपूर्व-पूर्व-विभवं दृष्ट्वा न किं जागृत
स्मारं स्मारमसारतामपि सतीं नोद्विजते देवता
चित्रं खेद् किमिवापरं मखभुजां कष्टप्रदं वर्तते ॥

इन्द्रः—
अहरहस्त्विहतापशतप्रदस्वसुरता विरहानलतोऽधुना ।
अजनि धूमशिखाशिखरीकृते मनसि मे बहु दारुणवेदना ॥

कुवेरः—
अथ पुनर्दिवसेऽपि विलोकिता
दशदिशस्तमसा विवशीकृता ।
अपि नवीनमनःकुसुमं मम
प्रतिमुहुः शमनं खलु याचते ॥

( नेपथ्ये )

परित्रायतां परित्रायतां देवराज !

इन्द्रः—अये ! रमणीय-रमणीकण्ठेन केयं मां भीता स्मरति ?

कुवेरः—पश्यामि तावत, ( किञ्चित् परिक्रम्य ) अहो अत्रैव सा त्वरितमागच्छति ।

( प्रविश्य ) कीर्तिः— परित्रायतां परित्रायतां देवराजः ! ( इति पादयोः पतति ) ।

इन्द्रः—अये देवी कीर्त्तिः, कथयतु भवती किं वृत्तमिति ।

कीर्तिः—देवराज ! महाराजाधिराजशैलपुराधिपमुखपंकजे नरीनृत्यमानां वाणीं तदीयमनोरमवसतिमलंकुर्वतीञ्च कमलामवलोक्य भीताऽहं त्रासादत्र समागता ।

इन्द्रः—भद्रे ! साधु कृतम्, अत्रैव विश्रामः क्रियताम् ।

कीर्तिः—विश्रामः ! यावच्चन्द्रदिवाकरौ वर्तेते तावन्मे विश्रामो नास्ति । अद्यापि वेपते मे हृदयम् ।

कुवेरः—आः किं कथयसि ? विश्राम एव नास्ति तर्हि कथय कीदृशोऽसौ नृपवरः ? ।

कीर्तिः—नरपतिरतिकीर्त्तिः सर्वदा शान्तमूर्त्ति-
निजगुणजितलोको यातदीनातिशोकः ।
रिपुजन-वनितानां नेत्रवारि-प्रदानाम्,
प्रभुरिति जगदीशो रक्षतीमं महेशः ॥

अपिच—
बहुतर-कृत-पुण्यो भूभुजामेव धन्यो,
गिरिपुर-सुवरेण्यः सर्वलोकैकमान्यः ।
सुदयित इति धातुः पण्डित-प्रीति-हेतु-
र्विधुरिव रमणीयः सोऽपि मे वर्णनीयः ॥

अहो ! नाऽहमत्र स्थातुं शक्नोमि, सोऽप्यवश्यमत्रागमिष्यति । (इत्युद्भ्रान्तान्ता त्वरितं निष्क्रान्ता) ।

कुवेरः—भो देवराज ! एवं तावत् , क्रियताम् ।

इन्द्रः—किमिति ?

कुवेरः—लज्जा देवी तावदत्राहूयताम् ।

इन्द्रः—तेन किं भविष्यति ?

कुवेरः—
वाणी लक्ष्मीस्तथा कीर्त्तिर्जहतीमं न संशयः ।
लज्जितो यो भवेद्धीमान् पुमांस्तु परमार्थतः ॥

इन्द्रः—सत्यमभिहितं भवता । कः कोऽत्र भोः ।

( प्रविश्य दौवारिकः )

आज्ञापयतु देवराजः !

इन्द्रः—दौवारिक ! शीघ्रं लज्जादेवीमत्र प्रेषय ।

दौवारिकः—यदाज्ञापयत्यार्यः । (इति निष्क्रान्तः)

(प्रविश्य)

लज्जा—देवराज ! कथं भवताऽहं स्मृताऽस्मि । कथ्यतां किन्तावदनुतिष्ठामि ।

गृही भवति सन्न्यासी धीमान् वाणी-विवर्जितः ।
श्रीमानरण्यवासी स्यात् सत्यं सत्यं यमाश्रयो ।

कुवेरः—साधु लज्जे ! साधु ! तदिदानीम्—
प्रतापसिंहसिंहस्य प्रतापात्तापितावनेः ।
महाराणाख्यवीरस्य भ्रातुर्वंश-विहायसि ॥
प्रभाकरमिवाभातं सुन्दरं मदनोपमम्
श्रीमल्लक्षणसिंहं तं महाराजं समाश्रय ॥

लज्जा—अहो स खलु मृगयाकुशली सूर्यवंशावतंसो राजन्यवरो वीरो धीरश्च विश्रुतनामा महाराजस्तमाश्रयितुं भीतिर्मे वर्त्तते ।

कुवेरः—का भीतिः ? आवामेव सहायौ भवत्या भविष्यावः ।

लज्जा—आः ! का गतिः, किन्तु विमानेऽहं गमिष्यामि अतो देश-परिचयः कर्त्तव्यः । अथ कोऽसौ

देश कीदृशो वेति निरूप्यताम्।

इन्द्रः—श्रूयताम्!

अनन्तधीरप्रवरैः सुषेवितम्,
सुशासितं वीरवरेण्य-भूभुजा।
सुदर्शनीयं सुरमन्दिरश्रिया,
सदा यदासीदसता विवर्जितम्।

कुवेरः—अन्यदपि श्रूयताम्,

अनेकपण्य-क्रयविक्रये रताः
प्रतापवन्तो धनिनो विलासिनः।
जन-प्रमोदाय विधाय चारुतां,
मनोरमे यत्र वसन्ति सन्ततम्॥

इन्द्रः—

निरन्तरं कान्त-वसन्त-संगमा-
दपंकजं यत्र सरो न वर्त्तते।
सदा यदीयं सुयशः सुसौरभं,
जनस्तवनाघ्राय न वा विराजते॥

लज्जा—ततस्ततः।

दिनश्रियं यत्र विजित्य जातया
तमिस्रयाऽऽलोकसहस्रमालया।
स्वपान्थकान्ताननदर्शनोन्मुखी
वरांगना प्रांगणसम्मुखीकृता॥

कुवेरः—

किमधिकेन। विलम्बो वर्त्तते, श्रूयताम्।

सगौरवे तत्र विशेषसुन्दरे मनोहरे शैलपुरे सुरप्रिये।
स वीरधीरःपरमादृतप्रजो महीमहीन्द्रो नृपतिर्विराजते।

लज्जा—

अहो! वर्णनीयोऽयं देशो नरपतिवरश्च। तस्मात् भीतिर्मे वर्त्तते। न जाने किं भविष्यतीति।

कुवेरः—

यत्नः क्रियताम्, यत्नस्त्वश्यं कर्त्तव्यः।

लज्जा—यथा भवते रोचते तर्हीदानीं गम्यते।

उभौ—

गम्यतां शीघ्रं गम्यतां सफलमनोरथया च त्वया भूयताम्।

(लज्जा निष्क्रान्ता)

इन्द्रः—धनपते! इदानीं कथञ्चित् विनिवृत्त-चित्तोऽहं संवृत्तः। मन्ये, पुनर्लक्ष्मीः स्वर्गं समागमिष्यति। अथ लज्जा चेत्, लज्जिता भवेत्, तदा का गतिः?

कुवेरः—तदानीं तच्चिन्तनीयम्। पश्यतु तावदग्रे किं भविष्यति?

इन्द्रः—(स्वगतम्)।

स्वाराज्यमार्यनृपतेः सततं बिभेति,
स्वैरं पुरातनकथामधुना स्मरामि।
प्रीतिः सुरेन्द्रभवनं त्यजतीव दीनम्
क्षीणानना सपदि सीदति देवतेयम्।

कुवेरः—देवराज! किं विचिन्त्यते।

येनाम्बिकामहाशक्तिर्नृपेण समुपासिता।
तस्य धीरस्य वीरस्य का भीतिरिति चिन्त्यताम्।

इन्द्रः—चिन्तयामि। भवताऽपि चिन्तनीयोऽयं विषयः।

(नेपथ्ये) हे देवराज! विजयन्तव नावगच्छ!

स्वाम्यं तनोति विपरीतफलं स्वकीयम्।
लज्जीकृता गिरिपुरेशवरेण तूर्णम्
लज्जा त्वनार्यनृपतेरभितो जगाम।

इन्द्रः—

कुवेरः! श्रुतं लज्जाऽपि लज्जीकृता, तदिदानीं किंकर्त्तव्यं तावदुपदिश्यताम्।

कुवेरः—मया तु मन्यते। भगवता साम्बेन शम्भुना परिरक्षितोऽयं नृपवरः, तस्योपासकश्च। सुतरां तदन्तिक एवाभ्यां गन्तव्यम्, तेनाऽस्माकं महानुपकारो भविष्यति

इन्द्रः—साधूक्तं कुवेर! साधूक्तमिदानीं गम्यताम्, कैलास एव वयं गमिष्यामः। (इत्युभौ निष्क्रान्तौ)

[क्रमशः]

# ज्योतिश्शास्त्रानुसारेण फलं कस्मान्न लभ्यते ?

दैवज्ञमार्त्तण्डः श्री केदारदत्तजोशी, ज्यौतिषाचार्यः ( गणिते, फलिते च )
[ प्रोफेसर—हिन्दू-विश्वविद्यालय, काशी ]

( पूर्वतोनुवृत्तम् )

साम्प्रतिकाः जन्मपत्रिकानिर्मातारो दैवज्ञमानिनः सत्यापेक्षया आडम्बरपोषका एव सञ्जाताः इत्येव तेऽभिलष्यन्ति यत्केनापि प्रकारेण पत्रिकाया कार्यवृद्धिर्भवेदिति । किन्तु कदापि तत्सूक्ष्मत्व-शुद्धत्वे दत्तमानसा न सञ्जायन्ते । स्वरशास्त्रानुसारं फलादेश-कथने तु अत्यन्त-सूक्ष्म-पञ्चाङ्गान्यपेक्ष्यन्ते, इति तदुक्तं पूर्वं तत्रापि सूक्ष्मेष्टकालस्यास्ति महत्त्यावश्यकता । तदर्थमप्यस्ति किञ्चित्प्रास्ताविकम्—

हृदयस्थेऽष्टदलकमले प्राणवायुः सञ्चरति । तस्य सञ्चारः कीदृशः—इति चेदुच्यते पृथिव्यादिपञ्चतत्त्व क्रमेण तस्य सञ्चारो भवति । शिवस्वरोदये हठयोग शास्त्रे चास्मिन् विषये बहुश्रमो ऋषीणाम् । अत्र ज्योतिश्शास्त्रीय-स्वरशास्त्र-प्रकारेणाप्यस्त्यस्य महानुपयोगः । अहोरात्रे षष्टिघटिकाः भवन्ति । पूर्वमेवोक्तास्ताः । आसां षष्टिघटीनाम् ३६०० षट्त्रिंशशतानि पलानि । षड्भिः प्राणैर्विनाडी भवतीति ज्योतिर्विदां स्वरज्ञानाञ्च सम्प्रदायः । अतएवाहोरात्रे ३६००×६=२१६०० एकविंशतिसहस्रमिताः प्राणा असवो वा भवन्ति । तावद्वारमहोरात्रे शरीरिणाम् श्वासस्य गमनम् प्रत्यागमनञ्च भवति । तत्राप्ययं विशेषः हृत्कमलस्याष्टदलरूपस्य पूर्वपत्रस्य प्रथमे दले मूलमारभ्य त्रिंशद्भिरसुभिराकाशतत्त्वञ्चलति । पुनः षष्टिसंख्यैरसुभिरुपरि वाततत्त्वञ्चलति । ततो नवति श्वासैः—तिर्यगनलतत्त्वञ्चलति । पुनश्च विंशत्यधिक शतश्वासैरधोभागेऽम्बुतत्त्वञ्चलति । पुनश्च सार्धशतमितैरसुभिः ऋजुमार्गे पृथिवीतत्त्वं वाति । एवं पूर्वपत्रस्यापरदले पृथिव्यप्तेजोवायुराकाशान्तानि पञ्च तत्त्वानि तैरेव मार्गैरधश्चलन्ति । एवं ३०×६०×९०×१२०×१५०×१२०×९०×६०×३० सर्वेषामसूनां योगः नवशतं सार्धघटीद्वयमितम् । एवमाग्नेयादिदलेऽपि बोध्यम् । एकवारं भ्रमणेनाष्टदले ७२००×३=२१६०० अहोरात्रासवः पूर्यन्ते । प्राणगतिरीदृशी । सार्धद्वयघटीमितेन वा एकया होरया ९०० नवशतश्वासाः प्रचलन्ति तदा सार्धद्वयपलेन 'एक मिनट' इति संज्ञकेन किमिति त्रैराशिकगणितेन एक मिनिटे प्राणगतिः $\frac{९००}{६०}$ =१५ श्वासात्मिका लभ्यते इति स्वरज्ञानां मतेन सिद्धम् ।

अर्वाचीनाः पाश्चात्यविद्वांसोऽपि [ एलोपैथिक ] एकमिनिटे प्राणगतिरष्टादश-श्वासात्मिका इति यत्स्वीकुर्वन्ति तत्तु तन्मूलकस्वरशास्त्रीयानामेवानयोपपत्त्या सिद्धं भवति । अष्टादशश्वासाः स्वस्थपुरुषस्य चलन्ति । इत्येषां पाश्चात्यानां मतमस्माकीना श्वासगतिस्तु मध्यममानाभिप्रायेणोक्तेति । सम्पूर्णाहोरात्रे त्रिवारं भ्रमणेन २१६०० षट्शतान्युपरि एकविंशतिसहस्राणि निश्वास संख्या भवन्ति । स्थूलकालमाश्रित्यैव साम्प्रतिकै ज्योतिर्विद्भिः फलाफलविचारो विधीयते । किन्तु स्थूलकालस्य कलात्मक—कालानां संकलनयैव सम्पन्नतया पलभेदनिबन्धन-फलभेदस्य स्थूलकालेऽप्यावश्यकतया तेषां परिज्ञानमप्यत्यावश्यकम् । पलात्मककालाश्च वासरकलादीनां गत्या प्राणात्मक वायोः क्रियया च परिच्छेद्याः । प्राणवायूनां क्रियामधिकृत्य गरुडपुराणेऽपि पद्यमिदं नूनमवधेयम् । तद्यथाः—

एकविंशतिसहस्राणि षट्शतानि तथोपरि ।
हंस हंसेति हंसेति जीवो जपति नित्यशः ॥

शास्त्रान्तरे—

राकारेण बहिर्याति मकारेण विशेत्पुनः ।
रामरामेति रामेति जीवो जपति सर्वदा ॥

योगशास्त्रे—

हकारो निर्गमः प्रोक्तः ठकारोन्तः प्रवेशने ।

संगीतादिशास्त्रे—

तकारः शंकरः प्रोक्तो लकारः पार्वती स्मृतः ।
शिव-शङ्कर-संयोगात्ताल इत्यभिधीयते ॥

इत्यादि, शास्त्राणामपि श्वासागम-निर्गम एवा-

अभिप्रायः।

अथ प्रकृतमनुसरामः—कल्प्यते सूर्योदयात्पलद्वयोनघटीद्वयमिते काले केनापि राज्ञाऽऽगत्य स्वरज्ञः पृष्टः, इदानीं मम मनसि किञ्ज्ञातम्, तत्फलं शुभमशुभं वेति। उक्त-वायुसञ्चार-प्रणालीविदा दैवज्ञेन सयुक्तिकमुत्तरितम् यदिदं ७०८ मितेऽस्वात्मकेष्टे पूर्वपत्रस्योत्तरदले जलतत्त्वञ्चलति। तत्फलमीदृशम्

"इन्द्रादि-दिग्दल-चरे श्वसने रणाय
भोक्तुं रुषेऽथ विषयाय मुदे गमाय।
चेतो भवेत्कृपयितुं च नृपास्पदाय
पत्रद्वयान्तरचरे तु मुदे परस्मै॥"

राजन्! रणाय प्रवृत्तिरिदानीं तव मनसि जागर्ति। जलतत्त्ववहने "धराम्बुनी शुभे महो विनिश्चितं फलं भवेदिति" तव रणोद्योगः शुभः, गम्यतां रणेऽवश्यं जयो भविष्यतीति।

यथाऽत्रास्वात्मकमिष्टमपेक्षितं तथैव स्वरशास्त्रेऽन्यत्रस्थले चौरज्ञानाय भूमौ निहितद्रव्यराशिज्ञानाय वा चन्द्रस्य तात्कालिकीकरणं सुदमेष्टवशेनोक्तम्। यद्यदिनेऽश्विन्यां वर्तते चन्द्रस्तदा तात्कालिकेष्टेऽश्विन्यामेव सप्तविंशतिनक्षत्राणां मध्ये इदानीं कस्मिन्नृक्षे चन्द्रः? तत्रापि तस्य नक्षत्रस्य कस्मिन्नंशे वर्तते चन्द्रमा इत्येतस्य ज्ञानपुरःसरमेव यथार्थबोधकः फलादेशः समीचीनो भवितुमर्हति। मुहूर्त्तग्रन्थेष्वपि चन्द्रस्यैकस्मिन्नक्षत्रे द्वादशावस्थाः प्रवासनाशौ मरणं जयश्चेत्यादिनाऽभिहितास्तात्कालिकचन्द्राभिप्रायेणैव। स्वर-जातक-ताजिक-मुहूर्त्त—प्रभृतिफलितशास्त्रे स्वल्पे पलमात्रेऽपीष्टभेदे राश्यन्तरं नवांशान्तरं लग्नान्तरञ्च भवितुमर्हति। तेन फलान्तरमपि भविष्यति एव। तर्हि प्रहरगते दिवसे वाऽर्धप्रहरगते दिने भोजनवेलायां रात्रौ वा जन्मेत्यादिना निर्दिष्टसमय एवेष्टकालो भवेत्तदा फलादेशोऽपि तादृश एव कथन्न स्यादत्र गणकस्य को दोषः? शुद्धेष्टसमयाधारेण कृतो फलादेशस्तु सत्यमेव भवति। नास्ति सन्देह लेशोऽत्र।

**ज्यौतिषशास्त्रोक्त-शुद्धसंस्कार मुहूर्त्त लोपः, गर्भाधानादि-अष्टचत्वारिंशत् संस्काराणामभावश्च फलालाभे हेतुः।**

यथा—

श्रुतिस्मृत्यादिषु येषां गर्भाधानाद्यष्टचत्वारिंशत् संस्काराणामुल्लेखोऽस्ति मानवानां कृते; तेषामतीवावश्यकता वर्तते। तेष्वेव श्रुतिस्मृत्यादिषु येषां येषां संस्काराणां यत्र यत्र कालनिर्देशोऽस्ति, तत्र तत्र सर्वत्र ज्योतिश्शास्त्रानुसारं शुभेषु मुहूर्त्तेषु ते संस्काराः कर्तव्या इत्यपि निर्देशोऽस्ति। अत्र विषये धर्मशास्त्र ज्योतिश्शास्त्रयोरैकमत्यम्। यथाचाह भगवती श्रुतिः—"अष्टवर्षं ब्राह्मणमुपनयेत्। गर्भाष्टमे गर्भाष्टमेषु वा" एवमेवाष्टवर्षमिति श्रुतिवचनमनुसृत्य मुहूर्त्तप्रकरणे ज्योतिर्विद्भिराचार्यैर्बटु-कन्ययोर्जन्मराशे रवि-गुरु-शुद्धि विचार्य शुभेषु मास-दिन-करण-नक्षत्रेषूपनयनसंस्कारो विवाहसंस्कारो वा कर्तव्य—इति प्रतिपादितम्। यथा च—

"क्षिप्रध्रुवाहिचरमूलमृदु त्रिपूर्वा रौद्रेऽर्कविद् गुरु सितेन्दुदिने व्रतं सद्"इत्यादि-व्रतबन्धप्रकरणे, तथाच विवाह-प्रकरणे—

"गुरुशुद्धिवशेन कन्यकानां समवर्षेषु षडब्दकोपरिष्टात्। रविशुद्धिवशाच्छुभो नाराणामुभयोश्चन्द्रविशुद्धितो विवाहः" ॥ इति शुभे मुहूर्त्ते एव संस्काराः कर्त्तव्या नाशुभेष्विति यदुक्तं तत्र कारणम्; यतः संस्कार्यस्य वटोः कन्याया वा अग्रिमजीवनं सुखमयं स्यादिति।

तथाचोक्तम्—

"भार्या त्रिवर्गकरणं शुभ-शील-युक्ता
शीलं शुभं भवति लग्नवशेन तस्याः।
तस्माद्विवाह-समयः परिचिन्त्यते हि
तन्निघ्नतामुपगताः श्रुत-शील-धर्माः॥ इति

उपरोक्ताद्वचनाल्लभ्यते यत्कन्यकाया विवाहलग्ने लग्नशुद्धिर्जन्मलग्नापेक्षायाऽपि सूक्ष्मतया समीक्षणीया। यतो हि नारीणां भाविजीवनं वैवाहिक लग्नस्य ग्रहाणां शुभाशुभान्यपि संघटन्ते। एवमेव व्रतबन्धलग्नस्य ग्रहाणामपि शुभाशुभानि फलानि उपने-

णानां बटूनां भाविजीवने घटन्ते। अत्र बहूषु प्रमाणेष्वेकमेव यथा—

"राजसेवो वैश्यवृत्तिः शस्त्रवृत्तिश्च पाठकः।
प्राज्ञोऽर्थवान् म्लेच्छसेवी केन्द्रे सूर्यादिखेचरैः"॥

व्रतबन्धलग्नात्केन्द्रे सूर्यादिग्रहाणां स्थित्योपर्युक्तानि फलानि क्रमशो घटन्ते। अतएव व्रतबन्धे तादृग् एव सुन्दरं लग्नं निर्धारणीयं येन बटोर्भाविजीवने न केवलस्य जन्मलग्नस्यापितु संस्कारलग्नस्यापि प्रभावः स्यादिति। विपर्ययेऽर्थात् दुष्टलग्ने कृते व्रतबन्धे यदि जन्मलग्नस्य शुभग्रहाणामपि शुभानि फलानि नायान्ति तदा ज्यौतिशशास्त्रस्य गणकस्य वा को दोषः ?

यदि वा जन्मलग्ने दुष्टग्रहाणां कुदृष्टिरप्यस्ति तथापि बटुश्शुभेषु लग्नेषु यथाविधि संस्कृतो भवेत् तदाप्यनिष्टनिवारणं भवति। उक्तमपि दैवज्ञेन केशवेन "प्राक्कर्म-वीजं सलिलानलोर्वी-संस्कारवत्कर्म विधीयमानम् शोषाय पोषाय च तस्य तस्मात् सदा सदाचारवतां न हानिः" ॥

वीजं सलिलानलावनिसंस्कारवत्; यद्वीजं शुभैः सलिलादिसंस्कारैस्संस्कृतन्तदेव वर्द्धते। तद्वत् प्राक्कर्माऽपि सत्प्रयत्नैनैहिकेन वर्द्धते, अन्यथा क्षीयते इत्यर्थः। नच दुष्टलग्नसम्भावनाभयात् संस्कारा अपि न कर्तव्या इत्यवधारणीयम्। अकृतेषु संस्कारेषु असंस्कृतानां मनवानां भाग्यान्यपि परिवर्तन्ते। तस्य शुभान्यपि फलानि क्रमशः क्षयं यान्ति। अशुभानि क्रमशो वृद्धिं यान्ति।

खनिजानां रत्नानां वास्तविकं स्वरूपं संस्कारानन्तरमेव परिस्फुटं भवति। तथैव मानवा अपि संस्कृता एव स्वं स्वं महिमानं प्रतिपद्यन्ते। उपर्युक्तसंस्कारा अपि जन्मतुल्यमहत्वशालिनः सिद्ध्यन्ति। अतएव जन्मकालिकेष्टवदेव संस्कारकालीनानामपीष्टानामनुसन्धानमावश्यकम्। नचाधुनिके काले संस्कारेष्वनुकूलो विचारः प्रस्तूयते। अतो यथार्थं फलं कस्माल्लभेत। अतः संस्कारेष्टस्यनुकूलफलविचाराभावः; ज्योतिश्शास्त्रानुकूलफलालाभे कारणमिति दिक्।

—— [ सावशेषम् ]

# चित्र-विचार-चर्चा

—:❀:—

श्रीपण्डित विनायकशास्त्री टिल्लू, व्याकरणाचार्यः, मीमांसातीर्थः, अध्यापकः—संस्कृत-महाविद्यालयस्य, इन्दौर।

——

[ अखिल भारतीय-प्राच्यविद्यापरिषदस्त्रयोदशेऽधिवेशने पण्डित-परिषदि पठितोऽयं निबन्धः ]

आनन्दवन-विद्योति नित्यानन्द-पदाम्बुजम्।
बन्दे चिन्मकरन्दाय मिलिन्द इव सन्ततम्॥
[ १ ]

जगद्विकासः क्रमश इति तत्त्वविदां मतम्।
यद्यप्यस्ति महान्भेदः कालाद्याकलनादिगः॥
एवं विकासपरमावस्था संस्कृतिदृष्टितः।
सुसंस्कृतेति पूर्णेति तत्त्वविद्भिर्निगद्यते॥
[ २ ]

तस्यामस्यामवस्थायां शब्दनिर्मितिरुत्तमा।
अभिधेयाऽविनाभावभूषितेत्यपि भण्यते॥
किञ्च प्रत्यक्ष-विषय-व्यवहारानुसारिणी।
शब्दप्रवृत्तिः शास्त्रीय-विषयेष्वपि दृश्यते॥
तत्तच्छास्त्रेषु लोकस्थ-न्यायानुसरणं भृशम्।
अत्रोदाहरणत्वेन भाषा-भाव-विदां स्फुटम्॥
[ ३ ]

रागादिमूला या नाम प्रवृत्तिर्लौकिकी नृणाम्।
तामुत्पथान्नियन्तुं हि श्रुता शास्त्रेषु शास्तृता॥
क्षुत्तृडादिविकारा हि नृणां स्वाभाविका इमे।
तथा कामविकारोऽपि विदितो दुरतिक्रमः॥
किञ्चैकाकी न रमते' इत्यानुभविकं वचः।
स्वद्वितीयेऽद्वितीयत्व-धियाऽऽनन्दानुराधनम्॥
स्वभावसिद्धं स्फुटयत्यखण्डात्मांशरूपिणाम्।
तत्रापि त्वक्सुखे बाह्ये प्रवृत्तिः प्रथमोद्भवा॥
यत्राऽविरोधधी-सिद्धो मोहो म्रदिम-मुद्रितः।
स्त्रीपुंसयोस्तदेतद्धि मिथ आकर्षणं परम्॥
वैवाहिकेन विधिना नियतं क्रियते नृषु।
[ ४ ]

सन्तु प्रकारा बहवो धर्मसूत्रादिबोधिताः ॥
वयं सङ्क्षेपतस्तावत् प्रवृत्तिमभिदध्महे ।

[ ५ ]

दृश्यतेऽनेकपतिका क्वचित्सामाजिकी प्रथा ॥
प्राचीन-वाङ्मये काचित्तच्छटाप्युपलभ्यते ।

[ ६ ]

अनेकेषां हि भोक्तॄणां चित्ताकर्षणचिन्तया ॥
उपेद्यते स्वसन्तान-पोषणादिक्रिया स्त्रिया ।

[ ७ ]

ततोऽपत्येष्वपूर्णत्वं वन्ध्यत्वं, मतिमन्दता ॥
एवमादिविधा दोषा उद्भवन्ति विशेषतः ।
भोग्याया अपि योषायाः प्राधान्यमनुरुध्यते ॥
स्वस्वोपभोगयोगाय सन्तानोपेक्षया नृभिः ।
अन्योन्येर्ष्यावशान्मात्स्यन्यायस्याप्युद्भवो यतः ॥
तस्मादनेकपतिको विवाहो न हितावहः ।

[ ८ ]

एवमेकेन भोक्त्रा हि यत्रानेकोपभुज्यते ॥
सोऽपि भोक्तृप्रधानोऽन्यो विवाहविधिरीद्यते ।
किन्त्वत्रापि व्यभीचार-भावनोदयसम्भवः ॥
भोक्तृत्वाहङ्कारशाली पुरुषोऽपत्यपालने ।
नानन्यभावमाधत्ते नाना-स्त्री-कृष्टमानसः ॥
किञ्च सापत्न-दुर्भावविष-सम्पर्क-शङ्कया ।
नैवं समाज-स्वास्थ्याय विधैषाप्युपपद्यते ॥

[ ९ ]

अपत्यगोपनेऽन्नादि वस्तु-सम्पादने परम् ।
पुंसः संयत्तमनसोऽपेक्ष्य साहाय्यमुत्तमम् ॥
गर्भोत्कर्षविधौ स्त्रीणां सर्व-सौकर्य-कारकः ।
अनन्यपतिपत्नीको विवाहस्तु प्रशस्यते ॥
जीविकोपार्जना-कष्ट-क्लान्त-स्वान्तस्य नुर्गृहे ।
प्रीति-विश्रम्भ-विश्रान्ति-प्रदश्चिन्तापहो ह्यसौ ॥
अधिवेदनमप्युक्तमुपयुक्तमपि क्वचित् ।
किन्तूत्सर्गस्वरूपोऽय'मादर्श' इति गीयते ॥

[ १० ]

एवमेकः पतिश्चैका जायेति विधिरुत्तमः ।
मानवानां कृते युक्तः शास्त्रकृद्भिरुदीरितः ॥
तत्रापि भिन्नप्रकृतिवशात् गौणप्रधानते ।
अनुरुध्य चतस्रोऽत्र विधाः समवधारिताः ॥
क्वचित्स्त्रीणां प्रधानत्वं, क्वचित्पुंसः, क्वचिद् द्वयोः ।
अप्राधान्यानुरोध्यन्य उभयोरप्यभिन्नयोः ॥
मधुकृत्कीटदृष्टान्ते दृष्टा नारी प्रधानता ।
तत्र पुंसोऽपकृष्टत्वाद् बीजोत्कर्षो विहन्यते ॥
द्वितीयो वानराद्येषु पुं-प्रधानो विलोक्यते ।
पुंसोऽहङ्कारशालित्वादुपभोगातुरत्वतः ॥
कर्तव्यच्युतिमूलोऽयं प्रकारोऽपि न शस्यते ।
यत्रोभयोः प्रधानत्वं स्वैरतापरिणामगम् ॥
भोगैकदृष्टिमूलोऽयं (पाश्चात्य) नवीनजनताप्रियः ।
अन्योन्ययौवनोद्रेकादापातप्रीतिसुन्दरः ॥
अदूरदर्शिता-मूलः स्वातन्त्र्यव्युत्क्रमावहः ।

[ ११ ]

धर्म-प्रजा-सुसम्पत्ति-चित्तयोरुभयोरपि ॥
अन्योन्य-रागसम्बद्ध-मनसोरनुकूलयोः ।
वयसा वपुषा शीलेनाचारेण कुलेन च ॥
सच्छास्त्रनियतान्योन्य-शुद्धस्वातन्त्र्य-भावयोः ।
'अन्योन्यस्याव्यभीचार' भावना-सुविभावितः ॥
एष श्रेष्ठतमो यूनोर्विवाहः संस्कृतात्मनोः ।
यत्र जायापती साक्षाद् गौरीशङ्कररूपिणौ ॥
ब्रह्मास्वादसहोदर्य-रत्यास्वादैक-सेविनौ ।
आनन्दग्रन्थिनाऽपत्यरूपेण व्यक्तभावनौ ॥
सोऽयं त्रिवर्ग-सम्पत्ति-सम्पन्नो मोक्षदायकः ।
'मम व्रते ते हृदय' मित्यादिश्रुतिविश्रुतः ॥
'सर्वत्व'—संसिद्धिकरो नृणामेष प्रशस्यते ।

[ १२ ]

याह्यास्माभिः प्रतिज्ञाता शब्दार्थाऽव्यतिरेकिता ॥
तामत्र विशदीकर्तुं यथाशक्ति प्रयत्यते ।
अस्त्यनेकगिरां मध्ये गीर्वाणगिरि गौरवम् ॥
समस्त-पद-विन्यासोऽनन्यसाधारणो यतः ।
जहत्स्वार्थाऽजहत्स्वार्थे द्वे वृत्ती स्तो विवक्षया ॥
तत्रैकार्थीभावविषये प्रथमा सुव्यवस्थिता ।
परार्थस्याभिधा यत्र स्वार्थभेदाऽविवक्षणात् ॥
एकार्थीभावसामर्थ्यं तत्समासादिषु स्फुटम् ।
इत्थं कुटुम्ब-घटका यत्रान्योन्यैकवाक्यताम् ॥
आसादयन्ति, सामर्थ्यं तत्र स्पष्टं प्रतीयते ।

तस्याः कुटुम्बसंस्थाया मूलं परिणय-प्रथा ॥
विधिवत्परिणीतानां सामर्थ्यातिशयः स्फुटः ।
अत्ता हि पुरुषश्चाद्या योषेति नियमः श्रुतौ ॥
स्वभाविकतयोपात्तो विवाहे नियतो ह्यसौ ।
समासप्रथया सेयं संस्था सादृश्यमास्थिता ॥
अतोऽत्र तदुपन्यासो प्रयत्नः क्रियतेऽल्पकः ।

[ १३ ]

स्थिते समासबाहुल्येऽप्यादायात्र चतुष्टयम् ॥
पूर्वोक्तविषये काञ्चित्तुलनामभिदध्महे ।
यथान्यतरमुख्यत्वादिमूलैषा चतुष्टयी ॥
स्त्रीपुंसयोगविषया प्रवृत्तिः प्राक् प्रदर्शिता ।
तथा समासचातुर्थ्यं विद्विनोदाय चिन्त्यते ॥
यथा स्त्रीपुंसयोर्योगो विवाहपदतां गतः ।
अनेकपदसंयोगः समासत्वं समासनात् ॥
[ सम्भूय गतिशालित्वात्पशूनां समजो मतः ।
सम्भूयाऽऽगतिवैशिष्ट्या 'त्समाजो' विदितो नृणाम् ॥
सम्भूयाऽऽसनवैशिष्ट्या 'त्समास' इति कथ्यताम् ]।

[ १४ ]

तत्राव्ययीभाव इष्टा प्राकपदार्थ-प्रधानता ॥
सङ्घातस्याव्ययत्वादि-व्यपदेशः, सुपोऽश्रुतिः ।
अरणिद्वय-सादृश्य पतिपत्न्योः पुरा श्रुतम् ॥
तत्र पूर्वारणिर्नारी उत्तरा पुरुषाऽरणिः ।
एवं यत्राबला मुख्या पुरुषास्त्वनुगामिनः ॥
तत्र साङ्ख्यप्रकृतिवत् स्त्रियः पूर्णा स्वतन्त्रता ।

[ १५ ]

सादृशस्य समाजस्य क्लीवसन्ततियोगिता ।
मधुकृत्कीटदृष्टान्ते स्फुटा सा प्रतिपादिता ॥
यत्राबला हि प्रबला पुरुषा पौरुषोज्झिताः ।
प्रथतेऽसौ प्रथा नैव समाज-परिवृद्धये ॥
एवं तत्पुरुषे ख्यातोत्तरस्यैव प्रधानता ।
तथाऽपरा हि पुरुषप्रधाना पद्धतिः स्थिता ॥
स्वयं परेश-भोग्योऽपि भोक्तृत्वाभिनिवेशतः ।
पुरुषः पुरुधा भोगमात्र-लिप्सुरनर्थकृत् ॥
वानरेषु पुमानेको बह्वीर्भुङ्क्ते निजेच्छया ।
सदान्याक्रमणे दक्षः स्त्रीदशा का विचार्यताम् ?॥

एवं यत्र बहुस्त्रीक-विवाह-सरणिः स्थिता ।
तत्र पूर्वोक्त एव स्यादसन्तोष इति ध्रुवम् ॥

[ १६ ]

द्वन्द्वे यद्यपि नैकस्य गौणत्वं समतोभयोः ।
उभयोरन्वयस्तुल्यः इष्यते हि क्रियादि न ॥
[ तथापि परवल्लिङ्गयोगः स्यादनिवारितः ]
एवं स्त्रीपुंसयोः स्वैर-वर्तिता यत्र पद्धतौ ।
नासौ कुटुम्ब-कल्याण-कारिणी द्वन्द्व-सम्भवात् ॥

[ १७ ]

यत्रावयवतोन स्तो मिथो गौणप्रधानते ।
किन्तु स्वान्यर्थसङ्क्रान्तिमात्रेणैव कृतार्थता ॥
परस्परमभिन्नत्वात्सामानाधिकरण्यधीः ।
प्रथमास्थपदानां स बहुव्रीहिरिहोत्तमः ॥
एवं परिणयोद्देश्य-सुप्रजस्त्व-समृद्धये ।
अन्यान्याभिन्नचेतस्क-जायापति-समन्वयः ॥
प्रथमे वयसि प्राप्त-संस्तवानां समागमः ।
आत्मीयत्वधिया युक्तः प्रणयाङ्कुरशालिनाम् ॥
विशुद्ध-मनसां काममकाम-कलुषात्मनाम् ।
बहुव्रीहि-करो वंश-जाति-राष्ट्र-हितावहः ॥

[ १८ ]

लौकिकी वैदिकी या हि विदिता सुरभारती ।
समस्त-पद-सङ्घात-भूषिता सैव नेतरा ॥
सोऽयं समास-विन्यासो रूढमूलो विलोक्यते ।
चिरन्तनेऽपि ऋग्वेद-प्रधाने ग्रन्थसागरे ॥

कुटुम्बपद्धतिः सापि न किमासीद्विकासभाक् ?।
एवं विकास-शालिन्याः सभ्यताया निदर्शनात् ॥
वैदिकी संस्कृतिः शक्या न किं कल्पयितुं वरा ?
यमी-यम-विवादादि-काचित्कोल्लेखदर्शनात् ॥
नापोह्या, किन्तु तदाढ्यमेव तस्मादतिस्फुटम् ।
किञ्चैकस्मिन्कालखण्डेऽप्यधिकारानुसारतः ॥
उच्चावचाः स्तरा नाना समाजे शक्यकल्पनाः ।
तेषु तेषु भवेद् भिन्ना भिन्नैव सरणिः स्थिता ॥
किन्त्वादर्शव्यवस्थायाः श्रेष्ठत्वमनपोदितम् ।
ये नाम वेद-विदितां सभ्यतां बाल्यकालगाम् ॥

अपूर्णा', दोषबहुलामर्वाचीनां च मन्वते।
तेषामेष कृते यत्नः क्रियानप्युररीकृतः ॥
[ १९ ]
वैदिकी संस्कृतिः शुद्धा, परिपूर्णा चिरन्तनी।
तस्या गवेषणा-मार्ग-गामिनामनुयायिना ॥
किञ्चित्कौतूहलाक्रान्त-स्वान्तेनाध्यापनाविधौ ।
स्फुरितप्रतिभेनेयं कल्पना पुरतो धृता ॥
विशेष-विदुषामेषामनुसन्धान-शीलिनाम् ।
यथालब्धालपसमये नातिविस्तारशालिनी ॥
हंसक्षीरन्यायतोऽत्र गुणग्रहणकोविदाः ।
प्राच्यप्रतीच्य-सद्विद्या-विद्वांसः शरणीकृताः ॥
[ २० ]



## श्रीमज्जगद्गुरु-श्रीबाबा गोकुलदास-महोदयानां परिचयः

शास्त्रार्थ–महारथी आशुकवि पण्डितराज—वेणीमाधवशास्त्री

श्रीवेदमार्गप्रतिष्ठापक–श्रीमत्परमहंसपरिव्राजकाचार्य्य १००८-श्रीमज्जगद्गुरुवैष्णवाचार्य्य-महान्तवेद-वेदान्तमार्तण्डाद्यनेकोपाधिविभूषित—श्रीगोकुलदास-महाराजानामंशावतार-जीवनप्रभाववर्णनं संक्षिप्तम्।

त्यागमूर्तिवीतरागाणां जन्म, संवत् १९४० विक्रमीय-पौषशुक्लतृतीया-मङ्गलवारे उड़ीसाप्रान्त-जगन्नाथपुरी-गञ्जाम-ब्रह्मपुर-रङ्गीपुरशासने अतिप्रतिष्ठित-कुले राजगुरुपदवीविभूषिते। वैराग्यात्पूर्वं गोविन्दाचार्य्य इति नामानः, पितुर्नाम श्रीगोपीनाथाचार्य्य इति पितामहनाम श्रीकरुणाकराचार्य्य इति, प्रपितामहनाम श्रीश्यामसुन्दराचार्य्य इति।

इमे नैष्ठिकब्रह्मचारिणः १४ वयसः पूर्वमेवोत्कल-भाषोत्तीर्णाः साङ्गोपाङ्ग संस्कृत-साहित्यं पठितवन्तः। पूज्यपितृभ्यां विवाहयोजनं दृष्ट्वा महाबन्धनमेतदिति हृदि निधाय तपोवनमधिशिश्रियिरे। अनेकसाधु-संसर्गतः परमवैराग्यमापुः। ततो हृषीकेशगङ्गातटलक्ष्मणझूलायामनेकसाधुदर्शनानन्तरं हरिद्वारकुम्भपर्व दृष्ट्वोत्तराखण्डयात्रां कृतवन्तः। गङ्गोत्तरी-बदरीनारायण-घोरवने सगायत्रीजप-हनुमद्विशेषापासनां चक्रुः। तत्र तपश्चर्य्यया नष्टशोकमोहादयः तदानीं महायोगशक्त्या गोलोकादिगमनकामा अपि संसारोपकाराय शिकार-पुरसिन्ध-बड़ा आंवला-मठाधीश-श्रीपरमश्रद्धेय-श्रीस्वामिजयरामदासमाहात्म्यन्निशम्य तपश्चरन्तः शनैः शनैर्गतवन्तः तत्र योगिराजतो विशेषयोगक्रियां गृहीतवन्तः। सनातनधर्मशैथिल्यं दृष्ट्वा केन प्रकारेण संसारोद्धृतिरिति विचारयन्तो रात्रौ निद्रान्न लब्धवन्तः। परं भगवदनुकम्पया प्रतिवर्षं चैत्रे तत्र तत्र महाकुम्भपर्वणि च महाविष्णुयागानुष्ठानं जगद्धितकारकमिति निर्णयात्तत एव यज्ञधारा सनातनधर्मप्रचारश्च। अद्यावधि चतुर्विंशतिकोटिगायत्रीजपः, शतकोटिराममन्त्रजपः, समस्तपुराणपाठो भूयः संवत् २००० पर्यन्तं २१ एकविंशतिविष्णुमहायागाः, सम्पादिताः। सिन्धुदेशे जगद्गुरु-यज्ञप्रभावादेव वर्षाकाले वर्षणम्, कार्पासमुन्नतिश्च इति सर्वे यशो गायन्ति। पराजित्य नास्तिकाः शिष्यताङ्गताः। गोशाला-प्रबन्धश्च श्रीमहाराजैः कृतः।

संस्कृतविद्याप्रचारे सदा दत्तचित्ताः, संवत् १९६४ विक्रमाब्दे भारतयात्रां चिकीर्षवः पाञ्चाल (पञ्जाब) देशमागत्य सनातनधर्मप्रचारं कृतवन्तः, शिष्यमण्डली-सहिताः मुल्तान-नगरमाजग्मुः। ततः ओकारामण्डी लायलपुरादिनगरान् पवित्रयन्तः लवपुर ( लाहौर ) मागताः। तत्रात्मानन्दनामकसन्न्यासिनः शास्त्रार्थ-हेतवे श्रीमन्महाराजसमीपं गताः। षड्दिनावधिशास्त्रार्थप्रबन्धपराजिताः शिष्याः बभूवुः। तुलस्यादिपूजने गुरूपदेशाज्ज्ञानानामतिश्रद्धात्पन्ना। ततोऽमृतसर इत्याख्यं नगरमाजग्मुः। तत्र धर्मप्रचारं कुर्वन्तो हरि-

द्वारतीर्थमासादितवन्तः। तत्र योगक्रियां प्रचारयन्तः काशीपुरीमागताः। तत्र महापण्डितैः सम्मानिताः कलकत्ताख्यनगरीमागताः। तत्र धर्मप्रचारं कुर्वन्तो विशेषविजय-सम्मानं स्वीकुर्वन्तो जगन्नाथपुरीमगमन्। श्रीजगन्नाथमन्दिरे घटिकाचतुष्टय-पर्यन्तं समाधिमध्यतिष्ठन्, दृष्ट्वा चैतत् सर्वे चकिता अभूवन्।

ततो ब्रह्मपुरमागताः तत्र महान् स्वागतप्रबन्धः समभवत्। एते च शापाशीर्वादानुग्रहसमर्था इति विशालमूर्तिदर्शनेन सर्वेषां ज्ञानम्। तत्र सन्ध्याकाल-समये वलियारपुरग्रामस्थाः "हैजा" रोगग्रस्ता नश्यन्तीति निशम्य दयावशम्वदाः श्रीस्वामिमहाराजाः सिद्धं 'मोरपङ्ख' गृहीत्वा तत्र नगरे एकां गदाविरचय्य सिन्दूरादिभिरभ्यर्च्य नगरभ्रमणानुष्ठानैः सर्वजनान् सुखाकुर्वन्ते स्म। हनुमान् देवः प्रत्यक्षतरः सर्वाभीष्टप्रदो बभूवाश्चर्यमेतद् दृष्ट्वा सर्वे मुग्धाः। ततो मद्रासप्रान्तमागताः। वर्णाश्रमधर्मं प्रचारयन्तो मुम्बापुरीङ्गतवन्तः। तत्र सप्ताहपर्यन्तं धर्म-प्रचारमाचेरुः।

एवं प्रसिद्धस्थानेषु दिग्विजयं कुर्वन्तः शिकारपुर-सिन्धमागतवन्तः। जनान् रोगग्रस्तान् अनुभूय विना-मूल्यमोषधितन्त्र-मन्त्र-यन्त्रादिसाधनैः सर्वानद्यावधि सुखाकुर्वन्ति। अनेकपाठशाला-गोशाला-धर्मशालोद्-घाटनं श्रीमहाराजैः कृतं कारितञ्चेति संक्षेपः।

श्रीमहाराजैर्हनुमान् स्वायत्तीकृतः, एतदिच्छया च हनुमान् अभीष्टं ददाति। हनुमान् अञ्जनीकुमारः प्रत्यक्षतया दर्शनशास्त्ररहस्य-प्रचाराय महाराजेभ्यो विशेषाज्ञां दत्तवानिति गोकुलदर्शनकलानिधिसूत्रा-त्मको निबन्धो महाराजैः कृतस्तदा वशम्वदः पण्डित-राज-श्रीवेणीमाधवशास्त्री काशीनिवासी वेणी माधव-भाष्यं विरचय्य तेन समभूषयदित्यलम-तिविस्तरेण।

---

# दर्शन-विरोध-परिहारः।

श्रीपण्डित ढुण्ढिराजशास्त्री, न्यायाचार्यः
[ अध्यक्षः—नित्यानन्द-वेदविद्यालयस्य ]

अथ तावदिह संसारे, निःसारदुस्तर-शोकमोहागारात्मके, शुक्लपटमध्यासिते विचित्रचित्र इव शुद्धसच्चिदानन्दस्वरूपमध्यासिते, सूत्रेणेव मणिगणे समुद्धृते वा, आपाततो रमणीये, सद्विचारेण विदीर्य्यमाणे, सर्वज्ञस्वतन्त्रसर्वशक्तिपरमात्मनिमित्तक—पुण्यापुण्य-सध्रीचीन-प्रकृतिप्रकृतिके, ब्रह्माण्डात्मके, वर्तमानेषु चतुर्दशसु 'भूर्भुवः स्वः' इत्यादिनामधेयेषु भुवनेषु, वर्तमाने कर्माधिकृते नाम्ना भूलोके, वर्तमाने निखिल-भगवदवतारविषये परमात्मनिःश्वासभूत-वेदैः कृत-वर्णाश्रमादिविभागे, देवैरपि स्वर्गापवर्गहेतुभूतपदाद्यन्वितया मधुरया गिरा सततं स्तूयमाने भारतखण्डे, देवैरपि सदेप्सिततमं समाभ्यां पुण्यापुण्याभ्यां विना दुर्लभं मानुष्यं जन्म गतेन, सम्यगधीतवाङ्मय-व्याकरण-काव्य-कोशेन, नव्ययौवन-कानन-प्रविविक्षुणा, इष्टानिष्टप्राप्तिपरिहारचिकीर्षुणा मानवेनेति, किं कर्त्तव्यमित्याकाङ्क्षायामिदमुच्यते।

भ्रमसंशयविप्रलिप्सावर्जितचेतोभिर्महामुनिभिरेव कृपया प्रकटीकृतानि प्रयोजनैकसूत्रगुम्फितानि परस्परविरोधवर्जितानि दर्शनानि गुरुमुखारविन्दाद् गृहीत्वाऽऽनिर्णयाद्विचारयितव्यानीति।

ननु यद्यपि संस्कृतवैखरिवाण्यामष्टादशप्रस्थानानि श्रूयन्ते, तथाचोक्तं—

पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्दश,—इति।

चत्वारश्चोपवेदा इत्यष्टादश प्रस्थानानि। तथापि तत्र कानिचिद्वाक्यानि कर्माण्येव बोधयन्ति, बोधयन्ति चापराणि विषय-सुखोपायानेव, कानिचित्तु ब्रह्मभिन्नदेवोपासनामेव बोधयन्ति, इति वेदे विरोधः प्रतिभाति। यानि तु ज्ञाननिमित्तकानि न्यायसांख्यादि-

शास्त्राणि; तान्यपि प्रत्यक्षसिद्धं भेदज्ञानमेव यथार्थज्ञानं वदन्ति। किंच चतुर्विधाः परमाणवो द्व्यणुकादि-क्रमशो जगदारम्भन्त इत्याहुः—गौतमादयः। त्रिगुणात्मकं प्रधानमेव महदहंकारादिक्रमेण जगदाकारेण परिणमत इति वदन्ति सांख्य-योग-पाशुपताः। वदन्ति च वैष्णवाः "ब्रह्मणः-परिणामो जगदिति।" एकमेवाद्वितीयं ब्रह्म स्वमायया मिथ्यैव जगदाकारेण कल्प्यत इति ब्रह्मवादिनो निगदन्ति—इति शास्त्रेषु कार्य्यकारणभावविषयक-विरोधः प्रतिभाति। तथाधिकारि-सम्बन्ध-विषय-प्रयोजन-विषयक-विरोधोऽप्यपरः प्रतिभाति।

तथाकर्त्तारो मुनयस्ते कथं भ्रमादिदोषवर्जितचेतसः परस्परविरुद्धकथनेनैव लिङ्गेन दोषाणामनुमीयमानत्वात्। कीदृशं च तेषां सार्वज्ञ्यं यद्विरुद्धकथनेऽपि युज्येत। यदि ते सर्वं सम्यगज्ञास्यन् तर्हि तेषामुक्तयोऽपि परस्परविरोधिन्यो नाऽभविष्यन्, विषयाधीनत्वाज्ज्ञानस्य। विषयस्य च सर्वं प्रति समानत्वात्। नहि घटो देवदत्तं प्रति यदा स्वरूपेण विद्यते, तदा यज्ञदत्तं प्रति स्वरूपेण नास्तीति वा पटरूपो वेति कल्पयितुम् शक्यते पण्डितसहस्रेणापि, स्वरूपेण विद्यमानत्वात्तस्य। तदित्थं यदा सांख्यं प्रति प्रधानं स्वतन्त्रमस्ति, तदा गौतमप्रभृतिभिस्तदभावोऽबोधि कथम्? कथञ्च व्यासप्रभृतिभिस्तदेव परमात्माधीनत्वेनाऽबोधि, ?। किंच सांख्य-मीमांसक-वैशेषिकान् प्रति यदीश्वरो नास्ति, तर्हि गौतमादीन् प्रति कुतस्त्यः सः। यदि-गौतमप्रभृतिभिः परमाणवो जगदारम्भकत्वेनाऽवगतास्तदा बादरायणप्रभृतिभिः कुतो नाऽवगताः। नहि परमाणवोऽपि चेतनधर्मा येनैकं प्रति पक्षपातितया प्रकटी-भवन्ति नत्वन्यं प्रति। यदि सांख्य-वेदान्तिनः प्रति शुद्धबुद्धमुक्तस्वरूपोऽकर्त्ताऽभोक्ताऽसङ्ग आत्मास्ति, तदान्यैः किमपकृतमात्मनः, यतस्तान् प्रति तद्रूपो न प्रतिभाति, प्रत्युत तद्विपरीतो भाति, किमात्मापि शैलूषो येन कञ्चित्प्रति—आनन्दादिस्वरूपेण भाति, कञ्चित् प्रति तु दुःखादिगुणवान् भाति। तदलं छिद्रान्वेषणेन, मुनयोऽपि अस्मादृशा एव, तत्कृतानि शास्त्राण्यपि कलहास्पदानि, तस्मात् तत्त्वनिर्णयजिगमिषुणा शास्त्राण्युपादेयबुद्ध्या न ग्राह्याणि, इति चेन्न। शास्त्राशयानवबोधनात्।

सकलशास्त्राणां कर्त्तारः सर्वज्ञाः कृपालवश्चाऽऽसन्। तैः केवलमेवास्मदुपकाराय कृपया वेदानुसारीणि शास्त्राणि प्रणीतानि, न तु स्वार्थाय। तस्मात्ते मुनय उपालम्भयोग्या न भवन्त्यस्मादृशाम्, यैस्तेषामाशयोऽपि प्रत्येतुं नैव शक्यते,। विचारमन्तरेण यदि तेषु विरोधः प्रतिभाति, प्रतिभातु मन्दमतीनां तथा, सद्विचारेण तु प्रयोजनैकसूत्रगुम्फितानि सर्वाणि प्रस्थानानि, किम्पुनः शास्त्राण्येव; ततश्च कुतो विरोध इति। ननु भवन्तु कृपालवो मुनयः शास्त्राणि चाऽविरोधीनि; यदि समेषामेकस्मिन् प्रयोजने तात्पर्य्यम् सिद्ध्येत, तदेव तु कथमिति चेत्; उच्यते।

विद्याया अष्टादश प्रस्थानानि चत्वारो वेदाः—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद—इति। षड्वेदाङ्गानि शिक्षाकल्पो व्याकरणं निरुक्तं-छन्दो-ज्योतिषमिति। उपाङ्गानि च चत्वारि—पुराणानि न्यायो मीमांसा धर्मशास्त्राणि चेति। तथा चेति मिलित्वा चतुर्दश विद्याः, 'पुराणन्याय' इत्यादिनोक्तत्वात्।

उपवेदाश्चत्वारः—आयुर्वेदो धनुर्वेदो गान्धर्ववेदोऽर्थशास्त्रञ्चेति। इत्यष्टादशविद्याप्रस्थानानि, इति। तथाहि, वेदेषु कियन्ति वाक्यानि 'यतो वा इमानि-भूतानि जायन्ते, तदैक्षत' इत्यादिना ध्येयं ब्रह्म बोधयन्ति। कियन्ति तु 'सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयम्, तत्त्वमसि' इत्यादीनि वाक्यानि ज्ञेयं ब्रह्म बोधयन्ति। शेषाणि तु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत्,' 'वसन्ते ब्राह्मणोऽग्नीनादधीत्,' 'सदृशीं भार्यां विन्देत' इत्यादीनि कर्माणि बोधयन्ति। कर्मबोधकानामपि वेदवाक्यानां सत्त्वशुद्धिद्वारा ज्ञानमेव प्रयोजनम्। प्रवृत्तौ कस्यापि वेदवचनस्याऽभिप्रायो नास्ति, अपितु निषिद्धस्वाभाविकप्रवृत्तिनिरोधनेऽस्त्यभिप्रायः। अतोऽभिचारादिकर्म-प्रतिपादकस्याऽप्यथर्ववेदस्य निवृत्तावेव तात्पर्य्यम्। शत्रुमारणाय प्रवृत्तेनापि पुरुषेण गरदानादिना यद्वा अग्निदाहादिना शत्रुर्न हन्तव्यः, इत्यर्थं श्येनयागादि कर्म विहितम्, नतु शत्रुमारणाय। तथाचाऽथर्ववेदस्य गरदानादितो-

निवृत्तावेव तात्पर्य्यम्; नतु प्रवृत्तौ, द्वेषेण प्राप्तत्वात्प्रवृत्तेः। नहि अन्यतः प्राप्तौ वेदस्याऽभिप्रायः सम्भवति इति रीत्याऽथर्ववेदस्य निवृत्तौ तात्पर्य्यम्। एवं च त्रय्यां कर्म-बोधकवाक्यानाम् अन्तःकरणशुद्धिद्वारेण ज्ञान उपयोगस्तु स्पष्ट एव। ब्रह्मादिप्रणीतस्य आयुर्वेदस्य वैराग्ये तात्पर्य्यमस्ति, यतो ह्यायुर्वेदानुसारेण रोगनिवृत्तावपि पुनरप्युत्पद्यन्ते रोगादय इति लौकिकोपायस्य तुच्छत्वमस्ति। औषधदानादीनां पुण्योत्पादकत्वेन सत्त्वशुद्धिद्वारापि ज्ञान उपयोगोऽस्ति। तथा विश्वामित्रकृतस्य धनुर्वेदस्य दुष्टचौरादितः प्रजापालनलक्षण-क्षत्रियकर्मबोधकत्वात्, अन्तःकरणशुद्धिद्वारा ज्ञानोत्पादकत्वेन तस्यापि मोक्ष एव तात्पर्य्यम्। तथा भरतमुनिना प्रकटीकृतस्य स्वरतालमूर्छनानृत्यादिबोधकस्य गान्धर्ववेदस्य देवताराधनं निर्विकल्पसमाधिसिद्धिश्च प्रयोजनमुक्तम्। तस्मात्तस्यापि चित्तनैश्चल्यद्वारा ज्ञानोत्पादकत्वेन मोक्ष एव प्रयोजनम्। तथा अथर्ववेदस्तु नानाप्रकारको भवति, नीतिशास्त्राऽश्वशास्त्र-शिल्पशास्त्र-सूपकारशास्त्रादित आरभ्यधनप्राप्त्युपायबोधकशास्त्रम्, अथर्ववेदपदेनोच्यते। यस्मात्सकलोपायनिपुणस्यापि पुरुषस्य भाग्यं विना धनप्राप्तिर्वा भवति, तस्मादथर्ववेदस्यापि वैराग्य एव तात्पर्य्यम्।

तथा चाङ्गानि-तत्र पाणिनिप्रणीताया शिक्षाया उदात्तादि-ह्रस्वादि-विशिष्ट-स्वरव्यञ्जनात्मक-वर्णोच्चारण-विशेषज्ञानं प्रयोजनम् अन्यथा मन्त्राणामनर्थफलकत्वात्। तथा चोक्तं—'स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्' इति। पाणिनिप्रोक्तस्यैव व्याकरणस्य वेदाङ्गत्वं बोध्यम्, नाऽन्येषां, तेषु वैदिकशब्दसाधन-प्रकाराऽभावात्। वैदिकपदसाधुत्वज्ञाने-नोहादिकं व्याकरणस्य प्रयोजनम्। तत्र कात्यायनेन मुनिना पाणिनीयसूत्रेषु वार्तिकं विरचितम्। तद्वार्तिकोपरि च भगवता पतञ्जलिना महाभाष्यं प्रणीतम्। इत्येतत्त्रिमुनिव्याकरणं वेदाङ्गं माहेश्वरमित्याख्यायते। तथा च ताभ्यां शिक्षा-व्याकरणाभ्यां वर्णोच्चारणे पदसाधुत्वे च ज्ञाते सति वैदिकमन्त्रपदानामर्थज्ञानाकाङ्क्षायां तदर्थम् भगवता यास्कमुनिना 'समाम्नायः समाम्नातः' इत्यादि त्रयोदशाध्यायात्मकं निरुक्तमभाषि। तत्र च नामाख्यातनिपातोपसर्गभेदेन चतुर्विधं पदजातं निरूप्य वैदिकमन्त्रपदानामर्थः प्रदर्शितः। तथा च मन्त्रस्थ-पदार्थज्ञानाय निरुक्तमवश्यमेवाऽपेक्षितम्। एवं निघण्ट्वादयोऽपि निरुक्तान्तर्भूता बोध्याः।

तथा भगवता पिङ्गलनागेन 'धीश्रीस्त्रीम्' इत्याद्यष्टाध्यायात्मिका छन्दोविचितिर्विरचिता। तस्या वैदिकच्छन्दज्ञानेनानुष्ठानाङ्गभूते तात्पर्य्यम्। तथा भगवद्भिरादित्यादिभिर्ज्यौतिषं प्रणीतम्। तस्य वैदिककर्माङ्गदर्शादिज्ञाने तात्पर्य्यमस्ति। तथा कात्यायनादिमुनिभिः-वैदिकानुष्ठानक्रमविशेषबोधकानि सूत्राणि प्रणीतानि। इति निरूपितानि षडङ्गानि। तथा च वेदस्य यत्प्रयोजनं तदेवाऽमङ्गानामपि बोध्यं न तु पृथक्, वेदाऽङ्गत्वात्तेषाम्।

तथा चोपाङ्गानां प्रयोजनमुच्यते—भगवता बादरायणेन प्रणीतानि पुराणानि ब्राह्मपाद्मादीनि-अष्टादश। तथैवोपपुराणान्यपि अनेकप्रकाराणि। तेषां पुराणेषु अन्तर्भावो यथासम्भवं बोध्यः। तेषां प्रयोजनमग्रे वक्ष्यते। गौतममुनिना 'न्याये' आन्वीक्षिकी पञ्चाऽध्यायी प्रणीता। तत्र गौतमकल्पितानां प्रमाणप्रमेयादिषोडशपदार्थानां किलोद्देशलक्षणपरीक्षाभिस्तत्त्वज्ञानमेव न्यायदर्शनस्य प्रयोजनम्।

तथा कणादमुनिनो हितानां द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां भावपदार्थानाम् अभावसप्तमानां साधर्म्यवैधर्म्याभ्यां व्युत्पत्तिकरणं वैशिषिकदर्शनस्य प्रयोजनम्। अर्थात्तेषु सूत्रेषु युक्तिप्राधान्यात्, युक्तिभिश्चिन्तनेन बुद्धिस्तीक्ष्णा जायते, सा मनने योग्या भवति नाऽन्या। तथा च श्रुतिरप्याह—'दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि' रित्यादिः। वसिष्ठश्च 'विचारात्तीक्ष्णतामेत्य धीः पश्यति परं पदम्' इति। मननञ्च ज्ञानसाधनम्। यदाह श्रुतिः—'श्रोतव्यो मन्तव्यः' इति। तथा च मननद्वारेण वेदान्तजन्यं ज्ञानमेव न्यायशास्त्रस्य प्रयोजनम् इति तत्रैव तस्य तात्पर्य्यमिति प्रतिपत्तव्यम्। तथा जैमिनिना भगवता कृपया निजनिर्मितसूत्रैः कर्माऽनुष्ठानरीतिः प्रदर्शिता। इयन्तु पूर्वमीमांसा 'अथातो धर्मजिज्ञासा' इत्यादि-

'अन्वाहार्ये च दर्शनात्' इत्यन्ता द्वादशाध्यायी। यां कर्ममीमांसामाहुः। यथा च विधिना कर्मसु प्रवृत्तिर्धर्म्ममीमांसायाः फलं, तथा चास्याः कर्माऽनुष्ठानेनाऽन्तःकरणशुद्धिद्वारा ज्ञानजनकतया मोक्ष एव तात्पर्य्यम्। तथा च स्मृतिः--'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति। त्रयो हि दोषा बुद्धौ भवन्ति मलो विक्षेप आवरणञ्च। मलः पापं, ज्ञानस्य प्रतिबन्धकम्। तच्च कर्मानुष्ठानेन विनश्यति। तस्मात् कर्ममीमांसायाः परम्परया मोक्षे तात्पर्य्यम्।

(सावशेषम्)

---

# आपत्कालानुसारिणी शास्त्रीय-व्यवस्था

[ श्रीविन्ध्येश्वरीप्रसाद शास्त्रीः ]

काशीस्थविद्वदन्यतमैः श्रीविन्ध्येश्वरीप्रसादशास्त्रिभिः रणवीरसंस्कृत-पाठशालाध्यक्षैः शास्त्रनिधिभिः प्रस्तुतेयं व्यवस्था सुप्रभात-पाठकानां पुरतः प्रकाश्यते। इतःपरं काशीपण्डितसभाया अपि व्यवस्थाऽग्रिमे शीघ्रमेव प्रकाशमेष्यति। —सम्पादकः।

सम्प्रति भारतवर्षेऽत्र सामूहिक आपत्कालः समुपस्थित इत्यत्र नास्त्यणीयानपि संशीतिलेशः। कार्याकार्यव्यवस्थितौ धर्मप्राणानां शास्त्रमेव प्रमाणमित्यपि सर्ववादिसम्मतः पक्षः। ये किल शास्त्रमर्यादामुलङ्घ्य हिन्दुहिते प्रवर्त्तन्ते, तैः "शास्त्रं हि वत्सलतरं मातृपितृसहस्रतः" इत्यादि— शास्त्रवचनेषु कृपया दृष्टिर्देया। देशकालपात्रानुरोधक-शास्त्र-वचनानि तदनुसारेणैव व्यवस्थापनीयानीति मीमांसापद्धतिः।

अधुना हिन्दुस्थानीयतत्तत्प्रान्तेष्वाततायिविधर्मात्याचारपरम्पराभिर्लक्षशो हिन्दवो यवनीक्रियन्ते। हिन्दुस्त्रियोऽपि बलान्म्लेच्छैरपहृत्य दूष्यन्ते। विधर्मिणो यवनादयो म्लेच्छाः संख्यातीतैरुपायैर्यावर्नी संख्यां विद्युद्वेगतो वर्धयन्तो दृश्यन्ते। यद्यपि देवर्षिकृपावलम्बिन्या आर्यजातेर्न कदापि भवितुमर्हति विनाशस्तथापि विधर्म्यत्याचारपरम्परादि-संकटशतसमाकुला दौर्बल्यमासादयन्ती हिन्दुजातिरियं विविधोपायैः परिरक्षणीयैवेति काशीस्थैर्विद्वद्भिः—(१) बलपूर्वकम्लेच्छीकृतहिन्दुपरिग्रहण—(२) यवनाद्यार्यधर्मेतरम्लेच्छजातिहिन्दुधर्मप्रवेशपूर्वकसामाजिकादि-वैवाहिकसम्बन्धनिर्णय—(३) विधवापुरुषापरिग्रह—(४) सगोत्रोद्वाह—(५) परिणयविच्छेद—(६) शास्त्रासम्मतकालकन्यापरिणयन—(७) समुद्रादियात्रा—(८) स्पृश्येतरजातिदेवमन्दिरप्रवेशाद्यष्टौ विषयान् निम्ननिर्दिष्टस्वरूपं यथासंख्यं शास्त्रदृष्ट्या सुमीमांस्य व्यवस्थैषा प्रकाश्यते—

(१) बलान्म्लेच्छैर्दूषितानां तत्स्त्रीणां चापवित्रमांसभक्षण-कलमापाठबलात्कारमैथुनादिना केनचिदुपायेनापि जातिधर्मभ्रंशो न कदापि भवितुमर्हति। तादृशानां हिन्दुनराणां तन्नारीणां च सर्वविधोपायैरुद्धारं विधाय तत्पापशमनार्थं समन्त्रकगङ्गास्नानेन, तज्जलाचमनादिना, "गङ्गे च यमुने चैव गोदावरि सरस्वति, नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु" इत्यादिमन्त्राभिमन्त्रितनित्यप्रवाहशील-पुण्यनदी-जलस्नानेन, "हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे, हरे राम हरे राम राम राम हरे हरे" इत्यादि विष्णुतारकब्रह्ममन्त्रं "शिवे दुर्गे शिवे दुर्गे दुर्गे दुर्गे शिवे शिवे" इत्यादिदेवीतारकब्रह्ममन्त्रमुच्चार्य भगवन्नामस्मरणेन, "यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके, प्राशनं पञ्चगव्यस्य दहत्यग्निरिवेन्धनम्" इतिमन्त्रपाठपूर्वकपञ्चगव्यपानेन, विप्राङ्घ्रिजलाभिषेकादिना केनाप्यन्यतमेनोपायेन शुद्धिं विधाय यथापूर्वं सामाजिक-स्थानप्राप्तिः शास्त्रसम्मता। बलान्म्लेच्छैर्गर्भवतीनां प्रसवानन्तरं शास्त्रोक्तं व्रतं तदनुकल्पं दानादिकं वा कारयित्वा यथापूर्वं समाजप्रवेशः शास्त्रसम्मतः। तज्जनितसन्त-

न्तरतीनां चान्यत्र-प्रोक्त-धर्मपूतजातिविशेषे प्रवेशः सम्भवः। धर्मपूतजातिव्यवस्थाऽग्रे द्रष्टव्या।

मनूक्त-दशमाध्यायप्रमाणेन, महाभारतानुशासन पर्वोक्तप्रामाण्येन चेदं विज्ञायते यत् ताः क्षत्रियजातयो हि ब्राह्मणानामदर्शनात् संसारेऽनाः प्राप्ता इति। महाभारतानुशासनपर्वप्रोक्ते—

"यवनाः किराता गान्धाराश्चीनाः शबरबर्बराः
शकास्तुषाराः कङ्काश्च पह्लवाश्चान्ध्रमद्रकाः।
कथं धर्मांश्चरिष्यन्ति सर्वे विषयवासिनः
मद्विधैश्च कथं स्थाप्याः सर्वे वै दस्युजीविनः॥"

इति प्रश्नस्योत्तरे तत्रैव प्रतिपादितं यत्—

"मातापित्रोर्हि शुश्रूषा कर्त्तव्या सर्वदस्युभिः
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम्।
वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते
दानानि च यथाकालं द्विजेभ्यो विसृजेत् सदा
दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता॥" इति।

"सरस्वत्याज्ञया कण्वो मिश्रदेशमुपाययौ
म्लेच्छान् संस्कृत्य चाभाष्य तदा दशसहस्रकान्।
वशीकृत्य स्वयं प्राप्तो ब्रह्मावर्त्ते महोत्तमे
सपत्नीकांश्च तान् म्लेच्छान् शूद्रवर्णाय चाकरोत्।
कारुवृत्तिकराः सर्वे बभूवुर्बसुपुत्रकाः
द्विसहस्रास्तदा तेषां मध्ये वैश्या बभूविरे॥
तन्मध्ये चाचार्यः पृथुर्नाम्ना कश्यपसेवकः
तपसा तं च तुष्टाव द्वादशाब्दं महामुनिम्।
ततः प्रसन्नो भगवान् कण्वो वेदविदां वरः
तेषां चकार राजानं 'राजपूत' पदं ददौ॥"

इत्यादिभविष्यपुराणस्य चतुर्थे प्रतिसर्गखण्डे एकविंशाध्याये प्रतिपादितप्रमाणानां तथा च तस्यैव पुराणस्य तृतीये प्रतिसर्गे चतुर्थखण्डे, ६, २१, २३, अध्यायेषु समुपलभ्यमानप्रमाणपुञ्जस्य च पर्यालोचनेनेदं सिध्यति यदनार्ययवनादिम्लेच्छाः प्रायश्चित्तपूर्वकं क्षत्रियवैश्यादिवर्णधर्मं ग्राहयितुं शक्यन्त इति। प्राक्तनैः काशीस्थैर्बहिस्थैश्च धर्मशास्त्रमर्मज्ञैर्विद्वद्भिर्धर्माचार्य्यैश्च बहुभिर्यवनानां हिन्दुकरणं समर्थितमास्ते येषां प्रमाणानि मत्पार्श्वे सन्ति। मृत्युशय्यामधिरूढेन भारतभूषणेन महामनसा पूज्य-पण्डितमदनमोहनमालवीयमहोदयेनापि यवनानां हिन्दूप्रकरणमाज्ञप्तमस्ति। अतो भूमण्डले विशेषतो भारतखण्डे निवसन्ती सम्पूर्णाऽप्यार्यधर्मेतर-यवन-म्लेच्छादिजातिर्व्रात्यसंस्कारमीमांसा-प्रतिपादितरीत्या व्रात्यस्तोमेन तदनुकल्पेन वा पुनरुपनयादिधर्मं स्वीकारयितुं योग्याः। तादृशानां भविष्यपुराणोक्त-राजपूतवत् धर्मपूतनाम्ना व्यवस्थापनं शास्त्रसम्मतम्।

अधुनाऽत्र भारते यवनख्रिस्ताद्यनार्यधर्मप्राप्तानां बहूनामपि मानवानां ब्राह्मणक्षत्रियादितत्तज्जातिचिह्नानि सुस्पष्टं विज्ञायन्ते। अतस्तादृशमानवानां शीघ्रातिशीघ्रं प्रायश्चित्तादिना संशोध्य तत्तद्वर्णधर्मे प्रवेशः शास्त्रसम्मतः। रुधिरसांकर्यं गतानामुपर्युक्तधर्मपूतजातिविशेषे व्यवस्थापनं शास्त्रसम्मतम्।

शास्त्रीय-सृष्टिप्रकरण-पर्यालोचनया सृष्टेरनेकविधत्वमवगम्यते। यथा देवानां देवीनां च समागमसमुत्पन्ना देवर्षिपितृसृष्टिः; देवमानवी-संयोगप्रदुर्भूता पञ्चपाण्डवादिसृष्टिः, मनुष्य-देवीसमागमसंजाता भीष्मशकुन्तलादिसृष्टिः, मनुष्य-मानवीसंयोगादस्मादादिमानवसृष्टिश्चेति। मानवसृष्टावपि सवर्ण-स्वपत्नीप्रभवा सृष्टिर्धार्मिकी। विवाहकर्मणि सवर्णायाः प्राशस्त्येऽपि विवाहसंस्कारं विधाय समुत्पादिताऽनुलोमजप्रजाऽपि धार्मिक्येवास्ति। विलोमजसृष्टिर्न तथेति संक्षेपतः शास्त्रसिद्धान्तः। अनुलोमविलोमसंकरेष्वनुलोमसंकरो मातृजातीयवर्णधर्मेऽधिकृतः। "शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते, ते च स्वा च तथा राज्ञस्ताश्च स्वा चाग्रजन्मनः" "स्त्रीरत्नं दुष्कुलादपि" इत्यादीनि बहूनि स्मार्तवचनान्यत्र प्रमाणम्। भीमार्जुनादीनां हिडम्बोलूपी-प्रभृत्यनार्यकन्याभिः सह परिणयनं तासु सन्तानोत्पत्तिश्च महाभारतादिषु दृश्यते। एतद्बाधक-कलिवर्ज्यप्रकरणविषये त्विदं व्यवस्थापनीयं यद् यथा किल देशकालाद्यनुसृत्य कलेरादौ मनीषिभिस्तेषु केचन प्रवर्त्तयितुमपि शक्यन्त इति। "जातो नार्यामनार्यायामार्यादार्यो भवेद्गुणैः, जातोऽप्यनार्यादार्यायामनार्य इति निश्चयः" इति मनु-प्रतिपादितरीत्या हिन्दुधर्मं ग्राहिताभिर्म्लेच्छयवनप्रभृतिकन्यादिभिः सह पाणिपीड

विधाय तासु च हिन्दुप्रजाः समुत्पाद्य शक्तिशालिनः क्षत्रियादिहिन्दवः सनातनधर्मसंरक्षणं कर्त्तुं प्रभवः। तत्सन्ततीनां धर्मपूतक्षत्रियादिवर्णधर्मेऽधिकारो लोकसम्मतः शास्त्रसम्मतश्चापि वर्तते।

(३) शतशः साधकबाधकप्रमाणानि पर्यालोच्यार्यसंस्कृति-संरक्षणार्थं सिद्धान्तोऽयं स्थिरीक्रियते यत् हिन्दुविधवानां धर्मशास्त्रानुसारं दिव्या, तपस्विनी, अधमा, चेति तिस्रः श्रेण्यो भवितुमर्हन्ति। या मृतपतीननुगच्छन्ति; ता दिव्याः। पतिषु मृतेषु याः किल ब्रह्मचर्य्यादिनियमान् धारयन्त्यो जीवनं यापयन्ति; तास्तपस्विन्यः, याश्च पतिभिर्वियुक्ताः सकामाः स्वगुरुजननिर्देशमनुसृत्य सवर्णपुरुषान् स्वीकुर्वते ता अधमाः। अधमश्रेणीनां विधवानां तत्पतीनां तत्सन्तानानां च समाजबहिष्कारादिदण्डप्रदानं नैव केवलं देशकालविपरीतं धर्मशास्त्रविरुद्धं चापि वर्त्तते। किन्तु ब्राह्मणजातौ तादृशसन्ततीनां स्वतन्त्र-श्रेणीनिर्धारणं शास्त्रसम्मतम्।

(४) सगोत्रविवाहो वर्णाश्रम-शृङ्खलां समूलमुन्मूलयन् देवर्षिपितृकृपासम्बन्धमचिरेणैव विरहय्य जातिमार्य्यामनार्य्यां विदधाति। अतस्तत्परित्यागे ब्राह्मणैः सर्वथा प्रयतितव्यम्। ज्ञात्वा प्रसह्य कुर्वतां सामाजिकदण्डविधानं कृत्वा स्ववर्गशुद्धिः परिरक्षणीया। प्राधान्येन क्षत्रियवैश्यादीनां तु स्व-स्वपुरोहितगोत्रेण सगोत्रतेति शास्त्रनिर्णयः।

(५) विवाहविच्छेदोऽपि शास्त्रसिद्धान्तशून्य एवास्ति। हिन्दूनां विवाहसम्बन्धस्य दानमूलकत्वाद् अग्न्यादिदेवतासन्निधाने प्रतिज्ञापूर्वकसम्पादितत्वाच्च सर्वथाऽसम्भव एव। जातिमधोनयन्नयमपि द्विजातिनेतृभिर्दण्डव्यवस्थादिना निरोद्धव्यः।

इन्द्रियसंयमो हि स्त्रीणामिव पुरुषाणामप्यावश्यको धर्मः। स्त्रियः पुरुषा उभयेऽपि विवाहविच्छेदं कर्तुं न प्रभवः। सत्यां शक्तौ पुत्राभावे पुनर्विवाहं पुरुषाः कर्त्तुं शक्नुयुः, किन्तु पूर्वस्त्रीभरणपोषणादिकं तेषां प्रधानं कर्म।

(६) बहुभिः कारणकलापैरशास्त्रसम्मते वयसि प्रायः सत्कुलेष्वपि कुमारीणां परिणयनं दृश्यत इति नोचितं कर्म। परमिदानीमापत्कालमनुसृत्य सतीत्वरक्षणार्थं रजोदर्शनादर्वाग् वाग्दानविधिरावश्यकः। तेन कर्मणा पित्रादिः पापैर्मुक्तः स्यात्।

(७) समुद्रयात्रापदेन समुद्रं गत्वा महापातकिनां प्राणविसर्जनरूपमर्थं केचन प्राचीन-पण्डिता अभिप्रयन्ति, कलौ भृगुपतनादिवत् समुद्रयात्रापि शास्त्रव्यवस्थापकैर्निषिद्धेति तेषामभिप्रायः। समुद्रयात्रापदेन विदेशगमनं येषामभिप्रेतं तैर्ब्राह्मणविषयमेवैतदिति मन्तव्यम्, गुरुस्थानीयानां भूदेवानां विदेशगमनस्यानावश्यकत्वात्। किन्तु सत्यावश्यकत्वे द्विजातिः, समुद्रपारं विदेशं प्रस्थितो नैजमाचारं परिपालयन् नासंग्राह्य इति शास्त्रीयः पक्षः। वायुयान-धूम्रयान-पोतयानादौ नैजं दैनन्दिनं सन्ध्योपासनादि धर्मकार्यं मानसमप्यनुष्ठातुं शक्यते, नैतेन द्विजन्मा पापीयान् भवेत्।

(८) "यथा रसविधानेन याति कांस्यं सुवर्णताम्, तथा दीक्षाविधानेन द्विजत्वं जायते नृणाम्" इति वैष्णवो राद्धान्तः। श्रीरामानुजसम्प्रदायाचार्यप्रतिवादिभयङ्कर – स्वर्गीय – श्रीमदनन्ताचार्यविरचिते प्रपन्नचरितामृते राद्धान्तोऽयं सविस्तरं प्रपञ्चित उपलभ्यते। ये किल तप्तमुद्रादिपञ्चसंस्कारसम्पन्नास्तेभ्यो देयं ततो ग्राह्यं नान्यत इति सद्वैष्णवैर्मन्यते। "न मे भक्तश्चतुर्वेदी मद्भक्तः श्वपचः प्रियः, तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम्" इति तेषां सिद्धान्तः। अतः पञ्चानामपि वैदिकानां शैववैष्णवशाक्तसौरगाणपत्यानामन्यतमेन केनापि साम्प्रदायिकमन्त्रेण दीक्षिताः सदाचारवन्तोऽन्त्यजा भवितुमर्हन्ति स्पर्शाधिकारिणः। तादृशा हिन्दुधर्म-बद्धादरा भगवन्नामपरायणाः श्रद्धावन्तः सर्वेऽपि लोकास्तत्तद्देवपीठसंस्कारपरम्परासंरक्षणपूर्वकं देवविग्रहदर्शने सर्वथाऽधिकारिणः। श्रीरामेश्वरादिपीठेषु श्रीविन्ध्यवासिनीपीठादिषु च परस्परं विप्रतिपन्नायाः स्पर्शमर्यादायाः संरक्षणं सर्वथा समुचितम्। अन्यथा दर्शनार्थिनां जनानाम् अमङ्गलं देवपीठशक्तिह्रसनं च दुर्निवारं भवेत्। आपत्कालेऽत्र देवमन्दिरप्रतिमापीठेषु कारणबाहुल्यतोऽस्पृश्यप्रवेशात् यत्र यत्र देव-

पीठस्पर्शसंस्कारपरम्पराविपर्ययो भवेत् तत्रतत्रास्पृश्य-प्रवेशादन्यत्र काले प्रतिदिनं शास्त्रोक्तशुद्धिं विधाय तन्मदिरदेवप्रतिमापूजनं समुचितम्। अस्पृश्यप्रवेश-काले देवविग्रहाधिष्ठातृदेवेभ्यः क्षमायाचनमनुष्ठाय मन्दिरद्वारोद्‌घाटनं योग्यम्। वस्तुतस्तु देवविग्रह-प्रोक्षणपूजनादिष्वनधिकृतानां सर्वसाधारणब्राह्मणा-दीनामपि श्रीविश्वनाथादिदेवविग्रहस्पर्शनदेशकाला-दिविचारतः शास्त्रसम्मतं नास्तीति मन्यामहे। इति शम्।

---

## पण्डितानां पुरः प्रार्थनम्।

कवीन्द्र-महेन्द्र शर्म्मा, काव्यतीर्थः

[ लेखक महाशयः समाजवादी विद्यते। तद्-दृष्ट्यैव लिखितोऽयं लेखः। लेखगता भावाः, विचा-राश्च लेखकस्यैव। नात्र सम्पादकाः प्रतिभुवः ]

श्रीमद्‌भागवते प्रह्लादः स्ववयस्यानुपदिशति "सर्वत्र दैत्याः समतामुपेत, समत्वमाराधनमच्युतस्य" इति भगवान् स्वयं समदर्शी चेत् कथं न तस्य सम-दर्शित्वम् प्रियं भवेत्। 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति भागवत-वचनानुसारं केनापि सह-वैषम्य—व्यापारस्तस्य सर्वान्तर्यामिणो जगदीश्वरस्य महदपमानम्।

येषां पूर्वजानामेष सिद्धान्तो यत् 'सर्वं खल्विदं ब्रह्म'; तेषां समाजे ईदृशी विषमता; यस्याः समता प्राप्तिरन्यत्र क्वचिद् दुर्लभैव। वयमिच्छामो यद् वयं काणा एव भवेम-इति वरम्;किन्तु अन्ये अन्धा-स्युरिति स्वार्थान्धता। यत्र 'को धर्मः' ?' इत्यस्य 'भूतदया' इत्युत्तरम् तत्र गोपालका आभीरादयोऽपि नीचाः कथ्यन्ते ? का कथा चर्मकारादीनाम् मुनीनामु-पदेशाः केवलमस्माकं दम्भेऽवशिष्टाः। यत्रार्याणामिय-मीहा-यत्—

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥

तत्राद्य—'सर्वे मत्तो निकृष्टाः स्युः' इति चेष्टा। परोपकारार्थमेव येषां जीवनम्; त एव देवाः। सूर्य-चन्द्र-पवनाग्निगोगङ्गादयः सर्वेऽपि देवाः परार्थमेवेति नाधिकं वक्तव्यम्। सूर्यस्यापरं नाम विश्वपा इति। चन्द्र औषधीनां प्राणाः। पवनस्तु प्राणरूपः। शरी-रान्तः सञ्चारी वायुः प्राणाः। अग्निं विना शरीरमेव-शान्तं स्यात्। गौः सर्वदेवमयी। गङ्गादीनां विना नगराणां का दशा भवेत् ? किन्तु एतदादयः सर्वेऽपि देवाः सर्वैः सह समतामेव वर्तयन्ति। साम्य-प्रचारकाः खलु देवतुल्या मानवा एव। अन्ये हि राक्षस—तुल्याः। स्यान्नामपूर्वयुगे जातिभेदः। परन्तु साम्प्रतं तु जातिभेदो नाम महापापाधायको विद्यते। अद्यत्वे तु जाति प्रथा सर्वानर्थजनकं पापम्। अस्या विनाशं विना शान्तिरौदुम्बरपुष्पायमाणैव। किन्नैतत्तथ्यम् यज्जात्यैव ब्राह्मणाः पूज्यन्ते, श्वपचाश्च श्वानवत्तिर-स्क्रियन्ते ?

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।'

अस्योपरि गीतारहस्ये तिलक-विवेचनं द्रष्टव्यम्।

अहन्तु सुस्पष्टमुद्‌घोषयामि यत् सत्वं रजस्तम एभिस्त्रिभिरेव गुणैर्जगत् सृष्टमतः सर्वस्मिन् वस्तुनि त्रित्वं समाविष्टम्: यत्र जने सत्वाधिक्यम्; स एव ब्राह्मणः, यत्र सत्वाश्रितस्य रजसो बाहुल्यम्; क्षत्रि-योऽसौ। यस्मिंश्च मानवे तमोऽधिष्ठितस्य रजसः प्राधान्यम्; स वैश्यः। तमस अधिक्याच्च शूद्रः। एवं हि मानवमात्रे चातुर्वर्ण्यव्यवस्था सामञ्जस्यमा-प्नोति। यतो हि ब्रह्मणा जगत् सृष्टम्, तथैव वर्णा अपि। जातिस्तु आकृतिग्राह्या। यथाङ्गला एक-जातीया आकृतिग्राह्याः; तथा अस्माकं भारतीयानामपि एका जातिराकृतिग्राह्या। तत्रैव बङ्गीय-तैलङ्गादि—उपजातिभेदाः सन्तु नाम। आकृत्यैव यथा गो—महिष्यादीनां जातिः परिचीयते; तथा मानवानामपि। यद्ययं सिद्धान्तो न रोचते तदा हिन्दवो नामशेषा भविष्यन्ति। मत्कृते नैतत् कष्टकरम्। किन्तु वराका मूर्खा गर्तान्निष्कम्य महम्मद-मत-रूप कूपे पतन्ति इत्ययं महान् खेदावसरः।

यो हि जिना अद्य भुवि एव नारकीयं दृश्य दर्श-

यितुं साभिमानमुद्युक्तस्तस्यापि पूर्वजो हिन्दुरेवासीत्। पूर्वं जातिभेदेनैव बहिष्कृतोऽसौ साम्प्रतं हिन्दूनुन्मूलयितुं प्रवृत्तः—इत्यच्यते जात्यभिमान एव विषमता-मूलम्। जातिरियं मात्स्यन्यायस्य पोषिका। यतोऽत्र सर्पैर्गृहीता मण्डूकाः, मण्डूकैरेव क्षुद्र-मण्डूकाः, तैश्च कीटाः, कीटैरपि क्षुद्रकीटाः। एवं हि मनुष्येस्वपि प्रबला दुर्बलान् भक्षयन्ति जात्या।

यो हि राजा आत्मानं सर्वोपरि मन्यते सोऽपि केनापि ग्रस्तो दुःखभाक् भवति। तथापि जातिपोषिकां विषमतां राक्षसीं मातरं मन्यतेऽसाविति कष्टम्। तदनुगानादेव गान्धिमहात्मनो हृदय-परिवर्त्तन-प्रतीक्षा शोभते। सर्वेषां कृते तु सा हास्यास्पदमेव।

अत्र एकमेवौषधम्—जन—जागरणम्। येषां कृते जवाहरलालः; तेषां समक्षे प्रार्थनेयमरण्य—रोदनं भावीति न विश्वसिमि।

मान्याः! साम्प्रतं भारतस्य समाजवाद एव एकोऽद्वितीयो दुःखनाशकः सिद्धान्तः। इमं विनैवाद्यत्वे येऽन्नादिकमुत्पादयन्ति तेषां दुग्धमुखाः शिशवो बुभुक्षया म्रियन्ते। ये हि धूर्त्ता न्यायशत्रवस्तेषां गृहे कुक्कुरा अपि कृषक-श्रमिकेभ्योऽधिकमानन्दमुपभुञ्जते।

धनमेवानर्थमूलम्। सर्वमपि धनं देशस्यैव, सर्वं हि वस्तुजातं समाजाधीनमेव स्यादिति समुचितम्, नहि वैयक्तिकम्। तदैव देश-मङ्गलं स्यात्। अत्र रूसदेशो निदर्शनम्। तत्राप्ययं सिद्धान्तो नादर्शतां प्राप्तस्तथापि बहुशिक्षितव्यमस्माभिरस्माद्देशात्।†

———

† अस्मिन् विषये सहृदयैर्विद्वद्भिः श्रीसम्पूर्णानन्द कृतं 'समाजवाद' नामकं श्रीराहुलकृतं च 'भागो नहीं, दुनियाको बदलो' इति पुस्तकद्वयं पठनीयमिति सानुरोधं प्रार्थयामः—लेखकः

# सम्पादकीयम्।

—०—

## शङ्कराचार्याणां विषये

सुप्रभातस्याङ्कद्वयेऽस्माकं पाठकानाञ्च नितरामप्रियो विषयः प्रचलति, येन केचनास्माकं सुहृद असन्तुष्टाश्च सन्ति। तदत्रविषये मौनावलम्बनमेव श्रेयस्करं मत्वा विषयममुं समुपसंहरामः। अस्माभिः सद्भावनया, आत्मीयधिया, हितबुद्ध्या च यत्किमपि कटुकं तिक्तञ्च स्पष्टमालोचनं विहितम्। एतन्न खलु विस्मर्त्तव्यं धर्माचार्यैस्तदनुयायिभिश्च यदचिरादेव सुधारकाणां शासकानां प्रचलति सुधारवात्याचक्रे धर्मस्य, धर्माचार्याणाम्, धर्मगुरूणाम्, धर्मस्थानानाम्, मठ-मन्दिर-मोहान्तानामकल्पनीयमपरिहार्यञ्च परिवर्तनं प्रसभं भविष्यति। क्रूरतया व्यवहरिष्यन्ति सुधार-प्रियाः। शासनं तदधीनं विद्यते, शिक्षा तदधीना, जनता च तदनुयायिनी। एवं स्थिते सति समये प्रबुद्धैरस्माभिः स्वयमेव समयानुकूलं परिवर्तनं विधेयम्। तदा किमप्यात्म-संरक्षणं सम्भाव्यते। अन्यथा अस्माकं दोषान्, दौर्बल्यम्, दुर्व्यवस्थाञ्च द्वारीकृत्य प्रचलन्तीमिमां प्राचीन-परम्पराम् प्रसभं विलोप्स्यन्ति परिवर्तन-पक्षपातिनः। वयं स्वदोषैर्दुर्बलाः किमपि कर्तुं न प्रभविष्यामः। अतएवास्माकमप्रियोऽपि प्रयत्नस्तेषां हितायैव।

निदानमन्तरा चिकित्सा कथंकारं स्यात्। निदानं ज्ञात्वा अस्माकं जीवने, प्रकृतौ, समाजे, व्यवहारे, कार्यपद्धतौ, अन्यत्र कुत्रापि वा ये ये दोषाः समागताः सन्ति तेषां सावधानतया सरलतया च निःसारणं विधेयम्। येनास्मासु निर्दोषेषु-आत्मबलं मनोबलञ्च प्रबलं भवेत्। तेन च वयं सुधारकाणां सम्मुखमपि प्रसभं स्वीयां परम्परा परिरक्षितुं प्रभविष्यामः। इत्येवास्माकं तात्पर्यम्।

पश्यन्तु मनाक्! सुधारकाणां प्रथमो महात्मा गान्धी; भवदुचितां चर्यामाचरन्; न केवलं भारतीयानाम्; प्रत्युत निखिल-भूमण्डलीयानां जनानामनन्त-श्रद्धा-सम्मान-भाजनं सञ्जातः। पश्यत! बंगप्रान्ते

केवलमात्मबलसहायः कथं दुरात्मनोऽपि प्रेम्णा विजयते। एतत्तु हिन्दूजातेर्जन्मसिद्ध-नेतॄणाम्, तद्धनैरेव परिपुष्टानां धर्माचार्याणामेव कर्तव्यमासीत्। अस्मिन्नवसरेऽपि श्रूयते-मोहमय्यां धर्मसंघ-महाधिवेशने शङ्कराचार्य्याणां छटा दर्शनीया आसीत्। सभामण्डपे सभापतित्वेन तिष्ठत्येकस्मिन् शङ्कराचार्ये; नान्ये शङ्कराचार्यास्तत्र गताः। एतत्तु बालानामिव, स्त्रीणामिव च उपहासास्पदं भवतां चरित्रम्।

शङ्कराचार्येष्वेव द्वित्रिषु परस्परं सौहार्दं नास्ति तदा ते कथं जनतायाः सङ्ग्रन्थनं कर्तुं प्रभवेयुः। "स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते।"

वयन्त्वभिलषामो यत् ये हि खलु धर्म-संरक्षणाय वैदिक-मार्गप्रतिष्ठापनाचार्यत्वेनात्मानमुद्घोषयन्ति, त एव धर्मविनाशाय मा भवन्तु। साम्प्रतन्तु ईदृशा धर्मनेतार अपेक्षन्ते, ये स्वचारित्र्येण, कर्मणा, आत्मबलेन च भारतीयार्य-संस्कृतेरादर्शभूता भवन्तु। आदर्शतायाः कृते श्रमः, शमः, तपः, संयमः, तितिक्षा, स्वधर्म-दृढता, सदाचार—इत्यादयो गुणा अपेक्षन्ते। एतैरेव गुणैर्नेतृत्वम्—विशेषतश्च धर्मनेतृत्वम् सम्भवति।

एतादृशे भयङ्करे समये व्यर्थाडम्बर-प्रदर्शनं, मानप्रदर्शनादिकञ्च कुर्वतां परस्परं कलहायमानानां लोकोत्तर-तपःप्रभाव—-विद्यावैभवाचारादर्शादिविरहितानामाचार्याणां गौरवेण केवलेन विभ्यद्भिरस्माभिः कियन्तं कालं स्थातव्यमिति न जानीमः। अस्तु।

अतएवास्माभिः कर्म-शीलानां कर्तव्य-परायणानां धार्मिक-जन-समाजे यथाकथमपि जागरणं जनयतां व्यापारिणां चौर-व्यापारार्जितं युद्धकालीनं धनं देवताभ्यो ब्राह्मणेभ्यश्च दापयतां श्रीमत्करपात्रिस्वामिनां यदि प्रशंसा क्रियते, न स पक्षपातो व्यक्तिगतः, प्रत्युत सा वास्तविकी परिस्थितिः। सुप्रभातं न केनापि लोभेन, लाभेन वा कस्यापि प्रशंसामातनोतीति शास्त्रिवर्याः सम्यग् जानन्तु।

काशीस्थ-विदुषां विषये यल्लिखितं तैस्तत्र विदुषामपि विद्यते कश्चन दोषः। अस्माभिः प्राक्तनविदुषामपि परम्परा समालोकिताऽस्ति। तेऽपि सामाजिक-व्यवस्थासु व्यक्तिगत-व्यवस्थासु च हस्ताक्षराणि कुर्वन्तिस्म। व्यक्तिगत-व्यवस्थासु तेषां हस्ताक्षराणां मूल्यं शतादन्यूनं भवतिस्म। एवमेकपक्षतः प्रचुरां दक्षिणां गृहीत्वा, पुनस्तत्पक्षे समर्थनाय, शास्त्रविचाराय, न्यायालयेषु प्रमाणोपन्यासाय च सन्नद्धाः सन्तिष्ठन्तेस्म। परमिदानीन्तना विद्वांसः स्वयमेव हस्ताक्षराणां मूल्यं पातयन्ति। एतादृशविषयेषु तैः प्रचुरदक्षिणामन्तरा हस्ताक्षराणि न कर्तव्यानि। हस्ताक्षरकरणात् पूर्वं पक्ष-प्रतिपक्ष-विवेचनमपि-विधेयम्। एकतरस्मिन् यस्मिन् कस्मिन्नपि वा पक्षे सुदृढैः स्थातव्यम्। साम्प्रतं वाराणस्यामियं व्यवस्था प्रचलति, यत् यः कश्चिदपि पण्डितभ्यः सभायां मुद्राद्वयं चतुष्टयं वा दत्वा तस्मिन्नेव काले हस्ताक्षराणि कारयति स्वाभीप्सिते विषये। विद्वांसश्च तत्र सद्योगृहीत-दक्षिणाः शिष्टतानुरोधेन, अनिच्छन्तोऽपि हस्ताक्षराणि कुर्वन्ति। किं कुर्वन्तु ते ?

अत इदानीं सामाजिकं सर्वसाधारणं धार्मिकं शिक्षासम्बन्धिनं वा विषयं विहाय, व्यक्तिगतविषयेषु विद्वद्भिर्हस्ताक्षराणि न कर्तव्यानि। बहुवारमस्माभिस्तेषामयमपवादः श्रुतः। बहिस्थास्तेषां हस्ताक्षराणि स्वल्पतममूल्येन कारयन्ति, बहुमूल्यञ्च स्वकार्यं साधयन्ति। सिद्धे कार्ये पश्चात् पण्डितानुपक्रोशन्ति। इति वयं काशीस्थान् विदुषः सानुरोधमभ्यर्थयामः।

प्राचीनैराचार्यैः सहास्माकं घनिष्ठतरः सम्बन्धः। ते पुत्रवद् स्निह्यन्ति। वयमपि तातपादानिवाचार्यपादान् मन्यामहे। तेषां त्यागः, तपः, सदाचरणम्, वात्सल्यम्, सर्वमपि प्रत्यक्षमेवास्माकम्। वाराणस्यां बहुवारमस्माभिस्तेषामभ्यर्चनमभ्यर्थनमभिनन्दनञ्च विहितम्। परं यदि सुप्रभात-संघ-द्वाराभिनवशङ्कराचार्याणामभिनन्दनं विहितम्, तदा तेन कस्तावदनर्थः समजनि। संस्कृत-विद्वद्भिर्यदि तेषां सम्माननाविहिता, तदापि किं श्रीमद्राजराजेश्वराश्रम-महोदयानां गौरवहानिः सञ्जाता। पुनः सर्वैरपि तारकेश्वर मठे सम्मिलितैः पण्डितैः स्वीकृतमेव श्रीमतां राजराजेश्वराश्रमस्वामिनामाचार्यत्वम्। वयमपि तथैव

मन्यामहे। परमेकस्यादरं कृत्वाऽपरस्य दण्डिस्वामिन अपमानं तिरस्कारं वा कर्तुं न कोऽपि धर्माभिमानी प्रयतेत। अतः शास्त्रिवर्यैरत्र व्यर्थ—दोषारोपणं न कर्तव्यम्। नचात्र विषये विशिष्टमान्दोलनं विधाय समाजे क्षोभमुत्पादयन्तु, न्यायालय-निर्णयं प्रतिचन्ताम्।

इदानीमस्मिन् विषये सुप्रभातं किमपि कस्यापि लेखादिकं न प्रकाशयिष्यति।

× × ×

## संस्कृत-परीक्षासु वैषम्यम्।

अस्मिन्नङ्के हिन्दूविश्वविद्यालयीय-संस्कृतविभागे साहित्यविभागाध्यक्षैः पण्डितप्रवरैः श्रीमहादेवशास्त्रि महोदयैः हिन्दूविश्वविद्यालयीय राजकीयसंस्कृतमहाविद्यालयीय-परीक्षयोर्विषये संस्कृतशिक्षाधिकारिणो विज्ञापिताः सन्ति। तच्चिरादेव सुप्रभातस्याभिमतमासीत्। पूर्वमपि बहुधा प्रार्थितमस्माभिरत्रविषये यत् आँग्लविश्वविद्यालयेषु परीक्षा-विषये यथा पारस्परिकः सहयोगो विद्यते तथा संस्कृतेऽपि भवतु। प्रस्तावा अपि सभासु स्वीकृताः सन्ति। परं संस्कृत-परीक्षाध्यक्षाः स्वीयं सम्मेलनं विधाय तादृशं प्रबन्धं न कुर्वन्ति येन हिन्दूविश्वविद्यालयीय-शास्त्रिपरीक्षोत्तीर्णः कुत्रापि आचार्य-परीक्षां दातुं प्रभवेत्। राजकीय-विद्यालयतः, विहार-संस्कृतसंघपरीक्षोत्तीर्णो वा हिन्दूविश्वविद्यालयोयाचार्यकक्षायां प्रवेष्टुमर्हेत्। केचन विद्यालयाः स्वीयपरीक्षाणां सर्वाधिकं महत्वं मन्यन्ते। एवमन्यपरीक्षाणामुपेक्षणमपमानमिव च भवति। सर्व-प्रान्तीय-परीक्षाणामैक्यं तु तदैव समीचीनं स्याद्यदा पाठनपद्धति-सामञ्जस्यमपि स्यात्।

परं वाराणसीस्थयोर्हिन्दूविश्वविद्यालय-राजकीय महाविद्यालययोस्तु प्रायः सर्वं समानमेव। कियतः कालात् हिन्दूविश्वविद्यालयीय-संस्कृतमहाविद्यालयस्य व्यवस्था समीचीना विद्यते। पाठ्ये, पाठने, पठने, सर्वत्रापि प्रायः साम्यमेव। प्रथममनयोः पारस्परिकः सहयोगो भवतु। तदनन्तरं शनैः शनैरन्यत्रापि प्रयत्नोऽयं सफलः स्यात्। हिन्दूविश्वविद्यालयेन प्रवेशिका परिक्षायै स्वतन्त्र एव विद्यालयः स्थापितो विद्यते, परं राजकीय-महाविद्यालयस्य प्रथमा-पाठन-व्यवस्था कुत्रापि नास्ति। तथापि हिन्दू-विश्व-विद्यालयस्य प्रवेशिकामुत्तीर्णाश्छात्राः, राजकीयमहाविद्यालये मध्यमां दातुं न प्रभवन्ति। हिन्दूविश्वविद्यालयेन तु विहार-काशी-पञ्जाबप्रान्तीय-प्रथमायामुत्तीर्णा मध्यमायां, मध्यमोत्तीर्णाश्च शास्त्रिपरीक्षायां सादरं गृह्यन्ते। राजकीय-विद्यालयस्यैव आग्रहो न समुचितः प्रतिभाति।

श्रूयते प्रान्तीयसंस्कृत-शिक्षाधिकृतोऽपि दत्तावधानाः सन्ति विषयेऽस्मिन्निति तदत्र तैः सत्वरैर्भाव्यमिति वयमत्र सानुरोधं ध्यानमाकर्षामः।

× × ×

## हन्त ! कष्टपरम्परा !!

साम्प्रतकाले कस्यापि स्वल्पस्यापि कार्यस्य सम्पादने सञ्चालने च महान् कष्टानुभवो भवति। पदे पदे प्रतिबन्धकाः समुपतिष्ठन्ते। सुप्रभातस्य संस्कृत-पत्रस्य मुद्रणे न के : यन्त्रालयाः समुद्यता भवन्ति। सर्वेष्वपि यन्त्रालयेषु संस्कृतोपयुक्तानि-अक्षराणि न सन्ति। यत्र सन्ति; ते—एकस्य पृष्ठस्य मुद्रणव्ययं मुद्रापञ्चकं गृह्णन्ति। एवं २८ पृष्ठात्मकस्य सुप्रभातस्य मुद्रणव्ययं द्वयाधिकशतं गृहीत्वापि यथासमयं प्रकाशने प्रतिज्ञा-बद्धा न भवन्ति। अतः स्वकीयो यन्त्रालयः स्थाप्यतामिति ततोऽप्यधिकतरे पङ्के निमग्ना वयं यन्त्रालयोद्घाटने संलग्नाः।

अद्यत्वे नवीनयन्त्रालयोद्घाटनाञ्चैव साम्प्रतं न लभ्यते, कर्गजाभावात्। कर्गजमपि न लभ्यते, तदभावात्। प्रथमन्त्वत्रैव कथा—समाप्तिर्भवति। ततोऽग्रमे एका कोटिर्वर्तते, यदितस्ततो धावनं कृत्वा, अधिकारिणामाराधनं कृत्वा यदि कथमपि देहलीपर्यन्तं शतशो व्ययीकृत्यापि कर्गजं लब्धाऽपि; मुद्रण-यन्त्रस्यावश्यकता भवति। तदर्थमपि मासद्वयं यावत् शतशो व्ययीकृत्य कलिकान्ता कानपुराद्यनुधावनं कृत्वा प्राचीनस्यापि यन्त्रस्याष्टगुणं मूल्यं दत्वाऽपि तस्यानयने महान् प्रपञ्चो भवति। ततश्चाक्षराण्यपेक्ष्यन्ते। तदर्थं प्रयागयात्रा कर्तव्या। तत्राक्षरनिर्मातृणामाज्ञानुसारं धनं दत्वा मासत्रयेण-अपूर्णान्यक्षराणि लभ्यन्ते। अपूर्णत्वात्तेषामुपयोगः कर्तुं न शक्यते।

एवं मासषट्कं व्यत्येति। ततश्चान्तर-कोष्ठक-निर्मातापि यथेच्छं धनं गृहीत्वा मासत्रयेण तद्ददाति।

एवं कर्गजस्याज्ञापत्रं लब्ध्वाऽपि नगरे तद् यथाकालं न लभ्यते। चिरात् समयाति, स्वल्पमात्रया समायाति।

इत्थं कष्टपरम्परामनुभवद्भिरस्माभिः सुप्रभातस्य प्रकाशनं यथा समयं कर्तुं विवशैर्महदपराद्धं सुप्रभातग्राहकाणाम्।

इदानीमेकयन्त्रालये सुप्रभातस्याक्षरयोजना भवति, अपरत्र संशोधनं भवति, इतरत्र च मुद्रणं भवति। सर्वमव्यवस्थितं प्रचलति। अक्षराणि पुरातनानि, मुद्रायन्त्रञ्च पुरातनतरः। सुप्रभात यन्त्रालयस्य पूर्णतया कार्यक्षमत्वमेकमासपर्यन्तं न भविष्यति।

एतस्मिन् व्यतिकरे सुप्रभातस्य कार्यमिदानीं महता वेगेन प्रचलति। महत्तरो विलम्बः समजनिः। अत इदं संख्याद्वयं ३२ पृष्ठात्मकं त्वरया निःसारितम्। सत्वरमेवाग्रेचाङ्काः षोडशपृष्ठात्मकाः प्रकाशिता भविष्यन्ति। वत्सरस्यान्तिमोऽङ्कः काशिकराजकीय—संस्कृत-महाविद्यालयस्य [ गवर्नमेन्ट संस्कृत कालेज ] सार्द्धशताब्दीमहोत्सवमुपलक्ष्य विशिष्टः सचित्रः सर्वथाभिनवसामग्री-समेतः, चित्ताकर्षक-रूपः प्रकाशितो भविष्यति। तत्रावशिष्टा पृष्ठसंख्यापि पूर्णा भविष्यति। तावत्सुप्रभातयन्त्रालयोऽपि पूर्णतामेत्य श्रीमतां ग्राहकाणां मनोहारिणीं सेवां यथासमयं विधास्यति।

पाठकैरेतत्कदापि मनसापि न चिन्तनीयम् यत् सुप्रभातस्य पुनरवरोधो भविष्यतीति, प्रत्युतास्योत्तरोत्तरं समुन्नतिरेव स्यात्। यादृशः समयो वरीवर्ति, तद्विदितमेव श्रीमतामपि।

बहूनां लेखकानां लेखाः अस्मिन्नङ्के न प्रकाशिताः, तैः क्षन्तव्यम्। यावदयमङ्कः श्रीमतां हस्ते समापतति तावदपरोऽप्यङ्को मुद्रितप्राय एव भविष्यति। सर्वेऽपि लेखाः क्रमशः प्रकाशिता भविष्यन्ति।

अस्मिन्नङ्के मुद्रण-शुद्धयोऽपि भविष्यन्ति। यतोऽस्य मुद्रणादिकमव्यवस्थितमेव सञ्जातम्। तत्सर्वं क्षन्तव्यम्।

सम्पादकः
व्यवस्थापकश्च—

# अभिमतम्।

## जगन्नाथ का रथ।

अरविन्द-ग्रन्थमालायां प्रकाशिता, अष्टाणक-लभ्या स्वल्पा पुस्तिका। अस्यां योगिवरस्य महात्मन अरविन्दघोषस्य भिन्न २ विषयेषु लिखिताः पञ्च निबन्धाः सन्ति। यथा—जगन्नाथ का रथ, आर्य आदर्श और गुणत्रय, दुर्गास्तोत्र, स्वप्न तथा हिरोवूमि इतो। सर्वेऽपि निबन्धाः गभीरतमाः विद्वत्संवेद्याः, भारतीयाध्यात्मिकादर्शपूर्णाः सन्ति। अस्य महात्मनो निबन्धविषये किं वक्तव्यम्? पठनेनैवास्यानिर्वचनीयं महत्वं ज्ञातुं शक्यते। परं नैतत् सर्वसाधारणैर्ज्ञातुं शक्यते। हिन्दीभाषायामेतादृशोच्चतर-साहित्यप्रकाशनेन वस्तुतो हिन्दीभाषा गौरवं महिमानञ्च बर्द्धयति।

× × ×

## नीमके उपयोग।

निम्बवृक्षो हि मानवसमाजस्य महानुपकारको वृक्षः। आमहावैज्ञानिकमापामरमस्य प्रयोगो दरीदृश्यते। अस्य पुष्पपत्र फल-धूम-त्वगादिषु महान्तो गुणाः वरीवर्तन्ते। परमस्य प्रत्यवयस्य कदा कथं प्रयोगो विधेय इति सर्वे न जानन्ति। तदस्मिन् पुस्तके निम्बसम्बन्धिनो विविधा ज्ञातव्याः प्रयोगाः, उपयोगिन्यश्च वार्ता लिखिताः सन्ति। निम्बविषये नैतादृशमपरं पुस्तकमालोक्यते हिन्दी-वाङ्मये। केषु केषु रोगेषु कथं निम्बस्य प्रयोगो विधेय इति विशदतया वर्णितमस्ति। अस्य विषये भारतीयानां पाश्चात्यानां यवनानाञ्च वैज्ञानिकानां किमभिमतम्? कामशास्त्र-तन्त्रशास्त्रादिषु वृक्षस्यास्य किं स्थानम्? अस्यावयवैः कानि कानि मानवोपयोगीनि औषधानि निर्मीयन्ते?—इत्यादिविविधविषयाणां विशदं सर्वसाधारणोपयुक्तञ्च वर्णनमस्ति। पुस्तकमिदं प्रतिग्रामं प्रतिगृहं प्रतिव्यक्ति नितरामुपकारजनकं प्रचारणीयञ्च विद्यते।

## आयुर्वेद-संसारका महत्वपूर्ण एवं स्थायी साहित्य–




# त्रैमासिक--पत्र

**१ चैत्र २० को प्रकाशित होगा।**

अपने ढंगका निराला, आयुर्वेदके सभी विषयोंपर गम्भीर एवं विद्वत्तापूर्ण विचारों, आलोचनाओं, और गवेषणाओं से ओत-प्रोत होगा। आयुर्वेद-संसारको यह नया मसाला, नया जीवन और नवीन ज्ञान-विज्ञान प्रदान करेगा।

इसके सम्पादक, 'वनौषधि' 'आयुर्वेदसम्मेलनपत्रिका' 'सनातन-धर्मोदय' आदिके भूतपूर्व एवं संस्कृत 'सुप्रभातम्' के वर्तमान-सम्पादक—केदारनाथशर्म्मा सारस्वत तथा अनेक आयुर्वैदिक पुस्तकों के निर्म्माता आयुर्वेद-मार्त्तण्ड श्रीकेदारनाथशर्म्मा पाठक हैं।

इसका एक-एक अङ्क दर्शनीय, पठनीय, मननीय और संग्रहणीय होगा। शीघ्र ग्राहक बनें। प्रकाशनके पूर्व ग्राहक बनने वालोंके लिए वार्षिक मूल्य २॥)।

उमेदीलाल वैश्य, [ प्रकाशक और व्यवस्थापक ]
श्यामसुन्दर—रसायनशाला, गायघाट, काशी।

---

## अभिमतम्

[ अवशिष्टांशः ]

अस्य लेखकोऽपि आयुर्वेद-मर्मज्ञो विविधपुस्तकानां लेखकः। प्रकाशकश्च—लोकोपयोगि-आयुर्वेदपुस्तकानां सफलः सुप्रसिद्धश्च प्रकाशको वैद्य उमेदीलालगुप्तः। तस्यैव च श्यामसुन्दर रसायनशाला, गायघाट, काशीतः प्रकाशितमिदं तत एवैकया मुद्रया लब्धुं शक्यते।

### आरोग्यलेखाञ्जलिः।

लेखकः—केदारनाथशर्मा पाठकः। प्रकाशकः—लेखाञ्जलिकार्यालयः, त्रिलोचन, काशी। मूल्यम्—सपादरूप्यकम्।

स्वल्पकायेऽपि पुस्तकेऽस्मिन् दैनिकोपयोगिनामाहारविहाराणां समुचिततर उपयोगो वर्णितः। आलू, करेला, आँवला, पपीता, मालिस (अभ्यङ्ग) ग्रीष्मऋतुचर्या, आयुर्वेदमें गङ्गा—इत्यादि शीर्षकाः, सर्वेषामप्युपयोगिनो विषयाः संक्षेपेण समुपवर्णिताः, प्रतिगृहं पठितानां स्त्री-पुरुषाणामुपयोगिनः सन्ति। लेखकस्य भिन्न-भिन्न-दैनिकपत्रेषु प्रकाशितानां पुरस्कृत-लेखानामयं संग्रहो महानुपकारको जनतायाः। पुस्तकस्यास्य प्रचुरतरं प्रचारमभिलषामः।

अत्र 'पपीता'-शीर्षके निबन्धे लेखकेन बंग भाषायामस्य 'बाताबी नीबू'-इति नामोल्लेखः कृतः। स तु भ्रमो लेखकस्य। वंगभाषायामस्य 'पीपे'-इति प्रसिद्धं नाम। तद्भ्रमसंस्करणे शोधनीयम्। मूल्यम् सपादमुद्राऽपि किञ्चिदधिकमेव प्रतीयते। तथापि पुस्तकमुपादेयम्।

——०——

Printed & Published by RamLal Shastri Shastri For
The Suprabhatam Ltd. BENARES.

त्रयोदशाब्दे ]   सौर-मार्ग-पौषयोः, २००४ वैक्रमाब्दाः   [ नवम-दशमसंख्ये

भारतवर्षस्य सर्वोत्कृष्टम्, काशीस्थ-विद्वत्समाजानुमोदितम्

संस्कृत-मासिक-पत्रम्




काशी—पण्डितसभा—मुखपत्रम्

तिमिरततिमुदस्यद्, भेदतारा विलुम्पद्, नयदधिसुरभाषाभाषि जागर्तिभावम्।
विबुध-विहग-वादैराह्वयद् भाग्य-भानुम् विलसतु भुवनेऽस्मिन् सर्वतः "सुप्रभातम्"

सम्पादकः—

श्रीकेदारनाथ शर्मा, सारस्वतः

व्यवस्थापकः—

रामलालशास्त्री, सारस्वतः

प्राप्तिस्थानम्—

सुप्रभात-कार्यालयः, वाराणसी

वार्षिकम्मूल्यम्-४)   [दिस.-जन. १९४६-४७]   छात्रेभ्यः पुस्तकालयेभ्यश्च-३)

# लेख-सूची





## ग्राहकेभ्यः सूचना—

यन्त्रालयद्वये मुद्रिते सुप्रभाते पृष्ठसंख्याया व्यत्ययो विद्यते १८१ पृष्ठतः १८८ पृष्ठपर्यन्तं मुद्रित पृष्ठसंख्या वस्तुतः १८४ तः १९१ विद्यते।

एवमेव सामयिक्यः सूक्तयोऽपि वारद्वयं भ्रमान्मुद्रिताः।

सुप्रभातसम्बन्धिन्य आवश्यक-सूचनाः, आवरण-पृष्ठस्य तृतीय-चतुर्थपृष्ठयोः समालोकनीयाः

सुप्रभातस्य प्रथमवर्ष-ग्राहकैः प्रथमवर्षीयाः सर्वा अपि संख्या ग्राह्याः। प्रायः सर्वेषां सविधे प्रेषिता एव दश-संख्याः। येषां सविधे काश्चन संख्या न गताः स्युस्तैः पत्रद्वारा कार्यालयः सूचनीयः

साम्प्रतं सुप्रभातं काशीस्थ—पण्डितसभायाः मुखपत्रं भविष्यतीति निश्चितं सभा-सञ्चालकैः सुप्रभात-सञ्चालकैश्च।

—व्यवस्थापकः।




संस्कृत—मासिक—पत्रम्

त्रयोदशाऽब्दे } सौर मार्गशीर्ष—पौषौ, २००३ विक्रमाब्दाः { नवमदशमसंख्ये

## मातृवन्दना



श्री अनन्तरामशास्त्री वेतालः, साहित्याचार्यः ।

—:❀:—

सुकृतिनमनुयान्ती चित्कला कापि सा श्री-
र्जयति यतिमनोऽपि प्रोन्मदत्वं नयन्ती ।
नियतिमतिलसन्ती स्वान्त-सन्ताप-चिन्ता-
प्रसरण-परिणाम-क्लेशदौःस्थ्यं हरन्ती ॥१॥

प्रसभमभिमतार्थान् पूरयन्ती वदान्या
नहि विलसति धन्या श्रीमति ! श्रीस्त्वदन्या ।
त्वमिव विजयसे त्वं भक्तकल्याणकर्त्री
प्रणतशरणदात्री दुःखसन्तापहर्त्री ॥ २ ॥

उचितमनुचितं वा श्रीमति ! श्रीश्चरन्तो
नयनपथमसन्तो यान्ति सभ्यान् हसन्तः ।
बत ! नियतममी तेऽनुग्रहैकावलम्बा-
ज्जगदयि ! जगदम्बाऽसभ्यभावं नयेयुः ॥३॥

कुशलमलघु तस्याऽऽभीलहृद् भावि किन्वा-
ऽभिमतफलविधात्री श्रीमति ! श्रीः ! प्रसन्ना ।
यदुपरि भवितासि त्वं, परां सोऽक्रमेण
श्रियमनुभविता ते प्राप्तयेऽलं श्रमेण ॥ ४ ॥

सुरनरमुनिवर्याऽऽचर्यमाणां सपर्यां
भगवति ! कलयन्ति ! त्वान्तु ये चिन्तयन्ति ।
सुखशतमिह नूनं स्वर्गलोकादनूनं
सततमनुभवन्ति श्रीः ! श्रियन्ते श्रयन्ति ॥ ५ ॥

जननि ! जनि-विनाश-क्लेश-नाशैकशीले !
यदि सपदि दयार्द्रवीक्षितो रक्षितोऽसौ ।
भवति भगवति ! त्वन्मायया वीतमायो,
ननु तदनु किमाप्यं नामुनेहाऽनवाप्यम् ? ॥६॥

प्रणमदमरनारी-पूज्यपादारविन्दे !
सकल-सुख-निदानं त्वामहं देवि ! वन्दे ।
त्वमपि यदि विमुञ्चेस्त्वत्पदाब्ज-प्रसन्नं
तदपि जननि ! दीनं को नु पश्येद् विपन्नम् ॥७॥

भगवति ! जगदम्बोत्तप्तजाम्बूनदाभा
स्फुटमसि दुरदृष्टस्फूर्जिताऽदृष्टलाभा ।
विपदमतिदुरन्तां त्वत्कृपा संहरन्ती
भुवि नियतमनन्तां सम्पदं सम्प्रसूते ॥ ८ ॥

अभय-वरदमुद्राऽम्भोज-युग्माङ्कहस्ते !
दुरित-दलनशीले ! श्रीमति ! श्रीर्नमस्ते ।
रचय सुखसमृद्धिं देहि मेऽभीष्टसिद्धिं
मयि भृशमवसीदत्याशु मातः ! प्रसीद ॥९॥

——

# प्राकृतिकस्वास्थ्यसंहिता ।

हरद्वारस्थ—गुरुकुलकांगड़ी—विश्वविद्यालये
प्राकृतिक—चिकित्सोपाध्यायेन
श्रीभवानीप्रसादेन प्रणीता ।

[ १५५ पृष्ठतः क्रमागता ]

श्रीलूईकूने—महाशयस्यात्मचरितम्

"अहं सविश्वासमिदं वदामि
सार्धं दृढत्वैः शपथैश्च साकम् ।
एतत् प्रयोगेण समस्तरोगाः
समूलनाशं विलयं प्रयान्ति ॥ ८१ ॥

यद्यपि सर्वगदानामुपशान्तिः, शक्यते मया कर्तुम् ।
किन्तु समस्ता रुग्णाः, स्वस्थीकर्त्तुं न्नरा न शक्यन्ते ॥८२॥
यः काये कृतनिलयो, व्याधिर्मन्दस्य जायते सुदृढम् ।
नैर्बल्यञ्च नितान्तं, जातश्चेत् तल्लयः कठिनः ॥ ८३ ॥
अस्त्येवं तदपि जनो, भजमानो मच्चिकित्सितं न चिराद् ।
हास्यति कष्टं स्वल्पं, धर्मः स्वल्पोऽपि सेवितोऽभयदः ॥
यदि रोगी निर्मूलो नो जातो जीवितश्च नो रोगी ।
तदपीतर-भैषज्यालाभ-विशेषानुभूति-भाग्भवति ॥८५॥
यद्द्वेषन्नमद्यत्वे चिकित्सका वै व्यवहरन्ति पाश्चात्याः ।
एलोपैथीत्याहुस्तस्यार्थश्चान्यलक्षणोत्तेजकता ॥ ८६ ॥
औषधमधिकं तत्र च, निषेव्यते गदो गत इवाभाति ।
येन तदानीं लाभः, किन्तु विकारैः प्रपूर्यते रुग्णः ॥८७॥
भवेदनिष्टं फलमौषधानां,रोगाऽभिभूतिर्न च तस्य नाशः ।
भूयोऽपि कालं समवाप्य तिष्टेत् ,संजायते ना विषपूर्णदेहः
आस्तां दूरे स्वास्थ्यं, किन्तु विमोकः कदापि नो व्याधेः ।
नैरोग्यस्य स्थाने, रोग-विवृद्धिं तनोति सरणी सा ॥८९॥
अस्तीतरा पद्धतिरिह, होमिओपैथी नाम तस्याश्च ।
यस्या अर्थश्चायं, समौषधिः स्यात् समस्य रोगस्य ॥९०॥
अतिविरलौषधिमात्रा, प्रयुज्यते रोगिणे भिषजा ।
एतावत्स्वल्पत्वं, रुग्णेनापि प्रतीयते न रसः ॥ ९१ ॥
हानिर्न्यूना च तया, पद्धत्या किन्तु नियमानाम् ।
भोजनपानादीनां व्यवस्थितिर्नैव लक्ष्यते तत्र ॥ ९२ ॥

दोषस्तु महानेषः, प्रकीर्तितो भेषजे विशेषज्ञैः ।
स्वल्पाप्यौषधमात्रा, न दोषरहितेति मन्मतिर्मन्दा ॥९३॥
नेमे दूषणरहिते, विद्येते पद्धती इति सुविज्ञैः ।
ह्वानप्रमुखैर्विहितः स्वाभाविकजलचिकित्सितोद्धाटः ॥
प्राचीन-मार्ग-जलभेषज-पद्धतौ तु,
स्नानानि वस्तय इह प्रचुरं प्रयुक्ताः ।
आडम्बराः पुनरिमे न विशेषलाभो,
रोगादिकारणमपीह न निश्चितञ्च ॥ ९५ ॥
तीर्णोऽस्मि काठिन्य-पयोधिमत्र,
प्रभोः प्रसादाद्विनिवारितश्च ।
आडम्बराः स्नान-विधौ य आसन् ,
गवेषितो रोग-निदान-मार्गः ॥ ९६ ॥

भूताश्च वर्तमानाश्च, ये रोगाः सन्ति भाविनः ।
मुखाकृति-निदानेन, शक्यन्ते गदितुं मया ॥ ९७ ॥
चिकित्सायाः नवा रीति-रेषा याविष्कृता मया ।
अनेकानां परीक्षाणामवसाने विनिश्चिता ॥ ९८ ॥
तस्याश्च मनने भूयान्, समयो यापितो मया ।
सिद्धान्तस्य ततश्चाऽस्य, स्थापनां कर्तुमुद्यतः ॥ ९९ ॥
कुत्सन्तु वा जुगुप्सन्तां, अधमं वा चिकित्सकम् ।
वदन्तु मां जनास्सर्वे, कामं सोढुं क्षमोस्म्यहम् ॥१००॥
कामं क्षिपन्तु मे लोष्टं निशम्य मम वक्तृताः ।
कटुवाक्य-प्रहारैर्मां, तुदन्त्वेतत्सहिष्यते ॥ १०१ ॥
सम्यक्तया विजानामि, ये मानव—हितैषिणः ।
ते पूर्वं परुषैर्वाक्यैस्तर्जिताश्च कदर्थिताः ॥ १०२ ॥
कथं स्यामपवादोऽहं-मल्पधीः प्राकृतो जनः
उत्पत्स्यते सधर्मा मे, तदर्थं क्रियते श्रमः ॥ १०३ ॥
न मयेदं कृतं सर्वं, स्वविद्या-बल-पौरुषैः
क ममैतादृशी शक्ति-र्यया शक्येत दुष्करम् ॥१०४॥
लोक—विधातुः कृपया,
नैसर्गिक-नवजलचिकित्सिताख्यमिदम् ।
विज्ञानं जगति मयाऽभिनवं
संस्थाप्यते परोपकाराय ॥ १०५ ॥"

कूने महोदयस्याय—मुपोद्धातोऽस्ति वर्णितः ।
तदुक्तरीत्या तत्स्पष्टं, नाऽस्ति कृत्रिमतेह यत् ॥१०६॥
अतीतं निजयाथार्थ्यं, ग्रहणाश्च तिरस्क्रियाः ।
लोकैः प्रपञ्चिताः सर्वाः, स्फुटमाह महाशयः ॥ १०७

अनेन तस्य सत्यत्वे, न कस्य प्रत्ययो भवेत् ।
जनानां वञ्चनं तस्या-ऽभिप्रायो न प्रतीयते ॥ १०८ ॥
न द्रव्योपार्जनं चेष्टं, विज्ञस्तस्य महात्मनः ।
तद्ग्रन्थाध्येतृचित्तेषु, श्रद्धा संजायते ततः ॥ १०९ ॥
श्रद्धा नाम जगत्यस्मि-न्नपूर्वा शक्ति-शालिनी ।
तत्प्रभावाद्दुरुद्धार्यं, समुद्धरति मानवः ॥ ११० ॥
तस्मात्सूक्तिरियं गीता, श्रद्धया स्वास्थ्यमाप्यते ।
आतुराणामतः श्रद्धा, चिकित्सा प्रथमा मता ॥ १११ ॥

## श्री लुईकूने महाभागस्य समाविष्कृत—जल-चिकित्सायाः स्वास्थ्याभिनव-विज्ञान-सिद्धान्तः

[ रोगैक्यं चिकित्सैक्यं च ]

——

चिरानुभवैः परीक्षणैश्च परीक्षणदक्षैः शर्मनदेश-भूषणभूतैः "श्रीलुई कूने"-महोदयैः परिज्ञातं सिद्धान्ततत्त्वं यद् रुग्णनीरुजोर्न देहाकार-साम्यम्; व्याधिग्रस्तानां देहाकारोऽन्यथैव लक्ष्यते सर्वथा भिद्यते च स्वस्थेभ्यः । रोगग्रस्ता एव कृशगात्रा नेतर इति बहवो मन्यन्ते, भ्रान्तिरियम् । स्थूलकायाः पीनाश्च प्रायो व्याधि-कवलीकृत-कलेवरा विलोक्यन्ते । स्थौल्यं हि स्वतो रोग-लक्षणम्, यथाह प्राचां विचक्षणो भगवांश्चरकः—

स्थौल्य—कार्श्ये वरं कार्श्यं, न तु स्थौल्यं कदाचन ।
यद्युभौ व्याधिरागच्छेत्स्थूलमेवातिपीडयेत् ॥ चरके

आपाततो न कामपि पीडामनुभवन्ति प्रायशः केचिज्जनाः । निर्बाधञ्च ते स्वदेह-व्यापार-निर्वहण-क्षमाः । परमेवं सत्यपि समुपलभ्यन्ते व्याधयस्तेषु कृतनिलयाः प्रायः ।

रोगाणामादिकारणञ्च तेषां देहेषु विद्यत एव । देहे दूषित-द्रव्यस्य विद्यमानता तद्वृद्धिश्च देहाकारं परिवर्तयति । सावधानञ्च निरीक्षितं लक्ष्यमाणमन्तरमिदं सुस्पष्टं प्रतीयते प्रत्येकरोगिगात्रे । मुखाकृतौ ग्रीवायाञ्च तद्विशेषतो लक्ष्यते । मुखग्रीवाकृतिं निरीक्ष्यैव निरीक्षणनिपुणेन सुगृहीतनाम्ना 'कूने' महोदयेन मुखाकृतिरोगनिदान-सिद्धान्ताः संस्थापिताः ।

रोगा एव ग्रीवामुखयोराकारं परिवर्तयन्ति । तेनैमावयवौ पूर्वस्वस्थावस्थामपेक्ष्य परिपूर्णौ मांसलौ च प्रतीयेते । उदरस्याधस्तात्, परस्ताच्च कटितटस्य स्थौल्यं कृतपदं भवति । एतच्च ग्रीवामुखयोः स्थौल्यमतिशेते, अत्रैव रोगमूलक-मलस्य सञ्चयत्वात् ।

मनुष्य-शरीरमनेकेषु मांसक्षुद्रखण्डेषु विभक्तं, यानि पेशय इति व्यादिश्यन्ते । पेशयो नाम परस्परं संश्लिष्टाः, रबर-द्रव्यवदाकृष्टाऽपि पूर्वस्थितिं भजन्ते । रोगोत्पादक-दूषित-द्रव्यं पेशीः प्राप्य, पुञ्जीभूतं तदधिष्ठितस्थानं प्रस्फाय पीवरीकरोति । यथा कश्चित् स्थितिस्थापके संकुचितायतने तदवकाशापेक्षया प्रचुर-पदार्थ-संस्थापनं तदाकृष्य तदाकारं वर्द्धयति, तथैव मानवदेहेष्वपि सञ्जाघटीति । मानवदेहनिर्माणञ्चोपचयापचय-गुणम् स्थितिस्थापकम्; तस्मात् शरीरं सुतरामपि दूषित-द्रव्यभारेण वृद्धिमङ्गीकरोति । तथाभूतं तत् दूषित-द्रव्य-संघातेन श्वयतितराम् । रोगाभिभूतस्य त्वगपि परिवर्तिता कदाचन श्यामलिमानमापद्यते ।

लुईकूने-महोदयस्य प्राकृतिक—चिकित्सालये प्रविष्टस्यैकस्य रोगिण उदाहरणमत्र समुपन्यस्यते । प्रवेशसमयेऽसौ जलोदरेण हृद्रोगेण च पर्यपीड्यत । प्रवेशावसर एव कूने-महाभागेन तस्यालोकचित्रमेकं सज्जीकारितम् । चिकित्सालये मासचतुष्टयं यावच्चिकित्स्यमानस्यास्य रोगिणः शरीरे विलक्षणं परिवर्तनं समजायत । मन्येऽसौ अपर एव पुरुषः संवृत्तः । सुखावहमारोग्यं च समधिगतवति तस्मिन् 'कूने' महाभागेनापरमपि आलोकचित्रं तस्य कारितम्, उभयोरपि चित्रयोर्मध्ये भूयान् प्रभेदस्तेन न्यभाल्यत । पूर्वं तस्य मुखे ग्रीवायां चानावश्यकं स्थौल्यमासीत् । मासचतुष्टयाभ्यन्तरे 'कूने'-महोदयेन तदीयं पीनत्वं सर्वथाऽपाकृतम्, सममेव च सर्वथा वद्धव्याधिरपि व्यलीयत ।

पीनत्वं नाम कीदृशम्? तदेतादृशं, यत् शरीरार्थं नापेक्ष्यते अनावश्यकञ्च, तद्वैदेशिकं बाह्यं च । तद्-सत्त्वेऽपि ततो न काचित्क्षतिः । तत्सत्त्वमेव व्याधि-

निदानम् । प्राकृतिकोचारैः कथञ्चिदपीदं बहिर्निस्सारयितुं शक्यते चेत्तेन च देहं नैसर्गिकीमाकृतिमाप्नुयात्तदैवास्माभिः शरीरनैरोग्यमवगन्तव्यम् ।

देहेऽनपेक्षित-वस्तूनां प्रवेशो मार्गद्वयेन भवति, नासिकया मुखेन च । नासिकायां मुखे च द्वौ प्रहरिणौ प्रकृत्या संस्थापितौ, घ्राणं रसना च । परं च तौ न सर्वथा विश्वसनीयौ । सञ्जातलोभौ च स्वकार्य्यं यथोचितं न निर्वहतः । कदाचित्तु घोरं विश्वासघातं कुरुतः । यं कमप्युपयुक्तमनुपयुक्तं वा पदार्थमन्तः प्रवेशयतः । घ्राणं त्वीषद्विश्वासघातकपरं रसनात्वतितराम् दुर्वृत्ता । विविध-रस-रसन-लालसेयं देह-हानि-लाभं विस्मारयति । एवं च प्रायः सततमनुचितकर्मरता सा सदसद्विवेकवर्जिता वर्तते । मांसं, मद्यं, अहिफेनं भङ्गाश्चैवमादीनप्राकृतिकान् सर्वानप्यभक्ष्यान्निर्बाधमभ्यन्तरीकरोति । परिणामश्चातीव भयावहः । अपेक्षिताऽधिकानां जघन्यानामपि च निगरणेन तेषां पाचनार्थमामाशयस्य नियतावश्यकताऽतिरिक्तो बलव्ययोऽपेक्षामतिक्रम्यातिव्ययो वायं न द्वित्रानेव दिवसान्, अपितु प्रत्यहं प्रयुज्यते, तेनामाशयः कैश्चिदेवाऽहोभिः स्वकार्य्यनिर्वहणेऽक्षमो जायते ।

अतिभोजने जीर्णतामनापन्ने विकाराः वर्धन्ते । त एव विकाराः देहेनापेक्षित-विजातीय-द्रव्यरूपेणाविर्भूय रोगमुत्पादयन्ति । अमूर्विकाराः सञ्चिताः कदा कदा दशभिर्द्वादशैर्वा वर्षैरपि मनुष्यैः लेशतोऽपि ज्ञातुं न पार्यन्ते, परं वर्धमानास्ते यदा रोगरूपेण प्रपीडयन्ति, तदा तदार्ता जना भिषजां शरणं गच्छन्ति, तत्प्रतीकाराय च चेष्टन्ते । तदानीं सर्वे प्रयासाः विफलीभवन्ति । औषधप्रयोगेण रोगो हि कामं दम्येत, प्रायश्च दम्यत एव, परं मूलतो नोच्छिद्यते । कारणे हि विद्यमाने सति कार्यरूपः कथं स निर्मूलो भवेत् ?

अत्र यद्विविधरोगरूपेण विजातीयद्रव्यस्य विस्तरो विवर्तनं वा प्रतिपादितं एतद्दार्शनिकभाषायां विजातीयद्रव्य-विवर्तवादो व्यादिश्यते । विजातीयद्रव्य-संज्ञा च तस्य देहेनानङ्गीकरणात् सात्मीकरण-विगुणत्वाद्वा ।

धात्रा मानवदेहस्य रचनैतादृशी विहिता, यत् स देहः यथासंभवमनपेक्षितं विजातीयं वा द्रव्यं स्वाभ्यन्तरे न स्थापयति । तन्निसारणे च सदा सप्रयत्नो वर्तते । फुफ्फुसाभ्यां निःश्वासमलसंपृक्त-पवनरूपेण, पायुना विष्ठारूपेण, मूत्रपथा मूत्ररूपेण, त्वचा स्वेदरूपेण च स सदा विकारान् बहिर्निरस्यति, स्वस्थो नासिकया, मुखेन, नेत्राभ्यां कर्णाभ्याञ्चानपेक्षितद्रव्यनिरसने किंचिदपि शिथिलप्रयत्नो न भवति । अस्माकं देहाधिष्ठात्री प्रकृतिरस्मभ्यं नितरां दयार्द्रा । यदि सा तादृशी दयालुतान्न धारयेत्, तदैकेनैव दिनेन स्वदुष्कृतानां दुष्परिणामं प्राप्नुयाम । तस्मात्स्वशरीरं तत्सामर्थ्यातिरिक्तकार्ये न नियुञ्जीमहि, अयथाबलकार्य-भार-वहनेन तत् कतिपयैरेव दिवसैः स्वकार्यसाधनेऽसमर्थः संपद्येत ।

देहेनानपेक्षितो विजातीय-द्रव्यरूपो प्राचां मलसंज्ञको विकारो देहस्योदरप्रदेशेऽधोभागे कृतपदः संचीयते, तत्रैव च विक्षुभ्यति । कृपापरास्मद्देहाधिष्ठात्री प्रकृति नामा शक्तिर्विक्षुभ्यमानं तं विकारमपि बहिष्कर्तुमनवरतं क्रमते । गुदद्वारेण तस्य बहिः क्षेपोऽतिसारोऽभिधीयते । अतिसारेणानेन निरुपयोगिद्रव्यरूपविकार-विरहितो देहः स्वच्छतां लघुताञ्चापद्यते । परम्मलबन्धेन कोष्ठबद्धेन वा विकारो देहाभ्यन्तरे रुद्धश्चेत्तदा स संक्षुब्ध ऊर्ध्वस्थानमाधत्ते, तस्योर्ध्वाधो द्वयोरेव संसृत्योः सम्भवात् ।

अत्राभिनवमद्य-परिपूरित-काच-कुतुपस्य दृष्टान्तः समालोच्यताम् । कुतुपस्याधस्तले किमपि छिद्रं न विद्यते, येन मद्यमधः स्रुवेत् । तेन कुतुपगतस्य मद्यस्य विकृतांशाः कुतुपस्याधस्तले संचीयन्ते, ऋतुपरिवर्तनेन कार्यान्तरेण वा स्वकणान् शकलीकुर्वन्ति । तद्दशायाञ्च ते संक्षुब्धाः कुतुपस्योर्ध्वमुखं प्रतिधावन्ति । कुतुपस्य दृष्टान्तोऽयम्मानवदेहेऽपि पूर्णं संघटते । यदा मला देहान्नितरां न निस्सरन्ति-अधः शौचः शुद्धं न भवति, शकृदन्त्रेभ्यो यथेष्टं न निर्गच्छति, मूत्रञ्च यथानियमं न प्रस्रवति, रोमकूपावरोधाच्च गात्राणि सम्यङ् न स्विद्यन्ति, श्वासोच्छ्वास-क्रिया मन्दायते । एवं विकृतद्रव्याणि सामग्र्येण देहान्न निष्क्रामन्ति । तेनर्तुपरिवर्तनकाले शरदि वसन्ते वा, क्रोधशोकादिमानसवेगा-

धाताद्वा ते मलसंज्ञका विकृत-पदार्था उदरस्याधः प्रदेशे विक्षोभं प्राप्ता वाष्पाकारेणोर्ध्वगतिका जायन्ते, शिरश्च प्राप्य शिरोवेदनां जनयन्ति। एतेषां कणाः परस्परं सम्मर्दिताः संघृष्टाः देहाभ्यन्तरीयत्वचा कलाभिधयापि संघर्षन्ति। संघर्षणेनानेन देहे तापो जायते। अयमेव तापो जनसाधारणैर्ज्वरः संज्ञायते।

कुतुपे तु विकृतपदार्थस्य प्रसारणायाल्पावरोधो विद्यते, तत्र रिक्तावकाशस्य वर्तमानत्वात्; परं देहे न तादृशी दशा। देहस्याभ्यन्तरप्रदेशो अङ्गप्रत्यङ्गैः परिपूर्णः, तेन तस्य प्रत्येकावयवे रक्तसंचारान्तर्गतं विकृत द्रव्यमवरुध्यते। अतो यत्र तत्राङ्गेषु लब्धप्रसरमेतद्द्रव्यं निरुध्यमानं सङ्घर्षमुपयाति, संघर्षश्चायं तापस्य मात्रां वर्धयति यस्मिन् यस्मिन्नङ्गे विकृतद्रव्यस्य बलातिरेको वरीवृत्यते, तत्तदङ्गं रुज्यति। रुजनयानया क्रान्तमङ्गं कदा कदा क्षीयते विशीर्यते वा। विकृतद्रव्यस्य बलभरेणामाशयो वा हृदयं वा फुफ्फुसं वा किमप्यङ्गं व्यथ्यते। रोगाविर्भाव-भिन्न-भिन्न-स्थानान्यनुसृत्यैव कुष्ठामवात-सन्धिरुजा-हृदयव्यथा-विद्रधि-भगन्दर-गण्डमालादयो विविधा व्याधयो नाना-नामरूपैरभिधीयन्ते। विविध—भिधा ज्वरा अपि विकृतद्रव्योद्भूता एव। विकृतद्रव्यमेव सर्वेषां रोगाणामादिनिदानम्—

"सर्वेषामेव रोगाणां निदानं कुपिता मलाः"—इति प्राचां परम्पराप्राप्तोक्तिरपीममेव सर्वसम्मतं सिद्धान्तं समर्थयति। वस्तुतस्तु परब्रह्मवद्रोग एक एव। जगत्प्रपञ्चवद्विविधव्याधय एकस्य रोगस्यैव विवर्तः। साम्प्रतिकाः पाश्चात्य-चिकित्सका अणुकीटकेभ्यः प्रायशो रोगाणामुत्पत्तिं संक्रमणञ्चाभिमन्यन्ते। भ्रान्तिरियं सम्भ्रान्तानामपि तेषाम्। विक्षुब्धे विजातीयविकृत-द्रव्य एवाणुकीटकाः स्वयमेव समुत्पद्यन्ते। तादृग् द्रव्यं विनाणुकीटकानामाविर्भावः कुत्रापि न सम्भवः। मानवदेहेऽपि परःसहस्रा विविधप्रकारका अणुवीक्षणयन्त्रेण दृश्यमाना अणुकीटका विक्षुब्धविकृत-विजातीय-द्रव्य एव जायन्ते। यावच्च विकृतद्रव्यं मानवदेहान्न निरस्येत, तावदणुकीटकानामुत्पत्तिस्तत्र सम्भवत्येव, विकृतद्रव्यमेवाणुकीटकानां सम्भवस्याशङ्कास्थानम्। अणुकीटकानां जन्म महानर्थकरम्, तेषां देहे विद्यमानता बहुरोगावहेत्यस्माभिरपि स्वीक्रियते। विवादस्तु तेषामादिमूलत्वे। वयं विकृत-विजातीय-द्रव्यमेवादिनिदानमन्यामहे, देहाद्विकृत-द्रव्यस्य निरसनेनाणुकीटानामपि निरसनं स्यादेव; अतो विकृत-द्रव्यापाकरणमेव मानवानां नैरोग्यस्य निदानम्; नान्यत्।

मारकद्रव्यप्रयोगेनाणुकीटकानां प्रचलित-विध्वंसन विधिर्मूलोच्छेद-स्थाने शाखानां कर्तनमिव निरर्थक एव मारक-द्रव्येण तेषां हननं मानवानां नैरोग्यं कदापि नावहति, प्रत्युत मारक-द्रव्यप्रयोगोऽणुकीटकानां नाशेन सार्धं तेषां शरणस्थानं मानवदेहमपि क्षिणोति तद्दशायामणुकीटकानां जनको विकृत-द्रव्यन्तु देहेऽवृतं तिष्ठत्येव, मिथ्यौषधिप्रयोगैश्च दमितं व्याधीन्नवनवैर्नानारूपैः प्रादुर्भावयति। कारणाभावे कार्याभावः कुतः स्यात्

अस्त्यत्रैको दृष्टान्तो दृष्टिपथमायाति। यस्यां कक्ष्यायामवकरस्य संचयोऽस्ति, तस्यां कीटका नियतमेव जायेरन्। तेषां कीटकानां हननेन सा कक्ष्या कदापि निष्कीटका न भवेत्। वारम्वारं हन्यमाना अपि ते पुनः पुनरुत्पद्येरन्। तेषां कीटकानां समूलोन्मूलनोपायस्तु तस्याः कक्ष्यायाः सम्यक् संमार्जनेन सर्वतः स्वच्छीकरणमेव।

अणुकीटका एव व्याधीनामेकमात्रं कारणानि भवेयुश्चेत्तदा कस्मिन्नपि प्रदेशे जनपदविध्वंसिन्यां विषूचिका-मूषक-महामार्यां प्रसृतायां तत्रत्येषु सर्वेषु जनेषु तस्या निरपवादं संक्रमणं स्यात्, किन्तु न तथा दृश्यते। परं सहवासिनोऽपि बहवो जनास्तया संक्रान्ताः स्वस्थास्तिष्ठन्ति। तस्य कारणं तेषां देहानां विकृत-द्रव्य विराहित्यमेव।

विकार-विरहित-देहेषु महामार्यां अणुकीटका न संक्रामन्ति। क्वचित् संक्रान्ता अपि पोषणमप्राप्य स्वयमेव म्रियन्ते। एवन्तेषां लक्ष्यीभूता जना नैरोग्यं भजन्ते।

सिद्धान्तस्यास्य समर्थकोऽपरोऽपि दृष्टान्तोऽत्र प्रस्तूयते, उपदंशेन मूत्राघातेन [ पूयमेहेन ] लैङ्गिकरोगाभ्यां प्रपीडितानां नरनारीणां सहवास-संसक्ता [ मैथुने प्रवृत्ताः ] सर्वा नरनार्यस्ताभ्यां व्याधीभ्यां कवलीकृत-कलेवरा [ संक्रान्तरोगाः ] सर्वदा निरपवादं न दृग्गोचरीभवन्ति । अत्रापि विकृतद्रव्यस्य तासामापाततः स्वस्थ-प्रतीयमानानां नरनारीणां देहेषु प्रच्छन्नरूपेण विद्यमानता विरहितता वा तयोर्दुष्टसंसर्गज व्याध्योः यथाक्रमं संक्रमणस्य कारणम् ।

एतेन प्रतिपादनेनेदमनिर्भ्रान्तं सिद्धान्तितम्भवति यत्सर्वेषां रोगाणाम्मूलत ऐक्यम् । एष रोग-विवर्तवादो निगद्यते ।

रोगस्यैक्ये संस्थापिते सति तस्य चिकित्सैक्यं स्वयमेव सिध्यति । विकृत-विजातीय-द्रव्यस्य कारण-रूपे मूले विच्छिन्ने रोगरूपस्य वृक्षस्याविर्भावो निरस्त एव ।

"रोगैक्यं चिकित्सैक्यं" ( Unity of Disease and Unity of Luke )चेति सिद्धान्तद्वयं श्रीलूईकूने महामुनिनाविष्कृतस्याभिनवचिकित्साविज्ञानस्य वैशिष्ट्यम् । प्राकृतिक-जल-चिकित्सा-पद्धतौ स एव महानुभाव एतस्य सिद्धान्त-युग्मस्याद्याविष्कारको, मानवनिवहस्य च महोपकारको, महनीयामरकीर्तिश्चाचन्द्रदिवाकरौ । [ क्रमशः ]

—:—

# क्रोधावसान-व्यायोगः



लेखकः—

श्री वामाचरण भट्टाचार्यः, तर्काचार्यः, तर्कतीर्थः

[ अवशिष्टांशः ]

## ( द्वितीयदृश्यम् , कैलासाचलद्वारम् )

(प्रविश्य) गणपतिः-अहो भाग्यमहोभाग्य-मद्याहं द्वाररक्षकः पित्रोराज्ञामवज्ञाय नाहं यास्यामि कुत्रचित् ।

( प्रविश्येन्द्रकुवेरौ ) भो गणपते ! सत्यमभिहितं भवता, श्रुतमस्माभिः सर्वम्, किन्तु पन्था परित्यज्यताम्, वयन्तूमामहेश्वरयोर्दर्शनार्थं तदन्तिके यास्यामः ।

कुवेरः—गणपते ! अयन्तु देवराजः स्वयमत्र समुपस्थितः ।

गणपतिः—ब्रह्मा वा यदि वा विष्णुः
स्वयमागत्य मां वदेत् ।
न त्यक्ष्यामि तथापीमं द्वारं सारं वचो मम ।

इन्द्रः—मुण्डं घूर्णयताऽनेन वचसां रचना कृता ।
दूरे वृद्धायमानोऽयं बलान्निक्षिप्यतां त्वया ।

गणपतिः-तिष्ठ रे तिष्ठ तत्रैव नात्रागच्छ यथासुखम् ।
कालक्रमे शृगालोऽपि, हन्त सिंहायते वने ।

इन्द्रः—बालप्रलापवचनानलदग्धगात्र –
स्तुच्छीचकार भवतः सकलापराधम् ।
शैलात्मजासुत ! पुनर्यदि वाक्यमेकं
दुष्टं भवेत्तव तदा प्रहराम्यहं त्वाम् ॥

गणपतिः—रे मूढ़ देवनृपते ! त्यज गर्वमद्य-
स्वर्गं क्षिपामि जलधावतले त्वदीयम् ।
गुर्वङ्गनाहरणकारणकाघसंघम्
शीघ्रं निहत्य गतपापदिवं करोमि ।

इन्द्रः—आयाहि रे गजमुख ! प्रबलप्रतापः
स्वर्गाधिपस्तव यमः स्मर चेष्टदेवान् ।
छित्वा करेण तव दुष्ट ! सुदीर्घदन्तम्
देहावसानमसतोऽयमहं करिष्ये ॥

गणपतिः—आगच्छ तावत् ।

[ इत्युभौ कठोरमालिङ्गिताङ्गौ युद्धं कुरुतः ]

इन्द्रः—वृत्रासुरघ्नवज्रस्य धारणात् वज्रतां गताः
हस्तोऽयं गिरिजापुत्र ! त्वामद्य निहनिष्यति ।

गणपतिः-वृत्रासुरघ्नहन्ताऽयं गणेशः समुपस्थितः ।
तूर्णमिन्द्रवधं कृत्वा इन्द्रघ्नोऽयं भविष्यति ।

कुवेरः—देवराज ! किमिदानीं भवता क्रियते । स्मरणीयस्वर्गावस्थानां भवतामपरिणामदर्शित्वमयुक्तमिति मन्यते । गणपते ! भवताऽपि शान्तेन भूयताम्, अकारणविरोधस्तु सर्वधा परिहर्त्तव्यः ।

[ इत्युभौ युद्धात् वारयति ]

गणपतिः—कुवेरः ! किं कथयसि ?
अहंकार—मदोन्मत्तमवज्ञातगणेश्वरम् ।
दुर्वाक्यमात्रशस्त्रं त्वं मत्तः किं परिरक्षसि !

इन्द्रः–धनपते ! नाऽहं वारयितव्यः।

अतिचञ्चलबालको मया, कृतदर्पोऽपि समादृतः पुरा। अवधीरितगौरव ! स्वयं किमिदानीं महता न हन्यते ।

कुबेरः—( जनान्तिकम् ) सुरपते ! स्वकार्यमुद्धरेत् प्राज्ञ इतिन्यायेन विरमतु भवान्, । [प्रकाशं, गणपते ! क्षम्यतामयम्। इदानीं भगवतः शङ्करस्य समीपे अस्यापराधस्य विचारो भविष्यति। तत्रैव भवता सहास्माभिर्गम्यते।

गणपतिः—सत्यमुक्तं भवता। [ इन्द्रं प्रति ] आगच्छ रे दुरात्मन् ! इन्द्र ! तत्रैव तवापराधविचारो भविष्यति। शीघ्रमागच्छ।

कुबेरः—[ इन्द्रं प्रति ] सिद्धं नः समीहितम्, ।

[ इति सर्वे निष्क्रान्ताः ]

——❀——

## तृतीयदृश्यम्

———

कैलासाचलः

[प्रविशति अम्बिकया सह समासीनो भगवान् शंकरः]

शंकरः—देवि ! अम्बिके !

शरदि सकललोकः पूजयेत्त्वामशोकः
कृत-विविध-विनोदः सर्वथा शान्तनादः।
त्रिभुवनजनधात्री भुक्तिमुक्तिप्रदात्री
क्व कथय नवरात्रौ गच्छसि त्वं सुगात्रौ।

अम्बिका—शरणं मम नाथ ! निश्चितम्
त्वमसि प्रेममयो महेश्वरः।
स्मरणीयदिने त्वया यथा
कथनीयेयमहो करिष्यते।

शंकरः—तर्हि मेवाडराजकुलदेवतया सर्वतो गृहीतपूजया त्वया, सम्प्रति सूर्यवंशकुल-तिलकस्य शैलपुराधिपतेर्महाराजस्य शरत्समये भविष्यन्महामहोत्सव दर्शनार्थं तत्रैव शैलपुरं मया सार्द्धमवश्यं गन्तव्यम्। लक्ष्मी सरस्वती च पूर्वत एव तत्र विराजमानाऽसीत्। गणनाथकार्त्तिकावपि त्वया सार्द्धं तत्रैव यास्यतः। इत्येव समीचीनं मयाऽवगम्यते।

अम्बिका—यथाऽऽज्ञापयति भगवान्।

[ प्रविश्य ] गणपतिः—पितरौ ! युद्धापराधाविन्द्रकुबेरौ द्वारदेशे वर्त्तेते।

शंकरः—शीघ्रमत्र तौ समानीयेताम्।

गणपतिः—यथाज्ञापयति तातः।

[ गणपतिना सह प्रविश्येन्द्रकुबेरौ ]

कारागारेषु विश्वेषु व्यवस्था बन्धमोक्षयोः।
क्रियते येन तं वन्दे साम्बं शम्भुमहर्निशम्।

गणपतिः–इमावेव युद्धापराधौ भगवतः समीपे वर्त्तेते।

कुबेरः—भगवन्, नाहं युद्धापराधः; अपि तु युद्धविरोधी। मम त्वहिंसैव धर्मः।

शंकरः—भवतु तावदेवं। भो देवराज ! भवतः का कथा ?

इन्द्रः—स्वदेशस्वर्गराज्यस्य दुर्दशामवलोक्य सक्रोधस्यामनन्योपायस्य देव्या सह विराजमानस्य भगवतः संदर्शनार्थं समागतस्य मम द्वारदेशे गणपतिना पन्था तावदवरुद्धः।

शंकरः—गणपतिना तु ममाज्ञामनवज्ञाय साधु समनुष्ठितम्। ममानुज्ञालाभार्थमत्र नागत इत्येव तस्यापराधः। भवान्, खलु युद्धापराधः संवृत्तस्तदानीं किं करणीयमस्ति ?।

इन्द्रः—यथा भगवते रोचते।

शंकरः–वत्स ! गणनाथ ! समानापराधौ भवन्तौ। सुतरामिदानीं परस्परमित्रतैव विधेया।

गणपतिः—यथाह भगवान् तथाऽहं करिष्यामि।

इन्द्रः—भगवन् ! अपरमस्माकं क्रोधस्थानं [ यदित्यर्द्धोक्ते ]

शंकरः—विदितं मया सर्वम्, लक्ष्मी सरस्वती चान्तर्हिता स्वर्गात्। कीर्त्तिस्त्वद्यापि विश्रामं न लभते–इति स्वर्गराज्यस्य दुर्दशामवलोक्य सक्रोधेन भवता भूयते। क्रोधस्तु न करणीयो भवद्भ्यामपि शैलपुरे सार्द्धं गन्तव्यम्। तथा सति स्वर्गस्य शोभा पुनरेव समागमिष्यति। यत्र भगवती तत्रैवाऽहं वर्त्ते, यत्र च लक्ष्मीस्तत्रैवेन्द्रकुबेरावित्यव्यभिचारिणी तावदियं व्याप्तिरतएव गौरी-लक्ष्मीपूजन-समये इन्द्रकुबेरावपि पूजयन्ति। तथाच रमणीये सम्पादनीय-

महोत्सवे शैलपुरनगरेऽपि भवन्तौ पूजार्हौ अवश्यं भविष्यत इति मया निश्चीयते ।

इन्द्रः—तर्हीदानीं सर्वमेवास्माकं सुखकरं भवेत् ।

गणपतिः—( इन्द्रकुबेरयोर्हस्तान् धृत्वा ) भोः इन्द्रकुबेरौ ! दृश्यताम् ।

मिथ्यामिथ्येति सर्वं प्रलपति जनता
वक्ति च ब्रह्म सत्यम्,
किन्तु ब्रह्मात्मिकेऽयं सुरचित-
जगतामादिभूता प्रभूता ।
अन्येषामेवमेषा प्रकृतिपुरुषता-
माश्रयन्ती भवन्ती,
माता रक्षत्यशेषं विपदि
वरसुरानीश्वरी विश्ववन्द्या ।

कुबेरः—मातः कातरमद्य तारय हरप्राणाधिके ! साधिके !
तूर्णं पूर्णमनोरथं कुरुसुतं मामेकमज्ञानिनम् ।
उच्चैः क्रन्दितनन्दनम् स्वजननी क्रोड़े निधायाकुला
काळीनं चरणे न शान्तयति वा संत्यज्य कर्माऽखिलम् ॥

अपिच—

कलौ काले बालास्तव भवहरे मातरनिशम्
रुदन्तः सन्तस्ते चरण-कमले भान्ति मनुजाः ॥
न जानीमो देवा वयमिह भवत्तत्वमतुलम्,
तथापि त्वन्स्वस्यान्निजकरुणया पालितवतो ॥

इन्द्रः—समुद्रादुद्भूतं विपुल-भयदं भीषण-विषम्
निपीय प्रेम्ण यो हरति महतीं भीतिमतुलां ॥
अयं यो वा भस्मीकृतमनसिजो देव-शरणम्
नमस्यामीशं तं परमकरुणं साम्बगिरिशम् ।

अपिच—

त्वमादौ माता मे भवसि समुपास्या सुरगणै-
र्निहन्तुं वीराणां समधिकवलं दैत्यनिचयम् ।
स्मरेद् यो वा भक्तः परममृतं तावकपदम्
स देवो मर्त्यो वा जनति ! लभते मुक्तिमचिरम्

शंकरः—देवराज ! तथा धनपते ! भवतोः स्तुत्या सन्तुष्टा वयम् । भवतोः क्रोधावसानन्तु जातमतः परं किं भूयः प्रियं करिष्यामि ।

इन्द्र-कुबेरौ—भगवन् ! अतः परमपि प्रियमस्ति ? तथापीदमस्तु—

भूत्वा शतायुरिह लक्ष्मणसिंहभूपो
देव-द्विजप्रियतमोऽधिकरोतु लक्ष्मीम् ।
श्रीमान् सुखी सपरिवारगणोऽस्तु नित्यम्
साम्बेश्वरः सपदि रक्षतु सर्वविश्वम् ॥

——:——

## सामयिक्यः सूक्तयः

—❀—

सङ्कलयिता—श्रीत्रिनाथशास्त्री, साहित्य-दर्शनाचार्यः

स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ।
—भगवान् श्रीकृष्णः

उत्तमः सर्वधर्माणां हिन्दूधर्मोऽयमुच्यते ।
—महामान्यो मालवीयः

धर्मान्तरग्रहणात् आत्मघातः श्रेयान् ।
—महात्मा गान्धी

देहि मे रुधिरं, दास्यामि ते स्वतन्त्रताम् ।
—नेता-सुभाषचन्द्रः

चेतन्तु यवनाः सर्वे प्रस्तुता हिन्दवो वयम् ।
—जवाहरलाल नेहरू

प्रतिक्रिया हि खड्गस्य खड्गेनैव विधीयते ।
—बल्लभभाई पटेलः

हिन्दुसंस्कृतित एव वयं जयं लभेमहि ।
—राजेन्द्रः

मामनुस्मर युद्ध्य च ।
—गीता

———

# कीदृक् स्याद् राष्ट्रशिक्षणम् ?

म० म० पण्डितराज श्रीगोपालशास्त्री, दर्शनकेशरी

सम्प्रति भारतवर्षे स्वातन्त्र्यसूर्य्योदयेऽतिसन्निहिते, प्रशस्ते च राष्ट्राभ्युदयोषसि सर्वत्रैव भारतीयसमाजे जागर्तिलक्षणमुपलक्ष्यते। सर्वेऽपि जनाः प्रमादनिद्रां विहाय चेष्टमानाः सन्तः स्वस्वाभ्युदयार्थं महमहमिकया प्रवर्तमानाः समुद्यता एवावलोक्यन्ते। एतस्यैव युगस्य निर्देशो मनुना त्रेतायुगनाम्ना कृतो दरीदृश्यते। तथाहि—

कलिः शयानो भवति सञ्जिहानस्तु द्वापरः।
चेष्टमानस्त्रेता भवति, कृतं सम्पद्यते चरन्।

इत्येवं सर्वतः सर्वथा चेष्टमाने समुद्योगपरायणे साम्प्रतिकेऽस्मिन्त्रेतायुगे शिक्षापद्धतेः सर्वथा क्रान्तिकारि परिवर्तनमावश्यकम्प्रतिभाति।

यतो हि साम्प्रतिकी प्रवर्तमाना भारतीया शिक्षापद्धतिर्भारतोत्कर्षमसहमानैर्बृटिशवर्ग (गोरण्ड) समृद्धिसमेधकैर्मेकालेप्रभृतिभिः पाश्चात्यपण्डितैरेवेह भारते स्वशासनकार्य्यसञ्चालनमात्रफला भारतीयनवयुवक-चारित्र्यबल-विनाशिका शारीरिकबलह्रासकरी दास्यमनोवृत्तिसमुद्वेलिका सार्द्धशतद्वयवर्षतः सञ्चालिता विद्यते। यया पद्धत्या शिक्षिता दीक्षिता आधुनिका भारतीया विचारे वेषे च वैदेशिकाः, केवलमाकारे भारतीयाः, स्वालय एव परकीयाः, स्वकीयामेव प्राणभूतां भारतीय-संस्कृतिं हृदयेन विद्विषन्तः, स्वान् पूर्वजानुपहसन्तः, पाश्चात्यसंस्कृतिमनुकुर्वन्तः, सर्वत्रैव पाश्चात्यान्ताननुहरन्तः,

व्यवस्थितार्य्यमर्य्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो देशः प्रसीदति न सीदति॥

इति भारतीयशासन-पद्धति-प्रचारकाणां स्वपूर्वजानां समाजव्यवस्थामुपहसन्ति। अपरञ्च स्वयन्तु शिल्पकलादिशिक्षणमजानन्तो देशद्रव्यसमृद्धिकरं व्यवसायं व्यापारं वाऽकुर्वन्तः—

"उपादातार एवैते नैते भूतस्य भावकाः।"

इति विदुरोक्तां महाभारतोद्योगपर्वस्थाम् नीतिं सफलयन्तो लेखकानुवादककर्मादिना सेवावृत्त्यपरनामकेन व्यापारेण एकस्य भारतीयस्य पार्श्वे संस्थितं द्रव्यजातम् द्रव्यानुत्पादकस्यैवान्यस्य पार्श्वे प्रापयन्ति स्वयं वा उपाददते। न तु स्वयं किञ्चिन्नूतन-द्रव्योत्पत्तिं कर्तुमर्हन्ति। यतश्च भारतीया द्रव्यसमृद्धिर्विदेशतः समागतैर्द्रव्यनिचयैः सम्वर्द्धिता स्यादिति। यतो हि कृषि-प्रधानेऽस्मिन् भारते कृषि-कला-शिक्षायास्तथा-गोधनबहुलेऽत्र भारते गोविज्ञान-कलाया एवमेव—

"वार्तया संश्रितो देशो न वृत्तेर्भयमृच्छति"

इति वाणिज्य-व्यापारादि-स्वदेश-समृद्धि-समेधक-शिल्पकलादिशिक्षायाः सर्वतोऽभ्यर्हिताया देशरक्षक-प्रौढयुवकवृन्द-सम्पादिकाया—

"शस्त्रेण रक्षिते देशे शास्त्रचिन्ता प्रवर्तते"

सैन्यशिक्षायाः (क्षात्रधर्मशिक्षायाः) अपि सर्वथा अभाव एवास्ति। इत्येवं सर्वथा मानवोपयोगिन्याः शिक्षायास्तु साम्प्रतिकशिक्षा-पद्धतौ नास्ति कोऽपि प्रबन्ध इति शिक्षामर्मवेदिनो विद्वांसो विदन्ति एव।

अद्यत्वे केवलं दास्यवृत्तिप्रायाया जनतासु कलाह्रासिसमुद्दीपिकायाः केवलं पाश्चात्यभाषामात्रशिक्षणप्रधानायाः पुस्तकज्ञानगारायितायाः; किं बहुना; सर्वथाऽप्यनुपयुक्ताया एव शिक्षाया इहास्माकं देशे विद्यते प्रचारः।

इत्येवमाधुनिक्यां शिक्षापद्धतौ सर्वतो विदूषितायाम् सत्याम् कथं स्याद्देशस्याभ्युदय इति सर्वतः स्वातन्त्र्यप्रभातसमयेऽधुना मयाऽयं संक्षिप्तः प्रस्तावो विशिष्टविदुषां पुरतः प्रस्तूयते यत शिक्षापद्धतिराधुनिकी सर्वथा परिवर्तनीया। तत्र सर्वतः प्रथमं नगरे विद्यमानानां शिक्षासंस्थानां ततो दूरीकरणम् अत्यावश्यकम्। यतो हि वालानां कृते सर्वस्यैव दोषस्य आकरस्थानानि नगराणि सम्प्रति विद्यन्ते। सिनेमागृहं विद्यार्थिनां वालानां मनोमोहकं चाकचक्यसम्वलितं गार्हस्थ्यजीवनोपयोगि वस्तुजातम्, वेश्यालयो विलासवस्तुसङ्घापणादिकं च नगर एवाधुना सङ्घीभूय तिष्ठन्ति। विद्याप्राप्तिसाधनाय तु—

"अहेरिव जनाद्भीतो मिष्टान्नाच्च विषादिव ।
राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ।"

इत्यादय उपदेशाः शास्त्रेषु निबद्धा दृश्यन्ते ।

अन्यच्च—प्राचीनकाले यथाऽऽश्रमादिषु आचार्यान्तेवासित्वमासाद्यैव शिक्षाग्रहणप्रथा आसीत्; तथैवाधुनापि आश्रमेषु आचार्यान्तेवसन्त एव; न तु गृहे तिष्ठन्तः शरीरमनोवचसां पोषकरीं फलतः शारीरिकबलदां व्यायामादिना ( सैन्यकलाशिक्षणेन ) दार्शनिकज्ञानाधिभौतिकविज्ञानाभ्यां मानसिकबलदां व्याख्यानकलाशिक्षणेन च वाचनिकबलदां सुतरां त्रिविधोन्नतिकरीं शिक्षां सर्वे सर्वाश्च साम्प्रतं बाला बालिका लभेरन्निति संक्षिप्ताशयः ।

यथा च पूर्वं ब्राह्मण-शिक्षक-वर्गस्यैवाधीनः शिक्षाविभागः सर्वथा आसीत् तथैवाधुनापि साम्प्रतिक—शिक्षकवर्गाधीन एव तत्तत्प्रान्ते शिक्षाविभागः स्यात् । तत्तत्प्रान्ते पुरुषाः स्त्रियो वा केऽपि अक्षरज्ञानशून्या न स्युरिति शिक्षाविभागस्य प्रधानं कर्तव्यम् भवेत् ।

भारतीयसंस्कृतिसमनुकूला विद्याव्रतोभयस्नातकाः केवलविद्यास्नातकाः केवलव्रतस्नातका इत्येवं यथा त्रिविधाः स्नातका भवन्ति स्म प्राचीनकाले; तथैवाधुनापि सर्वत्रैव शिक्षाविभागे परीक्षायां तिस्रः श्रेण्यः स्युः । पुस्तकज्ञानेन सहैव येषां चारित्र्यबलं शरीरबलं वाचनिकबलं च प्रौढं स्यात्ते प्रथमश्रेण्याम् । ये च केवलं पुस्तकज्ञानशालिनस्ते द्वितीयश्रेण्याम् । ये हि केवलं चारित्र्यशारीरवाचिकबलशालिनः किन्तु पुस्तकज्ञानेऽनुत्तीर्णा अपि ते तृतीयश्रेण्यां तिष्ठेयुः । इत्येवं श्रेणिविभागः स्यान्न केवलं परीक्षायां पुस्तकज्ञानमात्रायैव प्रथमा द्वितीयेति श्रेणिः स्याद्यथाऽधुना सर्वत्रास्ति । सम्प्रति तु केवलं पुस्तकभारवाहिन एव स्नातका विद्यालयेभ्यो निःसरन्ति । येन न ते राष्ट्रोपयोगिनो भवन्ति, नापि स्वगार्हस्थ्यजीवनोपयोगिनो भवन्ति । केवलं पृथिव्या भारभूता दास्यवृत्तिं ( भृत्यतां ) समन्वेषयन्ति । इत्यतोऽतिद्रुतं परिष्कारोऽयं शिक्षाविभागीय-परीक्षायां कर्तव्यः शिक्षामन्त्रिभिस्तत्तत्प्रान्तीयैः ।

अपरञ्च—संसारस्य यात्रासञ्चालनाय पुरुषाः स्त्रियश्चेति भिन्न-प्रकृतिकम् आकर्षणविकर्षणात्मकम् वर्गद्वयम् विद्यते । तयोश्च शिक्षापि तत्तत्प्रकृत्यनुकूला भिन्नभिन्नापेक्ष्यते, नाधुनिकी; यथेयम् पाश्चात्यैर्भारत-संस्कृतिविनाशकैः प्रवर्तिता बालकबालिकयोः समानैव शिक्षापद्धतिः । सर्वेऽपि मर्मज्ञाः विद्वांसः साम्प्रतिक विद्यालयबालिकानां शिक्षाफलमुपभुज्य मस्तकोपरि हस्तं धृत्वा रुदन्ति । अपरेऽपि साधारणबुद्धयः पृथग्जनाः स्वकन्यानामिंग्लिशशिक्षादातारः पश्यन्ति यत् साम्प्रतिक्यो विद्यालयाद्विनिस्सृता वनिता रजककुक्कुरवन्नापि घट्टस्य नापि गृहस्योपयोगभाजो भवन्ति। केवलं स्वशरीरशृङ्गारमात्रपराः पाश्चात्योपानत्परिधानादिदोषग्रहणव्यापारा भवन्ति इति ।

एवञ्च—विद्यालयविभागे महाविद्यालयविभागे च छात्रैः सहैवोपवेश्य छात्रिकाणां शिक्षाप्रदानमपि भारतीय-संस्कृतिविदूषकः प्रकार इति संकेत एवाहमिह विषये वच्मि । कथञ्चिन्निम्नकक्षासु प्रारम्भिकपाठशालासु तु शिशु-शिशुकयोः स्यात्सहशिक्षा; परन्तु तत्रापि स्त्रियः शिक्षिकाः स्युः । मम तु प्रस्तावोऽस्ति यत् शिशुकक्षायाः शिक्षिकाः सर्वत्रैव नार्य एव भवेयुः । इत्येवं भारते सम्प्रति शिक्षापद्धतिः परिष्करणीया ।

यतश्च वानप्रस्थाश्रमगाः गृहीतावकाशाः शिक्षकाः पुरुषास्तथा शिक्षिता नार्यश्च, इमौ उभौ एव प्रावेशिक-शिक्षायाः सञ्चालकौ स्वतन्त्रभारते स्यातामिति । इत्येवं सामान्यतः सिद्धान्तो मयात्र विवृतः । विशेषप्रकारस्तु तत्तद्विशिष्टशिक्षाविज्ञानवेदिनां परिषदा निर्माणीयः—

"यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः ।
तथैव प्रतिपाल्योऽसौ यदा वशमुपागतः"

भारतीयनियमस्य प्रतिपालनमपि शिक्षापरिष्कारत एव स्यादिति इति तत्र मनाक् दिङ्मात्रमिहोपदिश्यते पन्थाः—

तथाहि—अष्टवर्षवयस्कयोरेव बालकबालिकयोरेकत्र पाठशालासु एकविधया च पाठनपद्धत्या यत्र

ग्रामनगरादीनामितिहासस्तेषामेव भूगोलज्ञानं, साधारणगणितज्ञानम्, स्वास्थ्येतिवृत्तम्, सामान्यतो मानवसम्पादनक्षमं धर्मज्ञानम्, शिल्पकलाज्ञानञ्चावश्यकम् स्यात्।

तदनन्तरन्तु बालानां बालिकानाञ्च पृथक् पृथक् विद्यालये, प्रकारे च शिक्षणं भवेत्। तत्र सर्वत्रैव तत्तत्प्रान्तीय-भाषया सह राष्ट्रभाषाया एव प्राधान्यं स्यात्। धर्म-भाषास्थाने संस्कृतभाषारवीभाषयोः सन्निवेशः स्यात् इंग्लिशभाषा तु सर्वत्रापि उपरितन-कक्षासु वैकल्पिकी स्यादिति। तत्र सर्वत्रैव भारतीय-संस्कृतिज्ञानाभिलाषिणां कृते संस्कृतभाषाशिक्षाऽनिवार्य्या स्यात् यद्यपि ते धर्मतो मोहम्मदीया वा स्युः खृष्टा वा स्युरिति। सैनिककला-शिक्षापि उपरितन-कक्षासु उभयोरपि नरनार्य्योः कृते अनिवार्य्या स्यात्। इत्येव संक्षेपेणैवेदानीं मयेह निवेदितम्। भारतवर्षमिदं जगद्गुरुपदं पूर्वमधिगतमासीदिति नास्ति विशिष्टविदुषामतिरोहितम्। ततश्च साम्प्रतम् वैदेशिक-शासनभारतो विमुक्तेऽस्मिन्भारते पुनरपि प्राचीनविज्ञानपरिष्कृताऽधुनिकविज्ञानशालिनी भारतीयशिक्षापद्धतिः परिष्करणीया, येन संस्कृतिभेद-प्रकृतिभेद-शिक्षायां सहैव विश्वमानवप्रकृति-सामञ्जस्यकरं भारतीयानां सात्विकं ज्ञानं चारित्र्यबलं शारीरबलं मानसिकञ्च स्वातन्त्र्यं सुरक्षितं स्यादिति। पाश्चात्यसरणिसञ्चालिता सार्द्धशतद्वयवर्षाववधितः प्रचलिता तु शिक्षा सर्वैरेवानुभूतफला जाताऽतः सावश्यं परिहातव्या। विधानपरिषदा यथा सम्प्रति भारतीयं विधानं निर्मीयते; तथैवाधुना स्वातन्त्र्य-शिक्षाविधानमपि आवश्यकम्। यतो हि ज्ञानाधीनमेवेदं जगतः सर्वमपि व्यवहारजातं संसरति इति।



# भारती सुरभारती!

लेखकः—श्रीजगदीशचन्द्रमिश्रः "सुयशाः"

उत्तिष्ठत संनह्यध्वमुदाराः केतुभिः सह।
सर्पा इतरजना रक्षांस्यमित्राननुधावत॥
अथर्व०—११-१०-१

अयिसुरभारतीप्रेयांसः, प्रेयांसो विद्वांसोऽन्तेवासिनश्च!

विदितमेवैतत्तत्रभवतां भवतां—यदिह सुरभारती सकले जगतीतले विशेषतो भगवताऽनुगृहीते भारतेवर्षे सर्वासां भाषाणां जननीति निखिलाऽऽस्तिकनास्तिकनिकरेणाभ्युपगम्यते। किम्बहुना, कविकुलगुरुभिः कालिदासप्रभृतिभिरपि सर्वाः सूक्तयोऽनयैव भाषयोपनिबद्धा मदयन्ति मनीषिजनानां मनांसीति। किमुत सर्ववेदाः सर्वाः स्मृतयः पुराणोपपुराणानि च सकलान्यस्यामेव सुरभारत्यां विशदतया प्रणीतानि चकासति। यादृशो ज्ञानराशिरस्यां भाषायां संगृहीतो तथा नान्यस्यां कस्याञ्चन भाषायाम् इति सर्व एव निष्पक्षाः समाचक्षते। इमाममरगिरं प्राणेभ्योऽपि गरीयसीं समाकलय्य बुधजनास्तदन्तेवासिनश्चाधिति-बोधाचरणप्रचारणैस्समुन्नये चाहर्निशं प्रयतन्ते। तां देवगिरं मृतभाषेति ( Dead Language ) व्यपदिशन्तो नव्यशिक्षादीक्षिताः निन्दन्तीति। अहो! पराकाष्ठा तेषां साहसस्य यत्ते स्वयमनधीतशास्त्राः सुरभारतीशास्त्रमधिक्षिपन्ति, समुत्सहन्ते च तदन्यथयितुमिति वाढं कालस्यैवैष महिमा।

किञ्च तत्रेदं कारणं स्पष्टतयैव प्रतिभाति, यत्खलु नाये सदाचारे गोरण्डभाषाधने राजकीयाधिकारे, उच्चकुलोत्पन्नाः भूसुरा अपि वेदाभ्यासं विहाय चापहाय तदाचारं शैशवादेव पाश्चात्यविद्यामन्दिरेषु प्रविशन्तीति सम्पन्नतद्विधकौशलास्ते पश्चात्स्वपूर्वजाऽऽचारान्, लेशतोऽपि नानुसरन्ति; प्रत्युत प्राचीनाचार-

शालिनो लोकानुपहसन्ति निन्दन्ति च। किमधिकमिदानीं कांग्रेससंस्थापरिचालनतत्पराणां सज्जनानांमनस्यपीयं वार्त्ता द्रढीयसी बद्धमूला वर्त्तते यद्यावत् ब्राह्मणाः स्वकीयकुलाचारं होमयागादिकार्य्यं वर्णाश्रमव्यवस्थाञ्च नाऽत्यजन् तावद्भारतस्य पुनरुद्धारः नाजागरिष्यत्।

अस्यां दिशि सुधारकाणां ध्यानं विशेषेणाऽऽकृष्टं वर्त्तते। चिरकालावधि भारतोद्धारस्यानेकानुपायान्विधाय तत्रासाफल्यमधिगत्य च तैरयं नूतनोऽनुभवः सम्प्राप्तः, ते स्वैराचारमेव सर्वसाधनं मन्यन्ते, भक्ष्याभक्ष्यविवेकमूलोच्छेदमेव मोक्षं ब्रुवते, स्पृश्यास्पृश्यपरिहारमेवौदार्य्यं संकलयन्ति।

हन्त! इत्थं विपन्नं-सदाचारं रक्षितुं हिन्दुधर्मावलम्बिनस्सर्वे जनाः मिलित्वा, सर्ववर्णविवाह-सगोत्रविवाहादि—नियमपद्धतिमुच्चस्वरेण विरुद्धयाऽविरतं बद्धपरिकरास्तदर्थम्भवन्तु।

मया सम्भाव्यते यत्ते साम्प्रतमपि भ्रान्तास्सन्ति। परञ्चाशासे यद् द्रुतं गच्छति काले स्वयमेवोरीकरिष्यन्ति ते सनातनधर्मिणाम् सिद्धान्तमिति।

सूक्ष्मदृशा विचार्य्यालोच्यताम्, यावदत्राऽऽलोच्यताम् यावदत्रत्या जनता पूर्वजाचारान्न स्मरिष्यति तावद्भारतोद्धारोऽपि दुर्लभः। प्राच्यभारतीयत्वं चास्यामेव सुरभारत्यां निहितमास्ते। यावदत्र संस्कृतभाषा विकसिताऽऽसीत्तावदन्यान्यदेशीया अपि गायन्तिस्म।

यस्मात्कालात्संस्कृतं भारतीयानां हृदयाद्भ्रष्टं प्रायञ्जातम् तस्मादेव कालादद्यत्वे चाऽधिकतरा या दशा वर्त्तते सा कस्याऽपि तिरोहिता नास्ति अत एव भारतीयता-रक्षणार्थमत्रत्यैः सहयोगो विधेयः। सर्वत्र च संस्कृतोन्नतिकामुकाः संस्कृतपाठनप्रणालीम्प्रसारयन्तु। यद्यपि-संस्कृताध्यापनविकाशपद्धत्या शूद्रान्त्यजाः स्त्रीप्रभृतयश्चापि अध्येतुं सङ्गृहीता भवन्ति, तथापि नो नः क्षतिर्यतो वेदादिविषयकनिषेधजागरणेऽपि संस्कृताध्ययन—निराकरणे न किमपि प्रमाणमुपलभ्यमानमास्ते।

नहि सकलं वस्तुशिरोमणिज्ञानम् वेदभाषायामेव निहितमास्ते, वेदमूलकानि भूयांसि पुराणानि तादृशानि समुपलभ्यन्ते, यैः समेऽपि मनुजाः साधारणश्रमेण विरोधविरहेण विज्ञानरत्नमवाप्य भूतलेऽमूल्य जीवनममरायमाणं विधाय समुन्नताः भवितुमर्हन्ति।

अथच न कोऽपि पुमान्मातरं रिरक्षिषुः पितामहीं हन्तुकामः प्रभवति भूतले। तदा वयं कथमिह मातरं हिन्दीभाषां वर्धितुकामाः सुरभारतीमेव पितामहीं हन्तुमुद्यताः स्याम, अथाऽपि सज्जनाः स्वस्वदेशभाषाप्रचारणाऽयासतत्परमानसाः सहसंस्कृतत्याद्देशभाषां व्यापिकाम्प्रचारयन्त्वित्यनिशं कामये।

---

## सामयिक्यः सूक्तयः

—❀—

सङ्कलयिता—श्रीत्रिनाथशास्त्री, साहित्य-दर्शनाचार्यः

—

स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।
—भगवान् श्रीकृष्णः

उत्तमः सर्वधर्माणां हिन्दूधर्मोऽयमुच्यते।
—महामान्यो मालवीयः

धर्मान्तरग्रहणात् आत्मघातः श्रेयान्।
—महात्मागान्धी

देहि मे रुधिरं, दास्यामि ते स्वतन्त्रताम्
—नेता-सुभाषचन्द्रः

चेतन्तु यवनाः सर्वे प्रस्तुता हिन्दवो वयम्।
—जवाहरलाल नेहरू

प्रतिक्रिया हि खड्गस्य खड्गेनैव विधीयते।
—वल्लभभाई पटेलः

हिन्दुसंस्कृतित एव वयं जयं लभेमहि
—राजेन्द्रः

मामनुस्मर युद्धय च।
—गीता

---

# दर्शनानां विरोध-परिहारः

[ लेखकः—श्री पं० ढुण्ढिराजशास्त्री, न्यायाचार्य्यः ]

( अवशिष्टांशः )

तथोत्तरमीमांसापि भगवता बादरायणेन 'अथातो ब्रह्मजिज्ञासा' इत्यादिः, 'अनावृत्तिः शब्दात्' इत्यन्ता चतुरध्यायी शारीरकमीमांसा जीवब्रह्मैकत्व-साक्षात्कारहेतुश्रवणाख्यविचारप्रतिपादकान्न्यायानुपस-न्दर्शयन्ती प्रणीता। इदमेव शास्त्रं सर्वशास्त्रेषु मूर्धन्यं, शास्त्रान्तरञ्च सर्वमस्यैव शेषकल्पम्। तत्र प्रथमाऽध्याये सर्वेषामपि वेदान्तवाक्यानां साक्षात्परम्परया वा प्रत्यगभिन्नेऽद्वितीयब्रह्मणि तात्पर्य्यमिति समन्वयः प्रदर्शितः। द्वितीये च वेदान्तानामद्वये ब्रह्मणि समन्वये सिद्धे सति, तत्र सम्मानित-स्मृतितर्कादि-विरोधमाशङ्क्य तत्परिहारः क्रियत इति—अविरोधः प्रदर्शितः।

तृतीये तु साधनानि निरूपितानि। चतुर्थेऽध्याये सगुण-निर्गुणविद्ययोः फलविशेषनिर्णयञ्चक्रे मुनिः। तस्मादिदमेव मुमुक्षुभिरादरणीयम्।

एवं धर्म्मशास्त्राणि मनु-याज्ञवल्क्य-विष्णु-यमाङ्गिरो-वसिष्ठ-दक्ष-संवर्त्त-शातातप-पराशर-गौतम-शंख-लिखित—हारीतपस्तम्बोशनोव्यास—कात्यायन-बृहस्पति-प्रभृतिभिः सर्वज्ञैर्वेदानुसारेण स्मृतिनाम-धेयानि वर्णाश्रम-धर्मविशेषाणां कायिक-वाचिक-मानसिकानां विभागेन प्रतिपादकानि प्रणीतानि। तेषामपि अन्तःकरणशुद्धिद्वारा ज्ञानजनकत्वेन मोक्ष एव प्रयोजनम्। एवं व्यासमुनिना कृतस्य महाभारतस्य, वाल्मीकिना विरचितस्य च रामा-यणस्य धर्म्मशास्त्र एवाऽन्तर्भावो बोध्यः, इतिहासत्वेन प्रसिद्धत्वात्तयोः। एवं देवताऽऽराधननिमित्तानां मन्त्रशास्त्राणां धर्म्मशास्त्र एवाऽन्तर्भावो बोध्यः। देवता-राधनस्याऽन्तःकरणशुद्धिद्वारेण ज्ञानजनकतया मोक्ष एव प्रयोजनम्।

तथा सांख्ययोग-शास्त्रयोर्वैष्णव-शैव-तन्त्रयोश्च ध-र्म्मशास्त्रेऽन्तर्भावः प्रतिपत्तव्यः, उपासनारूपमानसिक-धर्म्मनिरूपणपरत्वात्तेषाम्। तत्र सांख्यशास्त्रे भगवता कपिलमुनिना "त्रिविधदुःखाऽत्यन्तनिवृत्तिरत्यन्त-पुरुषार्थ" इत्यादि-षडध्यायात्मकं प्रणीतम्। तत्र प्रथमेऽध्याये विषयान्, द्वितीये प्रधानकर्माणि, तृतीये वि-षयेभ्यो वैराग्यम्, चतुर्थे विरक्तानामाख्यायिकाः, पञ्चमे परपक्षनिर्जयं च निरूप्य; षष्ठे सर्वार्थान् समासेन निरूपयामास मुनिः। तथाचास्य प्रकृतिपुरु-षविवेकज्ञानं प्रयोजनम्। तस्य च त्वम्पदलक्ष्यार्थशो-धनद्वारेण तत्त्वमस्यादि-महावाक्य-जन्यज्ञाने उपयु-क्तत्वेन मोक्षः फलमिति।

तथा च भगवता शेषावतारेण पतञ्जलिना शारीरिकं रोगात्मकं मलं दूरीकर्त्तुं चिकित्साग्रन्थो विरचितः। अशुद्धशब्दोच्चारणात्मकं वाण्या मलं नाशयितुम् पाणिनीयव्याकरणस्य भाष्यं प्रणीतम्, तथा विक्षेपात्मकमन्तःकरणस्य मलं नाशयितुम् 'अथ योगानुशासनम्' इत्यादि पादचतुष्टयात्मकं योग-दर्शनमभाषि। तत्रादौ चित्तवृत्तिनिरोधात्मकं समा-धिवैराग्यात्मकं च तत्साधनं निरूप्य, द्वितीये विक्षिप्त-चित्तस्याऽपि समाधिसिद्ध्यर्थम् यमाद्यष्टावङ्गानि निरूप्य तृतीये योगविभूतीर्निरूप्य चतुर्थे कैवल्यञ्च निरूपयामास मुनिरिति।

तथा च योगदर्शनमपि विजातीयप्रत्ययनिरोध-द्वारेण निदिध्यासनसाधकतया मोक्षफलकमेव मन्त-व्यम्। नच तथा सति कथं भगवता भाष्यकारेण शङ्कराचार्य्येण शारीरकभाष्ये योगदर्शनं खण्डित-मिति वाच्यम्, तदीयविरुद्धव्याख्याया एव खण्डित-त्वात्। तथा नारदमुनिप्रणीतस्य पञ्चरात्रनामधेयस्य

तन्त्रस्याऽप्यन्तःकरणस्थैर्य्यजनकतया ज्ञानद्वारा मोक्ष एव पर्य्यवसानम्। तत्र वासुदेवेऽन्तःकरणस्य स्थापनायाः प्रतिपादनात्। तथा पशुपतिप्रणीत-पाशुपततन्त्रे पशुपत्याराधनप्रकारो वर्णितोऽस्ति। तस्यापि चित्तनैश्चल्यद्वारेण मोक्षसाधनज्ञानमेव फलं बोध्यम्।

तथा यावन्तः शैवग्रन्थाः सन्ति, ते सर्वे पाशुपततन्त्राऽन्तर्भूता बोध्याः। तथा देवी-गणेश-दिनेशाद्युपासनाबोधकग्रन्थानामपि चित्तैकाग्र्यद्वारेण मोक्षसाधनं ज्ञानमेव फलम्। सर्वेषां धर्म्मशास्त्रेऽन्तर्भावश्च मन्तव्यः। परन्तु भगवत्युपासना-बोधक-प्रबन्धेषु द्वौ सम्प्रदायौ श्रूयेते, तत्रैको दक्षिणसम्प्रदायः, द्वितीयस्तु उत्तरसम्प्रदायः, यं वाममार्गं इत्याहुः। तथा दक्षिणसम्प्रदायानुसारेण भगवत्युपासनाबोधकानां ग्रन्थानां धर्म्मशास्त्रेऽन्तर्भावो बोध्यः।

उत्तरसम्प्रदायप्रतिपादकानां ग्रन्थानां कोऽन्तर्भाव इति तु महेश्वरो जानातु, यद्वा तदुपासका महानुभावा जानन्तु गोपनीयत्वात्तन्मार्गस्य। अथवा येन केनापि प्रकारेण चित्तैकाग्रतैव फलमिति ब्रूमः। एवमन्येषामपि काव्यादीनां यथासम्भवं काम-धर्म्मशास्त्रयोरन्तर्भावो बोध्यः।

यदुक्तं 'पुराणानां प्रयोजनं वदयत' इति, तदधुनोच्यते—यद्यपि पुराणानां सर्वेषां व्यासभगवानेवैकः कर्त्ता, तेन स्कन्दपुराणे शिवस्य स्वतन्त्रतादय ईश्वरधर्म्माः प्रतिपादिताः, प्रतिपादिताश्च परतन्त्रतादयो जीवधर्म्मा अन्येषां देवानाम्। तेन चाऽत्र शिवस्य प्रशंसाऽवगम्यते, अवगम्यते च विष्ण्वादिदेवानां निन्दा।

तथा विष्णुपुराणे विष्णोरीश्वरधर्म्माः स्वतन्त्रतादयः प्रदर्शिताः, प्रदर्शिताश्च जीवधर्म्माः परतन्त्रतादयः शिवादीनाम्। तथा चाऽत्र विष्णोः स्तुतिरवबुध्यते, अवबुध्यते च शिवादीनां निन्दा। एवमन्येष्वपि पुराणेषु बोध्यम्। तथा च वर्णितरीत्या व्यासवाक्येषु विरोधः प्रतिभाति, यावद् व्यासाऽभिप्रायो नाऽवबुध्यते। तया सति सर्वं निर्वहेत्। तथाहि—देवी विष्णु-महेश-गणेश-दिनेशाः पञ्चेश्वरा भवन्ति। इति प्रकारेण नास्त्यन्यदेवानां निन्दां विधाय तदुपासनात्यागे तात्पर्य्यं व्यासमुनीनाम्। तथा सति सर्वेषामुपासनापरित्यागापत्तेः। अपितु विष्णुपुराणे शिवादिनिन्दा विष्णुस्तुत्यर्था भवन्ती विष्णूपासनायां विष्णूपासकं प्रवर्त्तयतु; नतु शिवाद्युपासनमपि निवर्त्तयति, इत्यत्र तात्पर्य्यं मुनीनाम्।

तथा शिवपुराणे विष्ण्वादिनिन्दा शिवस्तुत्यर्था भवन्ती शिवोपासनायामुपासकं प्रवर्त्तयतु, इत्यत्रैव तात्पर्य्यम्, नतु विष्ण्वाद्युपासनानिवृत्तावपि। सर्वोपासनालोपप्रसङ्गात्।

तथा च वेदेऽपि दृश्यते—'उदिते जुहोति,' 'अनुदिते जुहोति' इत्यादि इत्यादि। तत्र चोदयकालप्रकरणेऽनुदयकालस्य, अनुदयकालप्रकरणे चोदयकालस्य निन्दा श्रूयते, तद्यदि निन्दाया अन्यत्यागे तात्पर्य्यं स्यात्; तर्हि द्वयोरपि त्यागः स्यात्, द्वयोरपि निन्दितत्वात्। तन्न सम्भावयितुं शक्यम्; वेदाऽप्रामाण्यापत्तेः। तस्मात्परस्परस्तुत्यर्था परस्परनिन्देति प्रतिपत्तव्यम्। यद्यपि—एकस्य परमात्मनो नानानामरूपाणि न सम्भवन्ति, तथापि नामरूपवर्जितस्यैव परमात्मनो मायाकृत—कल्पितनामरूपाणि उपासनायां मन्दमतीनां प्रवृत्त्यर्थं कथितानि। तस्मादेकस्मिन्परमात्मनि माया कल्पितनामरूपाणि नाना सम्भवन्ति। इति रीत्या सर्वपुराणवाक्यानां विरोधो विरोधाऽभासताङ्गम्यते खलु।

अत्रेदं बोध्यम्—

विष्णुशिवगणेशदेवीदिवाकरादित आरभ्य यावन्ति प्रत्येकं नामानि भवन्ति, तानि सर्वाणि कारणब्रह्मणो नामानि, कार्य्यब्रह्मणश्च नामानि भवन्ति, ब्रह्मोङ्कारादिशब्दवत्। यथा मायाविशिष्टकारणं ब्रह्मपदेनोच्यते तथा हिरण्यगर्भोऽपि। इति रीत्या विष्णुशिव-गणेश-देवी-सूर्य्यादिपदानि कारणब्रह्म बोधयन्ति यथा; तथैव बोधयन्ति कार्य्यं ब्रह्म। इत्थम्भूतानि नारायण-नीलकण्ठ-विघ्नेश-भान्वादिपदानि अनर्थान्तराणि भवन्ति प्रसङ्गवशात्तरापरं ब्रह्म बोधयन्ति सैन्धवादिपदवत्।

तथाच वैष्णवपुराणे विष्णुनारायणादिपदानि कारण-ब्रह्मणो बोधकानि भवन्ति, भवन्ति च शिवगणे-

ह्मादिपदानि कार्य्यब्रह्मणो बोधकानि। तथाच वैष्णवग्रन्थेषु विष्णुप्रशंसायां शिवादिनिन्दायाश्च मुनेरयमाशयः—यत्कारणमेवोपास्यम्, न तु कार्य्यमिति। एवमन्यत्रापि बोध्यम्। तथा च विवक्षितवस्तु प्रतिपत्त्युपायतया विरुद्धनानाप्रकारा कर्मकाण्डोपासनाकाण्ड-ज्ञानकाण्डप्रदर्शनं वेदस्य कर्त्तुः परमात्मनो न दोषाय, किन्तु अलङ्काराय। उत्तममध्यमाऽधमभेदेनाऽधिकारिणां भिन्नत्वात्।

जीवेश्वर-जगद्रूपेषु पदार्थेष्वनादराद्विवक्षितवस्तुप्रतिपत्त्युपायात् यद् विरुद्धनानाप्रदर्शनमाचार्य्याणां शास्त्रकाराणां न दोषाय किं त्वलङ्काराय, प्रतिपत्तॄणां बुद्धिवैभववैचित्र्येण कस्यचित्प्रतिपत्तुः केनचित्प्रकारेण मोक्षसाधन-ब्रह्मात्मैकत्वज्ञानप्रापणात्।

तथा पुराणेषु विवक्षितवस्तुप्रतिपत्त्युपायतया विरुद्धनानाप्रकार-प्रदर्शनं न व्यासस्य दोषाय, किन्नाम अलङ्काराय, भिन्नरुचित्वाज्जीवानाम्। कस्मैचिदिदं रोचते, अन्यस्मैचिदन्यद्रोचत इत्यादि, प्राग्भवीयकर्मजन्यवासनाया वैचित्र्यात्। तदुक्तं सुरेश्वराचार्य्यैः—

"यया यया ननु भवेत् व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रियेह स्यात् साध्वी चानवस्थिता" ॥ इति।

इत्थं च—रीत्या सर्वेषां प्रस्थानानां ब्रह्मज्ञानद्वारा मोक्ष एव तात्पर्य्यम्। तस्मात्सर्वेषां कस्यचित्साक्षात्कस्यचित्परम्परया वा ज्ञानजनकत्वमिति सर्वमनवद्यम्॥

तस्मात्साधूक्तं—

"भक्ति ज्ञाने यत्र विष्णोर्यत्र वेदाः परा प्रमा।
मतानि तानि सर्वाणि जीवोद्धारस्य हेतवः" ॥

---

# गीर्वाणवाण्या गौरवम्

लेखकः—बलदेव उपाध्यायः एम० ए० साहित्याचार्यः

( अखिल-भारतीय देवभाषा-परिषदः सभापतिः, हिन्दूविश्वविद्यालये संस्कृतभाषाध्यापकश्च )

—:※:—

गीर्वाणवाणी खलु आर्यसंस्कृतेः वैदिकधर्मस्य च विश्वस्मिन् जगति विश्वबन्धुतायाः सन्देशवाहिनी वर्तते। अस्माकमतिप्राचीना संस्कृतिः देवभाषानिबद्धानि ग्रन्थरत्नान्येव आधारत्वेनाऽऽभिमत्य तिष्ठति। अस्याः सुसमृद्धायाः नितान्तं प्राचीनायाश्च भाषाया गुणगौरववर्णने गुणभाजो विद्वांसोऽपि तान्तिमवलम्बन्ते किमस्मादृशः स्वल्पाक्षरजुषः पृथग्जनाः। यस्यां परमकल्याणकारिज्ञानोपदेशकानां भगवतां वेदानामाविर्भावः समजनि, यस्यां च निखिल-ज्ञान-विज्ञान-प्रकाशकानां पुराणानां रचना विहिता, यस्यां च अभ्युदयनिःश्रेयससिद्धिनिष्पादकानां धर्मशास्त्राणां दर्शनग्रन्थानां च निर्मितिः समादृता, तस्या भाषामूर्धन्याया गीर्वाणवाण्या वर्णयन् गौरवं कः खलु विपश्चित् आत्मानमुपहासास्पदं नैव नयति।

संस्कृतभाषाऽस्माकं धर्मभाषेति कथयन्ति केचन साधारणा जनाः, परन्तु संस्कृतभाषा केवलं धर्मभाषेति कथनं तस्या गुणगौरवस्य खर्वीकरणं नाम। नात्र कश्चन सन्देहलेशोऽपि यत् इयमेवास्माकं सुरभारती आर्यभाषा सुप्राचीनतमा मातृस्थानीया च वर्तते। भारतेऽस्मिन् बृहत्तरे वर्षे याः साम्प्रतं समुल्लसन्ति विविधाः प्रान्तीया भाषाः तासां सर्वासां जननीयं देववाणीति नात्र कश्चन विवादः। न वा कापि विप्रतिपत्तिः भारतदेशनिवासिनो नानाभाषाभाषिणो जना अस्या एव प्रसादेन स्वं विचारविनिमयं विधातुं प्रभवन्ति उत्तरभारतीया जना द्रविडादिदक्षिणभाषाभाषिभिः पुरुषैः सह अनयैव गिरा व्यवहारं कर्तुं साम्प्रतमपि समर्था इति तीर्थयात्रारसिकानाम् प्रत्यक्षरूपेण नैव प्रतिभासते किम्?

अधुना भारतेतरदेशानामपि भाषा देवभाषामेव मूलत्वेनावलम्बते, तेषां साहित्यसमृद्धिः संस्कृत-साहित्यपरिशीलनेनैव समुल्लसिता इति प्रस्तावेऽवधानं दातुमर्हन्ति श्रीमन्तः। भारतस्य समीपवर्तिनः प्राच्यदिग्भवाः सुमात्रा-जावा-बालीति नाम्ना ख्याता भूप्रदेशा अधुना बृहत्तरभारतेत्यभिधानेनाभिधीयन्ते इतिहासविद्भिः पण्डितैः। अस्मात् देशात् प्रवासं प्रचुरं प्रयासञ्चांगीकृत्य भूदेवा ब्राह्मणा वैदिकभाषायाः, वैदिकधर्मस्य, वैदिकसंस्कृतेश्च प्रचारं प्रसारं चैतेषु देशेषु व्यदधुः इति जागर्ति इतिहासज्ञानामभिमतं प्रमाणैरुपोद्वलितं प्रामाणिकं मतम्। अत्रत्यासु भाषासु स्थानीयोऽपि प्रभावः समुपजृम्भते इति सत्यं, परन्तु आसां विविधानां भाषाणामभिवृद्धिः संस्कृत-भाषायाः सम्पर्केणैव संजातेति अस्माकीनं परिपुष्टं मतम्। एतत्तु आसां भाषाणां शब्दराशिसादृश्यानुशीलनेन नूनं प्रतीयते। मलय-प्रायोद्वीपे या भाषा व्यवह्रियते सा 'यलाई' भाषेति नाम्ना प्रसिद्धा, तस्याः अनेके शब्दाः संस्कृतसमा एव वर्तन्ते।

महाराजा, राजा, स्वामी, मन्त्री, पुत्री, पुत्रादयः शब्दाः संस्कृतवदेव तत्र व्यवह्रियन्ते। दोषा (दोषः), जीवा ( जीवः ), गुआ ( गुहा ), मेघा ( मेघः ), पण्डिता ( पण्डितः ), लक्शा ( लक्षं ), सुडारा ( सहोदरः ) इत्यादयो नाना शब्दा देववाणीमूल-मेवाश्रयन्ते इति नात्र विशेषतश्चोदनीयम्। साम्प्रतं जावेति नाम्ना प्रख्यातस्य द्वीपस्य प्राचीनमभिधानं 'यवद्वीप' इति। तत्रत्या भाषा कविभाषेति नाम्ना विख्याता। सा च भाषा संस्कृतमूलैवेति न परोक्षं विपश्चितां भाषाशास्त्रविदाम्। तस्यां समग्रं रामायणं महाभारतं च पद्यबद्धमधुनापि जागर्ति। यथा वयं भारते रामलीलाम् अर्जुनलीलां च दृग्गोचरीकृत्य आनन्दतुन्दिला भवामः, तथैव जावाद्वीपे तत्रत्या इमां लीलां सङ्गीतनाट्यरूपेणाभिनीतां साक्षात्कृत्य-साहित्यरसनिर्भराः कमप्यलौकिकमानन्दमनुभवन्तीति वार्ता किं विपश्चितां चेतांसि नैव चमत्करोति?

रामायणीयकथापुरुषो रामचन्द्रो महाभारतकथा-नायकाः पाण्डवाश्च तस्मिन्नेव देशे जनिमलभन्त इति दृढं विश्वसन्ति तन्निवासिनो जनाः। बालीद्वीपे तु साम्प्रतमपि वैदिकधर्मस्यैव साम्राज्यमिव सर्वतो वरीवर्तते। तत्र देशे पण्डितानामेव समतिशयः समादरो विलोक्यते। पण्डिता एव तत्र 'पदण्ड' शब्देन व्यपदिश्यन्ते। साम्प्रतमपि गायत्रीजपनपरा ब्राह्मणाः सर्वान् वैदिकानेव आचारान् कालवशात् काश्चिदेव विकृतिमादधानान् स्वयमाचरन्ति अन्यांश्च आचारयन्ति। धन्या एव एते महीयांसो ये संस्कृत-भाषानभिज्ञा अपि स्वकीयया मेधया एव धारयन्ति अनेकान् देववाणीनिबद्धान् धार्मिकान् ग्रन्थान्। अनेका आथर्वणिका उपनिषदः विमलानि भक्तिसरसानि स्तोत्राणि च बालीद्वीपे अद्यापि पण्डितानां जिह्वासु विराजन्ते। एषु सर्वेषु देशेषु संस्कृतभाषैव राजकीयभाषा आसीदित्यपि नैव विस्मरणीयम्। अत्रत्या राजानो वैदिकसभ्यतापरिपोषकाः सन्तः स्वकीयामाज्ञां राजानुशासनं च शिलापट्टेषु ताम्रखण्डेषु च संस्कृतभाषायामेव व्यरीरचन्। मलयद्वीपात् बोरनियोद्वीपात् चम्पादेशात् च बहुविधाः संस्कृतनिबद्धाः शिलालेखाः प्रकाशिता वर्तन्ते यत्र पाणिनीयपरिपाटीमनुसृत्य विशुद्धिमाप्ता शब्दयोजना विदुषां मनांस्यानन्दोल्लसितानि विधत्ते। अवलोकयन्तु श्रीमन्तः यवद्वीपस्थः पूर्णवर्मेति ख्यातो महीपालः ( ४५० ई० ) जम्बूप्रान्ते शिलायां विशुद्धेन स्रग्धरावृत्तेन निबद्धं स्वचरितमित्थं प्रस्तौति—

श्रीमान् दाता कृतज्ञो नरपतिरसमो यः पुरा तारुमायां
नाम्ना श्रीपूर्णवर्मा प्रचुररिपुशराभेद्यविख्यातवर्मा॥
तस्येदं पादपद्मद्वयमरिनगरोत्सादने नित्यदक्षम्
भक्तानां यन्नृपाणां भवति सुखकरं शल्यभूतं रिपूणाम्॥

मलयद्वीपे समुद्रगुप्तभूभुजः शिलालेखे तत्त्वज्ञानप्रचुरं पद्यमिदं समुपलभामहे—

अज्ञानाचीयते कर्म जन्मनः कर्म कारणम्।
ज्ञानान्न क्रियते कर्म कर्माभावान्न जायते॥

जावाद्वीपे गलाभिधानात् नगरात् समुपलभ्यमाने शिलालेखे ( ६५४ शाके ) सन्नाख्यस्य भूमिभर्तुस्तनयो राजा सञ्जयो भगवन्तं भवानीपतिं कमलापतिं च नितान्तं मञ्जुलताऽलंकृतया वाचा चारु स्तौति--

ऐश्वर्यातिशयोद्भवात् सुमहतामत्यद्भुतानां निधि-
स्त्यागैकान्तरतस्तनोति सततं यो विस्मयं योगिनाम् ।
योऽष्टाभिस्तनुभिर्जगत् करुणया पुष्णाति न स्वार्थतो
भूतेशः शशिखण्डभूषितजटः स त्र्यम्बकः पातु वः ॥
भोगेन्द्रोत्फणरत्नभित्तिपतितां दृष्ट्वात्मविम्बश्रियं
सभ्रूभङ्गकटाक्षया कुपितया दूरं श्रिया वीक्षितः ।
यो योगारुणलोचनोत्पलदलः शेतेऽम्बुशय्यातले
त्राणार्थं त्रिदशैः स्तुतः स भवतां देयात् श्रियं श्रीपतिः॥

अत्रोपन्यस्तं प्रमाणलवमपि प्रेक्ष्य गीर्वाणवाण्याः गुणगौरवमवगन्तुं नूनं पारयामो वयम् । सुरभारतीयं न केवलं भारतेऽस्मिन्नेव वर्षे राजभाषापदमलञ्चकार, अपि तु पूर्वनिर्दिष्टेषु एतेषूपनिवेशेष्वपि राजाभाषा पदं मण्डयामासेति ध्रुवं प्रमाणपरिपुष्टश्चैतिहासिकः सिद्धान्तः । इत्थं संस्कृतभाषा न केवलं भारतस्य विविधेषु प्रान्तेषु वसतो नानाभाषाभाषिणो विविध वेषधारिणो जनान् एकतासूत्रे सम्यग् बध्नाति, अपि तु एशियामहाद्वीपस्थितानां पुरुषाणां भारतीयैरस्माभिः साकमेकताजनने इयमेव नूनं जागर्ति ।

संस्कृतभाषाया लोकभाषात्वम् ।

इत्थं सर्वतो विद्योतमाने सुरभारत्या गुणगौरवे, केचन पण्डितमन्याः प्राच्यसंस्कृतिविद्वेषकाः प्रतीच्यसभ्यतोपासकाः साहसिका देववाणीं मृतभाषेति सर्वत्र समुद्घोषमाणा दरीदृश्यन्ते । परन्तु ; हन्त ! ते कथं एवंभूतां सर्वत्र प्रचुरप्रभावसम्पन्नां भाषामपवदन्तीति हेतुं नैव विद्मः । या खलु सर्वासामेव प्रान्तीयभाषाणां जननीरूपेण स्वीयं प्रभावं विस्तारयन्ती सुधैरपि जनैः सर्वत्रावलोक्यते, यस्य विरचितकाव्यामृतरसास्वादनेन विदग्धानां गोष्ठी सुधियां चेतश्चमत्करोति, सभासु तर्कबहुले शास्त्रार्थसन्देहनिर्णये साम्प्रतमपि तार्किकाः मीमांसकाः वैयाकरणाः वेदान्तिनश्च यस्यां स्वानभिप्रायान् प्रकाशयन्तो यां सर्वदैव व्यवहरन्ति सा मृता भाषेति कथनमतीव निःसारभूतं निरावलम्बं साहसमात्रं वस्तुस्थित्यनभिज्ञानां केषाञ्चन साहसिकानामेव शोभते ।

संस्कृतभाषाया लोकभाषात्वेऽपि केचन संदिहानाः अधुनापि भारतभूमिं विभूषयन्ति विद्वांसः । यूरोपीयपण्डितानां छात्रभूता एते पाश्चात्यशिक्षामण्डिताः निःसारं प्रमाणरहितं च जल्पन्तः कथं न लज्जन्ते ? किं तैर्नाधीतं व्याकरणं शास्त्रं, नावगता पाणिनीया अष्टाध्यायी, नावलोकितं च पातञ्जलं महाभाष्यं येन तेषां मुखात् इत्थं निरर्गला वाणी निःसरति । प्राचीनकाले देववाणी नूनं लोकवाणी आसीत् इति वयं प्रमाणपुरःसरं ब्रूमः । नास्मिन् प्रस्तावे कस्यापि सचेतसो विप्रतिपत्तिः । नाऽऽस्मिन् कथने कस्यचन विपश्चितो विमतिः । श्रीमतो बारमेकं प्रार्थयामो यदस्मिन् विषये महावैयाकरणस्य महर्षेः पाणिनेः महती कीर्तिरूपा प्रत्नेयं कृतिः विशदया विधा विवेचनीया । पाणिनिना व्याख्याता या भाषा वर्तते सा नूनं लोकभाषा एव इति विषये कस्यापि विवेचकस्य विदुषो हृदये सन्देहो नैव स्फुरति । 'दूराद् धूते च' इति पणिनिर्वदति । 'दूराह्वाने, प्रयुक्तस्य वाक्यस्य टेः प्लुतिं सूत्रमेतत् विधत्ते । 'प्रत्यभिवादेऽशूद्रे' इति पाणिनेः प्रसिद्धं सूत्रम् ; शूद्रविषयं परिहाय प्रत्यभिवादनकाले वाक्यस्य प्लुतिरनेन सूत्रेण विधीयते । पाणिनिकाले प्रान्तवशात् संस्कृतभाषायां केचन प्रभेदाः संजाता इति अनुशीलनकृतां न परोक्षम् । केचन प्रयोगाः प्राच्यदेशे व्यवहारमलभन्त, केचन प्रयोगाः उदीच्यदेशे प्रयुक्ता अभूवन् । एवं स्थिते सूत्राणामेतेषां समुचितं तात्पर्यमेव न साक्षात् क्रियते भाषाविद्भिः, यदि संस्कृतभाषा तस्मिन् काले लोकव्यवहारात् बहिष्कृता स्यात् । वार्तिककारः कात्यायनोऽपि तेषां शब्दानां साधुत्वं साधु प्रदर्शयति ये खलु व्यवह्रियमाणायां देववाण्यां पाणिनेरनन्तरं लोकैः समादृताः बभूवुः । पतञ्जलिकाले सुरभारत्या व्यावहारिकत्वं तु प्रमाणैः स्फुटैः समर्थितं विद्यते । इष्टिज्ञस्य सूतस्य सूत्रविदो वैयाकरणस्य मञ्जुलं सम्वादमधीत्य कस्य सचेतसः चेतश्चमत्कृतं नैवोपजायते । तस्मिन्

काले अनधीत्यापि व्याकरणशास्त्रं साधुशब्दप्रयोगं कुर्वाणा आसन् बहवो जनाः, यान् पतञ्जलिः शिष्टेति नाम्ना ख्यापयति । के पुनः शिष्टाः ? इति प्रश्नस्योत्तरं स्वयमेव भाष्यकारो बभाषे यत् एतस्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपाः अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारंगतास्तत्रभवन्तः शिष्टाः । एत एव भाषाप्रयोगे प्रमाणभूता बभूवुः । महाभाष्यावलोकेन सुरभारत्याः लोकभाषात्वं स्फुटं प्रतीयते। इत्थं व्यतिकरे कः खलु पक्षपातरहितो विद्वान् संस्कृतभाषायाः लोकभाषात्वमनुमन्तुं नोद्युक्तः स्यात् ।

आधुनिकी दशा

देवभाषाया आधुनिकी दशा तु नितान्तं विदुषां स्वान्तं तान्तं विधत्ते इति के न जानन्ति । आङ्गलभाषायाः सर्वतो विराजमानं साम्राज्यमेव एतद्दशाया निदानमिति ध्रुवं प्रतीमः । साम्प्रतं भारते वर्षे वैदेशिकानामेव साम्राज्यं वैदेशिकी एव भाषा राजभाषेति पदवीमारूढा । हा हन्त ! सुरभारत्याः साम्प्रतं हीनाऽवस्था यत् तस्या उपासका अपि तत्काव्यामृतास्वादरसिका अपि तन्माहात्म्यज्ञा अपि ब्राह्मणा विहाय तस्या आदरं विधूय तस्यां स्वीयानुरागं तिरस्कृत्य प्राचीनां परम्परां निराकृत्य च नैसर्गिकं तस्या गुणगौरवशीलनं ऐहिकसुखोपलब्धये वैदेशिकीमाँग्लभाषामेव स्वोदरदरीपूर्तये भूयो भूयोऽभ्यस्यन्ति । केचन प्रान्तीयभाषानुरागिणः स्वकीय मातृभाषाया जननीरूपिणीमपीमां कदर्थयन्ति कुत्सितैस्तर्कैरिति निवेदयतो मम नितरां दूयतेऽन्तरात्मा । अस्या दशायाः कृते वयं कमुपलभामः ? कस्योपरि दण्डं पातयामः ? अस्माकं शासको वैदेशिको वैदिक सभ्यतानभिज्ञः सुरभारतीविदूषक इति तु सर्वथा सत्यम् , परन्तु स एवात्र नापराध्यति । वैदिकसभ्यताभिमानिनामस्माकमेवायं महान् अपराधः—इति मदीया दृढतरा मतिः । यदि वयं साहसपुरस्सरमुद्योगमुरीकृत्य प्रयासमंगीकृत्य आलस्यं विहाय संस्कृतभाषाया गौरवमण्डने समुद्युक्ताः स्याम विश्वस्मिन् नास्त्येव कापि दुरवगाहापि शक्तिर्यास्मान् विफलमनोरथान् कर्तुं क्षणमपि क्षमा स्यात् ।

सुरभारत्याः नैसर्गिकं सारल्यं प्रासादिकत्वञ्चावलोक्य इममेव भारतवर्षस्य राष्ट्रभाषापदं मण्डयितुमर्हतीति जागर्ति अस्माकं दृढतरो विश्वासः । राष्ट्रभाषायां ये ये गुणा आवश्यकाः प्रतीयन्ते; ते ते देववाण्यामस्यां नोपलभ्यन्ते किम् ? साम्प्रतं भारते राष्ट्रभाषापदवीधारणाय प्रायः सकला एव प्रान्तीया भाषाः परस्परं विवदमाना विलोक्यन्ते। गौडदेशीयाः माधुरीधुरीणां निज बंगभाषामेव राष्ट्रभाषापदेऽभिषेक्तुमुद्यतन्ते यू० पी० प्रान्तीयाः सर्वत्र सुलभप्रचारां हिन्दी भाषामेव राष्ट्रभाषां कर्तुं निरन्तरमुत्सहन्ते, केऽपि राजनीतिज्ञाः हिन्दीभाषाया यावनी भाषायाश्च मिश्रणेन एकामभूतपूर्वां निजकल्पना प्रसूतां हिन्दुस्तानीति नाम्ना प्रख्यातां भाषां भारतस्य राष्ट्रभाषां निर्मातुं प्रभूतोद्योगाः सर्व देशे विराजन्ते । इत्थं व्यतिकरे को तु खलु साधीयान् पन्थाः स्यात् ? का खलु समुचिता पद्या भवेत् ? का खलु समाश्रयणीया सरणिः समुल्लसेत् ? यदनुशीलनेन वयं भारतीया देशस्य सार्वत्रिकीं समुन्नतिं समाधातुं प्रभवामः । संस्कृत वाणी एव राष्ट्रभाषापदे यदि अभिषिक्ता भवेत्तर्हि सर्वेषां विरोधानां कलहानां च नियमेनावसानं स्यात् ? नैव खपुष्पायमाणो मदीयः प्रस्तावः स्यात् । न खलु स्वप्नसाम्राज्यमिव मनोरथो मे विफलतामेष्यतीति ध्रुवं मदीये हृदये कोऽपि रूढमूलो विश्वासः । परन्तु तत्कृते एषाऽलस्य निद्रा अवश्यमेव विलोपनीया भविष्यति । "संघे शक्तिः कलौ युगे" इति तथ्यपूर्णोऽयं लौकिकानामाभाणकः । यदेको महतापि प्रयत्नेन नैव कर्तुं प्रभवति तत् जनसंघो लघुनोपायेन साधयितुं क्षमो इति तथ्यमिदं पण्डितानां पुरतश्च निवेदनीयं न भवेत् । न खलु कमनीया कल्पनैव सा, न वा स्म णीया स्वप्न-विजृम्भणेयं यया विलोक्यमानचेतसः मया प्रस्ताव एष प्रस्तूयते । वैदिकसभ्यताया उपासका भवादृशः वैदुषीधुरीणाः पण्डिता यदीमं प्रस्तावं कार्यरूपेण परिणन्तुं यतेरन् तर्हि अवश्यमे

वायमसाध्यकोटिं विहाय साध्यकोटौ प्रवेष्टुमर्हति। परन्तु वर्तते आवश्यकता धैर्यस्य। यदि प्राचुर्यं प्रयत्नस्य भवेत् आवेश उद्योगस्य च स्यात्, तर्हि प्रस्तावमिमं सम्भावना—विरहितं कलयामः। अस्य पूर्तये परिपाटीयमुररीकरणीयां भवेत्—

(१) राजनीत्यादिशास्त्रेषु लब्धव्यवहाराणां वैदेशिकानां शब्दानां कृते तदनुरूपाः सुरभारतीमयाः शब्दा निर्णेया भवेयुः।

(२) संस्कृतभाषया समाचारपत्राणां प्रवर्तनं नितान्तमावश्यकम्। साहित्यसौन्दर्य—विभूषितानां मासिकपत्राणामपि सम्पादनं प्रकाशनं च नितान्तमावश्यकम्।

(३) विश्वविद्यालयेषु संस्कृतभाषायाः पठनमवश्यमेव विधेयम्। अतएव संस्कृतसाहित्यम् नियत-विषयेषु अन्यतमम् भवतु-इति हेतोः-महान् यत्नो विधेयः।

(४) आधुनिकं विज्ञानविषयं पुरस्कृत्य सरलया भाषया ग्रन्था विरचनीयाः; येन आँग्ल-भाषानभिज्ञानां जनानां ज्ञानवृद्धिः शीघ्रतरं संजायेत्।

(५) संस्कृतभाषायाः सारल्यमेव पुरस्करणीयम्। सा काठिन्यमेव भजते इति लोकापवादः प्रयासे हेयः ?

(६) संस्कृत-कवीनां पण्डितानां च जन्मदिवसेषु समाजो विधेयः; यत्र मनोरमाणि संस्कृत नाटकानि अभिनयेयुः शैलूषकाः। अनेन पथा संस्कृत-काव्येषु लोकानामभिरुचिः शीघ्रमेवाभिवृद्धिमेष्यतीति ध्रुवमस्माकं विश्वासः।

अनया रीत्या यदि समुद्योगं महान्तं विधास्यामो वयं तर्हि अस्माकं देववाणी सर्वत्र देशे प्रचुरं प्रचारं प्राप्नुवाना राष्ट्रभाषापदे सत्यमेवाभिषिक्ता भवेत्।

इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारन्न दीप्यते॥



# मानव-जीवनम्

—:※:—

लेखकः—श्रीशोभाकान्त झा वेदान्ताचार्यः

———

श्रीमन्तः! लोकोपकार-निरतचेतसः! पदार्थतत्त्व-समीक्षाकारिणः!

इयम्मानवी रचना भगवतः कीदृशी सकलसमुत्कृष्टरचनाकक्षाध्यक्षपद-विलासिनी अशेषरचना चातुर्योपसंहार-सम्पादनी श्रेयसो विलसति भुवनेऽस्मिन्निति निरूपणं विभावयन्तु! अनयैव रचनया संसार धारकस्य भूतभावनस्य निखिलकृत्यम् प्रतिफलति।

अनयैव च स्वकीयमहिमानम्प्रथयति। अस्यामेव रचनायां विधातुः सकलभूतधातूपयोगः सार्थकतां नयति। इयमेव रचना मानवी स्वतः सर्वतोऽधिकशेमुषीजुट्परमेश्वरस्य निष्प्रतिबन्धम्प्रसाधयति; यत एनां रचनां समालोच्य समे वैज्ञानिकजनाः समुन्नतामपि स्वीयाम्प्रतिभामप्रशस्य परमेश्वरमलौकिकशक्तिसद्भाविताऽनन्तकोटिब्रह्माण्ड-सकलपदार्थाधिष्ठानं परं प्रशंसन्ते। अहो किमेतस्याः सौन्दर्य-द्रढिम-नियम-चातुर्यञ्च वर्णयामः ? यदा मानवकलेवरं सकलसौन्दर्यभरघरं समीक्षामहे तदा त्वरयैव मनसि तत्प्रशंसाश्रेणी समुद्भवति यत् एतदीय शिरसि; चक्षुषी मीनसन्निभे कथङ्कारमग्रे विलसन्ती चाक्षुषप्रत्यक्षमतिसम्पादयतः। तद्रक्षणदक्षे पुटके च कीदृशी चकाशतः। आयतललाटः कीदृशोऽतिपूर्णः सर्वविध भाग्यम्प्रकाशयति। भ्रूलते कथङ्कारं वर्णितामादधाते। नासिका शुकचञ्चुसन्निभा कीदृशं विविधविधगन्धतारतम्यम्प्रकटयति। कर्णौ च विलक्षणरूपधारिणौ गगनमध्यवर्तिशब्दराशिसमाकर्णनतत्परौ विविधविधशब्द—श्रवण—जातममन्दमानन्दं सञ्जनयतः। आननञ्च ह्रस्वदीर्घप्लुतोदात्तानुदात्त स्वरितादि-समुच्चारणप्रभेदविधायि कण्ठतालुदन्तमूर्धादिकञ्च संयुक्तं संरञ्जयति जनमनांसि। तन्मध्यवर्तिनी प्रेयसी जिह्वा कथङ्कारं स्वीयाऽऽवेगेन रसनेन्द्रियेण षड्विधरससाक्षात्कारमुपस्थापयति। बिम्बोष्ठौ च सुधारसं कियन्मात्रया समुद्वहतः। मस्तकचूर्णकुन्तला-

श्चन्द्राननम् प्रतिक्षणञ्चुम्बन्तो ज्ञानालयं कीदृशं स्तृणन्ति। श्मश्रुकचाः कीदृशमुद्भटयौवनमुद्द्योतयन्ते। भुजौ कमलदण्डायमानौ कीदृशवीरता-सीमन्तिनीमाश्लिष्यतः। हृदयङ्कीदृशञ्चाञ्चल्यमाश्रयति। पादादयः कथं स्वस्वकार्यं सम्पादयन्तोऽनवरतं शोभाधुर्यतामुद्वमन्तीति। आन्तरनाड्यो द्विसप्तति-सहस्र [७२०००] संख्यकाः प्रत्येकं स्वात्मानं सार्थकयन्तो विज्ञानवैभवशालिविद्वज्जनमनांसि सन्ततमाश्चर्यसमञ्चितानि रचयन्ति। अहो मानवकलवरमीदृशमवाप्य किं न मनुजश्चकार मेदिन्याम्? सकलासु कलासु कीदृशम्प्रशस्यमतिचातुर्यं देवानामपि दुर्लभम्प्रकटीचकार! स्वकीयेन प्रतिभाविष्कारनिचयेन अनित्यानपि शब्दान् नित्यान्, श्रोत्रसम्बन्धरहितानपि श्रोत्रसम्बन्धसहितान् विदधे। जलयानानि नानाविधानि विनिर्माय जलचरजन्तूनपि विजिग्ये। गगनतलव्यापि वायुयानेन देवानपि पुष्पकविमानविहारकारिणो धिक्चकार। हिमालयशिखरमपि समारुरोह। न केवलमवनिजलवायुतेजोगगनादिकं वशीकृत्य स्वकीयमात्मानं धन्यममन्यत-किन्तु योगमहिम्ना परमेश्वरमपि साक्षाच्चकार, स्वाभेदमापयामास च।

मानवप्रत्येकावयवरचनाऽऽवश्यकता प्रतिपाद्यतया कतिपय-पुस्तककलेवरधारिणी समुल्लसति, प्रोल्लसितुं वा प्रभवेदिति नाऽप्रत्यक्षं कस्यापि मनुजन्मनः। एतस्य प्रत्येकावयवः स्वस्वकार्ये परमावश्यके संलग्नो नियतं स्वमुद्देश्यमाविर्भावयति। किं तत्र वयं लिखेम यत्र शारीरिकविद्याविचक्षणा अपि जना न समाचष्टुम्प्रभवन्ति। किन्तु तथापि सकलपदार्थसार्थसाधनं तादृशचमत्कारकारि कलेवरमपूर्वं पुण्यलभ्यम्प्रदायाऽपि परमात्मा कियतीम् मानवान् प्रति प्राकृतिकनियमपरिपालन-परमाऽऽवश्यकतामाविश्चकार-इति सम्भाषितुमपि न शक्यामहे। यतः प्रत्येकमनुष्यः स्वकीयप्रत्येकावयवैरात्मीयेन्द्रियैश्च प्राकृतिकनियमाऽनुरूपमेवोपभोक्तुं समर्थः स्यात्। यतः मानवदेहेन सह प्राकृतिकनियमानामत्यन्तमन्तरङ्ग आस्ते सम्बन्धः। ये खलु इह भुवने मानवजन्मनि समवतीर्य कामादिवासना वशीकृतान्तःकरणाः स्वकीय—प्रत्येकशरीरावयवतदिन्द्रियनियतभोगसीमानमुल्लङ्घ्य अधिकमात्रया समुपभोक्तुं समीहन्ते; ते स्वशरीरेण सह कीदृशमत्याचारं सम्पादयन्ति निर्दया क्रूरचेतसः-इति किं तद्वर्णनीयम्। यद्यपि प्रकृतेर्महाराज्ञ्याः महान् दण्डस्तदानीमेव तस्मिन् कापुरुषे प्रपतति; किन्तु प्रवर्तनपि तादृशो दण्डः साधारणपुरुषैर्भोगान्धतमचक्षुभिर्न निभाल्यते। निभाल्यमानत्वे वा ते स्वीये चक्षुषी समुन्मीलयन्ति। तथापि यदा वेलाभगवत्यास्तदीयसहचर्या अवसरः समुदेति; तदैव प्रकृतिमहादण्डः स्वयं यान् सन् भयङ्करभूतः तन्नियम-भञ्जन-दक्षाणामात्मघातिमानवानामन्तिके समागत्य प्रतिसीरा-बहिष्कृतो नट इव नरीनृत्यते।

भूयांसः संस्कृतज्ञा आङ्ग्लभाषाज्ञा प्रेयांसो युवानस्तादृश्यो युवतयश्च सकलधर्मसाधनम्मानवकलेवरमवाप्यापि तत्प्रति नितान्तमन्याय-पद्धतिमनुतिष्ठन्तो दृश्यन्ते। तत्रेदमेव निदानं यत् प्रकृतिमहाराज्ञी स्वनियमभञ्जनजातकोपराशिर्न तैर्लक्षिता भवति। अतः किशोरावस्थासन्धिमाऽऽप्यैव निजकलेवरकान्तिप्रियं मनोहरद्युतिविधायिब्रह्मचर्यादिकमतिमात्रया अवहेल्य यथाकामं रमन्ते। ईश्वरीयनियमे प्राकृतिकनियमे तदा चात्मानं स्वतन्त्रं कामयन्ते। किन्तु सर्वमपि तदाचरणमेकान्तप्रदेशादिकृतमभिलक्षयन्ती प्रकृतिः क्रोधाऽऽवेशविशदा स्वनियमभङ्गरूपपापमात्रयाऽति समुद्दीप्ता सर्वतोभावेन तदीयमुखमण्डलेऽनुधावति, विप-क्षति च तदैव ते युवानस्तादृश्यो युवतयः पञ्चविंशद्वर्षदेशीयाः,तद्भयेन नितान्तम्म्लानाः कृशशरीराः स्वकं कलेवरं विहाय सूकरादियोनिमाश्रयन्त इव विजानते च यत्पापाचरणं तदानीं सुकरप्रायमासीत् अथच स्वमनसि निर्धारयन्ति; अहो क्षणिकसुखोपभोगाय यत् प्रकृतिमातृनियमानादरमत्यकार्ष्म सैव प्रकृतिरिदानीं विमाता सती मदीयकलेवरद्रुमे घुणस्य युक्त। तदानीन्ते स्वकीय—सुधारसरणिपरिपाटीमपि समादर्तुमिच्छन्ति किन्तु तदा केवलम् "सन्दीप्ते भवने हि कूपखननं प्रत्युद्यमः कीदृशः" इति न्याय एव स्मृतिपथ-पथिकायमानो भवति।

मानवजीवनशासनपदमलङ्कुर्वन्ती महाराज्ञी

प्रकृतिः स्वस्वभावतो न निर्दया, न वा सदया, किन्तु स्वकीयकर्तव्यपथपरायणा निजभुजबलेन सकलजन्तुशासनसूत्रम्प्रसारयति । यदि मनवास्तदीयाऽऽज्ञामासाद्याऽपि अपरिपालयन्तोऽस्मिन् संसारे वैषयिक विज्ञान-दुर्विदग्ध-मानसाः · यथाकाममुपभोक्तुमाकाङ्क्षन्ति तदा सत्वरमेव निखिलकष्ट-रुग्गत भाजोऽज्ज कान्तियुग्साम्राज्य———विरहिणोऽस्वाभाविकज्जीवनं संयाप्य कालपाशमासादयन्ति । अथ च तदीयाऽऽज्ञां शिरोधार्यां सम्पाद्य परिपाल्य च वैषयिकं पारमार्थिकं वा सुखं कामयन्ते तदा सा प्रकृतिः प्रसन्ना प्राप्तभोगावसरम् पुत्रमङ्के निधाय सकलानन्दवृन्दं समर्पयति, शिक्षयति च तत्साधन-सोपान-सरणिम् ।

भुवने सर्वविधसाम्राज्यमादधती प्रकृतिरेव तादृशी आस्ते यत् लेशतोऽप्यगर्वायमाना बालमारभ्य वृद्धं यावत् अकिञ्चनमारभ्य धनिनं यावत् विचक्षणमारभ्य निरक्षरं यावत् समानम्प्रशास्ति । नैतस्याः पुरो वावदूकस्य वावदूकता, विदुषो वैदुष्यं, धनिनो महाधनम्प्रचलति मनागपि । इयं हि स्वनियमघातकविपरीताचरणपरायणान् चक्रवर्तिचरणानपि तथैव दण्डयति यथा पांसुलपादमतिदरिद्र-हालिकम् । अहो एतादृशी प्रकृतिः मानवभोगाय प्रतिक्षणं यतमाना विलसति; किन्तु वयं स्वेच्छाचारिणः स्वतन्त्राः स्वजीवनद्रुमफलभोगभाग्यविरहिणो न तां प्रसादयितुमुद्यता भवामः । तत्प्रसादस्यायमेव पन्थाः श्रेयान् यत्-तदीय-नियमान् बाल्यमारभ्य प्रत्येकावस्थापरिपालनीयान् विभिन्नरूपेण संस्थितान् सम्यक् समाराध्य स्वकीयकर्मणि यथासाध्यम्प्रकृतिकामनेति । एतदीय—विहितनियम परिपालनेन स्वकीयजीवनद्रुमस्य संसारवृक्षस्य च सम्पत्स्यमाननिखिल—फलभोगभाजः, आनन्दसिन्धुमध्यविहारिणोऽवश्यं सम्पत्स्यामहे—इति समैरकामेन मन्यताम् । अन्यथा तन्नियमाऽपरिपालने स्वजीवने नानारोगरूप-कीटसंकुले सम्पत्स्यमाने दुःखदायि फलभोगमनुभूय पुनर्नारकीयातना एवानुभविष्याम इति विभाव्यताम् । यः कोऽपि पुमान् शारीरिकमात्मिकं वा सुखं कामयते वास्तवं तेनावश्यमेव प्रकृतिसाम्राज्यमराजकीयममन्यमानेन भाव्यम् ।

# संस्कृतमेवार्यजातेर्जीवनम्

आचार्यः ज्योतिः स्वरूपः, अमृतसर-गुरुकुलम्

इह खलु निखिलसंसारे या जातिर्जीवनं कामयते, तस्याः परमकर्तव्यमेतद् यत् स्वात्मानमेतादृक्-शिक्षादीक्षया विभूषयेत्, यया अन्या जातयः तस्यां स्वप्रभावं न संस्थापयेयुः, अपि तु अन्तर्लीना भवेयुः । तस्याश्च शिक्षा-स्वीकरणे स्वं गौरवं मन्येरन् । आर्य्यावर्त्तस्य प्राचीनेतिहासः संज्ञापयति, यदार्यजातिसम्पर्के या काचिज्जातिरायाता सा सभ्या शुद्धतरा च संभूता । अन्नतया मुनिवर्या राजानश्चान्य-देशेषु प्रेत्य राजनीति-अध्यात्मशास्त्र-आयुर्विज्ञान-प्रभृतिविषयान् शिक्षयन्तिस्म । या हि आर्यजातिः सप्तशतवर्षपर्य्यन्तं यवनैराक्रान्तापि न विनष्टा; सेदानीं लुप्तप्राया दरीदृश्यते । या जातिर्गोमातुः, गायत्र्याः, शिखासूत्रयोश्च परित्राणाय सर्वस्वम होतुमुद्यच्छतिस्म सेदानीं यवनैः यीशुभिः पराभूता ! आङ्ग्लताया अभिलाषुका हिन्दवः स्वयमेव गोमांसं भक्षयितुमारब्धाः । गायत्री गोपालानां गीत गीता । शिखासूत्रं च सप्तसमुद्राणां कलुषित-कलङ्कमवगत्य अनायासेनैवावतारितम् । सभ्यता परिवर्त्तिता, वेषः परिवर्त्तितः, भाजनं विदेशीयम्, मातृभाषा च मृतभाषा सम्पन्ना । सर्वं वै जातमन्यदीयम्, नावशिष्टं किमप्यस्मदीयम् । अतो बलाद् वावद्यते 'यदाङ्गलतायां रञ्जित-हिन्दूनां वशं न प्रचलितम्' अन्यथा कनचिदाविष्कृतभेषजेन शरीरचर्मापि श्वेतवर्णं कुर्वीरन् । कृत्वा चैतद् गौरांगमहाप्रभूणां पाद-पद्मरजः प्राप्तुं पूर्णाधिकारिणोऽभविष्यन् । एतत्सर्वमाश्चर्यं कथं जातम् ? हरिवर्षीयैः कीदृशी माया प्रसारिता ? मृत्युमासाश्च वयं संभावामः ।

महाराजमनुना अस्मिन् विषये युक्तमुक्तम्—

अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति ॥

इत्थमार्यजातिरपि प्रमादात्परस्परकलहाच्च स्वकीयां सर्वशक्तिं विनाश्य अन्यान् न्यायाधीशान् कृतवती ।

अंग्रेजजात्या एतादृगवसरेण सुलाभो लब्धः । भारतञ्च परतन्त्रतापाशे सन्नद्धं हरिवर्षदेशस्य शासनं चिरं स्थापयितुमवशेषसभ्यतानाशः परमकर्त्तव्यं मतम् । अतएव राजसभायां 'लार्डमैकाले' इति विख्यातनामा पाश्चात्यशिक्षाशास्त्री प्रस्तावमेकं प्रस्तुतवान् । यद्यदा पर्यन्तं यूयं भारतवासिन आङ्गलसभ्यतायां नारङ्क्ष्यथ तदापर्यन्तं ब्रिटिशराज्यमूलं सर्वथा रजःकणेषु संस्थितं मन्यध्वम् । अतोऽस्माभिः प्रयतनीयं यदार्य्यावर्त्तीया ईदृशाः सम्भवेयुः, येषां शरीरे भारतीयरुधिरं प्रवहेत्; किन्तु ते मनोभावेषु रीतिनीतिषु सर्वथा आङ्गलीया भवन्तु । अनेन प्रकारेण शासकवर्गेण स्वकीयं लक्ष्यं निर्माय, भृतीनां च लोभं प्रदाय २ आङ्गलभाषामध्येतुमुत्साहिता वयम् । कलाकौशलं चावहृत्य वयं दासताबन्धे आबद्धाः । अनेनैव हेतुना मनोवृत्तिरास्माकीना एतादृशी संजाता यया भृतिरेवास्माभिर्जीवनोद्देश्यं मतम् । वेदशास्त्राणि धर्मकर्माणि, सर्वाण्येवापसारितानि । शनैः शनैरेतावान्प्रभावः संजातः प्रभूणां यद् वयं सर्वभाषाणां जननीं देवानां वाचं संस्कृतभाषां मृतभाषेति वादेन स्वं गौरवं मन्यामहे । अधुना यदा हि भारतं स्वायत्तीकर्त्तुमान्दोलनं चेक्रीयते, देशस्य च बालो बालः स्वतन्त्रतायाः स्वप्नं लोलोक्यमानः स्वप्राणानाहोतुमुद्यतोऽस्ति; तथापि आङ्गलभाषाया विद्यालय-महाविद्यालयानां या संख्या वरीवृध्यते सा ज्ञापयति यद् वयमाङ्गलभाषां सर्वाङ्गपरिपूर्णामवगच्छामः । अनयैव च स्वकीयमार्थिक नैतिकसामाजिकोन्नतिमात्रमवबोधामः । किन्त्वेतस्य तात्पर्यमिदं नास्ति किम् यद् वयं भारतपरित्यजनस्य जयघोषं कुर्वाणा हरिवर्षीयान् आर्य्यावर्त्तान्निस्सार्यापि आङ्गलतामत्र चिरं स्थापयितुं वाञ्छामः ? किं कश्चिन्मतिमान् एतां वार्त्तां मंस्यते यदग्नौ हस्तप्रदानेन दाहेन विना वयं सुखं स्थास्यामः ? आङ्गलतामत्र संस्थाप्य दासतायाः पृथग् भविष्यामः ? नहि, नहि, कदापि नहि । एतस्मिन् विषये महात्मना गान्धिवर्येण साधूक्तम् यत्परतन्त्रताशृङ्खलेषु आङ्गलभाषाप्येका शृङ्खला वरीवृत्यते । एतस्याः परित्यागेन विना वयं न स्वान् तन्त्रयिष्यामः । अस्यां स्थित्यां किन्नास्माकीनं कर्त्तव्यमेतद् यद् वयं पाश्चात्यसभ्यतां शिक्षां च परिवर्ज्य स्वतन्त्रा भवितुं पूर्णस्वतन्त्रताञ्च संभावितुं प्राच्यशिक्षां संस्कृतशिक्षामध्यैमहि, स्वीकुर्वीमहि । किमविदितं तत्र भवतां महामान्यानां यत्पञ्चालप्रान्ते पं० गुरुदत्तवर्यो विख्यातनामा आङ्गलभाषायाः पूर्णविद्वान् संभूतः । तेनैकवारं प्रोक्तं यत् कियच्चारुतरमभविष्यद् यदहमाङ्गलभाषां पश्चिमीयविद्यां च विस्मृत्य केवलं संस्कृतभाषां गीर्वाणवाणीमवेदिष्यम् । यूरोपस्य सर्वेषां दार्शनिकानां वैज्ञानिकानाञ्च पुस्तकान्यधीत्य स महारथी निराशो भूत्वाऽन्ते इदमुदितवान् यदाधुनिकविज्ञानग्रन्थेषु कियन्तोऽपि गुणाः संभवेयुः; किन्तु ते जीवनसमस्यां साधुकर्तुं न शक्नुवन्ति । वेदा एव अखिलसंसारे एतादृशोऽपूर्वग्रन्था वेविद्यन्ते; ये मानवजीवनस्य सर्वाङ्गपरिपूर्णमुद्देश्यं वर्णयन्ति । मुनिवर-गुरुदत्तमहोदयैरष्टाध्यायीं वेदानां द्वारं मन्यमानैराङ्गलमहाविद्यालयस्याध्यापनं विहाय अष्टाध्यायी समध्येतुमारब्धा । इत्थमाङ्गलभाषाया उद्भटविद्वान् देववाण्या विद्यार्थी संबभूव । किमिदानीमपि भारतवर्षस्य नवयुवकाः श्रीगुरुदत्तवर्याणां पदचिह्नेषु प्रचलन्तः पाश्चात्यशिक्षां परित्यज्य पूर्वीयां शिक्षां न स्वीकरिष्यन्ति ? डार्विन-काण्ट—वेनादीनां पाश्चात्यविदुषां सिद्धान्तान् महर्षिकपिलकणादगौतमादीनां युक्तिषु संस्थाप्य २ सत्यासत्यं न निर्णेष्यन्ति ? इदानीमावश्यकता वरीवर्त्ति एतादृशानां कर्मवीराणां त्यागिनां, ये मानापमानं हानिलाभञ्चावमत्य ऋषिमुनीनां संस्मरणानि स्वहृदयपटलेषु संधारयेयुः । इदानीं यदा हि अस्मत्समक्षे आङ्गलभाषाया विस्तृतं साहित्यं विद्यते तदा संस्कृतभाषायाः शुद्धज्ञानविज्ञानमयकोषोऽपि अस्मन्मन आकर्षितुमस्तिष्कञ्च पूतीकर्त्तुं वरीवृतीति । अद्य पुनः पञ्चसहस्रवर्षेभ्यः पश्चाद् वर्णव्यवस्थायाश्चादर्शः गुरुकुल-शिक्षाप्रणाल्या च जातिनिर्माणस्य महदुद्देश्यमस्मत्प्रत्यक्षमस्ति । एषा कृपा एतद्युगस्य महासुधारकमहर्षिदयानन्दस्यैव वेदितव्या, येन विषं पीत्वा अस्मान् अमृतं पायितम्, घोरान्धकारपरिपूर्णमार्गाच्च निःसार्य विद्योतमानः प्रकाशः प्रदर्शितः । चेद् वयमधुनापि नावबोधामो महर्षेश्च अमृतसंदेशे ध्यानं न प्रदद्मः; तर्हि आर्य-

जातेरस्तित्वं जगतोऽपनेष्यति। यथा च अन्या जातयः पूर्तीकृत्य स्वात्मनि अन्तर्लीनाः कृताः, सैवायं जातिरन्यजातिषु संगत्य अपवित्रा महाऽपवित्रा च भविष्यति। अतोऽधुना आर्यजातेः (हिन्दूजातेः) प्रधानकर्त्तव्यमेतद् यत् तपस्यायाः प्रचण्डाग्नौ शुद्धीभूय देशस्य नेतृणां राष्ट्रीयसरकारस्य च समक्षे प्राच्यशिक्षादर्शमादर्शयेत्। न केवलं भारतवर्षमेव; अपि तु अखिलं विश्वं प्रेम शान्तिञ्च प्राप्नुयात्। परमाणुबमाख्यास्त्रेण संतप्तो वायुमण्डलो जनसमुदायश्च पुनः प्रफुल्य पूर्वजानामृषिमहर्षीणां गुणानुवादान् गेयाद् गेयात्।

# स्वर्गीयः-नारायणपतित्रिपाठिमहोदयः

श्रीगोपालशास्त्री, दर्शनकेशरी

२००३ वैक्रमाब्दे कार्तिकशुक्ल-त्रयोदश्यां काशीस्थ-धर्मनिष्ठ—विद्वांसः पं० नारायणपति त्रिपाठिनो विनश्वरं देहमपहाय कैलाशवासमन्वभवन्निति न केवलं काशीस्थ-विद्वत्समाजस्य; सरयूपारीण-ब्राह्मण-समाजस्य चापि महती क्षतिरजनि।

त्रिपाठिमहोदयस्य सफलं जन्म १९३० तमे विक्रमेऽब्दे वैदुष्य—वैभवादिसम्पन्ने प्रतिष्ठित-महाकुले पौषे मासि समभूत्। एतेषां पितृपादाः पं० रमापति त्रिपाठिनः सरयूपारीण-ब्राह्मण-समाजे प्रष्ठाः प्रेष्ठाश्चाभवन्। तेषामेव ज्येष्ठभ्रातरः पं० चन्द्रशेखरपति त्रिपाठिनः काशी-पण्डित-मण्डलस्याग्रगण्या आसन्। एतेषां वंशः काशीस्थ-विद्वत्समाजे, ब्राह्मणसमाजे विशेषतश्च सरयूपारीण-ब्राह्मण-समाजे, कुलपरम्परातः, विद्यावैभवेन, सदाचार-परिपालनेन, धनाधिक्येन च समादृतो गण्यते।

एतेषां पूर्वपुरुषाः पं० दिवाकरत्रिपाठिनः सम्राजोऽकबरस्य समये गोरखपुरात् वाराणस्यां विद्याध्ययनधिया समागमन्। ते स्वविद्या-प्रभावेण वाराणस्यामेव निवासभाजोऽभवन्। अस्मिन्नेव वंशे महापण्डिताः श्रीरामानन्दपतित्रिपाठिनः सर्वतन्त्रस्वतन्त्र पाण्डित्य-प्रभावेण सम्राजो दाराशिकोह-नृपतेरत्यन्त सम्मान-श्रद्धाभाजनभूता अभूवन्। स हि नरपतिस्तेभ्यो 'विविध-विद्या-चमत्कार-पारङ्गत' इति सम्मानार्हमुपाधिं प्रदाय स्वीयं विद्वज्जनानुरागं प्राचीकशत्। इदञ्च महापण्डितैस्तैः स्वीये 'विराड्रूपनिरूपण' नाम्नि ग्रन्थे-सम्प्रति प्रकाशिते-समुपन्यस्तं विद्यते। तैर्विरचितानि वेदान्तादिदर्शन-व्याकरण-ज्यौतिष-कर्मकाण्डेतिहास-साहित्यादि-सर्वविषयाणि मुद्रिता-मुद्रितानि, लघूनि बृहन्ति च ग्रन्थरत्नानि बहूनि सन्ति।

अनयोः पण्डितराज-नृपराजयोः परस्परं महान स्नेह-प्रकर्षआसीदिति पण्डितराजेन श्रीरामानन्दपति त्रिपाठिना दाराशिकोह-युवराजस्य दैवदुर्विपाकवर्णनतोऽवगम्यते। तदीयं पद्यद्वयं यथा—

"येनेयं श्रीदकाशी सकलकविजनोद्दामदान-प्रकाशैराकीर्णा धर्मवर्णामृतयुत-सलिलैः संस्कृता स्वर्णदी च।
आकूपारं क्षितीशो नतिविनयमतिर्यश्च कर्त्रेश्वरस्तद्
दाराशाहः स इन्दुर्विपदि कथमहो जीवनीयं हि विश्वम्
येनेयं धरणी समुद्र-वलया प्रत्यर्थि भूपालया-
ऽऽत्येकीकृत्य वशीकृता हि नितरां दिल्लीनृपेण स्वयम्।
रङ्गान्तक्षितिपेन सोऽपि बत! यत् कारागृहं प्रापितस्तस्माद्देवशणाम्बुजाक्षरमयीं मन्ये समर्थां लिपिम्॥"

किं बहुना। इत्येवं सर्वतः समृद्धिमत्तरे सरयू-

पारीण-ब्राह्मणकुले श्रीनारायणपतित्रिपाठिनो जन्माभवत्। दैवप्रकोपतो बाल्ये सप्तदशवर्षात्मके वयसि पितृवियोगः समजनि। तदानीमेव ज्येष्ठभ्रातृभिः श्रीविद्यापतित्रिपाठिभिर्गृहभारोऽपि तेषामेवोपरि विन्यस्तः। इत्येवं विविधान्तराय-निरुद्ध-सरस्वती-द्वारोऽपि स्वकुशाग्र-मेधा-समेधितोत्साहः स्वगृह एव प्राचीन पद्धत्या छात्रान पाठयन्नप्यासीत्। 'हिन्दूकालेज' नाम्नि महाविद्यालये प्रारम्भावस्थायामवैतनिकाध्यापककृत्यमप्यकार्षीत्। यद्यपि अस्य मेधाविनः कालो निजपैतृक—भूमिकरग्रहणादिनिमित्तेन काशीतो बहिः स्वप्रजाभिः सदैव व्यत्येतिस्म। तथाप्यस्य विद्याव्यासङ्गः प्रशस्यः स्तुत्यश्च दृश्यते स्म।

अनेन विदुषा "यावज्जीवमधीते विप्रः" इति शास्त्रनियमं परिपालयता विद्याव्यासङ्गे स्वपूर्वपुरुष निर्मित-संस्कृतग्रन्थानुवादे तथान्येषां संस्कृत-प्राचीन-ग्रन्थानां हिन्दी-भाषान्तरकरणे विविधस्तोत्र-स्फुटकाव्यादि-रचनायां कालो नीत इति तदीय-विविध-मुद्रितामुद्रितग्रन्थेभ्यः प्रतीयते।

एतस्य 'रस-सर्वस्व'—इत्यभिधानं प्रथमं ग्रन्थरत्नं विद्यते। यत्र रसविषयिणी समुचिततरा सम्पूर्णाऽपि सामग्री संगृहीता संस्कृतभाषामयी विद्यते। एतेन ग्रन्थरत्नेनास्य महाविदुषः साहित्य-विषयकोऽध्यवसायो वैदुष्य-प्रकर्षश्चातितरां विद्योतते। अन्यच्च ग्रन्थरत्नत्रयं वर्वर्ति। तत्रैकः स्कन्दपुराणान्तर्गतस्य काशीखण्डस्य हिन्दी-भाषानुवादः। अपरः काशीयात्रावर्णनात्मकः, इतरश्च कूर्मपुराणान्तर्गत-वाराणसी-माहात्म्यस्यानुवादः। एतद् ग्रन्थत्रयं मुम्बापुरीस्थ-वेंकटेश्वरयन्त्रालयतः प्रकाशितम्। तत्र काशीखण्डग्रन्थस्तु विशालकायो विद्यते। काशीयात्रात्मके ग्रन्थे च काशीस्थानां सर्वेषामपि देवानां विशेषतः स्थितिविवर्णनं विद्यते। के देवाः कुत्र सन्तीति सङ्केतोऽपि साधु विहितः।

अपरेऽप्यस्याध्यवसायिनो बुधवरस्य बहवोऽनुवादात्मका ग्रन्थाः सन्ति। तत्र महिम्नःस्तोत्रस्यानुवादस्तु परिशीलनीयो विद्यते। त्रिपाठिमहोदयस्तु पञ्चदेवोपासक आसीत्। तथापि शिवेऽस्यानुपमा भक्तिर्महिम्नःस्तोत्रस्यानुवादे जागर्तितराम्।

श्रीविश्वनाथशतकम्, श्रीगङ्गाशतकम्, श्रीकाशीशतकम्, भूकम्पकाव्यम्, भारतमातृमाला, शिवचतुर्दशशतीत्यादीनि मननीयानि ग्रन्थरत्नानि सन्ति। तत्र भूकम्पकाव्यम्, काशीशतकञ्च सुप्रभाते प्रकाशितं तत्पाठकैरालोकितमेव स्यात्। भारतमातृमाला हि देशरत्न-स्वर्गीय-शिवप्रसादगुप्त-संस्थापित-भारतमातृमन्दिरात्मकस्य, नूतनराष्ट्रियभावस्योपोद्बलकं स्फुटकाव्यं विद्यते, विना मूल्यञ्च वितीर्यते। अन्यानि पुस्तकानि यथार्थनामानि अप्रकाशितानि सन्ति। यथासमयं प्रकाशितानि भविष्यन्ति।

एवं वास्तविक-ब्राह्मणस्वभावस्य त्रिपाठिमहोदयस्य कालः, प्रतिदिनं पार्थिवपूजन-त्रिकालसन्ध्यानुष्ठान-नित्यतर्पण-गङ्गास्नानादि-साहजिक-ब्रह्मकर्मस्वेव व्यत्येतिस्म। इत्येवं हि सदाचार-परायणस्याडम्बररहित जीवनस्य तस्य महात्मनः सप्ततिवर्षाणि सानन्दं व्यत्यगुः।

त्रिपाठिमहोदयस्य कौलीन्येन, विद्याव्यसनितया, प्रतिभया, तपोनिष्ठया, सदाचारेणचावर्जित-हृदया विश्वविश्रुत-वैदुष्य-कीर्तयो महामहोपाध्यायाः स्वर्गीय शिवकुमारशास्त्रिणस्तृतीयविवाह-संस्कारावसरे स्वदुहितरं सादरं दत्तवन्तः।

त्रिपाठिमहोदयानां ज्येष्ठानुक्रमेण श्रीकाशीपति-श्रीकमलापति-श्रीकोशलपति-श्रीकरुणापतिरित्येते पञ्च तनयाः प्रख्यातयशसः स्व-स्व-कर्तव्य-व्यवहारे लब्ध कीर्तयो देशकालात्मविदः सन्ति, येषां सन्तानश्रेणयोऽपि सुयोग्या भावुकाश्च विद्यन्ते। इत्येवं पुत्र-पौत्रादि-सम्भृत-परिवारस्य सर्वतः सुसमृद्धाभ्युदय सम्पत्तिशालिनस्त्रिपाठिमहोदयस्येयं महाप्रस्थानयात्रा काशीस्थानां—विदुषामस्माकं सर्वदैव स्मृतिपथं स्थास्यतीति।

सुप्रभातेन सह तेषां घनिष्ठतरः सम्बन्ध आसीत्। एतस्योन्नतौ संरक्षणे, प्रचारे, लेखने परामर्शदाने च सर्वदा सन्नद्धा अतिष्ठन्। अस्य सञ्चालन-समिति-सदस्याश्चाभवन्-इति सुप्रभात-प्रणयिनामपि चेतसि तेषां चिरमभावः शून्यतामानेष्यति।

———

# आचार्य-गोवर्द्धनः

—:*:—

श्रीलीलाधर शर्म्मा पाण्डेयः, शास्त्री

वाचः पल्लवयत्युमापतिधरः, सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव, शरणः श्लाघ्यो दुरूहद्रुतेः।
शृङ्गारोत्तर-सत्प्रमेयरचनैराचार्यगोवर्द्धनस्पर्द्धी-
कोऽपि न विश्रुतः, श्रुतधरो धोयी कविक्ष्मापतिः॥
—जयदेवः (गीतगोविन्दे)।

विक्रमस्य-अष्टम-नवम-दशम-शतकेषु भारते वर्षे संस्कृत-कविताया: सर्वत्र प्रौढतरो मधुरतमश्च परिपाकः समजनि। अस्मिन् हि शतकत्रये कश्मीर-देशे आनन्दवर्द्धन-आचार्याभिनवगुप्त-मम्मट-प्रभृतय आलङ्कारिकाः, रत्नाकर-मुक्ताकण-शिवस्वामि-बिल्हण-क्षेमेन्द्र-शम्भु-दामोदरगुप्त-प्रभृतयो महाकवयः, गुर्जर-देशे माघाद्याः, अन्येच जैनमहाकवयः प्रादुरभूवन्। एवमेव बंगदेशे लक्ष्मणसेनप्रमुखाः नरपतयः, जयदेव-गोवर्द्धन-शरण-धोयी-प्रभृतयश्च महाकवयः प्रादुरभवन्।

अयं हि कालः सरस-संस्कृत-कविताया: यौवन-मासीत्। एतत्कालीनाः कविताः नितान्तमधुराः, मसृणाः, परिपक्वाः, प्रौढाः, रसप्रकर्ष-प्रचुराः, उत्कर्ष-सीमानमतिलङ्घ्य वर्तन्ते। केवलं तत्तद्देशीय-जल-वायु-प्रकृतिवशात् काव्यरचनारीतौ कश्चन भेद एव दृश्यते। काश्मीरीयेषु शिवविषयो राजविषयश्च रतिभावः समालक्ष्यते। गौर्जरेषु राजनीति-युद्ध-तत्तत्प्रकृतिवर्णनात्मको भावः प्राचुर्येणोपलभ्यते। बङ्गीयेषु मधुरतरस्य रसराजस्य शृङ्गारस्यैव प्रबला-भिरुचिर्दरीदृश्यते। राधामाधवयोर्विलास-वर्णनपरः श्रीजयदेवमहाकविः स्वीयं देवविषयकमपि रतिभावं शृङ्गाररस-तरङ्गिणी-प्रवाह एव प्रवाहयाञ्चक्रे।

बङ्गप्रान्ते राज्ञो लक्ष्मणसेनस्य सभायां कवीनां काव्यानाञ्च भूयान् समादर आसीत्। अस्य सभायां कवीनां विदुषाञ्च महान् समादर आसीत्। अस्य सभा भवनद्वारोपरि समुत्कीर्णे पाषाणे अयं श्लोकः समुपलभ्यते—

गोवर्द्धनश्च शरणो जयदेव उमापतिः।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च॥

लक्ष्मणसेन-सभासदा महाकविना जयदेवेन गीत गोविन्दकाव्यारम्भेऽपि "वाचः पल्लवत्ययं श्लोकः समुट्टङ्कितो वरीवर्त्ति; यत्रैतेषामेव कवीनां नामोल्लेखो दरीदृश्यते। आचार्य-गोवर्द्धनोऽपि सप्तशती-प्रारम्भे स्वाश्रयदातुर्लक्ष्मणसेनस्य प्रशंसां करोति। यथा—

सकलकलाः कल्पयितुं प्रभुः प्रबन्धस्य कुमुदबन्धोश्च।
'सेनकुलतिलक-भूपतिरेको राका-प्रदोषश्च॥

अत्रायं 'सेन'—कुलतिलक-भूपतिर्लक्ष्मणसेन एवेति नात्र संशयः।

अयञ्च सेनवंशो राज्ञां क्षत्रियाणां प्रसिद्धवंश इति तत्तत्प्रमाणैरवगम्यते। बूलरप्रभृतयः पाश्चात्यविद्वांसस्तु सेनकुलं प्रसिद्ध-कायस्थकुलमिति वदन्ति। केचन अम्बष्ठानां वैद्यानां वंगदेश-प्रसिद्धकुलमिति वदन्ति। परमिदं क्षत्रियकुलमेवेति नैकप्रमाणैर्निश्चितम्। पुनः कदाप्यस्य निर्णयं विधास्यामः।

विदुषां कल्पवृक्षोऽयं लक्ष्मणसेन-महीपतिर्विक्रम-नरपतेरेकादशशतकोत्तरार्द्धे समभूदिति गया-नगरे समुपलब्धात् शिलालेखादवगम्यते। तत्र ११७३ विक्र-माब्दस्योल्लेखो वर्त्तते। स एव गोवर्द्धनाचार्यस्यापि समय इति निश्चितम्।

आचार्य-गोवर्द्धनस्यैकल एव ग्रन्थ 'आर्यासप्तशती' नाम्ना समुपलभ्यते। अत्र सप्तशत-संख्यका आर्या विद्यन्ते। शृङ्गाररस-प्रधानोऽयं ग्रन्थः। शृङ्गाररस प्रधानेषु केषुचन काव्येषु हालकविकृता 'गाथासप्तशती' प्रथमा प्रधाना च विद्यते। सा च प्राकृतभाषा निबद्धा काव्यप्रकाश-ध्वन्यालोकादि-प्रधानालङ्कारग्रन्थेषु प्रचुर मुदाहृता च। तामेवादर्शीकृत्य महाकविना गोवर्द्ध-नेन संस्कृतभाषामयी आर्यासप्तशती प्रणीता। उक्तमेव महाकविना गोवर्द्धनेन—

वाणी प्राकृतसमुचित-रसा बलेनैव संस्कृतं नीता।
निम्नानुरूप-नीरा कलिन्दकन्येव गगनतलम्॥

गोवर्धनस्य च सप्तशतीमादर्शीकृत्य हिन्दीमहाकविना विहारीलालेन व्रजभाषामयी 'विहारी--सतसई' प्रणीता। तयोः शैली-भाव-विषयादिषु महत्साम्यं विद्यते।

हिन्दीभाषाया व्रज-साहित्ये विहारिकवेर्यथा सम्मान समादरश्च विद्यते, न तथा संस्कृत-साहित्ये गोबर्द्धनाचार्यस्य। हिन्दीभाषायाः प्राचीन-साहित्ये गणनीयान्येव द्वित्राणि तादृशानि काव्यानि विद्यन्ते। संस्कृत-भाषायान्तु शृङ्गारप्रधानानि अमरुशतक-शृङ्गार-शतक-रस मञ्जरी-कुट्टिनीमत-प्रभृतीनि बहूनि काव्यानि सन्ति। अतएव 'आर्यासप्तशती' केवलं केषाञ्चन सहृदयानामेव काव्य-रसिकानां मनोविनोदं विदधती विस्मृतिनिद्रामनुभवति।

वस्तुतो विचारे सप्तशतीयं उत्तम-संस्कृत-काव्येषु प्रथमश्रेण्यां स्थानमर्हति, ध्वनिप्रधानत्वादस्याः। ध्वनेरेव चोत्तमकाव्यात्मकत्वात्। काव्यस्य रसात्मकत्वात्, तत्रापि प्रधानरसस्य शृङ्गारस्य प्राधान्यात् काव्यमिदं नितरामतिशेते संस्कृत-वाङ्मयीयान् सरस काव्यान्। उक्तं हि कविना—

मसृण-पद-रीति-गतयः
सज्जन-हृदयाभिसारिकाः सुरसाः।
मदनाद्वयोपनिषदो
विशदा गोवर्द्धनस्यार्याः।

केवलं पदवैचित्रीमावहतो नीरसस्य काव्यस्य न सहृदय-हृदयावर्जकत्वम्। तदप्युक्तं गोवर्द्धनाचार्यैः—
अध्वनि पदग्रहपरं मदयति हृदयं न वा, न वा श्रवणम्
काव्यमभिज्ञ-सभायां मञ्जीर केलि-वेलायाम्॥

सालङ्कारस्य, सगुणस्यापि नीरसस्य काव्यस्य न तथा हृदयाह्लादकत्वं यथा सरसस्य निरलङ्कारस्य सदोषस्यापि निर्गुणस्येति मम्मटमतमनुसरति महाकविरयम्—

"रत-रीति-वीत-वसना
प्रियेव शुद्धापि वाङ्मुदे कस्य।
अरसा सालङ्कृतिरपि
न रोचते शालभञ्जीव॥
अकलित-शब्दालङ्कृति—
रनुकूला स्खलित-पद-निवेशाऽपि।
अभिसारिकेव रमयति
सूक्तिः सोत्कर्ष-शृङ्गारा॥
वंशे घुण इव न विशति
दोषो रसभाविते सतां मनसि।
रसमपि तु न प्रतीच्छति
बहुदोषः सन्निपातीव॥

यथा सरसे वंशे घुणो न प्रविशति; किन्तु नीरस एव, तथैव सरसे सहृदय-चेतसि दोषो न विशति। यः खलु दोषैकदृक् सरसं नेच्छति, दोषमेव पश्यति। यथा समुल्वण-दोषस्य सन्निपात-रोगिणो हृदये चन्द्रोदयादिरसो न प्रवेशमर्हति। अतः सरसाः दोषं जहति।

ये च गूढव्यङ्ग्यावगमे तन्निवन्धने चाक्षमाः कवयस्तान् सरसरीत्या तर्जयति महाकविरयम्—
बाला-कटाक्ष-सूत्रित-मसती-नेत्रत्रिभागकृत-भाष्यम्।
कवि-माणवका दूतिव्याख्यातमधीयते भावम्॥

स्व-कविता-विषयेऽपि कविः स्वयमेव वदति—
आस्वादित—दयिताधर—
सुधारसस्यैव सूक्तयो मधुराः।
अकलित—रसाल—मुकुलो
न कोकिलः कलमुदञ्चयति।

एतावता कवेरस्य कविताविषये न किमपि वक्तव्यम्। काव्येषूत्तमं ध्वनिकाव्यम्। रसेषु च प्रधानः शृङ्गारो रसः। एतद्द्वयमपि आर्यासप्तशत्यां विद्यते। तत्रापि विषयवर्णनानुकूल आर्याछन्दः सुवर्णसुगन्धयोगमातनुते। उर्दूभाषायां 'शैर' नामकवृत्तस्य यथानुगुणत्वं तथैव संस्कृते-आर्याछन्दसः शृङ्गाररसानुगुणत्वम्। अन्ते च महाकवेः सूक्तिमेकां सरसां स्वकविता—वर्णनपरां समुद्धृत्य विरमामि।

सत्कवि—रशना—सूर्पी—
निस्तुषतर—शब्द—शालि—पाकेन।
तृप्तो दयिताधरमपि
नाद्रियते का सुधा दासी?

———

# मालवीय-महात्मानं को विस्मरिष्यति ?

लेखिका—श्रीमती आर्या उर्मिला देवी

चतुरुदधिमालामेखलायामिलायामखिलायां नाना विधा विभूतयः प्रादुर्भूय निजभुजसारं दर्शयित्वा कालगर्भे विलीनाः। मर्यादापुरुषोत्तमरामचन्द्र—योगिराजकृष्णादीनां तथा दयानन्दसरस्वती-लाला-लाजपतराय—रवीन्द्रनाथठाकुर-बालगङ्गाधरतिलक-प्रभृतीनाममर-पुरुषाणामिव ब्राह्मणकुलतिलको विद्यादानरतः, ज्ञानवृद्धो महात्मा मालवीयो न कदापि कस्यापि स्मृतिपथाद्वियुक्तो भविष्यति। त्यागिना तपस्विना मनस्विना तेनामरयशोविभूषिता धवलिता भारतभूमिः, भारतीयाश्च।

अधुना सर्वमारब्धं निजं कार्यं परिपूर्णं कृत्वा स्वर्गलोकं भूषयति। परं तस्यादेशादर्शा एव पथ-प्रदर्शका भवन्तु अस्माकं कृते। विरहविदग्धहृदयेभ्यो-ऽपूर्वशान्तिप्रदा च भवतु तस्य प्रातःस्मरणीया पुण्य-स्मृतिः।

एतादृशोऽपि एकः समय आसीत्, यदा राज-नीतेः नामोच्चारणमपि महतां महामहीयानपराधो निर्धार्यतेस्म ! अंगुलिगण्या भारतस्योत्कर्षाभिलाषिणः कार्यकर्तार आन्दोलनकारीति संज्ञया विज्ञापिता भवन्तिस्म। भारतीया राजकीयवक्तारं श्रोतुमपि न प्रभवन्ति स्म। यतस्ते भीताः भवन्तिस्म प्रगतिपूर्ण-प्रवृत्तिं शमयितुं संनद्धराजकीयकर्मचारिभिः। तदा प्रतिकूलायामीदृश्यां परिस्थित्यां भारतभाग्यगगने देदीप्यमान-मार्तण्ड इव संसारस्याद्वितीयो महापुरुषः, विश्वविश्रुतकीर्तिः, रत्नगर्भाभुवाऽनुपमेयोज्वलं रत्नम्, हिन्दुभावनायाः, हिन्दुसंस्कृतेः, हिन्दुसभ्यतायाश्च मूर्तिमत्प्रतीको महात्मा मालवीयः उद्भूयाज्ञानांध-काराक्रान्तानां दीर्घकालप्रसुप्तानां हिन्दुजनानामर्थे जाज्वल्यमानां ज्योतिषमादाय भारतस्य विश्वग व्याप्तं तिमिरं विनाशयितु विविधान् प्रयत्नानकरोत् सर्वस्वंदेशसेवायामर्पितं तेन तपस्विना। आमरणं राष्ट्र—समाजसेवां विदधता त्यक्तं निजं पार्थिवं देहमपि वंगविप्लवमाकर्ण्य हिन्दु-नर-नारीणां करुण-क्रन्दनं श्रावं श्रावं, हिन्दुसंस्कृतेः ह्रासं दर्शं दर्शं, हिन्दुधर्मस्य विपत्तिं स्मारं स्मारमत्यन्तखिद्यमानेन मनसा महामनसा तेन। ईदृशो देशहितैषी हिन्दु-कुल-मुकुटमणिः दीन-विद्यार्थिनां रक्षको न कदापि केनापि विस्मरणीयः।

भारतविभूतेस्तस्य वक्तृत्वकला पूर्णरूपेण विक-सिता आसीत्। देववाण्यां, आर्यभाषायां, आंगल-भाषायां सम्पूर्णोऽधिकारस्तस्यासीत्। वाण्या विल-क्षण-प्रभावेण धारा-प्रवाहभाषणेन च तस्य मन्त्रमुग्धानां भारतीयानां विदेशियानामपि मनांसि आश्चर्यचकि-तानि कृतानि। अतीव तीव्रस्मरणशक्ति-शक्तिना विदुषा तेन लेखकेन लेखनकलायामपि पूर्णाधिपत्यं समासा-दितम्। नानापत्रपत्रिकाणां सम्पादनं सुचारुरूपेण कृत्वा आर्यभाषासाहित्यं च महदुपकृतं हिन्दुजाते-रज्ञान-नाशाय स्थापितो हिन्दुविश्वविद्यालयो वाराण-स्यां हिन्दुहितैषिणा। अस्पृश्यतानिवारणाय समये समये दीक्षाव्यवस्थामालम्ब्य दलितोद्धारः कृतः। "आत्मनः प्रतिकूलानि परेषां न समाचरेदि"ति सूत्रं निजजीवने सम्यग् आचरितम्। न क्षोभितं कदापि कस्यापि हृदय सदय-हृदयेन तेन। विलक्षण व्यक्तित्वेन आकर्षक-वक्तृत्वेन च राजकीय-क्षेत्रऽपि सर्वोच्चैः स्थानं स्थापितम्। शिक्षणसाहित्यक्षेत्रे किं; राजकीयक्षेत्रे किं; धार्मिकक्षेत्रे किं; अपितु सर्वेषु क्षेत्रेषु उन्नतिकराः कार्यारम्भाः कृताः, मरणपर्यन्तं अविश्रमं प्राणपणेन परिपूर्णाश्च कृताः तेजस्वितपस्विना तेन। हिन्दवस्तत्कृतान् महदुपकारान् कदापि न विस्म-रिष्यन्ति।

वंगविप्लव-प्रभावेण निष्पन्नं दुःखदं निधन-मतो वै प्रत्येकभारतवासिना तस्यान्तिमादेशो न विस्मर्तव्यः चरितार्थताञ्च नेयः, यत् 'हे हिन्दवः ! सबलैः सुदृढैश्च भूत्वाऽऽत्मसंरक्षणं कुर्वन्तु आततायिभ्यः, यतो वै हिन्दुधर्मः हिन्दुसंस्कृतिश्च विपत्तौ वर्तेते, निर्बलतायां पारगण्यते युष्माकं सहि-ष्णुता, अतस्तान् दर्शयन्तु आत्मपौरुषम्।' इति।

—

# यवनजातेः संग्रहणं कथं स्यात् ?

महामहोपाध्यायः श्री पण्डित मथुराप्रसाद दीक्षितः

--:❀:--

नेदमविदितं तत्रभवतां भवतां विदुषां यत् साम्प्रतमस्माकं विशालभारतभूमौ तत्तत्प्रदेशेषु विशेषतया बंगप्रान्ते पञ्चाम्बु-सीमाप्रान्त-सिन्धप्रान्तेषु च हिन्दुजातौ यवनानां कीदृशः सर्वतः प्रहारो वर्तते ? अतः सम्प्रति सर्वमपि परित्यज्य विचारणीयमिदं यत्कथं हिन्दुजातेः संरक्षणं, धर्मान्तरितानां शुद्धिश्च स्यात् । अथ च किन्नाम यवनत्वमिति विचार्य सर्वं साधु प्रतिपाद्ये--

श्रुतिस्मृतीतिहासपुराणपुरःसरमिदं विचार्यते किन्नाम यवनत्वेन प्रसिद्धो 'यवनधर्मः, उत यवन इति जातिः ? न तावल्लक्षणमन्तरेण लक्ष्यस्वरूपं केनापि निश्चेतुं शक्यते-इति जातेर्लक्षणमेव तावदुच्यते । तत्र हि "आकृतिग्रहणा जातिः" आकृतिः आकारः, एव ग्रहणं परिचयो यस्याः सा । अयं भावः-- आकृत्या स्वरूपेणैव या स्वस्य ग्राहिका सा जातिर्भवति । एवमेव गौतमकणादकात्यायनादिमुनिभिरुक्तम् , न्यायभाष्यकारेणापीत्थमेव समर्थितम् , आर्हतादिदर्शनाचार्यैरपि 'संघयणे' तादृङ्निर्माणे शक्तिग्राहकतां स्वीकुर्वद्भिस्तथैव समर्थितम् । अयमाशयः--गोघटपदादीनां ग्रहणं गवादिस्वरूपेण दृष्टेषु गवादिष्वेव भवति। यथा कश्चिद् एकं गां दृष्ट्वा "एवमाकारसम्पन्नः सास्नालाङ्गूलगलकम्बलविशिष्टो गौर्भवतीति" निश्चिनोति, ततश्च देशान्तरमापन्नः स एव तथाभूतं दृष्ट्वा तं अयं गौरिति निश्चिनोति । इयं च निश्चायिका शक्तिः, जातौ वा, व्यक्तौ वा, उभयाविशिष्टे संघयणे वेति प्रकृतानुप्रयोगान्न विचार्यते, किन्तु व्यवहारतस्तथाभूताकृतिविशिष्टं तं दृष्ट्वा देशान्तरगतस्तथाभूतत्वमवलोक्य तत्त्वेनैव निश्चिनोति । यथा गवि गोशक्तिग्राहकतां निश्चित्य देशान्तरे अन्यत्र वा तथाभूतां दृष्ट्वा तम् , अयं गौरिदमेव निश्चिनोति; न तु अयं गर्दभोऽन्यद्वेति। एवमेव मनुष्यं दृष्ट्वा मनुष्यमेव निश्चिनोति।

एवं च आकृतिरेव जातेर्ग्राहिका भवतीति निश्चीयते, अतएव हालिकादयोऽपि मनुष्यं दृष्ट्वा जातौ शक्तिग्राहकता व्यक्तौ वेति शक्तिग्राहकतानिर्णयज्ञानमन्तरेणापि सादृश्यात्तथाभूतं दृष्ट्वा 'अयं मनुष्य' एवेति जानते । एवमेव यदि यवनादिषु तथा स्यात्तदा ते जातित्वेन वक्तुं शक्यन्ते, परं न तेषु तथाऽवलोक्यते। यथा कश्चित् कञ्चन यवनं दृष्ट्वा देशान्तरे अन्यं यवनं दृष्ट्वा 'अयं यवन' इति निश्चेतु नैव शक्नोतीति न यवनजातिः, किन्तु यवनधर्म एव । परिवृत्तिसहत्वाच्च न जातिः ? न खलु जातिः परावर्तितुं योग्या भवति। अयमाशयः, यदि यवनजातिः स्यात्तदा जातिव्यक्त्योर्नित्यसम्बन्धात् , नैव परावर्तितुं शक्येत । परं लोके नैव तथावलोक्यते; प्रत्युत तद्विपरीततया प्रत्यक्षत एवावलोक्यते--यथा कश्चिद् यवनो यवनधर्मं विहाय बौद्धक्रिश्चियनधर्मानुगामी भवन् बौद्धः क्रिश्चियनो वेति व्यवह्रियते ; न तु यवनः । अन्यच्च, कश्चिद् बुद्धः, क्रिश्चियनः, स्मार्त्तो, वैदिको यो वा को वा कस्मिंश्चिदपि धर्मे वर्त्तमानो यवनधर्मं स्वीकृत्य यवनो भवतीति उभयथाऽपि परिवृत्तिसहत्वाद् यवन इति धर्मः, न तु जातिः । न खलु जातिः केनापि परावर्त्तयितुं शक्यते, न चाश्वः केनापि प्रकारेण परावृत्य गर्दभजातावापद्यते, जातिव्यक्त्योर्नित्यसम्बन्धान्नित्यसम्बन्धस्य च परस्परं विच्छेदाभावात् ।

"धारणात् धर्मः" यद्वा "ध्रियते योऽसौ धर्मः" पङ्कजादिवद् योगरूढिः। भक्तिपरिवर्तनेन तद्व्यवहारनियमस्वीकरणाच्च धर्मः। अयं भावः। धर्मशब्दस्य व्युत्पत्तिरेव तत्स्वरूपं गमयति । यथा श्रद्धया या हि तत्तन्नियमादिषु तत्तत्कर्मबोधकेषु ग्रन्थेषु च विश्वासः; तेन तन्नियमादिस्वीकरणं स धर्मः, एवं विश्वासस्य परिवृत्यमानत्वान्न स जातिर्भवितुमर्हति । एवं यवन इति धर्म एव, नतु जातिरिति निष्कृष्टोऽर्थः ।

नन्वेवं ब्राह्मणक्षत्रियवैश्यादयोऽपि न जातयो भवितुमर्हन्ति । अस्ति च तेषां जातित्वेन लोके व्यवहारः, यथा ब्राह्मणजातिः, क्षत्रियजातिः, वैश्यजातिः, शूद्रजातिरिति । पाणिनिमहर्षिणाऽपि 'ब्राह्मोऽजातौ' ६।४।१७१ अजातौ ब्राह्मः, जातौ तु ब्राह्मण इति । पुनश्च 'क्षत्राद्

घ:' ४। ४। १३८। जातौ इत्येव। तेन क्षत्त्रादुत्पन्नः क्षत्रियः। अन्यत्र क्षत्रात् शूद्राद्युत्पन्ने क्षात्रिरित्याशयेनोक्तम्, अपि च वार्तिककारेणाऽपि तथैवोक्तम्। 'शूद्राचामहत्पूर्वा जातिः' (वा० २४००) शूद्रशब्दष्टापं लभते। जातिश्चेद् वाच्येति व्याख्यानेन जातौ शूद्रा, पुंयोगेतुशूद्रीति। एवञ्च यथा ब्राह्मणादयो जातयः, तथा यवनोऽपि जातिर्भवितुमर्हतीति चेन्न।

अत्र ब्राह्मणादयो न गोघटादिवज्जातयः। किन्तु अनादि--कालप्रवृत्तविभागस्यैव ब्राह्मणक्षत्रियादित्वेन व्यवहारः। ब्राह्मणादीनां सांकर्य्यरक्षणाय ब्राह्मणादुत्पन्नो ब्राह्मणः, तथा क्षत्रादुत्पन्नः क्षत्रियः, यथा गोरुत्पन्नो गौरिति। एवं च गवां सादृश्यादौपचारिकी जातिर्न तु वास्तविकी। किञ्च अनादिकालात्सांकर्यसंरक्षायै विहितस्य ब्राह्मणादुत्पन्नो ब्राह्मणः, एवं क्षत्रियाद्युत्पन्नः क्षत्रियादिरेवेति व्यवहारस्यानुरोधात्पाणिनिवार्तिककारादिभिस्तथोक्तम्। अत एव महाभारते गीतायां श्रीकृष्णार्जुनसम्वादे ब्राह्मणादीनां वर्णशब्देन व्यवहारः कृतः। यथा ब्राह्मणवर्णः, क्षत्रियवर्णः, वैश्यवर्णः, शूद्रवर्ण इति। एवञ्च तत्रैव 'जायन्ते वर्णसंकरा' इत्याद्यप्युपपद्यते। एवमेव च 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इत्याद्यपि संगच्छते। न चैवं गुणकर्मानुकूलं जातिः वर्णो वा स्यादिति वाच्यम्। मया सृष्टम् न तु गुणकर्मानुसारतः स्वयं समुत्पन्नमिति व्याख्यानात्। ततश्चैवमुपपद्यते पूर्वं चातुर्वर्ण्यं समुत्पाद्य तदनन्तरं गुणकर्मणां विभागः कृतः। एवञ्च मयेत्यादिना तत्सर्जने स्वकर्तृत्वं संगच्छते, अन्यथा मयेत्यपार्थकं स्यात्। ननु यजुर्वेदे—

"ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरूतदस्य यद् वैश्यः पद्भ्यां शूद्रोऽजायत"॥

इत्यनेन चतस्रो जातयः प्रतिपादिता इति चेन्न। अत्र जातिवर्णयोरप्रतिपादनात्।

वस्तुतस्तु सर्वोऽप्ययं साङ्कर्यरक्षणाय काल्पनिको व्यवहारः। अन्यथा आपामरप्रसिद्धं सर्वत्रानुभूयमानं 'आकृतिग्रहणा जाति' रिति लक्षणमनुपपद्यमानं स्यात् वस्तुस्थितिश्चैवम्। 'ऋषयो मन्त्रद्रष्टारः' इति वेदप्रादुर्भावात्पूर्वं सर्व एव मनुष्याः सहैवाधीतवन्तः, न तु तावत्पर्यन्तं कश्चिद् ब्राह्मणः, क्षत्रियो, वैश्यः, शूद्रो वा अजायत, किन्तु मनुष्य एव। इत्यधीतवतां सर्वेषामेका मनुष्यजातिरेवासीत्। अथ तेषां मध्ये कश्चिद्दौर्दण्ड्यात् गुरुभिः सह परस्परं छात्रैः, छात्राभिः सहायुक्तव्यवहारकरणान्निष्कासितः, नैनं कश्चिदध्यापयेत्, कस्यांचिदपि शालायां नायमध्येतुं शक्नोति। यथा अद्यापि किञ्चित्कालाय 'रिस्टिकेट' क्रियते। एवञ्च न मां कश्चिदध्यापयतीति शुचः शोकात् द्रवति नितान्तं दुःखीभवतीति शूद्रः-इति निरुक्तकारेणोक्तं संगच्छते। यथा अद्यश्वः यूनिवर्सिटीत्वेन व्यवहारस्तथैव तदानीं गोत्रत्वेन व्यवहार आसीत्। अतएव च अध्यापनशालातो निष्काशितेभ्यो शूद्रेभ्य इतरेषां सर्वेषामपि गोत्राणि समुपलभ्यन्ते;न तु शूद्रस्य किमपि गोत्रमस्ति। एवञ्च तेषामध्यापने 'स्त्री-शूद्रौ नाधीयाता'-मिति निषेधोऽप्युपपद्यते। स्त्रीणामध्ययने निषेधः प्रकृतानुपयोगान्नोच्यते। ततश्च येन ऋषिणा या अध्ययनशाला स्थापिता आसीत्, सा तन्नाम्ना गोत्रत्वेन प्रसिद्धा। यथा कश्यपेन स्थापिता अध्ययनशाला कश्यपगोत्रत्वेन प्रसिद्धा। एवमेवात्रिभरद्वाज-शाण्डिल्यादिष्वपि बोद्धव्यम्। तत्राध्यापकाः प्रवरत्वेन प्रसिद्धाः। यथा एकस्मिन्नेव गोत्रे द्वित्राः प्रवरा उपलभ्यन्ते, ते चाध्यापका एवेत्यनुपदमेवोक्तम्। एवञ्च सहैवाधीतवतां ब्राह्मण-क्षत्रिय-वैश्यानां परस्परं गोत्राणि समुपलभ्यन्ते, यथा कश्चन ब्राह्मणः कश्यप गोत्रः, तथैव क्षत्रियो वैश्यश्च त्रयाणामपि तत्रैवाधीतत्वात्समानगोत्रमुपलभ्यते। शूद्रस्यानध्ययनान्न तस्य किमपि गोत्रम्। तत्र च तिस्रः कक्षाः। यथा वैश्य-क्षत्रिय-ब्राह्मणाश्चेति। यथा अद्यश्वः एफ० ए०, बी० ए०, एम० ए०-इति इङ्गलिशविभागे; प्रथमा मध्यमा, आचार्येति, प्राज्ञ, विशारद, शास्त्रीति वा संस्कृतविभागे सन्ति। तथैव तदानीं वैश्यक्षत्रियब्राह्मणाश्चेति तिस्रः परीक्षा आसन्। न खलु वैश्यपरीक्षामनुत्तीर्य कश्चिदपि क्षत्रियपरीक्षाकक्षायां प्रवेष्टुं शक्नोति। अथ येन स्वर्णमुक्ताहीरकादीनां निर्माणकला भूमिपरीक्षणं, कस्यां भूमौ कीदृशम् निधान, का च कस्य धान्यस्योत्पत्तियोग्येति व्यापारविषयिकाः सर्वाः

कलाः, गोरक्षणम्, तद्विषयकं सर्वं चिकित्साशास्त्रं, तद्वर्धनप्रकारश्चेत्यादि सर्वमधीतं स वैश्यः। अथ योग्यतरबुद्धिपरिश्रमानुसारात्तीक्ष्णबुद्धिः कश्चिदनन्तरमपि यद्यध्येतुमभिलषते; तदा क्षत्रियकक्षोपयोगिनो ग्रन्थानधीते। तत्राग्नेयास्त्रवारुणास्त्रादिविविधास्त्रशस्त्राणि व्यूहरचनादिकमन्यच्च वा यद् युद्धस्य प्रजापालनस्य वा उपयोगि भवति तत्सर्वमधीते। तत्पर्यन्तमेवाधीयानः क्षत्रियसंज्ञां लभते। अथ तीक्ष्णतमकुशाग्रबुद्धिः कश्चित्कक्षाद्वयमुत्तीर्य ब्रह्मविद्यापरिज्ञानाय ब्राह्मणकक्षां प्रविशति। ब्रह्मविद्यामधीयानाः ब्राह्मणाः क्षत्रियवैश्यकलादिषु निपुणा एवाभवन्। यथा परशुरामद्रोणद्रौणिकृपाचार्यप्रभृतयः–प्रत्यक्षत एव प्रमाणान्युपलभ्यन्ते। प्रत्यक्षदृष्टे वस्तुनि न खलु प्रमाणान्तरस्यापेक्षिताऽस्ति। ब्राह्मणक्षत्रियवैश्यानां त्रयाणामेव गोत्रस्योपलम्भात्। शूद्राणां तदनुपलम्भाच्चेदमवगम्यते एकस्मिन्गोत्रे सहैवाधीतानां समानगोत्रम्। शूद्रस्यानध्ययनान्न तस्य गोत्रम्–इति व्यवस्थायाः प्रत्यक्षतः समुपलम्भात्तथा कल्पनं सर्वतो निरवद्यम्। अपि च गोत्रशब्दप्रवृत्तिनिमित्तमेव दृढतरप्रमाणतया तदवगमयति। तद्यथा—गावः धेनुवृषभादयः त्रायन्ते रक्ष्यन्ते यत्रेति गोत्रम्। तत्र गोवृषभादीनां रक्षा भवतीति तस्य गोत्रत्वम्। इदमारम्भिकं तस्य गोत्रत्वम्। यद्वा गां वृषभं धेनुञ्च त्रायते रक्षतीति गोत्रम्। कश्यपादयस्तान् रक्षन्तीति ते गोत्रसंज्ञां लभन्ते। अथ प्रथमां कृषिवाणिज्यरूपां वैश्यकक्षां समुत्तीर्य द्वितीयस्यां क्षत्रियकक्षायां प्रविष्टः क्षतात्परस्परं विरोधोद्भवनाशात् त्रायते इति क्षत्रः। तत्र विरोधः कृषिकारणभूतपृथिवीजन्यः। एवञ्च गां पृथिवीं त्रायते रक्षतीति गोत्रम्, तत्र तद्रक्षणोपायीभूत-युद्धादिकलानां प्रजापालनादीनां शिक्षणाद् गोत्रत्वम्। एवञ्च ये प्रजापालनयुद्धादिकलामुपदिशन्ति, ते गोत्रसंज्ञां लभन्ते।

ततश्च क्षत्रियादीनां द्वितीयकक्षास्थितानां शिक्षकाः, यद्वा युद्धादिकलादिकं यत्र शिक्ष्यते तद् गोत्रम्। एवञ्च तत्राध्येतृत्वादौपचारिकं गोत्रत्वं ज्ञेयम्। अथ पुनः ब्रह्मविद्यामधीयानेषु ब्राह्मणेष्वपि गां वाणीं वेदादिस्वरूपां ब्रह्मविद्यारूपां वा त्रायते रक्षतीति गोत्रम्। ब्राह्मणद्वारा वेदादीनां ब्रह्मविद्यायाश्च संरक्षणं भवति। ततश्च निष्कृष्टोऽयं भावार्थः। गोशब्दस्य त्रयोऽर्थाः। तत्र प्रथमः गौः वृषभो धेनुर्वा। तत्त्राणत्वेन वैश्याः गोत्रसंज्ञां लभन्ते। अथ द्वितीयः गौः पृथिवी, तत्त्राणोपायभूतयुद्धादिकलानामध्ययनात्क्षत्रिया गोत्रसंज्ञां लभन्ते। अथ तृतीयः गोशब्दस्यार्थः गौर्वाणी सरस्वती। वेदस्वरूपाया ब्रह्मविद्याया ज्ञानविज्ञानविद्यायाश्च संरक्षणात् ब्राह्मणा गोत्रसंज्ञां लभन्ते। एवं गोशब्दस्य त्रिभिरर्थैस्तत्तद्विषयकत्राणकर्तृत्वेन वैश्यक्षत्रियब्राह्मणा गोत्रसंज्ञां लभन्ते। इति त्रयाणामेव गोत्रम्। शूद्रस्य अध्ययनशालातो निष्काशितत्वात् त्रिष्वपि गोपदार्थेषु त्राणसम्बन्धाभावान्न गोत्रत्वम्। एवं गोत्रशब्द एव ब्राह्मणक्षत्रियवैश्यशूद्रव्यवस्थां द्रढयति। एवं च गौस्त्रायते यत्रेति व्युत्पत्या तत्तन्महाविद्यालयानाम् ( यूनिवर्सिटीनाम् ) तत्तद् ऋषिसंस्थापितत्वेन तत्तद् ऋषिनाम्ना तत्तद्गोत्रत्वम्। एवञ्च शूद्राणां तत्रानधीतत्वान्न गोत्राण्युपलभ्यते इत्यनुपदमेव प्रतिपादितम्।

ननु "अपत्यं पौत्रप्रभृतिगोत्रम्" ४। १। १६२। इति पाणिन्यनुशासनात् पौत्रप्रभृतीनामपत्यानां गोत्रत्वं शङ्क्यम्, तस्य परिभाषिकत्वात्। 'एको गोत्रे' ४। १। ९३। गोत्रे एक एवापत्यप्रत्ययः स्यादित्येतदर्थं तस्यावश्यकत्वात्।

यत्तु पाश्चात्यशिक्षाप्रभावितैः कैश्चिदुच्यते-तत्तद् ऋषीणामपत्यानि ब्राह्मणक्षत्रियवैश्यास्तत्तद्गोत्रीया ब्राह्मणा उच्यन्ते। एवं क्षत्रियकन्यासूत्पन्नाः क्षत्रियाः वैश्यकन्यासूत्पन्ना वैश्या अपि कश्यपसंज्ञां लभन्ते। इति तन्न युक्तम्।

तथाहि—यस्मात् ऋषेः ब्राह्मणादिकन्यासु सन्तानोत्पत्तिर्मन्यते, तस्य काऽपि जातिरस्ति न वा? अस्तीति चेद्, अनुलोमप्रतिलोमवर्णसङ्करोत्पत्तौ कोऽपि ब्राह्मणः क्षत्रियो वैश्यो वा भवितुं नार्हति। यदि ब्राह्मणः तदा क्षत्रियकन्यायां मूर्धाभिषिक्तः, वैश्यकन्यायाम् अम्बष्ठः, शूद्रकन्यायां पारशवो निषादो वेति एतेषां वर्णसङ्करत्वान्न कस्यचिदपि गोत्रं भवेत्। ब्राह्मणक्षत्रियवैश्येषु गोत्रस्वीकारे शूद्रेष्वपि गोत्रं स्यात्

अथ ऋषीणां जातिर्नास्तीति चेन्न जातिरहितस्य कस्यचिदप्यस्वीकारात्, सर्वेऽपि ब्राह्मणादिजात्यन्तर्गताः। अथ ब्राह्मणादिजातिरध्ययनकृतात: स्वीक्रियते तर्हि स्वीकृतोऽस्माकं पक्षः। मयाऽपि सत्वपरमाणूनां ब्राह्मणशरीरे विद्यमानत्वादध्ययनं तदुद्बोधकमेव मन्यते। एवमेव पूर्वोक्तदिशा क्षत्रियदीनामपि ज्ञेयम्। गोत्रप्रवृत्तेः पूर्वं ब्राह्मणादीनामेवाभावात्।

ननु ब्राह्मणादयः पूर्वमेव समुत्पन्नाः। तदनन्तरं गोत्राणि जातानीति चेन्न। ब्राह्मणादीनामुत्पत्तौ आश्रयाभावात्। न च ब्राह्मणोऽस्य मुखमासीदित्यादि वेदप्रामाण्यमेव तत्सत्वे तत्कर्म च तदाश्रय इति वाच्यम्। ब्राह्मणक्षत्रियवैश्यत्वसम्पादकविद्याध्ययनजन्य ब्राह्मणादीनां तत्र प्रतिपादितत्वात्। किञ्च वेदस्यापौरुषेयत्वेन ऋषीणां तपोजन्यस्य तन्मन्त्रस्य ब्राह्मणादीनामुत्पत्तेरनन्तरं प्रतिपादित्वात्। अत एव आसीत्, कृतः, 'ऊरू तदस्य यद्वैश्य' इत्यादि विभिन्नप्रकारेण प्रतिपादनात्। ननु ब्राह्मणादीनां मनुष्यत्वेन प्रभेदेऽपि कार्यतः जन्मत एव भिन्नत्वात्। तथाहि—यथा अश्वकुक्कुरादीनामश्वत्वेन कुक्कुरत्वेन एकत्वेऽपि अवान्तरभेदानां तत्र तत्र सत्वात्। यथाऽयमश्वः युद्धकर्मयोग्यः, अयं मृगयायोग्यः, अयं क्रीडायोग्यः इत्यादौ अश्वत्वप्रकारकस्य अश्वस्य एकत्वेऽपि कार्यभेदाद्विभिन्नत्वात्। यथा वा 'अयं कुक्कुरः चौरादिभ्यो रक्षणचतुरः', 'अयं मृगयाकर्मकुशलः', 'अयं धावनपटुः, अयं जले निमज्याप्यन्वेषणदक्षः-इत्यत्र कुक्कुरत्वप्रकारकस्य कुक्कुरस्य एकत्वेऽपि कार्यभेदाद् विभिन्नत्वम्। एवमेव आकृत्या मनुष्यस्य मनुष्यत्वप्रकारकत्वेन एकत्वेऽपि ब्रह्मज्ञान-क्षतात्त्राणादिकार्यभेदाद् विभिन्नत्वम् इति चेन्न। अश्वकुक्कुरादीनां तत्तादश्वाद्याकृतेः स्फुटतया विभिन्नतयैव प्रतिभासनात्। यथा बालो क्रीडाकुशलमश्वं दृष्ट्वा तज्ज्ञाता स्फुटं कथयति अयमश्वः एतत्कर्मकुशलः, सत्यम्, एवमेव मनुष्यं दृष्ट्वा अयं ब्रह्मविद्याकुशलो ब्राह्मणो भवितुमर्हति, अयं क्षत्रियविद्याकुशलः क्षत्रियो भवितुमर्हति। अय वैश्यः, अयं शूद्रः-इति। एवमपि ब्राह्मणादिजातिर्न भवितुमर्हति। न खलु क्रीडाकर्मकुशलः अश्वः अश्वत्वं विहाय अन्यो भवितुमर्हति। नैवं ब्राह्मणादिषु सम्भाव्यते। किन्तु मनुष्येष्वेव। अयं मनुष्यः ब्राह्मणो भवितुमर्हति, अयं क्षत्रियो भवितुमर्हतीति। एवमपि जन्मत एव ते मनुष्या ब्राह्मणाः। तथाहि सत्त्वरजस्तमोभिरेव जगदुत्पत्तिः, ब्राह्मणशरीरे जन्मतः पूर्वमेव सत्त्वभागस्याधिक्यात् ब्राह्मणः, रजोभागस्याधिक्यात् क्षत्रियः, सम्मिश्रणाद् वैश्यः, तमोभागस्याधिक्यात् शूद्रः. एवं जन्मत एव ब्राह्मणः। अतएव ब्राह्मणत्वादिजातित्वेन व्यवहारः। एतदेवाश्रित्योपनिषत्सु-"रमणीयचरणाभ्यासो ह यत्ते रमणीयां योनिं प्रतिपाद्यन्ते-ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा" इत्याद्युक्तम्

ननु पूर्वोक्तलक्षणेन ब्राह्मणादीनां जातित्वं मास्तु परं व्यवहारतस्तु ब्राह्मणादीनां जातित्वमस्त्येव। स चायं व्यवहारः आप्तवाक्यजन्यो वेदवत्प्रमाणमेव। तथा चोक्तं न्यायसूत्रे-"आप्तवाक्यं वेदाश्च प्रमाणम्" अत्र आप्तवाक्यस्य वेदेभ्यः पूर्वमुक्तत्वात्ततोऽप्यधिकं तस्य प्रामाण्यमिति सूच्यते। एवं च आप्तव्यवहारात् अयं ब्राह्मणः ब्राह्मणजातिमान्, अयं क्षत्रियः क्षत्रियजातिमान्, अयं वैश्यः वैश्यजातिमान, अयं शूद्रः शूद्रजातिमानिति प्रत्यक्षत एवोपलम्भात् ब्राह्मणादिष्वेव ब्राह्मणादीनां व्यवहारो भविष्यति नेतरत्रेति चेन्न, हस्तग्राहिकया तेषां तेषां परिज्ञापने गौरवात्। तथाभूतव्यवहारे आप्तवाक्यस्य आप्तवाक्यत्वाभावाच्च। आप्तवाक्यं तु तत्र प्रमीयते यथा सास्नालाङ्गूलककुत्खुरविषाणवती व्यक्तिः गोपदवाच्या, एवम् एवमाकार सम्पन्ना घटपदवाच्या, अयं पदः एवमाकारसम्पन्नाया व्यक्तेर्बोधकः, एतादृशे व्यवहार एव आप्तवाक्यं संगच्छते; न तु शृंगग्राहिकया अयं गौः इत्यादिना गोपदार्थबोधने।

किञ्च ब्राह्मणस्य तदितरस्य यस्य कस्यचिद् वा अपरिचितमनुष्यस्य दर्शनानन्तरं किमयं ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वेति कस्यचिदपि बोधो न भवति, किन्तु मनुष्यस्यैव। न च शिखासूत्रचन्दनादिना तत्तज्जातेर्बोधो भविष्यतीति वाच्यम्? तेषां बाह्याडम्बरसाध्यत्वेन प्रमाण्यसाधकत्वाभावात्, तेषां वचनप्रत्ययाज्जातेर्बोधो भविष्यतीति चेन्नः तत्कथनमात्रे तस्य

प्रामाण्यात्, तस्याप्तत्वे निश्चयाभावाच्च। अपि च किमयं गुणकर्मभ्यां ब्राह्मणादिजातिं निश्चित्य आत्मानं बोधयति; उत जन्मतो ब्राह्मणादिकं मत्वा बोधयतीति संशयाच्च।

एवञ्च "अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः" इति भगवद्वचनमपि सूपपद्यते। एवञ्च चतुर्णामेव जातीनां सद्भावात् यवनानां कुत्रान्तर्भावः स्यात्? यवनधर्मो न तु जातिः, तेषां जातिस्तु क्षत्रिय एव व्रात्यत्वात्सर्वेष्वपि शूद्रेष्वन्तर्भवितुमर्हति। येन समुदायेन यो यवनो यवनी वा गृह्यते, तस्य तस्मिन्नेवान्तर्भावः। व्रात्यप्रायश्चित्तानन्तरं क्षत्रियेष्वन्तर्भावः। नन्वेवं सुव्यवस्थितेऽपि यवनाः, धर्मभेदस्याकिञ्चित्करत्वात् कथं न ते चातुर्वर्ण्ये गृहीता इति चेच्छृणु—यदा यवना इहार्यदेशे समागतास्तदा तैर्मनसि निश्चितमेतदासीत् यदेते आर्याः, शकान् मङ्गोलियांश्चैवमात्मनि विलीनवन्तः; यत्तेषामिदानीं नामापि न श्रूयते। अतोऽस्माभिरेवं कर्त्तव्यम् यथा हिमविन्ध्ययोरिव अहिनकुलमिव भेदो विरोधश्च स्यात्, इत्यत एव यवनैर्गौ हिंसिता। तां महोत्सवेन घूर्णयित्वा नामशेषां कुर्वन्तीत्यादिकार्यं सर्वथा स्वस्य पार्थक्यसम्पादनाय विहितमिति कृत्वैव ते पृथग्भूताः सम्पन्नाः। वस्तुतस्तु ते प्रायश्चित्तानन्तरं क्षत्रियेष्वन्तर्भवितुमर्हन्ति। प्रायश्चित्ताभावे शूद्रेषु इति प्रतिपादितमेव। अथ हठाद् यवनधर्मे गृहीता स्वेच्छया धर्मपरिवर्त्तनेन स्व-स्वधर्मं गन्तुमर्हन्ति। नह्यत्र प्रायश्चित्तलेशः। स्वस्वधर्मे स्वाराध्यदेवनामोच्चारणमेव तत्परिशोधायालं भविष्यति। लोकसंग्रहाय भक्ष्याभक्ष्यजन्यप्रायश्चित्तानिवृत्यर्थं गङ्गाजलमात्रेणैव पर्याप्तमित्यलमत्र बहूक्तेनेति शम्।

# संस्कृतविद्यार्थिनो वर्तमानकालश्च

साहित्यलङ्कारः सत्यनारायण प्रसाद शास्त्री ( राजगढ़ )

अहो! कालोऽपि नाम विचित्रं वस्तु। अप्रतिहतगतितो गच्छन्न विरमति। लोका मरेयुः, पुरा दहेयुः, कामिन्यः क्रन्दयेयुः, दीना दीर्येरन्, बाला भज्येरन्, परं न स क्षणमपि विरम्य परिस्थितिं निभालयति करुणाम्। गमनमस्य धर्मः, नासौ स्वधर्मात्पदमपि विचलति। सम्प्रति यादृक् समयः पुरतोऽस्माकं स कीदृक् कुटिलः संस्कृतज्ञानां कृत इति न तिरोहितं तत्र भवताम्।

अथ ये पुराचीनाः संस्कृतज्ञास्ते कथमपि स्वजीविकामर्जयन्ति; परं यैरधुनैव विद्यालयस्त्यक्तो न कदापि लोके पदं दत्तं तेषां चक्षुषोः पुरस्तु सत्यपि तामसकुलारौ रवौ सर्वत्रान्धकार एव दुर्भेद्यः। किं कुर्मः, कया रीत्या जीविकां समुपार्जयाम इत्येव समस्या करालकालप्रतिमेवापहर्तुमिच्छति प्राणान्। केवलमध्यापनप्रथैवान्तिमदीपशिखेव चक्षुश्चमत्करोति हृत्पटलं तेषाम्। सैव भवति समुद्रे मज्जतस्तृणकणिकेव लघीयसी आधारः। अहो कीदृशः कालो यस्मिन् विज्ञा अपि निष्कर्माणः, अतएव सत्यं "कालस्य कुटिला गतिः" हन्त!

सम्प्रति भारते प्रचलिता संस्कृतशिक्षाशैली दृश्येव यया सञ्जाता अपि आचार्याः संस्कृतच्छात्रा कर्मपथि परिवारभरण-शोकार्क-सन्ताप्यमाना इव कुशिक्षानिगडनिगडित-चरणा इव पदात्पदमपि गन्तुं नालम्। वृद्धौ पितरौ किमप्यकुर्वाणौ व्यालाविव दष्टुमायातः, प्रेममूर्तिर्नववधूरपि कुत्सितोपवनमालतीव न चेत आकर्षति, बालानां दुग्धाननानामस्फुटगिरापि हालाहलमिश्रितेव सुधा न मोदमावहति, किं बहुना, जीवनमपि भारस्वरूपमेव प्रतीयते। हन्त! कथमिदम्? छात्राणां दूषणमिदम् नहि चेत्—शिक्षायाः, अहो वर्तमाना शिक्षा या सर्वत्र विद्यालयेषु दीयते सा नैव निष्फला अनावश्यक्यपि। कस्मिन् विद्यालये समाजशास्त्रस्य--राजनीतेः—गणितशास्त्रस्य-चित्रनिर्माणादिकलानां समुचितं शिक्षणं नहि कुत्रापि। यदि विशेषस्तदा व्याख्यान-कुशला भवन्ति छात्राः, परं शुष्कायां कृषौ किं वर्षया, कार्यावतरणसमये वक्तृतानां मूल्यमेव कियत्?

× × × ×

हन्त ! यदा विपणिषु वणिजां पुरतोऽनुष्ठानं याचतां छात्राणां शून्या मुखाकृतिः स्मृतिपटलमधिरोहति तदैव शतधा भिद्यते हृदयम् । किन्तया शिक्षया यया पर-मुखापेक्षी भवति जनः, प्रणश्यति च स्वच्छन्दता, न गृहकार्यं चलति, नोचितं धनागमनं,व्ययो वर्धते नित्यम्। पदानुसारं वहुमूल्य-वस्त्राणां क्रयणमावश्यकम्, यतः शास्त्र्याचार्योपाधिरधिगतास्तैः । प्रतिकूलपरिस्थितौ सारल्येन व्यवहर्तव्यमिति विस्मृतमेव । शिक्षा कथं जीवने सङ्घटनीया, इति स्वप्नोऽपि न निशायाम् । अध्यापनानुष्ठानाभ्यामृतेऽपि किञ्चित्कार्यमस्ति न वेति तेषामिति कल्पनैव न जायते । जातेः, समाजस्य, देशस्य वा कियदुत्तरदायित्वं तस्मिन्निति विचारोऽपि न पदमादधाति मनसि । सुरसरस्वत्याः कीदृशी दशेति चिन्ताऽपि नोद्भवति । किमीदृश्या शिक्षया वेषाम् । एकतस्त्वीदृशी निष्कर्मण्यता छात्राणामपरं खाद्यपदार्थ वस्त्रादीनामीदृगसौलभ्यम् । उदरदेवताया अर्चायै अन्नावश्यकता, शीतातपनिवारणार्थं च वस्त्रमनिवार्यम्। लक्ष्मीदेवी चाध्ययनसमय एव रुष्टा तेषाम् । कुर्युश्चेत् किं कुर्युः ?

❀ ❀ ❀

अरे ! सा कीदृशी शिक्षा; यया जीविकासमस्याऽपि न संसाध्यते, जीवनं नोन्नीयते, समाजसेवा न क्रियते मनुष्यतास्वरूपं न परिचीयते, जीवनोद्देश्यं नावबुध्यते। किं शिक्षेति नाम सार्थकं तस्याः ? शिक्षाया मापदण्डो वस्तुत उच्चतमः । न केवलं ग्रन्थानामध्ययनमेव शिक्षा; अपितु पठितस्य जीवने सङ्घटनम् । 'आत्म' वत्— सर्वभूतेष्विति परिशील्यापि सततं गोमासं भुज्यते तदा किं सिध्यति शिक्षया ? न यावदध्ययनस्याऽऽचरणे समावेशः, तावत्स शिक्षित इति न ससिंहनादं वक्तुं शक्यते । जीवनस्य प्रधानमुद्देश्यं संस्कृतशिक्षाग्रहणम् । परं यया शिक्षया जीवनं भारस्वरूपं भवेत् सा किं शिक्षा भवितुं योग्या ? नहि ! त्रिकालेऽपि नहि !!

× × ×

युग-सम्बन्धिनी शिक्षा यावद्धस्तगता न भवेत्तावत् किमसामयिक्या शिक्षया । बी० ए० ( B. A. ) शास्त्री च समानतया गण्येते । परं B. A. समुत्तीर्णाः सहस्रं मुद्राणां यावत् प्रतिमासं लभन्ते किं शास्त्रिणोऽप्येतावत्-लभन्ते ? पाठशालाध्यापनात् ३०) मुद्राणां लाभेन देवालयेषु जपवटीभ्रामणाद्दक्षिणाद्रव्यस्य सस्पृहमालोकनेन विनाऽपरं कार्यमेव किम् ? उभाभ्यां कार्याभ्यामेव जीवनस्योद्देशः पूर्यते ।

केचन गुरुगम्यं वैद्यकशास्त्रं वैद्य-बुभूषया स्वत एवाधीयते। तेन शास्त्रस्य तस्य न केवलं गुरुतैव विनश्यति; अपितु पातालप्रयाणसज्जापि सञ्जायते । यदि सर्व एव वैद्या भविष्यन्ति, तदा किं तेषां वृत्तिरविरतं स्थास्यति ? विचारोऽयं मनसि समुत्पद्यत एव न, पठनं पठनमित्याकांक्षा केवलं पूर्यते । निरुद्देश्या शिक्षाऽपि निष्फला एव । अध्ययनसमये छात्राणां भारतीयानां न कोऽप्युद्देशो भवति केवलं विद्यालय-पाठनव्यवस्था पितुर्गुरोर्वेच्छाग्रिमाध्ययने प्रेरयित्री भवति तेषामत एव पन्था अपि कण्टकाकीर्णः । विदेशेषु विद्यार्थिन उच्च-शिक्षाधिगमनात् पूर्वं स्वोद्देश्यं स्थिरीकुर्वन्ति, आत्मानं पृच्छन्ति, स यदुत्तरयति तस्मिन् दृढास्ते कर्मवीरा देशैकहिताकांक्षिणः शिक्षाक्षेत्रे समवतरन्ति । परं भारतीय-विद्यार्थिनः कमुद्देशमादाय पठन्तीति न जानीमः । उद्देश्यः किं वस्तु इत्यपि ते न जानन्ति । केनोद्देश्येन कयाकांक्षया कया वेश्वरीय-प्रेरणया शिक्षाक्षेत्रे समायातास्ते इति प्रायोऽदृश्य गर्भ एव । आत्मा तु तेषां मृत एव, मनसो दाहसंस्कारो जात एव, पुनः कस्तेषां—भविष्यचिन्तां जीवनेच्छां वा निर्वर्तयेत् ? विशां चाटुकारितैवान्त्यं लक्ष्यं भवति संस्कृत-शिक्षायाः । वेदगीत-महिमा संस्कृत-शिक्षा किमीदृशी हीना भवति ?

भारते प्रचलिता परीक्षा शैली सर्वथा निष्फला एव, नैकस्यापि विश्वविद्यालयस्येदृशी परीक्षाऽस्ति यामुत्तीर्य छात्राः सुखेन स्वजीवनं यापयेयुः । परीक्षासु ग्रन्थानां निवेशस्तु सर्वथाऽसामयिक एव । युगसम्बन्धिग्रन्थः कोऽपि नास्ति । तस्माच्च छात्राः स्वेनाऽपि सांसारिकं साधारणं ज्ञानं वर्धयितुं नाकांक्षन्ते । समाचारपत्राणां पठने तु महदालस्यम् । क एतया परीक्षया तेषां सिद्ध्यति मनोऽभिप्राय इति न ज्ञायते । छात्राणामकर्मण्यतां जानन्तोऽपि परीक्षा-

व्यक्षा मौनमेवावलम्बन्ते। न कामपि सामयिकीं व्यवस्थां कुर्वते।

अहो! छात्राणां दुरवस्था किं नान्धीकरोति चक्षूंषि, वेषां करुणनादः किं न भिनत्ति श्रवणपुटानि, छात्रात्मदहनपूतिगन्धिर्न दुनोति किं नासिकाः, दुःखज्वालाजालो न ज्वलयति किं त्वचः, छात्रेभ्यो निष्फलं वित्तमादाय भुञ्जानानां विविधव्यञ्जनानि नानुभवन्ति किं कटुतां रसज्ञाः? किं जडास्ते आहोस्विन्मृताः? मृता एव संस्कृतच्छात्राणां कृते ते। कोऽपरो गरीयान् विपत्ती तेषां परीक्षकान् विहाय, यो जीवनं धनं देशहितैषितां स्वाभिमानं निर्ममत्वं हन्ति। द्वादशवर्षं यावत्, जलीकृत्य रुधिरं, शून्यीकृत्य मस्तिष्कं, कृशीकृत्य शरीरं, व्ययीकृत्य नेत्रज्योतिः, सत्रेषु भुञ्जाना उत्तीर्याचार्यपरीक्षामपि जीवनस्य मुख्य उद्देश्ये धनोपार्जनेऽसफला भवन्ति, तदा को लाभः शिक्षयेदृश्या तेषाम्, परीक्षाप्रणाल्या वा।

× × ×

अयि भोश्छात्राः! अधुना क्रान्तेः समयो न भ्रान्तेः, जागृतेर्वेला न स्वप्नस्य, रचनात्मककार्यस्य कालो न वक्तृतानां, संघटयत, आन्दोलयत, म्रियत, मारयत! न भेतव्यं, न भेतव्यम्। अस्माकं परीक्षासु आमूलचूलं परिवर्त्तनमावश्यकं, समाजशास्त्रार्थशास्त्र-गणित ज्यौतिषायुर्वेद-कर्मकाण्डविज्ञानादिविषयाणां समावेशोऽनिवार्यः। न केवलं व्याकरण-साहित्य-न्यायैरभीष्टसिद्धिः। अस्माकमधुना ज्ञानमसामयिकमपूर्णञ्च भवति? यदा विज्ञान-गणितादिविषयानवलम्ब्य परीक्षा उत्तरिष्यामस्तदा परिपक्वज्ञाना वयं सर्वकारेण विवदमाना बलात्—M. A. B. A. समानां वृत्तिं प्राप्स्यामो नात्र विचिकित्सा।

अधुना तु सर्वकारो विना ननु नच 'न युष्माकं ज्ञानं सामयिकं पूर्णञ्चेति' मधुरमुत्तरं हालाहलमिश्रं ददाति।

अतोऽस्माकं सङ्घटनंपरमावश्यकम्। सङ्घटिता एव वीर्यं प्राप्य नवीनपरीक्षासु साफल्यं नवभारते नवादर्शं स्थापयिष्याम इत्यलम्।

## सम्पादकीयम्—

अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्!!

किं लिखामः? किं भणामः? वेपते लेखनी, विदलति हृदयम्, कियदस्माकमार्याणां पतनं जातम्? हन्त!! द्वादशशतकेभ्यो भारतीया आर्यजातिर्विधर्मिभिर्विदेशिभिर्नृशंसैर्दानवैर्दन्दह्यमाना, जाज्वल्यमाना, लुण्ठिता, वितण्डिता, पराभूता, तिरस्कृता, विदलिताऽपि निस्त्रपा, निर्जीवा, निष्कर्मण्या, निरुत्साहा, निर्मदा च साम्प्रतमपि जीवति-इतीयं महती परमेश्वरानुकम्पा। मुहम्मदगोरी-नादिरशाह-चंगेजखां-औरङ्गजेब प्रभृतिभिर्नरपशुभिः परमहिंस्रैः पशुमारं मारिता, निर्दयं विलुलिता, निर्घृणं विलुण्ठितेयं हिन्दूजातिः, केवलं जातिभेद-वर्णभेद-सम्प्रदायभेदैः सहस्रधा भिन्ना, व्यक्तिगतरागद्वेष-कलुषिता, अस्पृश्यतादि-सूक्ष्मतमधार्मिकविमर्श-व्याकुला, कल्पित-विविधदेव-दासतामापन्ना, भाग्य-ईश्वरेच्छा-समवलम्बिता, पौरुषहीना, सङ्कुचिताचारविचार-परायणा, शनैः शनैः क्षीण-क्षीणा, दीनदीना, मरणप्राया कथमपि समुच्छ्वसन्ती पतनोन्मुखी सन्तिष्ठते।

अस्माकमकर्मण्यतया, सङ्कुचिततया, निरुत्साहतया घोरतम-स्वार्थपरतया च एतेषु वर्षेषु दशकोटिमितानां अस्मद्रक्त-सम्भूतानां, अस्माकं प्रबलपाप-विपरिणतिरूपाणां यवनानां संख्या समेधिता वर्वर्ति। यास्माकं प्राणान्, धनान्, दारान्, बालान्, बालिकाः सर्वमपहरन्ती अस्माकं सर्वनाशाय कृत्येव मुखं व्यादाय सर्वतः प्रसारित-क्रूरकरा शक्ति-सञ्चयं करोति।

हन्त भो हन्त!! त्रिंशत्कोटिमितानां हिन्दूनां निर्भयं निःसङ्कोचं निष्करुणञ्च कदनं क्रियते मूर्तमैर्नृपशुभिर्यवनैः। बंगप्रान्तीय-नोआखाली-प्रदेशे सीमाप्रान्ते, पञ्जाबप्रान्ते—विश्वविश्रुते विशाले विस्तृते हिन्दू-प्रचुरे कलिकान्तानगरे च यवनैर्यत्कृतं तद्दर्शं दर्शं श्रावं श्रावं स्मारं स्मारं च भवभूतेरियं सूक्तिरेव संघटते—"अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्"।

× × ×

इदानीं न किमप्यत्र वक्तव्यम् ? अयन्तु द्वादशशत वर्षानन्तरं जीवन-मरण-समयः समुपस्थितः । एतस्य प्रधानं निदानमाँग्ल-शासकाः सन्ति । दुर्बलतया, शासनाऽसमर्थतया च भारतं परित्यजद्भिर्गौराङ्गैर्यत् कूटनीतेश्चरमं पाटवं प्रदर्शितम्, तस्यैव दुर्विलसितमिदं हिन्दूदेशस्य, समाजस्य, जातेश्च सर्वनाशाय प्रवृत्तमालोक्यते । ते वाञ्छन्ति; यदि न वयं भारते स्थास्यामः, तदा भारत स्याप्यस्तित्वं न स्थापयिष्यामः।" अतएव शासनाधिकार अप्रतर्कित एव सत्वरं भारतीयानां हस्ते प्रदत्तः । स्वयञ्च तस्य वक्षसि निर्दयं प्रहाराय सर्वनाशाय च पाकिस्तानरूपेण सन्तिष्ठन्ते । तेषामेवाभिलाषया, प्रेरणया सर्वमिदं नग्नताण्डवं क्रियते वर्वरैर्नरपशुभिः ।

अस्माभिरिदमपि न विस्मर्तव्यम् यदेतावतैव शान्तिर्नास्ति । हिन्दूजातेर्विनाशाय महत्तरं कौटनीतिकं चक्रं प्रचलति । लक्षाधिकाः हिन्दुस्त्रियअपहृता यवनैः, परःसहस्राश्च बलाद् यवनीकृताः, दशवर्षानन्तरं ताभ्यः स्त्रीभ्यो दशलक्षमिता सन्ततिरस्माकं विनाशाय महत्सैन्यं समुत्पत्स्यते । भारतवर्षमाक्रमितुं पाश्चात्या अनन्तं धनं व्ययीकृत्य, वैज्ञानिक-युद्धोपकरणानि प्रदाय पाकिस्तानं समुत्साहयन्ति । अचिरादेव पाश्चात्य-प्रेरित-यवनाक्रान्तं भारतमामूलचूलं यवनमेव सम्पत्स्यत .इति नात्र स्वप्नेऽपि सन्देहः कर्तव्यः । न चिरादस्माकं विनाशः समुपस्थितो विद्यत—इति कदापि न विस्मर्त्तव्यम् ।

अङ्ग, क्षणं स्वायामपि स्थितिं निभालयत । कीदृशं नैतिकं मानसिकञ्च पतनमस्माकं दरीदृश्यते । हिन्दूनां स्त्रियो यवनैर्न केवलमपहृताः, परं पति-पितृ-पुत्रादीनां सन्मुखमेव ताभिः सह व्यभिचारः कृतः । तासामपमानं कृतम् । सुरसुन्दरीणामिव सुन्दरीणां धनकुवेर-रमणीनां नग्नं यूथं लवपुरस्य राजमार्गेषु सापमानं प्रदर्शितम्, दुग्धमुखाः शिशवो भित्तिषु लौहकीलकैः कीलिताः, जावन्तः करुणं क्रोशन्तः, पुरुषाः, स्त्रियः, शिशवः प्रसभं वह्नौ दग्धाः । आर्यजातेर्महत्तरमपमानं कृतम् । पर हिन्दुभिः किं कृतम् ? हिन्दू-समाजस्य राजनैतिका नेतार अद्यापि यवनानां कृपाकटाक्षमीक्षमाणा मक्षिकामारणमपि कर्तुं न प्रभवन्ति । ते हि एकस्य यवनस्य कृते दशहिन्दूनां प्राणान् गहीतुं कृतप्रतिज्ञाः सन्ति ।

हन्त ! यत्रैकस्याः स्त्रिय अपमानेन पारे समुद्रं लङ्का-राज्यं विध्वस्तम् । एकस्या एव द्रौपद्या अपमानेन कुरुकुलस्य भ्रातृभिरेव क्षयः समजनि । तत्र शतशः स्त्रीणां मध्ये मार्गे नग्नीकृत्य सैनिकानां कृतं दुराचरणं प्रायः प्रत्यहं जायमानं यैः सह्यते तेऽपि किं मानवाः ? किं तेऽपि सभ्यताभिमानमावहन्ति ।

सत्स्वप्येतादृशकाण्डेषु सर्वेऽपि भारतीयार्य सभ्यताभिमानिनः-धर्माचार्याः, सन्यासिनो धनिकाः, विद्वांसः, मठमन्दिराध्यक्षाः, अद्यापि निकृष्टतम-स्वार्थसाधन-परायणाः कामिनीकाञ्चन-निमग्नाः सुखं शेरते । हन्त ! हिन्दूजातेरिमां दुरवस्थामालोकमालोकम् अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् !!!

---

# संस्कृत-समाचाराः

## हिन्दूनां शुद्धिव्यवस्था

वंग-पञ्जाप-सीमाप्रान्तादिषु दुष्टैर्यवनैर्बलान्म्लेच्छीकृतानां हिन्दू-नरनारीणां शुद्धिविषये काशीस्थ-पण्डित सभाया विशिष्टमधिवेशनं सुप्रभात-कार्यालये सम्पन्नम् । प्रायः काशीस्थाः समेऽपि प्रसिद्धविद्वांसः समुपस्थिता आसन् । चिरकालं विचारानन्तरं निर्णयो जातो यत् बलान्म्लेच्छीकृतानां धर्मपरिवर्तनमेव न भवति । केवलं पश्चात्ताप पूर्वकं भगवन्नामस्मरणमात्रमेव तेषां प्रायश्चित्तम् । इतीयं व्यवस्था समस्त-भारतीय-भिन्न-भिन्न भाषापत्रेषु सादरं प्रकाशिता । इत्ययं काशीस्थ—पण्डितसमायाः श्लाघ्यतरः प्रयत्नो धन्यवादार्हः ।

## अभिमतम्

पञ्जाब प्रान्तान्तर्गत-मण्डीराज्य-प्रधान-विद्वद्भिर्वृद्धतमैः सर्वतन्त्रस्वतन्त्रैः श्री जयदेवशर्मभिः सुप्रभातमालोच्य स्वीयमभिमतं प्रकटीकृतम् । तच्च सुरभारतीप्रणयिनां सुप्रभात-पाठकानां विमर्शनाय प्रकाश्यते—

"नृ-भाषाकलिता लेख्या स्वभाषा सुप्रभातके
भविष्यतीह सरसा केवला न तथाविधा
पूरणीयः प्रभातार्कः प्रायो वीररसेन हि
वीराधीनमिदं विश्वं वीरभोग्या वसुन्धरा
यत्र धीराश्च वीराश्च सम्यञ्चो विचरन्ति हि
तद्देशे भाति सौराज्यं स्वाराज्यलवबृंहितम्
राज्यं कर्तुं स एवार्हो यो जातो राजवंशजः
न समर्था राज्यमाप्तुं बणिजो भिक्षुकास्तथा
क्षत्रियाणां विपत्तौ च ब्राह्मणैः शस्त्रधारणम्
कर्तव्यमेव, शैलीयं जामदग्न्य-प्रचारिता"

## अभिनन्दनम्

भारतीय-संस्कृत-समाजे लब्धयशसां सुरभारती-सेवा-समर्पित-सर्वस्वानां काशीस्थ-प्रसिद्ध-विदुषां काशीस्थ–पण्डितसभा-प्रधानमन्त्रिणां सुप्रभात-सम्पादकानामस्मद्गुरुचरणानां श्रीमत्केदारनाथ शर्म्म-सारस्वत-महोदयानां सौप्रस्थानिकमभिनन्दनं सेण्ट्रल-हिन्दूस्कूलनाम्नि विद्यालये महता समारम्भेण सम्पन्नम्।

विद्यासागर-देवीनारायणएडवोकेटमहोदयैः सभापतेरासनं समलंकृतमासीत्।

छात्राणां स्वागतगानानन्तरं तत्कालीन-पाठशालाध्यक्षैः 'श्रीमद्विन्ध्येश्वरीप्रसादशास्त्रिभिः प्रदत्ते विस्तृत-परिचये, दर्शनकेसरि-गोपालशास्त्रिणां प्रायः सर्वेषामेव पाठशालाध्यापकानां च भाषणे सञ्जाते सुप्रभात-सम्पादकेभ्यो मानपत्रप्रदानमभवत्। सम्पादकानां प्रत्युत्तरभाषणे सम्पन्ने सभापतिमहोदयैस्तद्गुणवर्णनपरैः सुन्दरतरं भाषणमदायि। अन्ते च प्रतिकृतिग्रहण-जलपानादिकृत्वं सानन्दं समजनि। अभिनन्दनञ्च प्रकाश्यतेऽधस्तात्।

—लीलाधर पाण्डेयः, शास्त्री

श्रीमतां सुरसरस्वतीसततसमाराधनबद्धपरिकराणाम्, सुयशःसुषमाधवलीकृत-दिगावलीनाम्
विद्वत्कुल–कमल–दिवाकराणाम् 'सुप्रभात'–सम्पादकानाम्

## श्रीकेदारनाथशर्म्मसारस्वतमहोदयानाम् सौप्रस्थानिकम्

( १ )

करकलित-विपञ्ची-पञ्चमोदञ्चनैर्या
गमयति मतिभाजो वाङ्मयस्य प्रपञ्चम्।
स्मित-सितिम-विलासैरान्तरं ध्वान्तजालं
तिरयति हृदि या सा सम्मुखीनास्तु वाणी॥

( २ )

श्रीमन् केदारनाथ! प्रथिततम-महासार-सारस्वताङ्क!
प्रस्थातुं बद्धभावं सुचिरपरिचितात् पाठशालापदान्नः।
वाचा रागातिरेकद्रुतनयनयुजा किं वयं वर्णयामो
हार्दं भावं तथापि प्रथितगुणगण! स्वस्ति तुभ्यं वदामः॥

( ३ )

तातेन ते विबुधमण्डल-शेखरेण
श्रीपद्मनाभविदुषाऽथ पितामहेन।
विद्वत्कुलाऽमलसरारुह-भास्करेण
पाठालयोऽयमधिकाशि विकासितोऽभूत्॥

( ४ )

विहाय स्वीयं यश्चिरपरिचितं पाठन-पदं
पदं नेतुं वाचं किमपि च गरिम्णः सुरनुताम्।
परिश्राम्यत्यन्तःप्रसृमर-महोत्साह-कलितः
पदं प्राप्तः श्रीमान् स इह बिबुधस्तोत्रवचसाम्॥

( ५ )

त्वत्पाणि-पङ्कज-विसृत्वर-सौरभाढ्य—
सुद्योततां जगति सुप्रभ-सुप्रभातम्।
त्वल्लेखनीरसखनिर्जगतां हिताय
सा बोभवीतु विशदीकृत–चारुभावा॥

( ६ )

इति काश्मीरधराधिप-पाठालय-संयुजो विबुधाः।
विनिवेदयन्ति भवते वाङ्मयकुसुमोपहारममुम्॥

भवतां गुणराशिमुग्धाः—
हिन्दुविश्वविद्यालयीय-रणवीरसंस्कृत पाठशालया अध्यापकाः, छात्राश्च।

# सुप्रभातविषये निवेदनम् ।



सुप्रभातस्य मुद्रणे भूयान् विलम्बः समजनीति न निवेदनीयम् । अत्र प्रचुराणि कारणानि विद्यन्ते । पूर्वन्तु सुप्रभातस्य सञ्चालनमस्माभिः स्वधनेनैव प्रारब्धम् । कैश्चन स्निग्धैः सुरभारती-प्रणयिभिः प्रणयिभिः साहाय्यप्रदानं कृतम् । कियन्मासानन्तरं कैश्चन मित्रैः सुप्रभात-यन्त्रालयस्थापन-प्रकाशनादि-व्यवसायधिया महदायोजनं विहितम् । कृतश्च भूयान् द्रव्य-व्ययः । सम्पादितानि विविधोपकरणानि । तथाप्यावश्यक-द्रव्यलाभाभावात्, यन्त्रालय-निर्मातॄणां दौरात्म्येन च हतोत्साहास्ते केवलव्यय-मात्रसारस्य सुप्रभातस्य सम्यक् सञ्चालने नोत्साहं प्रदर्शितवन्तः । ग्राहकसंख्यापि न भूयसी समभवत् । यन्त्रालयाधिकारिणोऽपि संस्कृतपत्रस्य प्रकाशने उपेक्षां प्रदर्शयन्तः प्रचुरतरं मुद्रणव्ययं याचन्तेस्म । कर्गजलाभस्तु दुःशक एवासीत् । कर्गजाधिकारिभिः प्रोक्तं यत् प्रथमं छात्राणां कृते लेखन-पठन-पुस्तिकादीनां कृते कर्गजः प्रदीयेत, नान्येभ्य इति । अत एव द्विगुण-त्रिगुणमूल्येन कथमपि कार्गजलाभं कृत्वा सुप्रभातस्याङ्कोऽयं प्रकाशितः ।

× × ×

### धन्यवादाः

एतादृशे व्यतिकरे सुप्रभातस्य पुनः प्रकाशनाय बहुशः प्रयतमानैरपि नास्माभिः किमपि कर्तुं पारितम्। तथापि केषाञ्चन सहृदय-सुहृदां साहाय्येन समनुरोधेन च सुप्रभातस्य प्रथमवर्षीयाङ्कचतुष्टय-प्रकाशनार्थं प्रयतितमस्माभिः । तत्रास्माकं प्रिय-सुहृद्भिः काशीस्थैः प्रसिद्धनागरिकैर्विद्वद्वर – श्रीजगदीशचन्द्रभट्टाचार्य्यैः स्वयं शतं दत्वा संरक्षकत्वं स्वीकृत्य पञ्चशत-साहाय्य-प्रदापन मुररीकृतम् । अतएव सुप्रभातस्य पुनर्मुद्रणं प्रारब्धम् । तेभ्यः कृतज्ञतापूर्वकं धन्यवादान् वितरामः ।

एतस्मिन्नन्तरे प्रियसुहृद्भिः सुप्रभात-प्रणयिभिः बीकानेर—प्रजासभा [ एसेम्बली ] मन्त्रिभिर्विद्वद्वरेण्यैः श्रीचन्द्रधर ईसर एम० ए०-महोदयैरपि सुप्रभातस्य सञ्चालनाय प्रोत्साहिता वयम् । तेषां प्रेरणया श्रीमद्भिर्मोतीलालपुरोहितमहोदयैः शतं दत्वा संरक्षकता स्वीकृता । अन्यदपि तैः प्रतिज्ञातम् । इत्युभयोः कृतज्ञतामूरीकुर्वन्तो धन्यवादान् वितरामः ।

× × ×

### भाविव्यवस्था विषये

"संस्कृत-समाजे जीवनं नास्ति । अस्य समाजस्यास्तित्वं विंशतिवर्षाभ्यन्तर एव विलयं यास्यति । संस्कृतज्ञेषूत्साहो नास्ति । इमे तु सर्वदा देशकाल-प्रतिकूलाचरणं कुर्वन्तिः, स्वयं विनष्टाः, परान्नाशयन्तीति एतेषां कृते किमपि प्रयतनं परिश्रमश्च व्यर्थ एवेति सुप्रभातस्य प्रकाशनं स्थगितं स्यात् । व्यर्थ-चिन्ताभारेण, अरण्य-रोदनेन, ऊषरे वर्षणेन वा किमिति'—केषाचिन्मतम् ।

अपरे तु वदन्ति यत्—"यथा कथमपि वा भवतु, सुप्रभात-सदृशस्य सरल-सरल-भाषा निबद्धस्य जागर्ति-जनकस्य संघटनकारिणः पत्रस्यावश्यकता विद्यते । तदर्थं धनसंग्रहं विधाय कथमपि सञ्चालनीयमेवेति ।"

केषाचिदिदं मतमस्ति यत् "संस्कृतभाषायां किमपि न भविष्यति, ये खलु संस्कृत-भाषा-संरक्षणाय व्ययं कुर्वन्ति, ते संस्कृतानभिज्ञाः सन्ति । तेषां कृते हिन्दी-भाषायां पत्रसञ्चालनं विधेयम् । उद्देश्य-विधेयादिषु परिवर्तनमकृत्वा केवलं सुप्रभातस्य भाषा-परिवर्तनं विधेयम् । राष्ट्रभाषायां ग्राहकाणां सहाय-कानाञ्च सत्वरमेव प्राचुर्य्यं स्यादिति ।"

अत्र त्रिषु विकल्पेषु कस्तावदस्माभिराश्रयणीय इति-सुप्रभात-पाठकानां मतमपेक्षामहे । मन्ये, सुप्रभात-पाठकाः कृपया सत्वरमेव स्वमत-प्रदानं विधास्यन्ति । तदनन्तरमेव वयमपि स्वमतं स्थिरीकृत्य द्वादशाङ्के निर्णयं प्रकाशयिष्यामः ।

अस्य वर्षस्य द्वादशाङ्कास्तु अवश्यमेव प्रकाशिता भविष्यन्ति । यतो ग्राहकाणां हानिर्न भवेत् । साम्प्रतमङ्कद्वयं प्रकाश्यमानं सत्वरं प्रदीयेत । तत्रैव ग्राहकाणां मत-मालोच्य-भाविसूचनां दास्यामः ।



# सुप्रभात-सहायक-निधिः

एतत्तु न वक्तव्यम् यत् केवलं सुप्रभातस्य मुद्रण-कर्गज-कार्यालयादिव्ययः प्रतिमासं प्रायः शतद्वयात्मको विद्यते। यथा मुद्रणव्ययः ११०) कर्गजव्ययः ४५) प्रेषणादिव्ययः १५) भृत्य व्ययः १०) एवं १८०) मुद्रामितो व्ययस्तु नितरामावश्यकः। सम्पादक-सहसम्पादक-व्यवस्थापकादीनां वेतनं तु दूरापास्तम्। ते स्वयमेव प्रचुरं धनं स्वीयं तत्र ददति। यदि तेषां व्ययोऽपि सम्मेलितः स्यात्तदा शतत्रयम् प्रतिमासं स्यात्। एवं प्रतिवत्सरं २५००) व्ययो न्यूनत आवश्यक एव। प्रथमे वर्षे ग्राहकेभ्यः केवलं ८००) शेषस्य १३००) कृते बाह्यसाहाय्यं सम्पादकस्य निजं धनं वा लगति। द्वितीये वर्षे यदि ग्राहकेभ्यः १५००) प्राप्तं स्यात्तदापि प्रायः सहस्रमितं धनं पुनरप्यपेक्षते। तृतीये वर्षेऽपि ग्राहकेभ्यः २०००) स्यत्तदापि ५००) अपेक्षत एव।

एवमनुमानतः केवलं सुप्रभातस्य मुद्रणादिव्यये वर्षत्रये सहस्रत्रयमपेक्षते।

यदि वैतनिकाः कर्मचारिणो न भविष्यन्ति तदा पत्रस्य सुसम्पादनं यथासमयप्रकाशनञ्च दुष्करमेव। स्वीयं धनं समयञ्च व्ययीकृत्य, ग्राहकाणामसह्याक्षेपं विषह्य, विविधं चिन्ताभारं प्रतिक्षणं शिरसि निधाय कस्तावत् वर्षत्रयं वर्षचतुष्टयं वा कार्यं कर्तुं प्रभवेत्?

अतो वै वर्षत्रये न्यूनतोऽपि सहस्रत्रयं कर्मकराणां वेतनमपि सम्मेल्य षट्सहस्राधिको व्ययः समत्यपेक्षते। इयेतदर्थं केषांचिन्मित्राणां मतमिदं यत् 'सुप्रभात-सहायक-निधिः' संस्थापनीयः। अस्य प्रस्तावस्य सर्वप्रथमं प्रस्तावकाः सुरभारती-सेवा-बद्ध-परिकराः सुप्रभात-प्रणयिनः प्रियसुहृदः कांगड़ी-गुरुकुल-विश्वविद्यालय-आयुर्वेदमहाविद्यालये प्राकृतिक-चिकित्साया अवैतनिकाध्यापकाः श्रीमत्पण्डित-भवानीप्रसादमहोदयाः सन्ति। तैः प्रस्तावेन सह पञ्चविंशतिमुद्राः सर्वप्रथमं प्रहिताः सन्ति। एतदनन्तरं महामण्डलेश्वरैर्विद्यानन्दस्वामिभिरपि तावदेव साहाय्यं प्रदत्तम्।

अन्यैश्च सुहृद्भिरत्र साहाय्यं प्रदातुं प्रतिज्ञातमस्ति। तद् वयमत्र संस्कृत-प्रणयिनोऽनुरुन्ध्महे यत्ते संस्कृतपाठशाला-विद्यालय-छात्रवृत्तिभ्योऽप्यधिकमावश्यकं संस्कृतच्छात्राणां जीवनभूतं सुप्रभातममुं साहाय्यदानेन दापनेन च समुज्जीवयन्तु, प्रोत्साहयन्तु च।

सुप्रभातं न केवलं पत्रमात्रम्, एतत्तु संस्कृत-समाजस्य महत्वपूर्णं क्रियात्मकं सफलञ्च नेतृत्वं करोति।

अस्मिन् सुप्रभात-सहायक-निधौ दशसहस्रं रूप्यकाणां सत्वरमपेक्षते। तेन च सुप्रभातं यथासमयं प्रकाशितं स्यात्, यथासमयप्रकाशनेन च ग्राहकवृद्धिः स्यात्। एवञ्च यदि सहायक-सम्पादक-प्रूफ-संशोधकादीनां प्रबन्धः स्यात्; सुन्दरतरं महत्वपूर्णं सम्पादनं भवेत्। येन निश्चिन्तः सम्पादकः सर्वशक्त्या पत्रस्य सुसम्पादने प्रयतस्तस्य समुन्नतौ प्रभवेदिति।

मन्ये, सुप्रभातस्य ग्राहकाः, अनुग्राहकाः, पाठकाः, हितैषिणः सर्वेऽप्यत्र दत्तावधाना भविष्यन्तीति किम्बहुना! —केदारनाथ शर्मा सारस्वतः, प्रधानसम्पादकः।

प्रकाशकः, मुद्रकश्च—गौरीनाथपाठकः, साहित्याचार्यः, खगेश-प्रेस, अगस्त्यकुण्डम्, काशी।

त्रयोदशाब्दे ] सौर-माघ-फाल्गुनयोः, २००३ वैक्रमाब्दाः [ एकादश-द्वादशसंख्ये

# सुप्रभातम्

काशिकराजकीय-संस्कृत-महाविद्यालयस्य—

## सार्द्धशताब्दी-महोत्सवाङ्कः ।



प्रालेयाचलवत् समुन्नत-शिरा, गजन्महाध्यापक—
श्रेणी-सन्तुलित-प्रबुद्ध-निनदत्-कण्ठीरवोपक्रमः,
श्रीमद्भारत-भारती-गुरुगणैः सानन्दमाराधितः
सम्राट्-स्थापित-काशिका-सुरगवी-विद्यालयो द्योतते ।

—महामहोपाध्यायः नारायणशास्त्री, खिस्ते ।

वार्षिकम्मूल्यम्-४) [ फरवरी-मार्च, १९४७ ] छात्रेभ्यः पुस्तकालयेभ्यश्च-३)

काशीनरेश्वरः—श्री विभूतिनारायणसिंह महोदयः



एतेषां पूर्वजैरेव महाविद्यालयस्थापनायां सर्वाधिकं साहाय्यं प्रदत्तमासीत् ।
सुविस्तृता विद्यालय-भूमिः, केचन ग्रामाः, प्रचुरतरं
[धनञ्च तत्कालीन-काशीराजेनैव प्रदत्तम् ।

## लेख-सूची



## चित्र-सूची



### भ्रम-संशोधनम्

सुप्रभातस्य नवमदशमाङ्कयोः "सुप्रभातविषये निवेदनम्" इति शिरस्के लेखे 'धन्यवादाः' इत्यस्मिन् प्रघट्टके मुद्रितं यत् 'श्रीमतां पं० चन्द्रधर-ईस्सर-एम० ए०, एल-एल० बी०—महोदयानां प्रेरणया श्रीमद्भिर्मोतीलालपुरोहितैः शतं दत्वा संरक्षकत्वं स्वीकृतमिति' तद् भ्रमपूर्णं विद्यते। वस्तुतः श्रीमद्भिः पण्डित चन्द्रधरशर्मभिः स्वयमेव प्रेषितमासीन्। प्रेषकस्तेषां लेखकः—श्रीमोतीलाल पुरोहित आसीदिति।

अस्मिन्नङ्के प्रारम्भ एव २१३ पृष्ठे 'प्रास्ताविक'मिति शिरस्के लेखे, ६ पङ्क्तौ १९४८ तमे वैक्रमाब्दे [१९९१ खिस्ताब्दे] इति मुद्रितम्। तत् क्रमशः १७४८-१७९१ इति पठनीयम्। —सम्पादकः

# सुप्रभात-पाठकाः अवदधतु ।

प्रतिज्ञानुसारं सुप्रभातस्यायमब्दः प्रायो वर्षद्वयान्तरे भगवत्कृपया पूर्तिङ्गत इति सुहृदां सुहृदामनुकम्पैवात्र निदानम् । अस्माकमेष निश्चय आसीत् यदब्द-पूर्त्ति विधाय पुनः संस्कृतक्षेत्रे किमपि कार्यं न समारब्धव्यम् । परं मध्ये काशीस्थ-पण्डितसभा-स्तम्भैः काशीविद्वन्मण्डल-सदस्यैश्च भूयो भूयः कार्यारम्भे क्षेत्रविस्तारे च प्रोत्साहनं दीयते । कैश्चन सुप्रभात-प्रणयिभिः पाठकैः, कैश्चन साहाय्य-दातृभिः संरक्षकैरपि समुत्साह्यते । परं महामहर्घता-समये प्रचुरतरधन-साध्येऽस्मिन् कार्ये न केनापि किमपि कर्तुं पार्यते। तथापि कैश्चन सुहृद्भिरत्रापि किमप्याश्वासनं दीयते । सुप्रभात-सदृशस्य पत्रस्य वाराणसीतः सञ्चालनं तद्द्वारा च भावि-महत्तर-कार्य-सम्पादनं कस्मै न रोचते ? अतोऽस्माभिर्निश्चितं यत् सुप्रभातस्य सञ्चालनं विधेयमेव । तदर्थं सुप्रभात-प्रणयिभिरधोलिखित-निवेदनानुसारमस्माकं साहाय्यं विधेयम् ।

१—सुप्रभातस्य नवीनवर्षारम्भो माघशुक्ल-वसन्तपञ्चमीतो भविष्यति । चतुर्दशाब्दस्य प्रथमोऽङ्कस्तत्पूर्वमेव प्रकाशितो भविष्यति । अतः सुप्रभात-ग्राहकैः स्वीयं वार्षिकमूल्यं तत्पूर्वमेव कार्यालये प्रेषणीयम्। येन मासद्वयं त्रयं वा सुप्रभातस्य प्रकाशनं निर्बाधं प्रचलेत् ।

२—एतदभ्यन्तरे सुप्रभातस्य कोषसंग्रहाय, ग्राहकवृद्धौ च पण्डितसभायाः शिष्ट-मण्डलं (डेपुटेशन) विभिन्न-नगरेषु, राज्येषु च भ्रमणं विधाय द्रव्य-संग्रहं करिष्यति । तदत्र स्व-स्व-नगरेषु सुप्रभात-प्रणयिभिः पाठकैः संस्कृतज्ञैश्च तस्य पूर्णं साहाय्यं विधेयम् ।

३—सुप्रभात-संरक्षकाणाम्, सहायकानां संस्कृतानभिज्ञानां राज्ञां धनिकानाञ्च सौविध्यमनुध्याय कियत्कालं यावत् हिन्दीभाषाया अपि कश्चनांशः स्थास्यति, यत्र राजनीति-समाज-धर्म-संस्कृति-संग्रन्थन-संस्कृतोन्नत्यादि-विविध-विषयेषु सुप्रभात-पण्डितसभा-विद्वन्मण्डलादीनां विचाराः, मन्तव्यानि, कर्तव्यानि च भविष्यन्ति । कालान्तरे हिन्दी-सुप्रभातम् पृथक् प्रकाश्येत ।

—सम्पादकः

## धन्यवादः,कृतज्ञता-प्रकाशश्च ।

—अस्मिन्नङ्के काशीनरेश्वराणां श्रीविभूतिनारायण सिंह महोदयानां तथा डा० भगवान्दास-महोदयानां चित्रं 'सन्मार्ग' –कार्यालयतः प्राप्तमिति परां कृतज्ञतां प्रकाशयामः । अन्यानि चित्राणि सरस्वती-भवनाल्लब्धानीति तदध्यक्षाणां कृतज्ञाः स्मः ।

—सुप्रभात-सहायक-निधिकोषे वर्द्धमानमण्डलस्थ-'डखरा'-भूमिपतिभिः क्षत्रिय-(खत्री)-कुलमण्डनैः श्रीविमानविहारीलालसिंह हण्डे-महोदयैः पञ्चशतं दातुं प्रतिज्ञातम् । एतच्च दानं काशीस्थ-प्रसिद्ध-देश-सेवकानां नागरिककार्यकर्तॄणां विविध-संस्था-सञ्चालकानां सुहृद्वराणां श्रीजगदीशचन्द्र-भट्टाचार्य-महोदयानां प्रेरणया प्राप्तमिति पूर्वं स्वयमपि संरक्षकतां स्वीकृत्य धन्यवादभाजनभूतानां तेषां महान्तमुपकार-भारमुररीकुर्मः। श्रीमद्भ्यो विमानविहारिमहोदयेभ्यश्च साशीर्वादं धन्यवाद-प्रकाशनं कुरुते सुप्रभात-परिवारः पण्डितसभा च ।

—अस्याङ्कस्य सम्पादनं, संशोधनं च कदाचिदस्वरावशात्, कदाचिच्च उदरशूल-व्याकुलतया कृतमिति यत्र तत्र भ्रमादशुद्धीनां सम्भव एव । सच दयालुभिः पाठकैः सम्मार्जनीयः, क्षन्तव्यश्च ।

—सम्पादकः ।




संस्कृत—मासिक—पत्रम्

त्रयोदशाऽब्दे } सौर माघ—फाल्गुनौ २००३ विक्रमाब्दाः { एकादश-द्वादशसंख्ये

# वाराणसेय-राजकीयसंस्कृतपाठशाला-वर्णनाष्टकम्

श्रीमन्मध्वसम्प्रदायाचार्य-दार्शनिकसार्वभौम साहित्य-दर्शनाद्याचार्य-तर्करत्न-न्यायरत्न-गोस्वामि-दामोदरशास्त्री

काश्यात्मा मधुरा सुमानगतिभिर्या चास्त्ययोध्या किल
प्रौढिम्नोज्जयिनी सुवर्णलसिता नो स्यात् किमु द्वारका।
माया कामकलापकोटिकलनात् काञ्ची कथं नो भवेद्
राज्ञोऽध्यापनशालिकाऽखिलपुरीरूपा नु किं काशिकी॥

अज्ञापूर्वच्छटाभी रचयति कुतुकं नित्यमौत्सुक्यभाजां
नानाभेदैर्विधानैः कलयति पुरुषं स्वस्वकर्त्तव्यवृन्दे।
तन्त्रैरूहैः प्रसङ्गैः समुचितकरणैः संपिपर्त्तीप्सितव्यं
मीमांसैषाऽङ्गना वा विलसति भुवने पाठशाला सुराज्ञः॥

संदेहं तर्कवादैर्विघटयति सदा निर्णयोदर्करम्यै-
रौच्छृङ्खल्यं निरस्यत्यपि च समुदितैर्निग्रहैर्भावगर्भैः।
पक्षे हेतुं विधत्ते परिहरति विपक्षानुगां रीतिमारा-
दुक्ताऽसौ पाठशाला जनयति हृदये नीतिमान्वीक्षिकीयाम्॥

बुद्ध्याहङ्कारमात्रं नयति परिभवं शास्त्रतत्त्वैकजन्या
मोहोच्छेदं विधत्ते गुणगणविभवैः सर्वथैवाविवादम्।
ख्यातीरुत्पाद्य शर्मोन्नतिमुपनयते सम्मुखायातमद्धा
लोकेऽसौ पाठशालाऽऽह्वयत इव मदात् कापिलीं प्रक्रियां नु॥

क्वचिद् द्वैतं ब्रूते भणति परथा कुत्रचिदहो
विशिष्टाद्वैतादि क्वचन वलयत्यन्यथयति।
क्षणाद् भङ्गं वक्ति प्रवदति च नैकान्तसरणिं
ध्रुवं शालाऽस्त्येषा निगम इव नानापथजुषा॥

द्वित्वं तु क्वापि धत्ते शिथिलयति च संधित्सुभावं प्रगृह्ये—
ष्वादेशं वाऽनुबन्धं घटयति फलदृक् सर्वलोपं तनोति।
क्वापि व्यासं समासं समुचितविषये विग्रहं तद्धितं वा
राजाऽऽहो शब्दशास्त्रं स्थिरति न हि मतिः पाठशालेति नृणाम्॥

कक्षाभागानुसाराद् ग्रहगतिवशतोऽभिन्नतां भिन्नतां वा
व्यक्ताव्यक्तत्वरीतिं प्रकृतिनियमगां सर्वतो लोचयित्वा।
मत्वा तच्छ्लेषभागं भजनगुणफलं राति वा लाति सम्यग्
ज्योतिःशास्त्रोपमाना जगति विजयते भूपतेः पाठशाला॥

संवादिनं भजति चोज्झति तद्विरुद्धं
न्यासं समाश्रयति चान्यमवस्तृणाति।
शब्दश्रुतिं च विविनक्ति समादरेण
नादागमेन सदृशी खलु पाठशाला॥

# काशिकराजकीयसंस्कृतमहाविद्यालयः

महामहोपाध्यायः श्रीनारायणशास्त्री खिस्ते, साहित्यवारिधिः

प्रालेयाचलवत् समुन्नतशिरा, गर्जन्महाध्यापक-
श्रेणीसन्तुलितप्रबुद्धनिनदत्कण्ठीरवोपक्रमः ।
श्रीमद्भारतभारतीगुरुगणैः सानन्दमाराधितः
सम्राट्स्थापितकाशिकासुरगवीविद्यालयो द्योतताम् ॥१॥

श्रीमद्विष्णुपदप्रसारितशिरा दोधूयमानः शनै-
रुद्यानोत्थितपुष्परागमसृणैर्वातैः स्वभृत्यैरिव ।
अज्ञानान्तकराध्वराहितजयस्तम्भायमानो ध्वजो
यन्मूर्ध्नि प्रविराजते स सुरगीर्विद्यालयो द्योतताम् ॥२॥

यस्योच्चैः शिखराणि कारुरचनाकौशल्यसाक्षीण्यहो !
नीडान्तःस्थितमञ्जुमञ्जुविरुवत्पारावतानि क्षणम् ।
विश्रामस्थलतां व्रजन्ति बहुधा वैमानिकानां चिरं
श्रान्तानां, स समेधतां सुरगवीसाम्राज्यविद्यालयः ॥३॥

मुख्यद्वारपुरःस्थितस्य मसृणग्रावोपबद्धाकृते—
र्धारायन्त्रवरस्य शीतलजलक्षोदान् मुहुर्वर्षतः ।
व्याजात्तापहरस्तु पश्चिमदिशाधीशः प्रचेताः स्वयं
भक्त्या सेवत एव यं स सुरगीर्विद्यालयो द्योतताम् ॥

रन्ध्रेषुविन्दुशरत्प्रपूर्तिमहितो वृद्धोऽपि सन्नाहवान्
सिद्धो यस्तरुणायते प्रतिदिनं प्रोद्यन्महाः सन्महैः ।
श्रीमन्मङ्गलदेवशास्त्रिभिरिहाध्यक्षैः परं भूषितः
साम्राज्यश्रियमातनोतु विपुलां विद्यालयोऽयं चिरम् ॥

उन्नतिपदसोपानं ज्ञानगवीदुग्धपूर्णमापीनम् ।
अधिकाशि जयतितमां प्राच्यं सारस्वतं धाम ॥ ६॥

त्रिबुधप्रीणननिरता रसार्पणैर्भुवनदर्शनप्रयता ।
राजाश्रयाभिवृद्धिर्दीव्यतु सारस्वती सुषमा । ७॥

---

## प्रास्ताविकम्

—:०:—

नैतदविदितं सुरभारतीप्रणयिनां यद् वाराणसेय-राजकीय-संस्कृत-महाविद्यालयो [ गवर्नमेण्ट संस्कृत-कालेज ] भारतवर्षे निखिलसंस्कृत-पाठशाला-नायकः प्राचीनतमः, सुप्रतिष्ठितः सर्वमान्यश्च संस्कृत-महाविद्यालयो वर्वर्तीति ।

एतस्य संस्थापनं १८४८ तमे वैक्रमाब्दे [ १९९१ खिस्ताब्दे ] आँग्लशासनस्य प्रारम्भकाले ईस्ट इण्डिया कम्पनी-प्रबन्धेन समभूत् । एवमयमिदानीं १५६ वर्षीयो-महाविद्यालयः सर्वेषां संस्कृत-विद्यालयानां शिरोमणिभूतो राराजते ।

न केवलं प्राचीनतैवास्य परमं महत्त्वम्, अपितु विश्वविश्रुत-यशसां जगन्मान्यानां महाविदुषामाश्रयभूतोऽप्ययं विजयतेतराम् ।

श्रीमद् – बापूदेवशास्त्रि – बालशास्त्रि – सुधाकर-द्विवेद-गङ्गाधरशास्त्रि-शिवकुमारशास्त्रि- कैलाशचन्द्रशिरोमणि-दामोदरशास्त्रि-राममिश्रशास्त्रिप्रभृतयो महाविद्वांसोऽस्याध्यापका अभूवन् । श्रीमद् रामावतारशर्म-नित्यानन्दपन्त-दामोदरलाल गोस्वामि-अम्बिकादत्तव्यास—लक्ष्मणशास्त्रिद्रविड-वामाचरण भट्टाचार्य-देवनारायण त्रिपाठि-प्रभृतयश्चास्य छात्रा आसन् ।

प्रारम्भकालादेव शनैः शनैः परिवृंहमाणस्यास्य विकाशोऽपि नितरां मनोरञ्जको मननीयश्च सुरभारतीप्रणयिनाम् ।

साम्प्रतमेव माघमासे वसन्तपञ्चमी दिवसे एतदध्यक्षस्य श्रीमतो मङ्गलदेवशास्त्रिमहोदयस्य प्रेरणया प्रान्तीय-शिक्षा-मन्त्रिणां श्रीमतां सम्पूर्णानन्द महोदयानामुत्साहेन चास्य सार्द्धशताब्दी-महोत्सवो महता समारोहेण सम्पन्नः ।

प्रतिवर्षं परःसहस्रच्छात्रैर्दीयमानपरीक्षस्यास्य

वार्षिकोपाधिप्रदानसमारम्भश्च [ समावर्तन-महोत्सवः ] न भवतिस्म। अस्मिन्नवसरे तस्यापि समारम्भ आकर्षकरूपेण सम्पन्नः। द्वयोरपि महोत्सवयोः साभापत्यं प्रान्तीयप्रधानमन्त्रिभिः श्री गोविन्दवल्लभ पन्तमहोदयैः सम्पादितमभूत्।

उत्सवाङ्गभूतानां विविधपरिषदां कविसम्मेलनस्य चायोजनं समभूत्।

एतद्धि संस्कृत-जगति जागतिजनकं महोत्साहवर्द्धनमायोजनमभूतपूर्वं समजनीति तत्परिचयाय प्रकाशयितुं चिरादभिलषितोऽयं सुप्रभाताङ्को विविधविघ्नविहतैरप्यस्माभिः कथमपि पाठकानां पुरः समुपस्थाप्यते।

अत्राङ्के सार्द्धशताब्दिमहोत्सवस्य समावर्तन-समारम्भस्य तदङ्गभूतपरिषदां च कार्यजातम्, महाविद्यालयस्य विस्तृत इतिहासः, सरस्वतीभवन-परिचयः, नवीन-पाठ्य-प्रणाली-परिचयश्चेति प्रमुखविषयाः सन्निवेशिताः सन्ति।

सुप्रभातस्य स्थितिमालोचयद्भिरस्माभिरस्य यथाभिमतं सम्पादनं प्रकाशनञ्च कर्तुं पारितमिति सङ्कोचमञ्चति चेतः। तथापि संस्कृतविदुषां छात्राणाञ्च कृते अङ्कोऽयं स्पृहणीयो मननीयः सङ्ग्रहणायश्च स्यादिति सम्भावयामः।

अत्र प्रकाशित-लेखेषु केचन लेखाः, प्रतिकृतयः, कविताश्च महाविद्यालयीय-संस्कृत-त्रैमासिक-'सारस्वतीसुषमा'ऽभिध-पत्रिकातः संगृहीताः सन्ति। तदर्थं पत्रिकायाः कृतज्ञताभारं बिभृमः।

लेख--प्रकाशनानुमत्या, लेखाऽऽलेख्यादि-विविधोपयुक्त-साधन-प्रदानैः, सत्परामर्श-वितरणैश्च बहूपकृतवतां तदध्यक्ष-श्रीमन्मङ्गलदेवशास्त्रिणां तथा महाविद्यालय-प्रधानाध्यापकानां साहित्यवाचस्पति-महामहोपाध्याय—श्री नारायणशास्त्रिणाञ्च महान्तमुपकारमूरीकुर्वन्तस्तेभ्यो बहुशो धन्यवादान् वितरन्तो विरमामः।

—सम्पादकः

---

# प्रारम्भिकं भाषणम्

डाक्टर मङ्गलदेवशास्त्री, एम० ए०, डी० फिल्०
[ प्रिन्सिपल, गवर्नमेन्ट संस्कृत कालेज, बनारस ]

मान्याः सभापतयः देव्यः, सज्जनाश्च !

अद्य राजकीय-संस्कृतमहाविद्यालयस्य दीर्घकालीन इतिहासे महान् हर्षावसरः सौभाग्यकालश्च समुपस्थितो यद् वयं तस्य सार्द्धशताब्दी-महोत्सवे प्रथमे-उपाधिवितरणोत्सवे च सम्मिलिताः स्मः। अस्मिन्नवसरे अहमात्मनो महाविद्यालयतश्च श्रीमतां सादरं हार्दिकं स्वागतं करोमि।

अस्य महाविद्यालयस्य सार्द्धशताब्दीमहोत्सवो वस्तुतः १९९८ तमे वत्सरे भवितुं योग्य आसीत्, यतस्तस्मिन्नेव वत्सरे विद्यालयस्य १५० वर्षपूर्तिरभवत्। तस्मिन्नेवाब्दे प्रथमोपाधिवितरणोत्सवश्च कर्तुं निश्चित आसीत् परं महायुद्धारम्भ-कारणेन च स स्थगितः। महानयं हर्षावसरो यत् वयं तमुत्सवमद्य प्रान्तीयाधिकारिणां कृपया सानन्दं सम्पादयामः।

अस्य महाविद्यालयस्य प्रारम्भ-विकाशयोर्मनोरञ्जकस्येतिहासस्य वर्णनात् पूर्वमस्य वर्तमानस्वरूपस्य स्पष्टीकरणं नितरामावश्यकम्। यतः शिक्षिता जनताऽप्यस्य स्वरूपानभिज्ञा वर्तते।

अस्य स्वरूपं चतुर्धा विभक्तं वर्तते। (१)साम्प्रतमत्र १४ चतुर्दशाध्यापकास्तथा मध्यमातः पोस्टाचार्यपर्यन्तं ४६३ छात्राः सन्ति। काशीस्थ-समस्तविद्यालयेभ्यो, येषु छात्रावासाः, छात्रवृत्तयश्च दीयन्ते, विशिष्टरूपेण वृत्त्यादाने सांविध्यमत्रास्ति। संस्कृत-महाविद्यालये इयती छात्रसंख्या पर्याप्ता विद्यते। छात्रेषु युक्तप्रान्तातिरिक्त मध्यप्रान्त-राजपूताना-बङ्ग-विहार-पञ्जाप-नेपालादि-भिन्नप्रान्तीयाश्छात्राः सन्ति, येन महाविद्यालयस्यास्य निखिल-भारतीयं स्वरूपमद्यापि संरक्षितं वर्तते।

( २ ) अपर आँग्लविभागः। अत्र अध्यापकद्वयं विद्यते। संस्कृतच्छात्राणामैच्छिकरूपेणाङ्ग्लभाषा-

ध्ययनाय सौविध्यप्रदानमेवास्योद्देश्यम्। विगतवर्षे प्रान्तीय-हाईस्कूलबोर्ड-इण्टरमीडियटबोर्ड-संस्थया च सम्बन्धोऽप्यस्य सञ्जातः। एतेनायं विभागः प्रान्ते स्वीयममनितरसाधारणं स्वरूपमापद्यते।

(३) तृतीयः सरस्वती-भवन-पुस्तकालयो वर्वर्ति। अस्य द्वावुपविभागौ। प्रथमो मुद्रितपुस्तक-विभागः, यत्र संस्कृत-वाङ्मय-सम्बन्धिनां २०००० दुष्प्राप्य पुस्तकानां संग्रहो विद्यते। अपरश्च हस्तलिखित पुस्तकानां विभागो यत्र प्रायः ५०००० दुर्लभ-संस्कृत पुस्तकानां संग्रहो विद्यते। अयं विभागो न केवलं संख्या-दृष्ट्या, प्रत्युत अप्रकाशित-पुस्तक-संग्रहदृष्ट्या उपादेय-पुस्तक-प्राचुर्य्येण च निखिलजगति संस्कृत-पुस्तकसंग्रहालयेषु महत्वपूर्णं विशिष्टं स्थानमर्हति। अस्मादेव विभागात् सरस्वतीभवन-ग्रन्थमाला प्रकाशिता भवति; यस्यां ८२ प्राचीनपुस्तकानां प्रथमं प्रकाशनं सञ्जातम्।

तत एव 'सारस्वती-सुषमा'—नाम्नी पत्रिकाऽपि प्रकाश्यते, यत्र गवेषक-विदुषां महत्त्वपूर्णाः मननीयाश्च प्रबन्धाः प्रकाशिताः भवन्ति।

(४) चतुर्थो विभागः संस्कृत-परीक्षाणामस्ति। अयं सर्वप्रधानो विभागः। अस्य सञ्चालन-प्रबन्धः, संयुक्त-प्रान्तीयसंस्कृत-शिक्षाबोर्ड-साहाय्येन महाविद्यालयाध्यक्ष एव परीक्षाध्यक्षरूपेण करोति। संयुक्त-प्रान्त—मध्यप्रान्त—मध्यभारत—राजपूताना—गुर्जर—काठियावाड़—नेपालप्रभृतिप्रान्तेषु १४०० पाठशालाः, परीक्षा-सम्बद्धाः सन्ति। परीक्षक-संख्या ४२५ मिता, प्रश्नपत्राणां संख्या च ३५० मिता वर्तते। उक्त संख्याभिरस्य विभागस्य विस्तारो महत्त्वञ्चानुमातुं शक्यम्। एतावता सुस्पष्टमेव यदयं महाविद्यालयो विश्वविद्यालय-संज्ञामलभमानोऽपि विश्वविद्यालय-कार्यं सम्पादयति। प्राच्यविद्या-सम्बन्धे तु विश्वस्मिन्नद्वितीयोऽयं महाविद्यालयः सर्वोच्चैः स्थानमलङ्करोति।

## ऐतिहासिकं पर्यवेक्षणम्

अस्या विशालसंस्थायाः सार्द्धशताब्दी-महोत्सवावसरे, अस्या विकाशस्य, संक्षिप्त-परिचयात्मकं पर्यवेक्षणमावश्यकं प्रतिभाति। एतत् पर्यवेक्षण-द्वारैवास्याः स्वरूपम्, आदर्शम्, तथा भाविनीं प्रगतिम्, प्रकारञ्च हृदयङ्गमं कर्तुं समर्था भविष्यामः।

अस्य महाविद्यालयस्येतिहासः साधारणतया चतुर्षु कालेषु विभक्तुं शक्येत। यथा १८४८ वैक्रमाब्दात् ( १७९१ ई० ) १९०१ पर्यन्तं प्रथमः कालः। १९०१ वैक्रमाब्दात् ( १८४४ ई० ) १९३७ वैक्रमाब्दं यावत् ( १८८० ई० ) द्वितीयः। १९३७ वैक्रमाब्दात् १९७५ ( १९१८ ई० ) पर्यन्तं तृतीयः कालः। १९७५ विक्रमाब्दतः ( १९१८ ई० ) इदानीं यावच्चतुर्थः कालः प्रचलति।*

१९९४ विक्रमवत्सरे ( १९३७ ई० ) राष्ट्रसभया गृहीते शासनाधिकारे प्रथमवारं शिक्षाप्रश्नः-राष्ट्रिय दृष्ट्या विमर्शितः। अत एव १९९५ तमे विक्रमाब्दे संस्कृतकालेज-परीक्षा-पाठ्यक्रम-सुधार-समितेः, महाविद्यालय-पुनः सङ्ग्रन्थन-समितेश्च संस्थापनमभूत्। उभयोः समित्योर्महत्वपूर्णः परामर्शः शिक्षाधिकारिणां सम्मुखमास्ते। आशास्महे शीघ्रमेव तेषां कार्यरूपे परिणमनं भविष्यतीति। तेषां परिचालनेन संस्कृत-शिक्षा-जगति नूतनयुगाविर्भावो भविष्यति।

अस्य महाविद्यालस्येतिहासे सुदीर्घे महच्चमत्कारजनकमिदम् यत् इयमेका साधारणा पाठशाला शनैः शनैर्विकसिता साम्प्रतमिदं विशालतरं स्वरूपं धारयति। अस्मिन् सार्द्धशतके विद्यालयस्य यशोवल्लरी क्रमशः परिवर्द्धमाना विशालं रूपमासादयन्ती भारते समस्त—संस्कृत-शिक्षाया आदर्शभूता समजनि।

अस्मिन् विद्यालये शिक्षितानां अस्याध्यापकैर्वा शिक्षितानां पश्चात्यानां भारतीयानां वा उत्कृष्टविदुषां बहूनि नामानि गणयितुं शक्यन्ते।

पाश्चात्य-विद्वत्सु-श्रीस्पूनर-( डाइरेक्टर जनरल ऑफ आर्कियालाजी-ऑफ इण्डिया ) पेन्सिलवेनिया ( अमरीका )-विश्वविद्यालयाध्यापक—श्रीनामन्ब्राउन-येल-विश्वविद्यालयाध्यापक-डा० एडजर्टन-डा० वेनिस-डा० थीबो-प्रभृतयः प्रधानाः सन्ति। प्राच्य-

* [ एतेषां चतुर्णां कालानां परिचयः, स्वतन्त्रलेखरूपेणाग्रे प्रकाशितो द्रष्टव्यः—सम्पादकः ]

विद्वत्सु च म० म० गङ्गाधर शास्त्रि-म० म० दामोदरशास्त्रि-म० म० सुधाकर द्विवेद-आचार्यदामोदरलालगोस्वामि-म० म० नित्यानन्दपर्वतीय-म० म० गङ्गानाथझा-म० म० गोपीनाथकविराज-म० म० हारानचन्द्रभट्टाचार्य-प्रभृतीनां नामानि परिगणनीयानि सन्ति। एतेषां कृते महाविद्यालयो महद् गर्वमुद्वोढुं शक्नोति।

अस्माकमभिलाषः आवश्यकता च।

आधुनिक-परिस्थितौ यदा नवभारतस्य निर्माणं भवति तदा समयपरिवर्तनेन सह महाविद्यालयस्यास्य लक्ष्ये आदर्शे च व्यापकं गभीरञ्च परिवर्तनमपेक्षते। इदानीमस्य प्रगतिरवरुद्धा वर्तते।

सर्वप्रथममस्य पाठ्यपद्धतिपरिवर्तनमावश्यकम्। पाठ्यपद्धतेः परिधिरेवं व्यापिका विस्तृता च भवेत् यस्यां भारतीयसंस्कृतेः सम्पूर्णानामङ्गानां समावेशः सम्भवेत् येन च विलुप्तप्रायाणां प्राचीनशास्त्राणां विषयाणाञ्च पुनरुद्धार-प्रयत्नः सम्पादितो भवेत्।

इदमप्यावश्यकं यत् शिक्षापद्धतिद्वारा भारतीय-प्राचीनज्ञान-विज्ञानस्य साम्प्रतिक-ज्ञान-विज्ञानस्य जीवितः सम्पर्कः संस्थापितो भवेत्। अन्यथा वस्तुतः कस्या अपि विद्यायाः समुन्नतिर्न सम्भाव्यते। किमपि ज्ञानमसम्बद्धयोः खण्डयोर्विभाजयितुं न शक्यम्।

प्रतिदिवसं जीवन-समस्या कठिना भवन्ती दृश्यते। महायुद्धानन्तरन्तु अनया भयङ्करं रूपं धृतमस्ति। संस्कृतशिक्षायामपि-अस्या घातकः प्रभावो दरीदृश्यते। अस्मादेव कारणात् विगतवर्षेषु परिवर्धमाना संस्कृतच्छात्राणां संख्या साम्प्रतं न्यूनन्यूनमापद्यते। साम्प्रतं संस्कृत-शिक्षा जीविका प्रश्नादसम्बद्धा न स्थातुमर्हति।

प्रान्तीय-शिक्षाध्यक्षैः १९९४ वत्सरे संस्थापिताभ्यां समितिभ्यां संस्कृतशिक्षायाः, महाविद्यालयस्य भविष्यन्तं सम्मुखे समवस्थाप्य ये प्रस्तावाः प्रस्तुताः सन्ति, तैः संस्कृत-जगति नवीना आशा सञ्चारिता विद्यते।

आशास्महे शिक्षाध्यक्षाः समितिप्रस्तावानामविलम्बितं कार्यरूपेण परिणमने कृतोद्यमा भविष्यन्तीति। नवीनविषयाणां समावेशः, प्राचीन-लुप्तप्रायाणां विषयाणाञ्च पुनरुद्धारो नितरामावश्यकः। यद्येतयोः प्रबन्धो महाविद्यालये कृतः स्यात् तदा तेन अपरेषां विद्यालयानामपि प्रेरणा स्यात्।

महाविद्यालयस्य पुनः संघटन-समितेरयं प्रस्तावो नितरामावश्यको यत् सरस्वतीभवनमनुसन्धानसंस्थारूपेण परिणतं स्यादिति। राजकीयाज्ञया मया मद्रासनगरस्य पूनानगरस्य च गवेषणसंस्थानां पुस्तकालयानां प्राच्य-ग्रन्थ-संग्रहस्य च निरीक्षणं कृतम्। तदवलोकनेन मम सुदृढोऽयं विश्वासो यद् राजकीयाधिकारिणां स्वल्पेनैवावधानदानेन सरस्वतीभवनं संस्कृतस्य प्रभावशालिनी गवेषणसंस्था भवितुमर्हति। मम तु विश्वासो यत् यथा वाराणसी संस्कृतविद्यानां केन्द्रम्, तथा सरस्वती-भवनमपि एशिया-भूखण्डे भारतीय-पुरातत्वस्य प्रधानं केन्द्रं भवितुमर्हतीति। एवंसति महाविद्यालयोऽपि विश्वविद्यालयपदमधिरोढुं प्रभविष्यतीति सुदृढोऽस्माकं विश्वासः।

अस्माकमावश्यकतासु प्रथमं वृहत्तरस्य छात्रावासस्यावश्यकताऽस्ति; यत्र २०० छात्राः सुखेन निवस्तुं शक्नुयुः। यतोऽत्र भारतस्य दूरतरप्रदेशेभ्यश्छात्राः समायान्ति।

विद्यालयस्य स्थान-सङ्कोचोऽपि विकाशे परमबाधको वर्वर्ति। यावानस्य महान् कार्य-विस्तारस्तस्य कृते स्थानं नितरां सङ्कुचितं वर्तते।

मन्ये, अस्माकमावश्यकतासु राजकीय-शिक्षाधिपाः सहानुभूतिपूर्णं विचारं विधाय तत्पूर्त्यै यतेरन्निति—

भाषणमिदं हिन्दीभाषायामासीत्, सुप्रभातकार्यालयादनूद्य प्रकाशितम्।

## काशिक-राजकीय-संस्कृत महाविद्यालयीय



# समावर्तन-सत्र-पद्धतिः

(१) सदसस्पतिः
(२) कुलपतिः
(३) प्रस्तोता
(४) प्रवक्ता

( सत्रमण्डपे कुलपतेर्भाषणानन्तरम् )

सदसस्पतिः—अथातः समावर्तन-सत्रमारभध्वम्।

कुलपतिः—भो ब्रह्मन् ! पुरः स्वस्त्ययनमनुब्रूहि ।

( वेदाचार्यः स्वशिष्यगणेन सह अधोनिर्दिष्टान् मन्त्रान् पठेत् )

(१) अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नम उक्तिं विधेम ॥
( यजु० ४०।१६ )

(२) असतो मा सद्गमय । तमसो मा ज्योतिर्गमय ।
मृत्योर्माऽमृतं गमय ।

(३) यत् प्रज्ञानमुत चेतो धृतिश्च,
यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म क्रियते,
तन्मे मनः शिवसंकल्पमस्तु ॥
( यजु० ३४।३ )

(४) यस्मिन् ऋचः साम यजूँषि,
यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तँ सर्वमोतं प्रजानां
तन्मे मनः शिवसंकल्पमस्तु ॥
( यजु० ३४।५ )

(५) यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ॥
( तैत्ति० उ० १।४।१ )

(६) भद्रं कर्णेभिः शृणुयाम देवा
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभि-
र्व्यशेमहि देवहितं यदायुः ॥
( यजु० २५।२१ )

(७) मन्द्रा कृणुध्वं धिय आतनुध्वं
नावमरित्रपरणीं कृणुध्वम् ।
इष्कृणुध्वमायुधारं कृणुध्वं
प्राञ्चं यज्ञं प्रणयता सखायः ॥
( ऋ० १०।१०१।२ )

कुलपतिः—भोः स्नातकाः ! साधु भवन्तोऽवहिताः शृण्वन्तु ।

( श्रुत्वैवं सर्वे स्नातकाः समुत्तिष्ठेयुः )

कुलपतिः—(१) स्नातकाः ! अपि प्रतिजानते भवन्तो यत्सर्वदा स्मृतिमास्थाय आर्यवृत्तमनुतिष्ठद्भिः पाण्डित्यप्रकर्षार्थं च प्रयतमानैर्भवद्भिः काशिकराजकीयविद्यालयीयपरीक्षाणां गौरवस्य मर्यादायाश्च संरक्षणं विधास्यते ?

स्नातकाः—आम्, नूनम् ।

कुलपतिः—(२) स्नातकाः ! अपि प्रतिजानते भवन्तो यद् भारतीयशीलसदाचारपरम्पराया आदर्शमभिलक्ष्य मनसा वाचा कर्मणा च सदा तथा प्रयतिष्यते भवद्भिर्यथा भारतीयसंस्कृतेः सुयशो जगद्व्यापि भवेत् ?

स्नातकाः—आम्, नूनम् ।

कुलपतिः—( ३ ) अपि प्रतिजानते भवन्तो यत् परहितसाधन एवात्महितं समीक्षमाणैर्भवद्भिरज्ञानस्यान्यायस्य दैन्यस्य दारिद्र्यस्य च प्रतीकारेण ज्ञानस्य, न्यायस्य, आत्मगौरवस्य, समृद्धेश्च स्थापनया मातृभूमिर्भारतं सबलं, सम्पन्नं सम्मानास्पदं च यथा सम्पद्येत तथैव प्रयतिष्यते ?

स्नातकाः—आम् , नूनम्

( ततः परं स्नातकैः सामूहिकी प्रतिज्ञा कर्तव्या )

अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । इदमहमनृतात् सत्यमुपैमि ।

( यजु० १।५ )

कुलपतिः—अथातः स्नातका यथाक्रममुपस्थाप्यन्ताम् ।

प्रस्तोता—माननीयाः सदसस्पतयः ! अहं खलु भवतां समक्षं......उपस्थापयामि । एनेन यथाविधि गुरुशुश्रूषया........विद्या समधिगता, परीक्षाद्वारा च स्वकीया.....उपाधियोग्यता प्रमाणिता । प्रार्थये यत्प्रमाणपत्रसमर्पणेन एनम् उक्तोपाधिनाऽलंकुर्वन्तु तत्रभवन्त इति ।

( उपाधिप्रमाणपत्रदानोत्तरं पदकप्रदानार्थमपि स्नातका अधोलिखितप्रकारेण उपस्थापयिष्यन्ते ) ।

प्रस्तोता—माननीयाः ! अहं खलु भवतां समक्षं ......उपस्थापयामि । एनेन......शास्त्रे परीक्षाद्वारा विशेषयोग्यता प्रमाणिता । प्रार्थये यत् स्वर्ण–रजत-पदकप्रदानेन एनमलंकुर्वन्तु तत्रभवन्त इति ।

( ततः परं कुलपतेरादेशः )

( १ )

ॐसह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु । मा विद्विषावहै ॥

( कठोपनिषद्, शान्तिपाठः )

( २ )

सङ्गच्छध्वं संवदध्वं
सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे,
संजानाना उपासते ॥

( ऋ० १०।१९१।४ )

( ३ )

समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥

( ऋ० १०।१९१।४ )

( ४ )

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ।

सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव ।

यान्यनवद्यानि कर्म्माणि तानि सेवितव्यानि, नो इतराणि । यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि । ये के चास्मच्छ्रेयांसो ब्राह्मणाः तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् ।

श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भियाऽदेयम् । संविदा देयम् ।

अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः संमर्शिनो युक्ता अयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु ये तत्र ब्राह्मणाः संमर्शिनो युक्ता अयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः ।

एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवं चैतदुपास्यम् ॥

( तैत्तिरीयोपनिषद् १।११ )

( ततः परं प्रवक्तृमहोदयस्य भाषणं भविष्यति )

# दीक्षान्त-भाषणम्

## महामहोपाध्याय-विधुशेखरभट्टाचार्यस्य

[ विश्वभारती-महाविद्यालयाध्यक्षस्य ]

नमो नरनारायणाय ।
नमो महद्भ्यश्च महत्तरेभ्यश्च ।
नमो विद्वद्भ्यश्च विद्यार्थिभ्यश्च ।
नमो नमः सर्वेभ्यः सुहृद्भ्यश्च सदस्येभ्यश्च ।

सुगृहीतनामन्सचिवोत्तमास्य जनपदस्य श्रीगोविन्दवल्लभ, आर्याः सदस्याश्चान्येऽस्य महतः सदसः, साधुवादा भवद्भ्यो यदहमस्मिन सादरं सदयं चामन्त्रितोऽस्मि ।

इयमाधिकारिकाणामभ्येषणा, पूर्णं सार्धमब्दशतमेतस्य संस्कृतमहाविद्यालयस्य, अयं समागमस्तत्प्रवर्तितासूत्तमासु परीक्षासु सिद्धार्थानां विद्यार्थिनाम्, प्रत्युत्प्रन्नश्चेष तन्निमित्त उत्सवः । तद्भवता भाषितव्यमत्र किमपि प्राप्तकालमिति । मयापि वशंवदेन तदभ्युपगतम् । अतो मां यथामति यथाशक्ति च तच्चिकीर्षन्तमनुमन्तुमर्हन्ति भवन्तः करुणया ।

पुरावृत्तविद आहुश्चतुर्दशानां महतां प्राचीनानां जनपदानां काशय एव मुख्याः । राजधानी च तेषां तन्नाम्नैव प्रसिद्धा । काशीनामन्तिक एव विदेहाः । यत्र वैदेहो राजा जनको नाम । यस्य संसदि कुरुपाञ्चालेभ्योऽभिसमेतानां ब्रह्मविदां सह महर्षिणा याज्ञवल्क्येन बभूव तदपूर्वं ब्रह्मोद्यम् । तस्मिन्नेव च काले काश्यामपि नरपतेरजातशत्रोः सदसि प्रावर्तत बालाकेस्तादृगेव ब्रह्मवादः । स किल काश्यो नृपो नासहतेव कीर्तिं जनकस्य ब्रह्मविदामयमाश्रय इति । काश्यो नृपो धृतराष्ट्रः किल पराबभूवे सात्राजितेन शतानीकेन । अपजह्रे चैतेन तदीय आश्वमेधिकस्तुरङ्गमः शक्यमवगन्तुमेतावता अनवगता अपि काशयो वेदस्य मन्त्रकाले बभूवुस्ते सुविश्रुता ब्राह्मणसमये । दृश्यते वरणावत्याथर्वणे मन्त्रे । का पुनरियं वरणावती । उद्धिद्देद इत्याचार्यः सायणः । कापि स्रोतस्वतीति कश्चित्साम्प्रतिकेषु । गङ्गैव सेत्यपरः । वाराणस्येवेयमित्यन्यः । सिद्धान्तस्तु दुष्करः । यथावास्तु । पश्चात्तु ब्राह्मणानामिव तथागतानामार्हतानां च ग्रन्थेषु सुलभोऽस्य जनपदस्य नगरस्य च वृत्तान्तविस्तरो यत्र काशिरिति वाराणसीति च द्वयमपि नामाविशेषेण प्रचुरं प्रयुज्यते । इदं त्विह मनाङ् मन्तव्यम् । सौगतेषु तन्त्रेषु पालौ मागधीप्रभावाद् बाराणसी बाराणसीति (वकारस्थाने बकार इति)। जैनेषु तु प्राकृते वर्णविपर्यासाद् वाराणसी वानारसीति पठ्यते । तत एव चाद्यत्वे भाषायां बनारस इति ।

यथा वा भवत्वेतत् । तदिदं काशिनगरमनुगृहीतत्वाद्भगवत्या भागीरथ्या, अद्भुतत्वात्प्रभावस्यात्रत्याया भूमेर्वातस्य च, परिग्रहाच्च साधूनां निसर्गत एव तीर्थत्वमापन्नमद्यापि सादरमाराध्यते भारतेन समग्रेण ।

स्वभावादेव च प्रावर्ततात्र संस्कृतविद्या । प्रतिष्ठितश्चायं तदर्थो महान्विद्यालयः । कस्य नाम चाद्य न नन्देच्चित्तमतिमात्रमवगच्छतो यत्पूर्णमस्य सार्धमब्दशतमिति । स्थापनोत्तरं चास्मिन्नभूवन बहवः सुविश्रुता विपश्चितः प्राच्याश्च प्रतीच्याश्च । तेषां कतिचिदध्यक्षा अपरे पुनरुपाध्यायाः । सर्वेऽपि स्मरणीयास्तेऽद्यास्माभिः सादरं हृदयेन कृतवेदिना ।

आत्मगतं तु किञ्चिदिह प्रसङ्गप्राप्तं विवक्षामि । अनुभवामि च तेन महतीमभिनवां च प्रीतिं । अत्यधमोऽप्यभूवमहमपि पञ्चषाणि वर्षाणि कश्चिद्विद्यार्थिनामस्य संस्कृतमहाविद्यालयस्य अधीयानो महामहोपाध्यायात्तत्रभवतो भट्टाचार्यश्रीकैलासचन्द्रशिरोमणिपादात् । तस्मिंश्च काले स किल वरेण्यो विदुषामुपाध्यायो वेनिसो ( Dr. A. Venis ) विद्यालयमेतमध्यतिष्ठत् । महती सा तात्कालिकी कथा । उपैतीयं स्मृतिपथमुपच्छन्दयति च मां प्रकाशनाय । न तु तच्छक्यं कर्तुं विस्तरभिया ।

भद्रं वः सदस्याः ! प्राप्तकालं वक्तव्यं मयेत्याधिकारिणामभ्येषणा । किं पुनरद्य प्राप्तकालम् । न खलु दह्यमाने मूर्धनि महता वह्निना परं किञ्चित्कश्चिच्चिन्तयितुं शक्नोति वा चिन्तयितुम् । किन्तु खल्वद्य दृश्यते । किं

वेदानीमनुभूयत आरभ्यास्मादतिभैरवाद्भुवनसंग्रामात्। गच्छतु कश्चिदेकस्मादपरं दिगन्तम्। देशाद्वा देशान्तरं भूलोकस्य। जनपदाद्वा जनपदान्तरं भारतस्य। किं स पश्येत्तत्र किं कृच्छ्रं नापतितम्। कियद्वा कतमद्वा दुःखं नोपागतं लोकस्य। हन्त! द्वेषो जनानामन्योन्यम्। अहो जिघांसा पुंसां परस्परम्। किमियं युगे वः पुरुसृष्टिरुत-पुरुष-सृष्टिः। किमद्य वयं नरा आहोस्वित्पशव उताहो तेभ्योऽप्यधमाः। हन्त भोः! क्व प्रथितं सत्येन, क्व न्यायेन, क्व वा धर्मेण। क्व तिरोभूतमन्नेन, क्व वसनेन। क्व सुखेन, क्व श्रेयसा, क्व च तिरोहितं शान्त्या। तच्चेदिदमेव स्याज्जीवनं जनानां, किं नामान्यन्मरणं भवेत्। केयं दुर्गतिः। कुत इयम्। केनेयमापादिता। कः खल्वस्याः कर्ता। अवश्यमिद-मन्वेष्यमिष्यते चेत्प्रतीकारः।

तत्र नूनमिदमभ्युपगन्तव्यं सर्वैः कृतज्ञेन हृदयेन लोकस्य साम्प्रतिकैः शिक्षितैरिति। नेदमपलप्यते, शक्यते वापलपितुम्। एतदपि च तथैवात्यन्तं दूयमा-नेन मनसा वक्तव्यं यच्च यावच्चाकुशलं तस्य तैः कृतं च क्रियते च, चिन्तितं च चिन्त्यते चानारतं, न तन्निखिलैरपि मूढैर्भुवनस्य, भूतैर्भवद्भिर्भविष्यद्भिश्च, समवेतैः कथञ्चित्कस्मिंश्चित् सहस्रैरपि वत्सराणां, स्वप्नेऽपि कदाचित् कल्पयितुं शक्यम्। सेयं दुष्कृति-र्दुर्गतिर्वा कृतिस्तेषामेव शिक्षितानामिदानीन्तनानां नपुनर्निरक्षराणामशिक्षितानां भिल्लशबरकिरातादीनाम्। विद्यमानास्वपि तासु तास्वतिमहतीषु ग्रन्थशालासु विशालास्वद्भुतासु च विज्ञानशालासु अन्येषु च तेषु तेषु परःसहस्रेषूपकरणेषु, इयमेव चेच्छिक्षा, का नाम कुशिक्षा? वरमशिक्षैव सहस्रकृत्वः। न खलु नोत्क्र-ष्यन्तेऽस्मभ्यं निरक्षरा अशिक्षिताश्च किरातादयः सत्याभिसन्धाने। नहि ते वयमिव जानन्तोऽपि तथा मृषोद्यं कुर्वन्ति। तस्मात्प्राभविष्यं चेदहम्, अभविष्य-च्चेच्छक्तिर्मयि समूलच्छेदमुदच्छेत्स्यमहं शिक्षां प्रवर्त-मानां; या खलु सर्वथैवासुरी राक्षसी वा, ययान्य-न्मन्यते, अन्यदुच्यते, क्रियते चान्यत्। धिगेता-मन्वहम्।

प्रसिद्धं विज्ञानं साम्प्रतिकम्। गम्यते तद्बलाद्गगनेऽपि विहगवद्विमानेन, अधस्तादपि च महोदधेर्मीना-दिवत्पोतेन तदुचितेन। किं बहुना। अन्तरेणापि-शरीरसम्पर्कं मातापित्रोरुत्पद्यते पुत्रः। किञ्च। नास्ति कश्चिद्दूरत्वे विप्रकर्षो नाम लोके। योजनसहस्रेऽपि किं वर्तत इति जानासि त्वं निमेषेण विनापि योग-प्रभावेण। गच्छसि च क्षणेनैव तत्र तत्रेदिच्छसि। कियदिदमुच्यते। अस्त्येषा शक्तिर्विज्ञानस्य। कथ-मपह्नूयताम्। इदं तु पृच्छामि। किमिदं सर्वं वस्तुतः श्रेयसे सम्पन्नं लोकस्य, अश्रेयसे वा? जीवातवे तस्य, मृत्यवे वा। पृच्छान्तरात्मानम्। अवगमिष्यसि प्रत्युत्तरम्। अवगमिष्यसि च कियदपराध्यति विज्ञानं लोकस्य। अतः कृतं कृतमेतेन।

इदं तु चिन्तयितव्यम्। न तावता मनागप्यपरा-ध्यति विज्ञानम्। भवति वह्निर्दाहाय भवति च पाकाय। न स आगत्य कर्णे कथयति, भोः पुरुष! अयमस्मि, मया त्वं गृहं दह, मा पाक्षीरोदनमिति। स्वतन्त्रस्तु पुरुषो गृहमपि दहेदोदनमपि पचेत्। तत्रौदनमपक्त्वा स चेद्वह्निना गृहमेव दहेत्, आत्मा-नमेव कुर्यादपराद्धम्, न कथञ्चिद्वह्निम्। एवमेव अस्ति विज्ञानं हिताय, अस्ति चाहिताय। तत्र वैज्ञा-निकः परो वा कश्चित्पुरुषो हिताय तत्प्रयुञ्जीत-अहिताय वा। अहिताय च प्रयोगोऽस्य वस्तुतोऽपप्रयोग एव। सोऽयमपप्रयोक्ता परमपराध्नोति।

कः पुनः पुरुषमेवमनर्थे प्रवर्तयति। उक्तं भगवता कृष्णेन, न स परः कश्चिन्महाशनान्महापाप्मनः कामादिति। यः खलु भगवता बुद्धेन मार इति युक्त्युपेतमुदीरितः। नास्त्यस्मात्परं किञ्चिदुपपन्नतरं नामधेयम्। मारो मृत्युरित्यनर्थान्तरम्। कामो नाम मृत्युमापादयन्मार इत्युच्यते। यत्पुनरसंयतोऽनभिभूतो वा कामो मृत्युमेव पुरुषस्यापादयति तदतिस्पष्टमद्या-स्मिन्भुवनसंग्रामे। प्रसिद्धश्चायमर्थो धर्मशास्त्रेषु विशे-षेण तु भारतोद्भवेषु। न च पौराणं वचनमिदम-समर्थं नेदानीमुपयुज्यत इति युक्तं वक्तुम्। न हि पौराणत्वं सर्वत्रैवापचिनोति शक्तिं वस्तुनः। को जानाति कदा नाम जातौ सूर्याचन्द्रमसौ। न चाद्यापि न कुरुतस्तौ तामेवार्थक्रियां यामकुरुतां पूर्वम्। न च

न करिष्यतस्तामेव पश्चादपि। न चेदं वचनमस्य वा तस्य वा अमुष्य वेति, अस्मिन्वा तस्मिन्वा अमुष्मिन्वा शास्त्र इत्येतावतैवोपादेयं हेयं वेति निश्चेतव्यम्। कथय साधो कस्यैतौ सूर्याचन्द्रमसौ। तव वा मम वा अमुष्य वेति। को वा तौ सेवमानो न समानमुपक्रियते। अथवा किमनया विचारणया। परीक्षस्व तद्यावच्छक्नोषि तथा, यथा कश्चित् सुवर्णं जिघृक्षुः परीक्षते तच्छेदेन दाहेन कषणेन च पाषाणे। तस्मान्न वक्तृगौरवान्न वा शास्त्रगौरवादिदमुदीर्यते; किन्तु वस्तुगौरवात्। अतो यः कोऽपि त्वं भव, यत्र क्वापि वा त्वं भव, भारतेऽन्यत्र वा, न चेत्पुरुष! त्वं संयच्छसि कामं, कुरु यच्चिकीर्षसि, लभस्व वा यल्लिप्ससे दुर्लभमपि नितान्तं, ध्रुवा ते विनष्टिर्महती। नास्तीह स्तोकोऽपि संशयः। न चेदिदं श्रोष्यसि विनङ्क्ष्यसि।

शिक्षां वयं विमृशामः। केयं शिक्षा नाम। कृतमिह निगमनिरुक्तादिकथया। सैव शिक्षा समासेन, शिक्ष्यते यया स्वपरयोः श्रेयः श्रेयःसाधनं च। जायते स्वं जीवितं सुखितं शान्तं च।

तत्र प्रवर्ततां या कापि शिक्षा भारते वर्षे, न जात्वियमृध्नुयाद् यदीयं भवेद्विनाभूता सर्वथापि संस्कृतशिक्षया। संस्कृतमत्र स्वार्थं बोधयत्प्राकृतमपि बोधयति। प्राकृतं च ततोऽपभ्रष्टमपि वाङ्मयम्। न केवलं शरीरेण नः प्रयोजनं, न वा केवलमात्मना। चक्राभ्यामिव रथस्य द्वाभ्यामेव ताभ्यां प्रयोजनम्। तत्र या काचिदन्या शिक्षा, कुर्यान्नः सा शरीरकृत्यम्। आत्मकृत्यं तु संस्कृतशिक्षैव। अतो नेयं कथमप्यवर्णनीया। संस्कृतं चेन्नश्येत्! किं शिष्येत भारतस्यात्मनः। का वा स्यात् संस्कृतिस्तस्य स्वकीया। तस्यां चासत्यां न भारतं भारतं भवेत्। चिन्तयन्तु भवन्तो यदि नाम रामायणं महाभारतं चोच्छिद्यते का गतिरुत्पत्स्यते भारतस्य। येयमद्यापि दृश्यते नः प्रजासु सा कापि मतिर्धर्मे ईश्वरादिषु वा भिन्दाना मानवांश्चतुष्पदेभ्यः, न किमियं साक्षात्परम्परया वा संस्कृतस्यैव परिणतिः? यानि च तानि तान्यमृतायमानानि वचनानि तेषु तेषु प्रदेशेषु मध्यकालोद्भवानां दादू-रज्जवकबीरादीनां साधकानां भक्तानां च, यान्युज्जीवयन्ति जीवनानि जनानां तान्यपि संस्कृतमूलकान्येव। संस्कृतसंस्कृतेरेवाय परिणामः।

अपरञ्च। योऽयमभिनवपुरुषावतारो महात्मा गान्धी, कामं भिद्यतामस्मासु केषाञ्चिन्मतिस्तस्य राष्ट्रनीतावन्यत्र वा, किं दृष्टः केनचित्कुत्रचित्तत्सदृशः कश्चित्स्थितप्रज्ञो बोधिसत्त्वो वा। श्रूयते किल कथासु पौराणिकीषु, 'एतस्मादमुष्माद्वा तपस्विनः स महान्महेन्द्रोऽपि बिभेयाञ्चकारेति। किं नास्मादत्यतिदुर्वृत्ता धनबलमत्ता चेयं राजशक्तिस्तथैव बिभेत्यतिमात्रम्। यः स परमहंसो रामकृष्णः, यः स गुरुः कवीनां रवीन्द्रनाथः, अन्ये च ते ते परःसहस्रा महान्तः पुरुषा भारतस्य, सर्वापीयं सृष्टिः संस्कृतसंस्कृतेरेव, न त्वन्यस्येति नास्त्यस्मिन्नीषदपि संशयः।

अन्यच्च। न तत्काव्यं काव्यम्, अपि तु शब्दराशिरेव केवलम्। न च तच्चित्रं चित्रम् अपि तु रेखापङ्क्तिरेव केवलम्, यत्र नाभिव्यज्यते भावः। भाव एव हि तयोर्जीवितम्। स च शुद्धः शुभाय, अशुद्धस्त्वशुभाय। अत्यद्भुतास्य शक्तिः। तेन हि सुहृदपि कश्चिन्नः सपदि दुर्हृत्, दुर्हृदपि च क्षणात् सुहृत्। एवं च यत्र क्वापि भवतु, यस्य कस्यचिद्वा भवतु, तदेव दर्शनं दर्शनम्, स एव धर्मो धर्मो यस्मात् प्रादुर्भवति प्रभूत उदारोदार उत्तमोत्तमश्च भावः। अर्थास्तावद्वस्तुसन्तः सन्तु मैवं वा, कल्पितानामपि तेषां भावेनैव सिद्ध्यति नः समीहितम्। रामायणकथापुरुषा वस्तुतो बभुवुरिति दुःशकं प्रतिपादयितुम्। कादम्बरीकथायां चन्द्रापीडादय इव कल्पिता एव त आद्येन कविनेति वदन्तो दुर्वारा एव। न च तेन न भवेदस्माकं रामो वा सीता वा। राम इत्युच्चरिते सीतेत्युच्चरिते वा यास्माकं चित्तवृत्तिरुदेति सैव पूरयति नो हृदयमानन्दपूरेण, संस्करोति पुनाति च चित्तमतिमात्रं, प्रापयति च परममपि पुरुषार्थम्।

प्रभुरीशुर्नाम वस्तुत एव कश्चिदासीदिति विप्रतिपद्यन्ते किल केचित् स्वयमीशवीया अपि। कामं माभूत्स कश्चित् तथा। स तु जगतो दुःखभारमुवाह स्वशिरसेति वर्तते तस्य भावमूर्त्तिः। दुरपह्नवेयम्। तया च मूर्त्या स ववृते, वर्तते, वर्तिष्यते च चिरम्।

को नामैनामपोहेत्। अत एव तदुपासनेन स मे बन्धुर्दीनबन्धुर्विश्वबन्धुर् एवड्र जो जातः,जातश्च ब्राह्मणो गुणेन यद्यपि न वर्णेन, वैष्णवश्च परमो वैष्णवदृष्ट्या, सन्नपि ईशवीयो धर्मेण। तस्माद्भाव एव प्रभवति।

संस्कृतसाहित्यं चाप्रतिमः. पारावारो परमभावाभिव्यञ्जकानां वचनरत्नानाम्। दिङ्मात्रं किञ्चिदुच्यते--

"यावद् भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम्।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥"
श्रीमद्भागवतम् ७.१४.८।

यावतान्नेनोदरं पूर्येत तावतैव देहिनां स्वत्वम्। यः पुनर्मन्यते ततोऽधिकेऽपि मे स्वत्वमस्तीति स चौरो मन्तव्यः। ततश्च स दण्डार्हो भवतीति तदर्थः। स्वयमेव चिन्तयन्त्वेतद्भवन्तो गम्भीरम्। उपमिन्वन्तु च सहैतेन यद्वदन्तीदानीं केचित्साम्प्रतिका राष्ट्रनीतिवेत्तारः। इदमन्यत्--

"न कामयेऽहं गतिमीश्वरात्परा-
मष्टर्धिसिद्धिमपुनर्भवं वा।
आर्तिं प्रपद्येऽखिलदेहभाजा-
मन्तःस्थितो येन भवन्त्यदुःखाः ॥"
तदेव ९.२१.१२.

परदुःखासहिष्णुतया सर्वेषां दुःखं स्वयमेव भोक्तुमाशासानः कश्चिदाह। परमा मे गतिर्भूयादिति नाहमीश्वरात्कामये। अणिमाद्यष्टसिद्धिर्मे भूयादित्यपि नाहं कामये। पुनर्भवो मे माभूद्, भूयान्मे मोक्ष इत्यप्यहं न कामये। किं पुनस्त्वं कामयसे? इदं कामये, अहं खलु सर्वेषां देहिनामन्तः प्रविश्य तेषां दुःखं प्राप्नुयां यथा ते निर्दुःखाः स्युः। इदं मे भूयादिति।

कृतमतिबहुना!

तदेवमतिमात्रं दुर्लभैश्चासङ्ख्येयैश्च महार्घैश्च रत्नौघैः परिपूर्णेयं संस्कृतसरस्वती समग्रमपि भुवनमाप्लावयेदमृतधारया, किं पुनरङ्ग! भारतम्!!

इदं चापरं किञ्चिदवगन्तव्यम्। यथा नद्यः स्यन्दमानाः प्राच्यो वा प्रतीच्यो वा उदीच्यो वा अवाच्यो वा सर्वास्ता ऋजुकुटिलनानागतयः समुद्रमेवाभिधावन्ति, यथा वा कस्मिंश्चित्पदे परस्परं भिद्यमाना अपि वर्णा एकमेव कमप्यर्थं बोधयन्ति, तथा संस्कृतसरस्वती विभिन्नेष्वपि विषयप्रस्थानेषु शान्तिमेवैकामभिप्रवर्तते। तत्पालनीयेयं सर्वैरपि शान्तिकामैः सर्वेणापि प्रयत्नेनेति किमिदं वक्तव्यं नाम विशेषेण। अथ कथञ्चिन्निरुध्यतेऽस्याः स्रोतः, न केवलं तेन भारतमेव मरुतामापद्येत, अपि तु भुवनमेवापचीयेत विरहितं तेन चिराय। तत्प्रयत्यतां यावच्छक्यं यथेयं संस्कृतसरस्वती संस्कृतिश्च तदीया परमुपचीयते।

सन्ति संस्कृतपाठशालाः परःसहस्राः। सन्तु ता निष्प्रत्यूहम्। वर्धन्तां च दिने दिने। न पुनस्तावतैव सेत्स्यति नः सर्वं समीहितम्। स्थाप्यन्तां तेषु तेषु स्थानेषु संस्कृतविश्वविद्यालया भूतये भारतस्य भुवनस्य च। प्रथमं तु तावदस्मिन्काशिनगर एव। सुकरतरं ह्यत्र तत्स्थापनं कारणेन विविधेन। अथवा भूयसा प्रतिष्ठितपूर्वं एवास्यां वाराणस्यां विनाभूतोऽपि तेन नाम्ना। स चायमेव राजकीयसंस्कृतविद्यालयः। अभ्युपगता ह्येतेन परःसहस्राः (१२४६) संस्कृतपाठशालाः। एतासु च पाठशालास्वधीयाना अनेकसहस्राणि विद्यार्थिनः प्रत्यब्दं परीक्ष्यन्त एतेन विद्यालयेन। नेदं वृत्तमवज्ञेयं नाम। अपेक्षते त्वेष कांश्चित्संस्कारान् प्रपूर्त्तीश्च।

भद्रं वः। आसीत्स किल कालोऽस्माकम्। तत्र यत्किमपि वेदनीयं भारतस्य, अलभ्यत तत्संस्कृते। अतः कस्यचिदधीतिनः संस्कृते शिक्षा समग्रा पूर्णा वेत्यमन्यत। तच्चासीदुपपन्नम्। अतएव स किलाचार्यः सायणो बुक्कराजमहीपतेः साम्राज्यधुरन्धरो बभूव। अद्यत्वे तु न तथा। आस्तां तावत्साम्राज्यधुरन्धरत्वम्। सान्धिविग्रहिकः प्राड्विवाकः परो वा कश्चिदतिसाधारणो राजपुरुषो भविष्यामीति परमप्रवीणोऽपि कश्चित् संस्कृते न जातु स्वप्नेऽपि कल्पयितुं प्रभवेत्। कालप्रभावादतिबहुलमद्यास्माकं वेदितव्यम्। सन्ति च ते विषया ये खल्ववश्यमधिगन्तव्याः पुरुषैः। न पुनः सर्वेऽपि ते वर्तन्ते संस्कृते। वर्तमाना अपि वा केचिद्भूयः परिष्कृता अर्वाचीनैः। किञ्च। नेदं मनसि कर्तव्यं यदस्माकमस्ति तावदेव तत्, न च किञ्चित्ततः

परमिति। दिङ्मात्रमिह किञ्चिदुदीर्यते निदर्शनमिति। अवितथमिदं व्याकरणं वयमधीमह इति। तत्र पृष्टः कश्चिन्निपुणतमोऽपि वैयाकरणो श्रुतवानपि द्वादशभिर्वर्षैर्व्याकरणं ब्रूयात्पश्यतीति दृशेर्धातोरिति। न त्विदं तत्त्वम्। वस्तुतस्तु स्पशेरिदमुत्पन्नं यस्मात्स्पष्टं स्पशः परपशेति च भाषायाम्। छन्दसि तु परपशे स्पाशयत इत्यादीन्यनेकानि। अगादित्येतेर्धातो रूपमिति वदन्ति। इहापि च तिरस्कृतं तैस्तत्त्वम्। वस्तुतस्तु गत्यर्थस्य गाधातोरिदं निष्पन्नम्। अस्मादेव गात्रं गौर्जगदिति च गमेः। ते तत्रभवन्तो वैयाकरणा एकस्य स्थाने परमादिशन्तस्तथा पदानि साधयन्ति। न पुनरीश्वरोऽप्यादिशन्घटं पटयितुमीष्टे। नैतावता निश्चेतव्यं नावेदिषुस्ते तत्त्वमिति। उपायकौशल्यन्त्वेतत्तत्रभवतामध्यापनायाम्। सत्यं त्वनेन तिरोहितमितित्ववश्यं कश्चिद् ब्रूयात्। न चासीत्प्रयोजनं तादृशैरादेशविधिभिः। साम्प्रतं प्रायो नाध्याप्यते व्याकरणमितिवृत्तदृष्ट्या। तच्चेदं यथा संस्कृतपाठशालासु तथैवाङ्गलविद्यालयेषूत्तमेष्वपि। यथाचेदं व्याकरणे तथान्येष्वपि बहुषु विषयेषु।

उद्धूतेयं संस्कृत-सरस्वती भारते। स्रोतस्वस्याः स्रोतस्वत्या इव नावरुद्धमुद्भवस्थान एव। प्रावहदेतन्निरन्तरायं बहिरपि भारतात्तेषु तेषु द्वीपोपद्वीपेषु देशेषु च विविधेषु। विशेषेण तु चीनेषु भोटेषु च। द्वयोरप्येतयोर्देशयोर्विद्वांसो न केवलमध्येतार एव संस्कृतस्यासन्, अपि तु व्याख्यातारोऽप्यभूवन्नतिदुर्गमानामपि शास्त्राणाम्। न च तेषां व्याख्यानान्युपेक्षमाणस्य पुंसः सम्पूर्यते तच्छास्त्रज्ञानम्। पश्यतु कश्चित्पोषणपण्डित-( Louis de la Valee Poussin ) कृतमभिनवमभिधर्मकोषव्याख्यानम्। तद्धि व्याख्यानं त्रिपिटकाचार्येण इयान्-चुयाङ् ( Hiuen-tsang ) इति सुविश्रुतेन चीनपर्यटकेन स्ववाचि विरचितं भाष्यमेवावलम्ब्य लिखितम्। अवतारितान्यनेकसहस्राणि संस्कृतपुस्तकानि चीनवाचि भोटवाचि च। परिश्रान्तं चात्र भारतीयैरपि प्रभूतम्, विशेषेण तु भोटवाच्यवतारणे। एतेष्ववतारितेषु ग्रन्थेषु भूयसामेवाद्य नाधिगम्यते संस्कृतं मूलम्। कियद्वा कदा वाधिगमिष्यत इति को जानाति। उद्धरणीयं त्वेतद्यथाशक्यमिति सर्व एव संस्कृतश्रेयस्कामाः कामयेरन्। तदर्थमावश्यकं तद्भाषाद्वयज्ञानम्। करणीयं च तद्विधानम्। स्मर्त्तुमर्हन्तीदमधिकारिणो यदा ते दास्यन्ति नस्तं सङ्कल्पितं संस्कृतविश्वविद्यालयम्। अहमपि च स्मरामि यदवोचन्मां कदाचित्स मे सुहृत्सहकर्मी च कश्चित्कालं विश्वभारत्यामुपाध्यायः श्रीवनलाभी ( Prof. Sylvain Levi )। कदाचिदामन्त्रितः सोऽधिपतिभिः परिदर्शनाय वाराणसीहिन्दुविश्वविद्यालयस्य। पर्यपश्यच्च स एनम्। न त्वतुष्यत्तस्य चित्तम्। अत एव स प्रत्यावृत्तो रहसि पृष्टवन्तं मां प्रत्यवोचद् यत्र नाध्याप्यते पालिर्न प्राकृतं चीनवाक् न वा भोटवाक् सोऽपि हिन्दुविश्वविद्यालयो नामेति।

आस्तां तावदेतत्। पश्यामः का गतिरन्यत्र संस्कृतस्येति। अतिसमृद्धेति वक्तव्यम्। कः स देशो भूगोले विशेषेण तु पश्चिमे दिग्विभागे यत्र सुप्रसिद्धेषु विश्वविद्यालयेषु नेदानीं सादरमुपास्यते संस्कृतम्। नायमभिनव उदन्तः। ब्रुवन्तु भवन्तः कतमोऽस्य विषयो न निपुणमनुशीलितश्चानुशील्यते च न गवेषितश्च गवेष्यते च तैस्तैः पाश्चात्यैर्विपश्चिद्भिः। न च केनचित्स्वप्नेऽपि चिन्तयितव्यं म्लेच्छास्ते न बुध्यन्तेऽस्मच्छास्त्राणीति। न हि किञ्चिद्विप्रतिपन्नो नाम प्रत्यक्षे। अधीष्व साधो यत्किमपि तत्परिष्कृतानां संस्कृतपुस्तकानां, प्रीयेत चित्रीयेत च ते चित्तम्। स्यादेतत्। भ्राम्यन्ति प्रमाद्यन्ति च त इति। न पुनर्वयमपि न भ्राम्यामः प्रमाद्यामो वा। अतो येषां केषाञ्चिद् भवतु दोषो हेयो गुणास्तूपादेयाः। नेदमुपेक्षितुमर्हसि। उपेक्षमाणो ह्यात्मानमेव त्वमुपेक्षिष्यसे। न चेदं युक्तम्। उपासते ते संस्कृतं वयमपि चोपास्महे। एवं ते च वयं चोभयेऽपि तदुपासनेन भावयन्तः परस्परं श्रेयः परमवाप्स्यामः। नात्र स्तोकोऽपि संशयः।

अथ कथं वयमुभये मिथो बुध्येमहि। भिन्ना वाक् तेषां भिन्ना चास्माकम्। महानयं प्रत्यूहः। कः संशयो दुरतिक्रमोऽयम्। तथाप्यन्वेष्टव्यः प्रतीकारः। स च कस्याश्चिदनुरूपायाः पाश्चात्यवाचोऽवश्यं

तावदपि ग्रहणं यावता सिध्यति प्रयोजनम्। एतच्चेदानीं यथा भूयिष्ठं सुकरं च सम्भवत्याङ्गलवाचा न तथान्यया कयापि। चेदिदं क्रियते न सर्वाङ्गीणं नः संस्कृतज्ञानं भवेदित्यकामेनाप्यङ्गीकर्तव्यम्। इदमीदृशमन्यच्चानेकं विचारितं . संस्कृतमहाविद्यालयस्य पाठ्यक्रम-पुनःपरीक्षणसमित्याः प्रतिवेदने ( Report of the Sanskrit College Syllabus Revision Committee, 1941 )। बहुव चिन्तितं सुचिन्तितम्। चिन्तयितव्यं च पुनरपि।

अथेदं किञ्चिदनतिपात्यम्। न ह्यन्तरेणेदं स्वप्नेऽपि सम्भावनीया समृद्धिः संस्कृतस्य। भूयिष्ठं ते पण्डिता एव ये नाम कृच्छ्रेऽप्यतिविषमे कथञ्चिज्जीवन्तो जीवयन्त्यद्यापि संस्कृतम्। ते चेद्विपन्ना नन्वतितरां विपन्नं संस्कृतम्। कः प्रतीकारस्तेषां ग्रासाच्छादनस्य। अलं बहुना। स्वयमेव चिन्तयन्तु भवन्तः का गतिरेषाम्? किमेते लभन्ते? किं वावश्यं लभेरन् यात्रामात्रस्यापि निर्वाहाय। एतेषां न किं सन्ति पुत्रा येऽवश्यं शिक्षणीयाः। न खलु न सन्ति दुहितरो याः शिक्षणीयाः परिणेयाश्च। नचैतेऽपि न व्याधिधर्माणः। तेषां पुत्रा नाधिगच्छेयुर्विद्यामुत्तमाम्। किं ता लब्धविद्या दुहितरो न देया वराय विदुषे। किं व्याधिता न चिकित्स्येरंश्चिकित्सकैरुत्कृष्टैः। क पुनस्तदुचितं धनम्। अथवा माभूद् धनम्। किं तेन। कृत्यानि तु तानि तानि यथा वा तथा वा करणीयान्येवावश्यम्।

अथवा नायं प्रश्नो विलक्षणो नाम कश्चित्पण्डितानाम्। साधारणो ह्ययमन्यासामपि प्रजानाम्। बहुसंसक्तश्चायम्। अत एव गहनाद् गहनतरः। तादृशश्चाविषय एव बुद्धेः पुरुषस्य मादृशस्य। अयमत्रभवान्सचिवोत्तमो नूनं स्वयमेवेदं गाढं चिन्तयति। सुफलं च चिन्ताया अनतिचिरं लोचनगोचरो भविष्यतीत्याशास्ते जनः।

अथ सौम्या विद्यार्थिनः, दुरतिक्रमासु परीक्षासु कृतार्थानां युष्माकं केचिदाचार्यपदलाञ्छनाः, अन्ये च शास्त्रिपदलाञ्छना इति यत्सत्यं परां कोटिमारोहति मे चित्तं प्रमोदस्य। न वो न विदितं पूर्वे विद्वांस ईदृशे समये समावर्तनमकार्षुरिति। साम्प्रतं त्वेतत् कथावशेषमात्रं केवलं गरिमाणमेव कञ्चित् प्राचां बहुकुशलमूलस्य ब्रह्मचर्यव्रतस्य स्मारयति; यदभावेन सर्वत्रैव विद्याप्यविद्या सती तिरस्कारायैव श्रेयसः सम्पन्ना न पुनः प्रादुष्काराय। अत एव नाद्यत्वे कश्चिन्मादृशः सत्यं वद धर्मं चरेति वक्तुं व्यवस्येदुत्सहेत वा कथयितुम्। एष आदेशः। एष उपदेशः। एतदनुशासनमिति। किञ्च कृतविद्या यूयम्। जानीथ चैतादृशमनेकम्। उपदिष्टाश्चैवमनेकगुरुभिः। अतः प्रतिनिवृत्य तस्मात्सर्वथाप्यनुपेक्ष्यं प्राप्तकालं च किञ्चिद्वो विवक्षामि। तदिदं विवेक्तव्यमायुष्मद्भिः पूतेन शान्तेन च चेतसा।

परिवर्तते कालः प्रतिक्षणम्। परिवर्तमानश्चायमन्तरेण केवलमन्तरात्मानं सर्वमप्यभितः परिवर्तयति। तत्कश्चिदिच्छतु मैव वा। क एनं निरुन्ध्यात्। अतोऽतिदुर्वारायामस्य परिवृत्तौ यदि कश्चिदतिमात्रं प्रतिकूलं प्रवर्तेत नूनं स उज्जवेनेव पयःपूरेण स्रोतस्विन्या दूराद्दूरतरं प्रवाह्यमाणो विक्षिप्यमाणश्च पुनः पुनस्तत इतो महान्तमनर्थमापद्येत।

पश्यन्तु तावत्कल्याणाभिनिवेशिनः! केन नाम नानुभूयतेऽद्य तुमुलो भैरवश्च क्षोभो लोकस्य समुद्रस्योद्वेलस्य मूलमेवायमुन्मूलयितुमिवास्य प्रवृत्तः। अतो दुर्निवारणायामस्य परिवृत्तौ किं वा कियद्वा किमर्थं वा परिवर्तयितव्यं भावयितव्यं तद्गम्भीरं भावितबुद्धिभिः। मुह्यति ह्येतादृशे व्यतिकरेऽतिमहतामपि मतिमतां मतिः। अस्ति धर्मो बाह्यः, अस्ति चान्तरः। उभावप्येताविष्येते। उत्कृष्यते त्वान्तरो बाह्यात्। यथात्मा देहात्। उपनयने ब्रह्मचर्येणेन्द्रियनिग्रहेण वा। विद्याग्रहणमेव मुख्यम्। गौणं तु तत्र दण्डादिधारणम्। कस्यचित्पालाशः, कस्यचिदौदुम्बरः, कस्यचिद्वा बैल्वो दण्डो भवेत्। स च कस्यापि केशसम्मितः, कस्यापि ललाटसम्मितः, कस्यापि वा नासासम्मितः। अथाविशेषेण सर्वः सर्वस्य स्यात्, सर्वथैव वा न स्यात्, न तावता न भवेद्विद्याग्रहणम् इन्द्रियनिग्रहो वा। किञ्च छिद्यते चेत्कामं छिद्यतां नाम किञ्चिदङ्गं न तु कथञ्चित्कदाचिदङ्गी। इत्थमाकलय्य यदुचितं धर्मस्य यत्सदृशं न्यायस्य, यदनुरूपं सत्पथस्य, यद्युक्तं विद्या-

याः, यच्च करणीयं सकलकुशलकामस्य सहृदयस्य तदखिलं चिन्तयित्वा चिरेण धीरेण शान्तेन च विधातुमर्हन्त्यायुष्मन्तः। न युष्माकं युष्मादृशां वा कश्चित्क्षणमप्युदासीत। प्रत्यासन्ना हि महती विनष्टिः। किमधिकेन सर्वथा शुभं वो भूयात्, विश्वस्य च निरवशेषणस्य।

ओं पृथिवी शान्तिरन्तरिक्षं शान्तिर्द्यौः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वे मे देवाः शान्तिः। शान्तिः शान्तिः शान्तिः।

ताभिः शान्तिभिः सर्वशान्तिभिः शमय मोह यदिह घोरं यदिह क्रूरं तच्छान्तं तच्छिवं सर्वमेव शमस्तु नः॥

॥ ओं शान्तिः। ओं शान्तिः। ओं शान्तिः॥

------

## विविध-सम्मेलनानि

अस्मिन् प्रथम उपाधिवितरणोत्सवावसरे तत्पूर्वदिवसेषु तदङ्गभूतं सम्मेलन-चतुष्टयं महता समारम्भेण सम्पन्नम्। तेषां सङ्क्षिप्तं विवरणमधस्तात् प्रकाश्यते।

### संस्कृतभाषण-प्रतियोगिता-सम्मेलनम्

जनवरीमासस्य २४ तमे दिवसे मध्याह्नैकवादनतः श्रीमतां महामहोपाध्याय-पण्डितप्रवर अ० चिन्नस्वामिशास्त्रिणां साभापत्ये समारब्धम्। तत्र "वर्तमान-संस्कृतशिक्षा-प्रणाली परिवर्तनमपेक्षते न वा"—इत्यमुं विषयमवलम्ब्य वाराणसेय-विविध-विद्यालयीयैश्चतुर्विंशतिच्छात्रैः पक्ष-विपक्षयोर्भागो गृहीतः। तेषु श्रीमान् रामचन्द्रजोशी प्रथमं पुरस्कारमलभत।

× × ×

### शास्त्रार्थप्रतियोगिता-सम्मेलनम्

आगामिनि २५ तमे दिवसे मध्याह्नोत्तरमेकवादनतः—विरलासंस्कृत-महाविद्यालयाध्यक्षाणां श्रीमतां सभापतिशर्म्मोपाध्याय-महोदयानां सभापतित्वे शास्त्रार्थ-प्रतियोगितायां व्याकरणविषयकः शास्त्रार्थः समारब्धः। लघुशब्देन्दुशेखरस्य कारकान्तभागे सभापतिमहोदयैः पूर्वपक्षः समुपस्थापितः। यथा—"अर्थवत्सूत्रे प्राचीनमतमुपक्षिप्य नव्यमतमालम्ब्य पूर्वपक्षिणा परिष्करणीऽयम्। प्राचीनमतानुसारेणोत्तरपक्षिणा समाधेयम्।"

अत्र पूर्वपक्षे क्रमशः भगवतीप्रसाद पाण्डेयः, श्रीवेदानन्द शर्म्मा, श्रीललिताप्रसाद पाण्डेयश्चेति त्रयः समुपस्थिताः।

उत्तरपक्षे च श्रीरामपाण्डेयः सम्मिलितः। निर्णायकानां मतेन श्रीरामपाण्डेयः पुरस्कारार्हः सम्पन्नः। निर्णायकाश्च त्रय आसन्—श्रीसभापति महोदयः, श्रीगोपालशास्त्री नेने, श्रीत्रिभुवनप्रसाद-उपाध्यायश्चेति।

तस्मिन्नेव दिने अपराह्णे ४ वादनात् गादाधरी-सामान्यनिरुक्ति-ग्रन्थे शास्त्रार्थः, हिन्दूविश्वविद्यालयीय-संस्कृतमहाविद्यालयस्य प्रधान-न्यायाध्यापकानां श्रीवामाचरणतर्काचार्याणां सभापतित्वे सम्पन्नः। श्रीमान् शिवदत्तमिश्रो न्यायाचार्यः, श्रीमान् पद्मप्रसाद भट्टराई, श्रीमान् वामाचरणभट्टाचार्यश्चेति त्रयो निर्णायका आसन्। गोयनका-महाविद्यालयीयः श्रीरामाकान्तमिश्रः पुरस्कारं लब्धवान्।

× × ×

### सतीर्थ्य-सम्मेलनम्

जनवरी-मासस्य २६ तमे दिवसे सतीर्थ्य-सम्मेलनं समभूत्। तत्र साभापत्यं श्रीमदाचार्यवर्यैः श्रीगोस्वामिदामोदरलालशास्त्रिभिः स्वीकृतमासीत्। परं न समागतेषु तेषु टीकमाणीसंस्कृतकालेज-प्रधानाध्यापकाः श्रीमन्तस्ताराचरणभट्टाचार्याः सभापतित्वमूरीकृतवन्तः। अत्र स्वागताध्यक्षैः महामहोपाध्याय श्रीनारायणशास्त्री खिस्ते-महोदयैः स्वागत-भाषणानन्तरं परस्पर-परिचय-प्रदानादि-कार्यं सम्पादितम्। अस्मिन् सम्मेलने गवालियर-राजकीयविद्यालयाध्यक्षाः, अन्ये च केचन बहिःस्था विद्वांसः सम्मिलिता अभूवन। संस्कृत-समाजे कस्यापि विद्यालयस्य प्राचीनच्छात्राणां सम्मेलनप्रथा नूतनैवासीत् यद्यपि आँग्लविद्यालयेषु महोत्साहेनैषा प्रथा प्रचलिता विद्यते।

× × ×

## कविसम्मेलनम्

तस्मिन्नेव दिवसे सायं चतुर्वादनतस्तत्रैव कविसम्मेलनमभूत् सभापतिपदञ्च श्रीमद्भिः श्रीताराचरण भट्टाचार्यैरेव समलंकृतम्। कविसम्मेलन प्रतियोगितायां छात्राणां प्रवेशो निषिद्ध आसीत्। कविताविषयास्त्रयो यथा—भारत-महिमा, गीर्वाणवाण्या गौरवम्, राजकीयसंस्कृतमहाविद्यालयश्चेति। खुर्जास्थराधाकृष्ण संस्कृतमहाविद्यालयस्य साहित्याध्यापकैः श्रीब्रह्मानन्द-शुक्ल-साहित्याचार्यैः, काशीस्थ-ब्रह्मविद्यापाठशाला-दर्शनाध्यापकैः श्रीआनन्द झा शर्म्मभिस्तथा मारवाड़ी संस्कृत-महाविद्यालय-साहित्याध्यापकैः श्रीबटुकनाथ खिस्ते शास्त्रिभिः क्रमशः कवितापाठः कृतः। ज्योतिर्विद्भिः श्रीबलदेवमिश्रैः, साहित्याचार्यैः श्रीमदनन्तरामवेतालशास्त्रिभिश्च प्रतियोगिताभाववद्भिः केवलं कवितापाठः कृतः।

अत्र सम्मेलने प्रथमः पुरस्कारः श्रीबटुकनाथ खिस्तेशास्त्रिभिः, द्वितीयश्च आनन्द झा—शास्त्रिभिर्लब्धः।

एवमेतानि महोत्सवाङ्ग—सम्मेलनानि सम्पन्नानि।

× × ×

कविसम्मेलने पठिताः कविताः प्रथम-द्वितीय-तृतीय-पुरस्कारैः पुरस्कृताः क्रमशः प्रकाश्यन्ते। बटुकनाथशास्त्री खिस्ते महोदयानां 'भारत मातृवन्दना' शिरस्का कविताऽपि पुरस्कृताऽसीत्। सा चाग्रे प्रकाशिता विद्यते। —सम्पादकः

( १ )

## काशिक-राजकीय-संस्कृत-महाविद्यालयः

—:*:—

विकसित-हृदय-मनोहर-सुमनःसमुदाय-सामोदा।
भ्रमरहिता दिव्यलता कविवर-विदिता चिरञ्जयति॥१॥
वाग्देवी-मुखसद्म-पद्ममखिलान्तेवासिशृङ्गावले-
र्लीला-कौशल-मन्दिरं नवनवोन्मेषात्मिकाया मतेः।
मूलं कीर्तितरोरशेषविदुषां पाण्डित्यलक्ष्मीजुषा-
मेतत्संस्कृतमन्दिरं वसुमती-सौभाग्य-भूषायते॥२॥
सन्त्वन्यत्र-पवित्र-चित्र-चरितास्ते ते हि विद्यालया-
स्तैरस्य क्षणमप्युदेति न मुदे साधारणी धोरणी।
वासन्ते सुषमोदये सुरभितेष्वन्येषु सालोत्तमे-
ष्वप्येको रससेकतर्पितमनाः सालो रसालो मतः॥३॥
प्रादुर्भावितशास्त्रकौशलभरैर्विज्ञानवद्याशयै-
रत्रत्यैर्गुरुभिर्गुणौघगुरुभिर्विद्यार्थिकल्पद्रुमैः।
सा काचित्कलिता निकामललिता कीर्तिर्ययादिङ्मुखा-
न्यालिप्य प्रमदातिरेकपरया नृत्तं महीमण्डले॥४॥
उद्यन्नूतन-कल्पना-कुसुमितान् स्फूर्जद्यशःसौरभा-
नत्रत्यान् सरसात्मनो बुधवरान् जिज्ञासुकल्पद्रुमान्।
श्रावं श्रावमुदारहारिचरितान् देशान्तरेभ्यो जनः
काशीमेत्य विलोकयन्नकलयन्नेत्रद्वयीपारणाम्॥५॥
काशीनाथ इवापरः सितयशोराशिप्रकाशीकृता-
ऽशेषाशावलयो नयोन्नतमतिः काशीयुपेतः कृती।
काशीनाथ-बुधोत्तमो हृततमो वाक्चन्द्रिकाविभ्रमै-
रन्तेवासिमनोनभो विरचयन् ख्यातोऽत्र विद्वद्गुरुः॥६॥
आरामः परिपूतशास्त्रवचसां दिव्याभिरामाकृतिः
कामारातिपुरी-बुधाब्जपटली-प्रोल्लास-धामाकरः।
राजारामपदाङ्कितोऽत्र रुरुचे वामाशयालम्बिनां
गामाबद्ध्य बलावलेपचपलां दामायितोक्तिव्रजैः॥७॥
शिंजन्मञ्जुपदक्रमा रसवती देवी विरिञ्चिप्रिया
बाल्यादेव यदास्य-रङ्ग-निरता लास्यं ततानाद्भुतम्।
तेनाऽनेकनृपालमौलिविगलन्माल्योपलाल्याङ्घ्रिणा
श्रीबालाभिधशास्त्रिणा सुकृतिना विद्यालयोऽद्योतत॥८॥
तच्छिष्येषु बभूवुरुन्नतगुणग्रामाभिरामाशया
विद्वांसो वसुधा-सुधाशन-कुलालङ्कार-हीराङ्कुराः।
येषामद्भुत-बुद्धिवैभवकथालापो जनोदीरितः
काष्ठा-यामिक-वारणेन्द्रशिरसामान्दोलने कारणम्॥९॥
राजत्पक्षबलानमन्द-गुरुताभाजो दिगन्तागतान्
नानावादिमहीधरान् निजभराऽऽनम्रीभवद्भूतलान्
सद्यो यः शतकोटिखण्डितबलांश्चक्रे स चक्रे विदां
शक्रेणोपमितो ललास महसाऽप्यत्रैव दामोदरः॥१०॥
सत्साहित्य-कलालता-जलधरः श्रुत्यन्तविद्याकरो
मीलद्वैदिकमार्ग-पङ्कजवनी-प्रोल्लासने भास्करः।
दृष्टादृष्ट-विचारपाटवकरो विद्या-वधूनां वरः
सोऽप्यत्रैव बुधो गुरुः कविरहो गङ्गाधरो दिद्युते॥११॥

विश्वानन्दन-नन्दनान्तरचरत्सङ्गीत-लोलाङ्गना-
वीणा-भङ्गितरङ्गिताधिकगुणा दीव्यन्ति यत्सूक्तयः
स श्रीमानिह मानवल्लिकुलभूर्विद्याविलासैकभूः
साहित्यं सुरभीचकार वचनैः श्रीरामशास्त्री गुरुः ॥१२॥
श्रुतिनिधिपरिरक्षाद्दक्षिणामक्षपादो—
द्रुतिमतिचपलाङ्गीं न्यायविद्यावधूटीम् ।
इह हि वशयतिस्म स्वर्धुनी-तोयधारा
विमल-मधुर-वाग्भिः श्रीलकैलासचन्द्रः ॥१३॥
अगणितगुणराशिर्गीणिती पारदृश्वा
प्रसृमरसुयशोऽब्धिप्लावित-द्वीपमालः ।
स खलु मतिनिधानो दैववित्सुप्रधानः
समभवदिह बापूदेवनामा बुधेन्द्रः ॥१४॥
प्रणत-विबुधराजिभ्राजमानावदानः
प्रतिभट-पटलोक्तिच्छेदबध्दावधानः ।
व्यधित शिवकुमारः सर्वविद्यावतारः
स इह विविधशास्त्राध्यापनोत्थां स्वकीर्तिम् ॥१५॥
इति कतिपय-पुण्यश्लोक-विद्वद्वरेण्य—
स्मरण-कुसुम-पूर्णा वल्लरी वाङ्मयी मे ।
सुरभयतु शताब्दीमद्य सार्द्धामुपेतं
नरपति-सुरवाणीमन्दिरं सुन्दरश्रि ॥१६॥

—बटुकनाथशास्त्री खिस्ते, साहित्याचार्यः



( २ )

## गीर्वाणवाण्या गौरवम्

यासीद् भारवि-मानसेऽनुदिवसं स्नात्वा विशुद्धाकृतिः
यस्याः श्रीभवभूति-भूतिभिरभून्नो जातु चिन्ता हृदि ।
या भासादिकवेः कराम्बुजदलैः सम्पूजिताऽनुक्षणं
श्रीहर्षं समवाप्य हर्षमभजत् वीणां वहन्ती करे ।
सा पद्मासन-सुन्दरी भगवती गीर्वाण वाणी पराऽ-
काङ्क्षासक्तिमती समग्रमनुजे प्रोद्बोधमातन्वती ।
राजद्योग्यतया फलं वितनुते नात्रैव, देहे गते
सूते यानुपमं फलं, जगति सा केनोपमेया बुधैः ॥

× × ×

## भारत-महिमा

[ १ ]

यथासमयमागतः प्रकृतिकोमलाङ्गीमिमा-
मशोक-कुसुमोद्गमः कथयतीव लोकानसौ ।
फलानलस-चत्वर-प्रसृतशाख-वेद-द्रुमाऽऽ-
बबद्ध-बुध-दर्शनं किमु न भारतं भारतम् ॥

[ २ ]

रसाल-मृदु-मञ्जरीं नव-पराग-भारालसा-
मयं स्वनति चालयन् मलयगन्धवाहो नु किम् ?
प्रभिन्नजलजोदरेऽनुगतया मिलिन्द्या समं
पिबन् मधु वदत्यलिः प्रवरभारतं भारतम् ॥

[ ३ ]

श्रीमन्मोहन-लोकमान्य-तिलकालङ्कार-झङ्कारितम्
यद् गोविन्द-कृपा-जवाहर-महद्राजेन्द्र-चन्द्रोज्ज्वलम् ।
विद्वद्वर्य-पदारविन्द-विलसच्छ्रीमत्कवीन्द्रान्वितं
पूर्णानन्द-सुशिक्षणैक-निलयं तन्निस्तुलं भारतम् ॥

× × ×

## काशिक राजकीय-संस्कृत-महाविद्यालयः

[ १ ]

यो वाणीश-समाश्रयस्तदनु गंगानाथ-भूत्युज्ज्वलो
गोपीनाथ-सनाथतामुपगतो विद्यालयाऽधीश्वरः ।
सोऽयं मङ्गलदेव-मङ्गल-कराम्भोजाश्रितः साम्प्रतं
भ्राजत्कीर्त्ति-पताकया निरुपमां धत्ते श्रियं कामपि ॥

[ २ ]

पूर्वं बालसरस्वती-विलसितो दामोदरैरादृतो
यो गङ्गाधर-भास्वरः समभवत् कैलासचन्द्रोज्ज्वलः ।
श्रीवामाचरणैरखर्वधिषणैर्विद्यालयेन्द्रः श्रितः
शालग्रामवदर्चनीय-विबुधैराप्यसौ द्योतते ॥

—श्री आनन्द झा, वेदान्ताचार्यः



# भारत-महिमा

—०❀०—

दिव्यं भारतगौरवं क च महामोहा मतिश्शृङ्खला
आघातः समयस्य नास्त्यविदितश्चिन्ताकुलं मानसम्
दृष्टं केन मनः प्रविश्य रचना-चक्रैकरूढं विधे-
र्ज्ञातुं वक्तुमथो कथन्नु कवयो निर्यन्त्रणा-यन्त्रिताः ।

क भारतीयो महिमा गभीरो
जनः क चायं प्रतिरुद्ध-बोधः ।
तथापि पूतामिव कर्तुमङ्ग !
वाचं स्वकीयामयमद्य यत्नः ॥

सरस-भारत-कीर्ति-लता शुभा
सुभग-भारत-गौरव-पुष्पिता ।
जयति दिव्य-फलैरभिभूषिता
परम-पावन-भाग्य-विधायिनी ॥

सुधोपमैर्दिव्यजलैः सदैव
गङ्गादयो यं परिपावयन्ति ।
श्री-शारदा-गीत-यशःप्रशस्ति-
र्देशश्चिरं भातु स भारताख्यः ॥

वाल्मीकि-मुख्याः कवयो यदीयां
भूतां प्रभूतां प्रथयन्ति कीर्तिम् ।
वेद-प्रभा-भासुर-भूसुराणां
देशः स नो मङ्गलमातनोतु ॥

क रामराज्योपमराज्यमस्ति ?
गीतोपदेष्टा क नु कृष्णचन्द्रः ?
अहिंसको बुद्ध-समः क वाऽस्ते ?
क वाऽस्ति चाणक्यसमो नयज्ञः ?

क कालिदास-प्रतिमः कलावित् ?
क वा विभात्यप्रतिमः स भासः ?
हर्षः क वा हर्षततिं ततान ?
वाणः क वाऽभूत् खलु पञ्चवाणः ?

क पाणिनि-व्याकरण-प्रणाली-
धाराशतैर्धावति दिव्य-वाणी ?
समासतो व्यासमुखादुदीर्णा ?
वेदान्त-विद्या क बभौ पुराणी ?

क वा प्रवाचः कृतिनो बभूवुः ?
काचार्यता वाऽस्ति गभीरवाचाम् ?
आदर्शतां दर्शन-माधुरीणा-
मास्वाद्य मायन्ति न के धुरीणाः ?

अनेक-शाखाश्रित-सद्द्विजाली-
गीतश्रुति-प्रोदित-रम्यवर्णः ।
सञ्जीवनो रम्य-रसालयोऽपि
क वेद-शाखी फलितो विभाति ?

चाञ्चल्यमाचामति चञ्चलायाः,
यो वै गुणोघैर्वलितो वलीयान् ।
तं चेतकं वाजिनमारुरोह
क वा प्रतापो विलसत्-प्रतापः ।

उत्पीडितां भारत-मातरं स्वां
भग्नां भृशं यावन-पाप-पङ्के ।
दृष्ट्वातिमात्रं परिताप-तप्तो
ददौ स्ववित्तं क नु शाहभामा ?

आर्यत्वनाशाय कृताभिनन्दं
पाखण्डचण्डं क नु पापवृन्दम् ?
महामदोद्भासित-मोहमुद्रं
शिवोऽशिवैर्व्याघ्रनखैर्ददार ।

पुत्रास्तु गोविन्दगुरोररातिं-
त्रातैकसिंहस्य पराक्रमाब्धेः ।
अष्टाब्दिका-गौरव-रक्षणाय
क वाऽभवन् भित्तिविभूषणानि ?

सत्यः क वा स्वीय-सतीत्व-रक्षा-
दीक्षाव्रतिन्यो निचिताश्चितासु ।
नैजैः प्रतापैरिव दीपितासु
देहानहो स्वान् विदधुर्हवींषि ।

खड्ग-प्रहारेण चकार वीरान्
मूर्धाभिषिक्तानपि मूर्धहीनान् ।
विपक्षपक्ष-क्षपणैकदक्षा
क्कैव झांसी-कमनीय-लक्ष्मीः ।

स्वदेश-भाले तिलकायमानो
बालोऽपि गङ्गाधर एव साक्षात् ।
कारा-कुटीरे निवसन् महात्मा
गीता-रहस्यं कलयाञ्चकार ।
निद्रा-प्रिये कलि-करालतमेऽपि काले
हिन्दुत्व-संस्कृतिधनो महतां महीयान्
हिन्दुत्वकीर्तिममरामिव कर्त्तुकामो
विद्यालयं घटितवानधिकाशि को वा ?
यद्दर्शनेन मनसोद्भुत-सौमनस्य-
मक्ष्णोश्च जन्म सफलत्वमथ प्रसादम् ।
प्राग्भारतस्य रमणीयकलागुरुत्वं
श्रीशालिताञ्च सममेव जना विदन्ति ।
न वा मदो यत्र न मोह एव
न दोषलेशो न च रोष एव ।
अ.र्यत्व-सम्मानधनो महात्मा
जातः क वाद्यावधि मालवीयः ?
तपोमयं ज्ञानमयं दयाया
निकेतनं धर्मधनं सुवीरम् ।
सर्वप्रियं सर्वहितं प्रसूय
सदोज्ज्वलं भारतभूमिभाग्यम् ।
कैश्चित् कदर्यचरितैः कथितामिवाम्बाम्
बङ्गीय-भूमि-परिताप-कथां निशम्य ।
अन्तर्विषाद-विष-दिग्ध-तनुः स वृद्धो
व्याधापविद्ध-हरिसाम्यमुवाह हन्त !!
हंहो ! तदीय-परिताप-विलापनाय
स्वीयैरुदारचरितैरमृतस्वरूपैः ।
दुर्दान्त-दस्यु-दल-दारित-दग्ध-देहां
तां जीवयन्निव भ्रमत्यधुनाऽपि गान्धी ।
आजीवनं भारत-जीवनाय
स्वर्गाधिकं सौख्यरसं विहाय ।
अमर्त्य-सङ्कीर्त्य-चरित्रकीर्ति-
र्नेता क जातो जगतां सुभाषः ?
नवाहरे भारत-सिंह-सूना-
वव्याकुलं शासितरि प्रजानाम् ।
सत्याग्रह-ग्राह-निगीर्यमाणो
गौराङ्ग-कुम्भी विकलं विरौति ।

वैदेशिका अपि यदीय-गुणैरमेयैः
शंसन्ति गौरव-कथां किल भारतस्य ।
तस्मिन् महामहिमशालिनि वीरधुर्ये
स्वाराज्य-साधनमखो विजयाय भूयात् ।
धी-शालिनी बंग-समा क भूमिः ?
पञ्चाम्बु-तुल्यः क च कर्मवीरः ?
हिन्दुत्व-वीरा क च दक्षिणा भूः ?
क चोत्तराखण्डसमोऽस्ति धर्मः ?
क वानरैः कल्पित-सेतु-बन्धः ?
क वा नरैः कल्पित-सेतु-बन्धः ?
गाङ्गेय-तुल्यो जलरोधकः क ?
धनुर्धरः कार्जुन-तुल्य-वीरः ?
जातः क वा सूरसमः स सूरो
यन्नामसाम्यादपरोऽपि सूरः ।
क वावतीर्णस्तुलसी शशीव
वाराणसी वेदनिधिः क वास्ते ?
क संस्कृतज्ञाः परितोष-चित्ताः
क बालकाः शुष्कमुखा निरन्नाः ।
क वा युवानो जग-जीवनाय ?
वृद्धाः क वा गान्धिसमा जगत्याम् ?
गीर्वाणवाण्याः क नु गौरवं वा ?
क चासमः संस्कृत-कालिजोऽस्ति
अशेष-शास्त्रौघ-सुधारसस्य
मन्दाकिनी कुत्र वहत्यजस्रम् ?
अशेष-देशाश्रित-मौलिभूतो
विद्यावदातोऽह्यनवद्य-कीर्तिः ।
परोपकार-प्रवणः प्रशस्तो
गुरुर्यथा दीव्यतु दिव्य-देशः ।

—श्रीब्रह्मानन्द शुक्लः, साहित्याचार्यः, काव्यतीर्थः
[ राधाकृष्ण-संस्कृत महाविद्यालयाध्यापकः, खुर्जा ]

कविसम्मेलन-सम्बन्धिकाव्यद्वयमग्रे प्रकाशितम् । महो-
त्सव-विवरणं सम्पादकीये द्रष्टव्यम् ।
—सम्पादकः

# काशिकराजकीयसंस्कृतमहाविद्यालयः

## संक्षिप्तमितिवृत्तम्

डाक्टर श्रीमंगलदेवशास्त्री एम० ए०, डी० फिल० ( आक्सन )
[ प्रिंसिपल-गवर्नमेन्ट संस्कृत कालेज, बनारस ]

समस्तेऽपि भारते कस्य खलु संस्कृताध्ययनाध्यापननिरतस्य सचेतसोऽविदितं स्यात्काशिकराजकीयसंस्कृतमहाविद्यालयस्य नाम, भारतीयविभिन्नप्रान्तेषु सहस्रशः संस्कृतच्छात्रैरहमहमिकया प्रतिवर्षमुपाश्रीयमाणानां तदीयपरीक्षाणामसाधारणं वृत्तं च। सत्यप्येवं सर्वत्र विश्रुते तयोः समाचारे, कति नाम तयोरितिहासेन परिचिताः ? तदेतस्या अतितरां प्रभाववत्याः संस्कृतजीवातुभूतायाः संस्थाया एवेतिहासं विकासं प्रसारञ्चाधिकृत्य संक्षेपत एव किञ्चिदत्र वक्तुमुपक्रम्यते। नूनमनेन गीर्वाणवाणीजुषां विदुषां मनस्तोषो भविष्यतीति नो विश्वासः।

काशिकराजकीयमहाविद्यालयीयपरीक्षाणां प्रारम्भो महाविद्यालयस्य प्रारम्भकालाच्चिरायानन्तरमेव संजात इत्यधस्तात्प्रतिपादयिष्यते। तदत्र प्रथमं* महाविद्यालयस्यैवेतिहासः प्रपञ्च्यते। सोऽयमितिहासः स्थूलदृष्ट्या चतुर्षु कालेषु विभाजयितुं शक्यते। तथा च खिष्टीयाब्दानुसारेण १७९१† वत्सरादारभ्य १८४४ पर्यन्तं प्रथमः कालः। ततश्च १८८० पर्यन्तं द्वितीयः कालः। तत आरभ्य १९१८ पर्यन्तं तृतीयः कालः। तदनन्तरं च चतुर्थः कालो यस्य चाद्यत्वेऽपि प्रवृत्तिः।

### महाविद्यालयस्य संस्थापना तदुद्देश्यं च

महाविद्यालयस्यास्य खलु संस्थापना १७९१ वत्सरे वाराणस्याम् 'ईस्ट इन्डिया कम्पनी' इत्याख्यसुप्रसिद्धायास्तदानीमेतद्देशस्य शासनकर्त्र्याः संस्थायाः प्रधानाधिकारिणः 'गवर्नर-जनरल' पदमधितिष्ठतः, तस्मिन्नेव काले वाराणस्या निरीक्षक ( रेजिडेंट ) पदभाजा श्रीयुत जोनाथन डंकन ( Mr. Jonathan Duncan ) महोदयेन तदर्थं प्रेरितस्य, लार्ड कार्नवालिस ( Lord Gornwallis ) महाभागस्य निदेशेन समजायत। 'बनारस पाठशाला' अथवा 'हिन्दु कालेज' इत्यभिख्यामेव तदा प्रारम्भकाले बिभ्रदयं महाविद्यालयः कालक्रमेण 'बनारस कालेज' अथवा 'संस्कृत कालेज, बनारस' अथवा 'काशिकराजकीयसंस्कृतपाठशाला' इत्यादिनामभिः प्रसिद्धिमवाप। स्वसम्बन्धिप्राचीनवृत्तपुस्तकेषु च "श्रीमद्वाराणसीस्थश्रीमत्कम्पनी-पाठशाला", "श्रीमत्सार्वभौमकम्पनीस्थापितवाराणसीस्थपाठशाला", "श्रीमद्रसाशुनासीरधीरधीरञ्जितजितसापत्नवीरसार्वभौमकम्पनीप्रभुनियोजितकाशीराजधानीस्थसंस्कृतपाठशाला", "श्रीमन्महीमघवकम्पनीप्रभुवरनियोजिताधिकाशिसंस्कृतविद्यापाठशाला" इत्येवमनेकधा तस्यैव समुल्लेखो यत्र तत्र दृश्यते।

महाविद्यालयस्थापनाया उद्देश्यविषये तु महाविद्यालयस्योपक्रमितुर्डंकनमहोदयस्य मतानुसारेण हिन्दुप्रजाया अनुरञ्जनमेवासीत्प्रथमतस्तदुद्देश्यम्। विचारितमासीदधिकारिभिरियं हिन्दुजातीयप्राचीनवाङ्मयस्य, तदध्ययनाध्यापनसौलभ्यसंपादनद्वारा विलुप्तप्रायाणां दुर्लभानां च ग्रन्थरत्नानां महाविद्यालयीयपुस्तकालये संग्रहद्वारा च, संरक्षणपोषणयोरभिप्रायेण अद्वितीयस्य राजकीयमहाविद्यालयस्य स्थापनया हिन्दुप्रजानां हृदयेषु स्वीयसाहित्यसमुद्धा-

* अत उत्तरमत्र निबन्धे विद्यालयेतिशब्देन महाविद्यालयेति शब्देनैव वा काशिकराजकीयमहाविद्यालयस्योल्लेख इति बोध्यम्।

† अधस्ताद् वत्सरनिर्देशप्रसङ्गे खिष्टीयाब्दस्यैव ग्रहणमिति बोध्यम्।

रायं कृतप्रयत्नान् शासकान्प्रत्यनुरागभावनायाः समुत्पत्तिः क्रमेण परिपोषश्चावश्यं भाविनौ।

ततश्च डंकनमहोदयस्याभिप्रायानुसारेण प्रारम्भकालादेव महाविद्यालय एष न केवलं संस्कृतभाषाया विद्यालयरूपेणैव ; किन्तु विलुप्तप्रायस्य संस्कृतवाङ्मयस्य संग्रहाय, संरक्षणाय, पुनरुद्धाराय च केन्द्रस्थानत्वेनाप्यभिमत आसीत्।

द्वितीयं चोद्देश्यमिदमासीद् यद्धिन्दुधर्मशास्त्रीयसाहित्यस्याध्ययनाध्यापनपरम्परायाः संरक्षणेन प्रसारणेन च धर्मशास्त्रविदां विदुषामुपलब्धौ सौलभ्यं संपद्येत, ये च ब्रिटिशशासकैर्व्यवहारनिरीक्षणार्थं स्थापितेष्वधिकरणेषु ब्रिटिशजातीयानधिकरणिकान् प्रति हिन्दुधर्मशास्त्रस्य व्याख्यानेन यथायथं व्यवहारकरणे साहाय्यं संपादयेयुः।

उपरिनिर्दिष्टयोर्महाविद्यालयीयोद्देश्ययोर्मध्ये प्रथममुद्देश्यं तावदुत्तरोत्तरमभिवर्धमानां सिद्धिमुपलभमानमेव दृश्यते महाविद्यालयस्य चिरकालिक इतिहासे। सुस्पष्टं चैनद्विषयत्यधस्तात्तद्वृत्तस्याध्येतॄन् प्रति। द्वितीयोद्देश्यविषये तु न तादृशमाशावहं वृत्तम्। विद्यालयस्थापनाया अनन्तरं किञ्चित्कालपर्यन्तमेव तत्राधीतधर्मशास्त्राणां विदुषां समादर आवश्यकता च तात्कालिकेषु अधिकरणेषु जातौ। अत एव तदानीं येषां विदुषां नियुक्तिरपि यत्र तत्राधिकरणेषु श्रूयते। एतत्कारणादेव महाविद्यालयस्य प्रारम्भिके काले धर्मशास्त्राध्यापनमतीवमहत्त्वयुक्तममन्यत। अत एव च १८१३ वत्सरे तद्विषयाध्यापनाय द्वितीयाध्यापकस्यापि नियुक्तिरक्रियत। एतस्मिन्हि समये विद्यालयीयपण्डितैर्दत्तानां धर्मशास्त्रीयविवादेषु व्यवस्थानामत्यपेक्षा, न केवलं शासकैः स्थापितेष्वधिकरणेष्वेव; किन्तु सामान्यजनव्यवहारेष्वप्यनुभूयते स्म।

परं कालक्रमेण एतद्विषयकं महत्वं ह्रासोन्मुखं संजातम्। प्रायेण १८३७ वत्सरादारभ्य प्रधानन्यायपरिषदो (=सदर दीवानी अदालत) निदेशेन हिंदुधर्मशास्त्रीयविषयेषु महाविद्यालयीयपण्डितेभ्यो व्यवस्थाग्रहणं नियमप्रतिकूलत्वेनामन्यत। प्रायेण १८६० वत्सरात् प्रभृति अधिकरणेषु व्यवहारकरणे सहायकानां विदुषां नियुक्त्यै इंग्लिशभाषाज्ञानस्याधिकं महत्त्वमिति नीतेः प्रचालनेनापि प्राचीनपद्धत्यनुगामिनां धर्मशास्त्रविदां महत्त्वं शनैः शनैः क्षीणतामुपगतम्। अत एव महाविद्यालये धर्मशास्त्रीयद्वितीयाध्यापकस्य स्थानमपि समाप्तिमगमत्।

## महाविद्यालये पाठनीया विषयाः

डंकनमहोदयेनैव महाविद्यालये पाठनीयत्वेन निर्दिष्टा भारतीयवाङ्मयस्य विषया अधस्तान्निर्दिश्यन्ते :—

(१) चत्वारो वेदाः (२) चत्वार उपवेदाः (=आयुर्वेदो गान्धर्ववेदो धनुर्वेदोऽर्थवेदश्च) (३) षड् वेदाङ्गानि (=शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषम्) (४) दर्शनानि (=उपाङ्गानि=मीमांसा, न्याय इत्यादि) (५) स्मृतिः (=धर्मशास्त्रम्) (६) पुराण च।

न केवलमेते विषयाः पाठनीयत्वेनैव निर्दिष्टाः, किन्तु यथासंभवं तेषु तेषु विषयेषु नूतनानुसन्धानेन परिष्कारोऽप्यपेक्षित आसीत्तस्य महाभागस्य।

महाविद्यालयस्य प्रारम्भकालेऽपि तत्र पाठनीयत्वेन निर्दिष्टस्य, स्पष्टमेव परम्परागताष्टादशविद्यामूलकस्यास्य विषयविभागस्यातिव्यापकत्वे न कस्यापि वैमत्यं संभवति। तेषां विषयाणामध्ययनाध्यापनपरम्परायाः संरक्षणे संपोषणे च पृथक्त्वेन कियत्साफल्यमवाप्तं विद्यालयेनाद्य यावदिति स्वयमेव सुधियो विभावयन्तु।

परं पुरस्तान्निर्दिष्टाया अष्टादशविद्यामूलिकायाः पाठ्यपद्धतेरतिव्यापकत्वेऽपि, विद्यालयप्रारम्भावसरे वेदो व्याकरणं वेदान्तो न्यायो मीमांसा पुराणं ज्यौतिषमायुर्वेदो धर्मशास्त्रं चेत्येतेषां नवानामेव विषयाणां प्रवर्तितपाठ्यक्रमे सन्निवेशः कृत आसीदधिकारिवर्गेण। तेष्वपि न्यायव्याकरण-वेदान्त-ज्यौतिष-धर्मशास्त्राणि तु ततःप्रभृत्यविच्छेदेनैव महाविद्यालये पाठ्यविषयत्वेन विद्यन्ते। तत्तत्कालभेदेन तेषामापेक्षिकमहत्त्वविषये लोकप्रियत्वविषये च भवतु नाम विभेदः, परन्तु तेषामध्यापनस्यानभीष्टतायाः

अनुपयोगितायां वा विषये नास्ति कदापि कस्यापि सन्देहः प्रश्नो वा। परमन्यविषयानुद्दिश्य नैतद्वक्तुं शक्यते। तथाहि—

## वेदाः

प्रारम्भत एव वेदानामध्यापनं विशेषतोऽभिप्रेतमासीद्विद्यालयेऽधिकारिणाम्। अत एव प्रारम्भिकाध्यापकेष्वप्यासीद्विशेषेणैको वेदाध्यापकः। १६०० वत्सरे तु पुनश्चतुर्णामपि वेदानां पृथक्त्वेनाध्यापकाश्चत्वारोऽवर्तन्त विद्यालये। परन्तु दौर्भाग्येण तत्काले वेदविषये संहितादेरर्थज्ञानमनादृत्य,

यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥
( महाभाष्ये पस्पशाह्निके )

इत्यनुसारं केवलं निगदेनैव पठनपाठनप्रक्रियायाः प्रचारातिशयात्, तस्याश्च प्रक्रियाया अधिकारिणां मतेन प्रायेण प्रयोजनशून्यत्वात्, १८२८ वत्सरादारभ्य वेदाध्यापनप्रबन्धस्तैः साकल्येन समाप्तिं नीतः। परमेष विषयः शुक्लयजुर्वेदाध्यापकपदस्य स्थापनया पुनरपि १९२२ वत्सरे विद्यालये प्रवेशमाप्तवानिति महान्तं संतोषमावहति।

## साङ्ख्यं साहित्यं च

१८२० वत्सरे सांख्यसाहित्यविषययोः पाठनार्थमध्यापकद्वयं प्रथमतो न्ययुज्यत। उभावप्येतौ विषयौ प्रारम्भकालाच्चिरायानन्तरमपि लब्धप्रवेशौ विद्यालयेऽद्य यावत्पाठ्येते।

## पूर्वमीमांसा

प्रारम्भकालादेव मीमांसाविषयस्याध्यापनप्रबन्धोऽवर्तत विद्यालये। परमस्मिन्विषये छात्रसंख्याया अत्यल्पतया १८३५ वत्सरे तस्य कक्षावसानं प्रापिताधिकारिभिः। ततःप्रभृति १८८० वत्सरे नूतनानां संस्कृतमहाविद्यालयीयपरीक्षाणामुपक्रमावसरे परीक्षणीयविषयेषु मीमांसाविषयस्य समावेशे कृतेऽपि, तदध्यापनार्थं नहि नियतः कश्चित्प्रबन्धोऽक्रियतेति प्रतीयते।

## पुराणम्

विद्यालयस्य प्रारम्भकाल एवैतद्विषयाध्यापनस्य प्रबन्धे कृतेऽपि, विषयोऽयं नाभूदतिरुचिकरश्छात्राणाम्। अत एव प्रारम्भादेवास्याध्यापनं प्रायेणान्यविषयाध्यापकायैव कस्मैचित्सौलभ्यानुसारं समर्पितमासीदधिकारिभिः। एतत्कारणादेव च १८३५ वत्सरादारभ्य पुराणकक्षा दूरीकृता विद्यालयात्। परं परमसन्तोषावहमेतद्यच्छ्रेष्ठिवरस्य श्रीगौरीशंकरगोयनका महोदयस्यार्थसाहाय्येन भूयोऽपि १९३० वत्सरात्प्रभृति पुराणेतिहासाध्यापकस्य प्रबन्धः समजायत विद्यालये।

## आयुर्वेदः

प्रारम्भत एवायुर्वेदोऽध्यापनस्यैकतमविषयत्वेन सन्निवेशित आसीद्विद्यालये। परं छात्रैरस्मिन्विषये प्रायेणानुरागस्यादर्शनात्स शनैः शनैरुपेक्षाभाजनतां प्राप्नोत्। १८२३ वत्सरात्प्रभृति तु एतद्विषयाध्यापके पुराणाध्यापनभारस्यापि समारोपितत्वेन विषयोऽयमत्यन्तमुपेक्षितः। १८२६ वत्सरे पुनस्तदध्यापकस्य निष्कासनेन नाममात्रेणापि तत्स्थानं व्यरंसीत्। एतदनन्तरं यद्यपि १८३३ वत्सरे पुनरप्यायुर्वेदकक्षायाः पूर्वापेक्षयोत्कर्षेण, यथासंभवं च पाश्चात्यायुर्वेदशिक्षाप्रबन्धेन सहैव, स्थापनायै विचारः समुदपद्यत, परं नैककारणवशान्निष्फल एवासीत्स विचारः।

## पारसीकभाषायाः कक्षा

अधिकरणेषु व्यवहारदर्शने साहाय्यकरणार्थं धर्मशास्त्रिपदेषु विनियुज्यमानानां विदुषां पारसीकभाषायां प्रवेशार्थं तद्भाषाया अप्येका कक्षा १८१३ वत्सरे विद्यालये प्रारब्धाऽधिकारिभिः। पारसीकभाषायाः परिज्ञानेन ते धर्मशास्त्रीयप्रश्नान् तदात्वेऽधिकरणभाषा ( Court Language ) पदमध्यारूढायां तस्यामनुवदितुं शक्ता भवेयुरित्यमन्यत। परन्तु प्रारम्भत एव तत्कक्षां प्रति तेषामुपेक्षया तदुपयोगितामपश्यद्भिरधिकारिभिः सा कक्षा १८३८ वत्सरेऽवसानमापादिता। भूयोऽपि १८४१ वत्सरे तस्याः कक्षायाः प्रारम्भोऽक्रियत शासकैः; परं न तदा

सा संस्कृतच्छात्राणामेव कृते प्रारब्धा, किन्तु सामान्येन पारसीकभाषाया अध्ययनमभिलषतां येषां केषाञ्चित्कृते। १८४४ वत्सरात्प्रभृति तु सा 'इंग्लिश-कालेज' प्रबन्ध एव संक्रमिताऽभूत्।

### प्रारम्भिकोऽध्यापकवर्गः

महाविद्यालस्य प्रारम्भावसरेऽधिकारिभिर्नवानामेव व्याकरणादिविषयाणामध्यापनार्थं प्रबन्धोऽक्रियतेति प्रतिपादितमुपरिष्टात्। परमध्यापकानां तत्कक्षाणां च संख्या नैवैकान्तिकरूपेण नियतासीत्। विद्यालयेऽध्याप्यमानानां विषयाणाम्, तत्तद्विषयस्य महत्त्वानुरूपमध्यापनाय पर्याप्तानामध्यापकानामावश्यकतायाश्चानुसारेण सा समयभेदेन सदा भिद्यमानैवासीत्। तथा च प्रारम्भकाले नियुक्तस्यैकस्य व्याकरणाध्यापकस्य स्थाने १८३६ वत्सरे चत्वारो व्याकरणाध्यापकास्तेषां चतुःसप्ततिश्च छात्रा आसन्निति श्रूयते।

### प्रारम्भिकः पाठ्यक्रमः

तत्तद्विषयाणामुपरिनिर्दिष्टेनाध्यापनविषयकेतिहासेन यद्यपि वयं परिचितास्तथापि हन्त! तत्तच्छास्त्रेषु कीदृशः पाठ्यक्रमः प्रारम्भिकवर्षेषु समाश्रीयत, कथं च तत्तच्छास्त्रीयच्छात्राणां योग्यतानुरूपं विभिन्नकक्षासु वर्गीकरणमक्रियतेत्यस्मिन्विषये ऐतिहासिकसामग्र्या अभावात् नितरामनभिज्ञा एव वयम्। वस्तुतस्तु तदात्वे कश्चिन्नियतः पाठ्यक्रमः समाश्रित आसीद्, यद्वा क्रमिकयोग्यतानुसारमासीत्किञ्चिद्वर्गीकरणं छात्राणामित्यपि संदेहास्पदमेव। अत एव १८२० वत्सरे विद्यालयीयावस्थापरीक्षणाय नियुक्ताभ्यां डाक्टर विल्सन-कैप्टेन फेल (Dr. H. H. Wilson and Captain E. Fell) महोदयाभ्यां स्वकीयविवरणे उक्तविषये विद्यालयीयदुर्व्यवस्था स्पष्टत एव सखेदं वर्णिता विद्यते। तद्विवरणानुसारं हि कस्मिन्नपि विषये पाठे च तदधिकारितानधिकारिताविचारमन्तरेण यदृच्छयैव कस्यापि च्छात्रस्य प्रवेशस्तस्मिन्काले संभवति स्म। उक्तविवरणस्यैव फलरूपेण तस्मिन्नेव वर्षे प्रथमवारं शासकानामनुमत्याधोनिर्दिष्टा नियमाः प्रचालिता आसन्विद्यालये-

(१) व्याकरणे लघुकौमुद्यास्तत्सदृशान्यग्रन्थस्य वाऽभ्यासं कृतवत एव च्छात्रस्य प्रवेशः संभवति विद्यालये।

(२) ततस्तेन वर्षद्वयं यावत्प्राथमिकव्याकरणकक्षायामध्येतव्यम्।

(३) ततस्तेन वर्षत्रयं यावद् व्याकरणविषये विशिष्टमध्ययनं विधेयम्, छन्दःशास्त्रमलङ्कारशास्त्रं साहित्यं प्रारम्भिकं गणितं चाध्येतव्यम्।

(४) तदनन्तरं सप्तवर्षाणि यावच्छात्रैः स्वेच्छया विद्यालयेऽध्याप्यमानेषु विभिन्नशास्त्रेष्वेकतमस्य प्रौढपाण्डित्यसंपादकं विशिष्टमध्ययनं कर्तव्यम्।

एतत्कालात्प्रभृति सामान्येन पद्धतिरेषैवान्वस्रियत विद्यालये। एषैव सरणिरागामिनीनां प्रथममध्यमोत्तमपरीक्षाणां जननी।

एतस्मिन्काले तत्तच्छास्त्रे पाठ्यग्रन्थानां निर्धारणं तु व्यष्टिरूपेण तत्तदध्यापकेनैवाध्यक्षानुमत्या क्रियते स्म।

### अध्ययनकालः

विद्यालयस्य प्रारम्भिकावस्थायामध्ययनकालस्तु न कापीयत्ता निर्धारिता आसीत्। तद्धेतुकामव्यवस्थां समीक्ष्य प्रथमवारं १८१३ वत्सरे विद्यालयप्रबन्धकसमित्या द्वादशाब्दीपरिमितः कालस्तदर्थं नियतीकृतः, निश्चितं च च्छात्रैर्वृत्तिस्तावत्कालपर्यन्तमेव लब्धुं शक्यत इति। एष एव नियमोऽद्य यावद् द्वादशवर्षाणि कस्मिन्नपि शास्त्रे विशिष्टपाण्डित्यसंपादनायापेक्षितानीतिपरम्पराया मूलम्।

### विद्यालयीयाः परीक्षाः

सत्यप्येतादृशे प्रारम्भिके नियमे यत्प्रतिवर्षं चतुर्वारं छात्राः परीक्षणीया विद्यालये, प्रारम्भिकवर्षेषु सुव्यवस्थाया अभावान्नैष नियमो नियतमनुस्रियते स्मेति प्रतीयते। परं १८११ वत्सरात्प्रभृति विद्यालयीयव्यवस्थायाः परिष्कारार्थं शासकानां प्रेरणया शनैः शनैर्वार्षिकपरीक्षाक्रमः प्रचलितः।

वार्षिकपरीक्षाप्रसङ्गेनैव अधिकारिवर्गस्य प्रतिष्ठित-नागरिकाणां च समक्षे सभायां छात्राणां शास्त्रार्थ-विचारव्यवस्था तत्र विशिष्टयोग्यताप्रदर्शकेभ्यो विशिष्टपारितोषिकवितरणव्यवस्था च काचित्प्रवर्त्तिता-सीत् । सा चैषा व्यवस्था प्रायेण १८४४ वत्सरपर्यन्तं प्रावर्तत ।

१८२० वत्सरे प्रबन्धकसमित्या उत्तीर्णतत्तद्वर्गीय-परीक्षेभ्यश्छात्रेभ्यस्तत्तद्वर्गीयाध्यापकस्य विद्यालय-निरीक्षकस्य च हस्ताक्षराङ्कितप्रमाणपत्रम्, अध्ययन-परिसमाप्तौ विद्यालयं त्यक्त्वा जिगमिषुभ्यस्तु निरीक्ष-कस्य प्रबन्धकसमितेः सभासदां च हस्ताक्षरान्वित-प्रमाणपत्रं वितरणीयमिति निरधारि । १८४४ वत्सरेऽध्यक्षपदस्थापनानन्तरमप्येषा प्रमाणपत्र-वितरणपरम्परानुस्रियते स्म । परं ततः प्रभृति अध्यक्षस्य विद्यालयीयाध्यापकानां च सर्वेषां हस्ता-क्षरैरङ्कितमेव प्रमाणपत्रं प्रदीयते स्म । पाठकमनो-रञ्जनार्थं तादृशस्यैकस्य प्रमाणपत्रस्य प्रतिलिपिरत्र प्रदर्श्यते—

"स्वस्ति० भूमण्डलाखण्डलकम्पनीशप्रवर्तिता-धीतिगृहेधिकाशि । समा दश द्वे अपठत् परीक्षापूर्व महानन्दबुधो विदेशी ॥ १ ॥ तथा हि—प्रथमसोपा-नस्थव्याकरणाध्यापकपण्डितश्रीविठ्ठलशास्त्रितो मनो-रमादिमहाभाष्यान्तं व्याकरणं यावत् षड्वर्षं समाप्य, तदनन्तरमावर्षचतुष्टयन्न्यायशास्त्रपण्डितेभ्यः श्रीकृष्ण-चरणतर्कभूषणेभ्यो मुक्तावलीमारभ्य गादाधरीं सव्य-भिचारान्ताम्पठित्वा, वेदान्तशास्त्राध्यापक पं० श्रीम-दुमारावपण्डितात्पञ्चदशीमारभ्य शारीरकभाष्याव-सानं वर्षद्वयेन पठित्वा, मध्ये मध्ये समीचीनपरीक्षा-दानेन संतुष्टचेतोभ्यः प्रभुभ्यो लब्धदक्षिणः, स्वोपयुक्त-साङ्ख्यं श्रीहीरानन्दपण्डितादधीत्य, साहित्यधर्म-शास्त्राणि पाठशालास्थपण्डितेभ्योऽधीत्य पाण्डित्यङ्गतः कार्याधिकारार्हश्चेत्यर्थसंसूचकपत्रमेतद् वितीर्णमस्मै विबुधप्रधानैस्तदध्यापकैः । शुभम् ।

संवत् १६०१ श्रावणकृष्णतृतीयाश्लिष्टबुधेऽयं लेखस्समजनि । सन् १८४४ माह जुलाई तारीख ३

सम्मान्ययमर्थः सुकुलोपाह्वोमारावशर्मपण्डितैः
चतुर्वेदहीरानन्दशर्मपण्डितसम्मतम्
सम्मतोऽयमर्थः श्रीकृष्णचरणशर्मणः
सम्मतिरेतदर्थे नारायणशास्त्रिणाम्
साद्यत्र काशीनाथशास्त्री
श्री गुलजारशर्मपण्डितः"

[ अस्यैव इंग्लिशभाषानुवादरूपे प्रमाणपत्रेऽध्य-क्षस्य जे० म्यौरमहोदयस्य प्रबन्धकसमितेः सभासदां च हस्ताक्षराणि विद्यन्ते ]

## महाविद्यालयस्य निरीक्षणव्यवस्था

१७९१ वत्सरे विद्यालयस्थापनावसरे मुख्या-ध्यापक एव तत्प्रबन्धनिरीक्षणभारं न्यास्थन् शासकाः । परन्तु नातिचिरादेव तत्प्रबन्धे नानाविधदुर्व्यवस्थायाः प्रादुर्भावेण, समुचितानुशासनस्य राहित्येन, विशेष-तश्चार्थिकप्रबन्धविषयेऽनीतेः प्रदर्शनेन, १७९८ वत्सरे तद्दुर्व्यवस्थायाः परीक्षणाय परिशोधनोपायप्रदर्शनार्थं च परिष्कारसमितिमेकामस्थापयन्नधिकारिणः । तस्या-श्च परीक्षणेन विद्यालयप्रबन्धे पूर्वोक्ता नैकविधा दुर्व्यवस्थाः प्रत्यक्षतामुपागच्छन् । अत एव ततःप्रभृति विद्यालयप्रबन्धस्य भारो मुख्याध्यापकादपसार्य तस्या-मेव प्रबन्धकर्तृसभारूपेण स्थिरीकृतायां समितौ समा-रोपितः । परं १८२० वत्सरादारभ्य तस्याः समितेर-ध्यक्षतायां तस्या मन्त्री एव साक्षाद् विद्यालयनिरीक्षक (Superintendent of the College) पदमारोपितस्तदाभ्यन्तरव्यवस्थायाः पाठ्यक्रमस्य चाधिष्ठातृपदे न्ययुज्यत । एवैव निरीक्षणव्यवस्था विद्यालयीयेतिहासस्य प्रथमकालसमाप्तिपर्यन्तमथवा १८४४ वत्सरेऽध्यक्ष (Principal) पदस्थापना-वधि प्रववृते ।

## प्रथमकालवैशिष्ट्यदिग्दर्शनम्

विद्यालयस्योत्तरकालभाविन्याः समुन्नतेराधारभूतो ह्ययं कालः । कालक्रमेण समुपचीयमानानां तत्प्रवृत्तीनां प्रथमतः समुदयोऽत्रैव काले दृश्यते । किं बहुना, महनीयायास्तत्परम्परायाः कारणानि बीजरूपेणात्रैव निहितानि आसन् । तथापि काले ह्यस्मिन् विद्यालयेन विशिष्टं साफल्यं सार्थक्यं चावाप्तमिति नहि वक्तुं

शक्यते। 'विद्यालयेनानेन भारतवर्षीयसंस्कृतविद्यालयेषु मूर्धन्यपदवी समासादयितव्या' इत्येषा हि प्रत्याशा तत्स्थापकानां नास्मिन्काले सफलताभियाय। तत्र च बहूनि कारणान्यासन्। प्रथमं तावत्समुचितव्यवस्थायास्तन्निरीक्षणस्य चाभावः। द्वितीयं तु प्रायेणैकं द्वौ वाध्यापकौ वर्जयित्वा विशिष्टविदुषामध्यापककार्यकरणार्थमनवाप्तिः। अत एव १८४१ वत्सरं यावदधिकारिणां मतानुसारेण विद्यालयच्छात्रेषु नैकोऽपि विशिष्टविद्वत्त्वेन ख्यातिमवाप्तवानित्यत्र विषये प्रमाणमुपलभ्यते। वस्तुतस्तु विद्यालयविषये नीतेरस्थिरत्वैव प्रथमो हेतुरासीत्तस्य यथेप्सितसफलतानधिगमे। अतएव प्रथमकालपर्यन्तं नापारयत्कांचिद्विशिष्टां स्वारसिकीं प्रतिष्ठामासादयितुं विद्वन्मण्डल्यामेष विद्यालयः।

## द्वितीयः कालः

## ( १८४४–१८८० )

प्रथमोऽध्यक्षो जे० म्यौर महाभागः (१८४४-१८४५ खि)

विद्यालयीयेतिहासे द्वितीयकालस्य प्रारम्भस्तावत्कालपर्यन्तं प्रवर्तमानस्य प्रबन्धकसमितेर्मन्त्रिणाधिष्ठितस्य निरीक्षकपदस्य स्थानेऽध्यक्ष (Principal) पदस्य स्थापनया सहैव समजनीति पुरस्तात्संकेतितम्। तथा च १८४४ वत्सरे 'अप्रैल' मासे जे० म्यौर ( J. Muir, Esq., C. S. ) महोदयः संस्कृतभाषायां लब्धवैदुष्यकीर्त्तिर्विद्यालयस्य प्रथमाध्यक्षत्वेन न्ययुज्यत शासकैः। अनेन हि महानुभावेन विद्यालयीयाभ्यन्तरप्रबन्धे पाठ्यक्रमे च तत्परिष्कारमभिलषता नैकविधा नूतना व्यवस्था प्रवर्त्तिता। दिष्ट्या तात्कालिकविद्यालयीयवृत्तपुस्तकेषु तत्कृतपाठ्यक्रमादिव्यवस्थाया नानाविचारपरिपूर्णा मूललेखा अद्यत्वेऽपि विद्यन्ते। विदुषां मनोरञ्जनाय त एव लेखाः स्थालीपुलाकन्यायेनात्रोदाह्रियन्ते—

( १ )

**श्रीमज्जानम्यूरसाहबाभिधपाठशालाध्यक्षस्याज्ञापनमितश्चलितम्**

"अथ काशीस्थविद्यालयाध्यक्षस्य श्रीमज्जानम्यूरसाहबस्य विद्यार्थीयान् श्रीमत्पण्डितांश्छात्रांश्च प्रति विज्ञापनमिदम्।

एतद्देशे स्वकीयाधिकारस्यादेरारभ्यात्र नगरे विद्यामन्दिरस्थापनान्महामहिमकम्पनिनियुक्तशास्तॄणां भारतीयशास्त्रीयनानाविद्याप्रवर्द्धनायोत्कण्ठा विशेषरूपेण प्रकाशिता १ अव्यवहितपूर्वकाले च छात्रेभ्यो मासिकप्रदानेन साम्प्रतञ्च अध्यक्षनियोगेन राज्ञां विद्यावृद्ध्यर्थिका चेष्टा पूर्वापेक्षया न्यूना नास्तीति सिद्धम् २ अतः कारणाद्राज्ञामनुग्रहमनुभूतपरिहतैश्छात्रगणैश्च यथाशक्ति परिश्राम्यद्भिस्तदीयः पूर्वोक्तोऽभिप्रायः सफलीकर्तव्यः ३

अध्यापकधर्मास्तु ( ? धर्मास्तु )—तत्तत्सुवेत्तृषु विस्तारतो वर्णनेन किम्प्रयोजनम्। संक्षेपतस्तु छात्राणां शासने यथाशक्ति मनोयोगः, शिष्याणां विद्याप्रवृद्धौ चेष्टा, अध्यापनस्य सर्वोत्तमक्रमविचारणम्, प्रत्येकच्छात्राणान्तराद्विशेषस्वभावानुसारेणोपदेशनम्, अक्रोधेन शासनञ्चेत्येतेऽध्यापकस्य धर्म्माः। यथा मनुनोक्तम्—

अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम्।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छतेति।

छात्रैस्तु सर्व्वदा नानाविद्याभ्यासे चेष्टितव्यम्, अध्यापकानां वयोज्ञानपदादिष्वाधिक्यं स्मृत्वा तदादर आज्ञापालनञ्च कर्त्तव्यम्, शुद्धवस्त्रपरिधानशिष्टाचारपरस्परहितकारित्वादीनि आचरितव्यानि।

इत्यादिधर्म्मेषु पण्डितानां छात्राणाञ्च प्रचोदनायास्माकं किं विद्याश्लाघायां बहुना रमणेन ? विविधरत्नलुब्धेष्वत्यन्तेन रत्नानामनर्घ्यमूल ( ? ल्य ) त्वकीर्त्तनेन किं प्रयोजनम् परन्तु यथामत्यविस्तरेण विद्याप्रशंसा क्रियते।

अथ धीमतः परमेश्वरस्य विधानेन मनुष्यजातिरुत्तमाभिः स्मृतिविचारानुमानकल्पनादिभिर्धीशक्ति( भि ) र्विशिष्टा। ताश्च धीशक्तयो ज्ञानोपार्ज्जनादिषु प्रशस्तासु क्रियासु प्रयोज्या इति ईश्वरस्याभिप्रायः प्रतिभाति। विद्याभ्यासेन तासां धीशक्तीनां प्राबल्यं परिष्कारश्च सांसारिकगुरुव्यापारसिद्धये च सामर्थ्यं जन्यते। यथा व्यायामेन मङ्गस्याङ्गानि बलीयांसि

भवन्ति । तथैवाभ्यासेन शक्तिमती भूत्वा शेमुषी सत्यप्राप्त्येऽसत्यखण्डनाय च कल्पते ६ अन्यच्च फलान्तरमिदम् । स्वकीयपरकीयहितसम्पादकानां नानाविधैहिकसुखानां वर्द्धनार्थमुपायदर्शयित्री विद्यैव । सर्वापेक्षया च महोत्तमं फलमेतत् ७

शास्त्राध्ययनात्कर्त्तव्याकर्त्तव्ययोर्विषये ज्ञानस्योदयो भवति । विशेषतश्च स्मरणीयमेतत् । आचरणेना संयुक्तं ज्ञानमात्रं निष्फलम् । यदा तु कर्त्तव्याकर्त्तव्ये निश्चित्य को (ऽपि) तदनुसारतः कर्म्माण्याचरति तदैव तज्ज्ञानं तेन सफलीक्रियते, न चान्यथा ८

इति सामान्येन संक्षेपतो विद्याभ्यासफलनिरूपणम् ।

अथैतद्देशीयविद्यानुशीलनाद्विशेषफलसिद्धिर्भवति । तामपि कथयामि । भारतीयानि नानाशास्त्राणि प्राचीनत्वादतिपूज्यानि तत्तत्कर्त्तॄणां च तत्तद्रचने महती बुद्धिसूक्ष्मता प्रकाशते । द्विसहस्राब्दात्प्राक भारतवर्षवासिनां विपश्चितां ज्ञानकीर्त्तिरितो दूरवर्त्तिष्वपि प्राक्तनेषु ज (य) वनेषु रौम्येषु च प्रतिपादिता इति तदीयशास्त्रेभ्यः प्रतीयते ९ तथाधुनिकैश्चेङ्गलण्डीयादिभिर्यूरोपाख्यमहाद्वीपवासिभिः पण्डितैरेतद्देशीयशास्त्राणां परिचयोऽभीष्टो जातः । वस्तुतस्तु संस्कृतवाण्या व्याकरणमतीव परिपक्वम् । तत्सम्पन्नता च सर्वदेशीयानां तद्वेत्तॄणाञ्च सम्मता । तथैव कालिदासपुरःसरकवीनां कल्पनाशक्ती रचनासुषमा रसज्ञता च प्रसिद्धा १० अपरञ्च—षड्दर्शनप्रवर्त्तकानां बुधानां, तथा भास्कराचार्यादीनां ज्योतिर्विदां बुद्धिकौशलं सकलेषु विवेकिषु सुकीर्त्तितम् । अतः संस्कृतोक्तिषु पाटवलाभाय बुद्धेः शक्त्येधनार्थञ्च एतद्देशीयैस्तरुणैः स्वदेशीयविद्याभ्यासः कर्त्तव्यः ११ ।

यद्यपि तत्तद्देशीयैस्तत्तद्देशीयविद्यावश्यमभ्यस्तव्या इत्यर्थः प्रतिपादितस्तथापि विदेशीयैर्विद्यानामुपेक्षां धीमद्भिः कर्त्तुं न युज्यते । यतो यद्वदहस्कर (:) पृथिव्यां सर्वेषु देशेषु प्रकाशमानः स्वकीयतापेन तत्र तत्र भिन्नभिन्नफलानि परिपाकमानयति, तद्वत्सर्वदेशीयमनुष्येषु परमेश्वरस्यानुग्रहप्रकाशात्सर्वदेशीया जनाः स्वबुद्धिशक्तिप्रयोगाद्भिन्नभिन्नप्रकारेण नानाविद्यासु सिद्धिम्प्राप्तुं शक्नुवन्ति । यथा च विदेशीयविविधखाद्यादिद्रव्याणामुपभोगाच्छारीरकसुखवृद्धिर्जायते, तथा विदेशीयविद्यारूपद्रव्यभोगाद् बुद्धेरपि पुष्टिं (? ष्टिः) सम्भवति । अतोऽत्र विद्यार्थिनां विदेशीयविद्यानां यथारुच्यनुशीलनमुचितम् । यतः—

सर्वः सर्व्वं न जानाति सर्व्वतो (ज्ञो) नास्ति कश्चन ।
नैकत्र परिनिष्ठाऽस्ति ज्ञानस्य पुरुषे क्वचित् ॥

अतः स्वदेशे कस्याश्चिद्विद्यायाः स्थितिर्नास्तीति ज्ञात्वा तस्य विद्याविशेषस्य देशान्तरशास्त्रेषु मार्गणं कर्त्तव्यम् । विशेषतस्तु भारतवर्षवासिनां इंग्लण्डीयैः सह सम्बन्धादेतद्देशीयास्तत्रत्यविद्यानामन्वेषणं (?) तथेङ्गलण्डीयभाषायाः परिचयश्च (?) चेष्टितुमर्हन्ति १२ ।

अपरञ्चात्र काश्यां भारतीयविद्यारूपसाम्राज्यस्य राजधान्यामिव एतद्विद्यालयस्थैश्छात्रैर्विद्यानुशीलनं विशेषयत्नैः कर्त्तव्यम् । इतश्च यथा विद्यार्थिनां संख्या क्रमशो वृद्धिम्प्राप्नुयात् तथा मदीयाकाङ्क्षा १३ अपरञ्च यद्युपायप्रयोगेण पाठशालाया अभ्युदयः प्रवर्धनीयः स उपायो यत्न्य (? त्न) तः प्रयोक्ष्यते १४

संवत् १९०१ वैसाखशुक्लतृतीया ३

ता० २० माह अप्रैल सन १८४४ ईसवी ।"

( २ )

"विद्यालये वर्त्तमानपाठनक्रमावलोकनाच्छात्राणां मनोयोगः प्रायश एकस्यां विद्यायां किं वा विद्याद्वये भवति । अनेन तु क्रमेण च्छात्राणां यथेप्सितो ज्ञानोदयो न जायते इति प्रतीयते । अतः सर्वैश्चाल्पवयोभिर्विद्यार्थिभिर्व्याकरणाभ्यासानन्तरं गणितकाव्यविद्ये अपि अभ्यस्ये इति श्रीमदध्यक्षाय रोचते । तदनन्तरं चतुर्थे किं वा पञ्चमेऽब्दे प्रोक्तविद्यात्रयाभ्यासादूर्ध्वं स्मृतेः किं वा न्यायस्याभ्यासः करिष्यते । शेषे च व्याकरणादौ यथेष्टं प्रवेशे जाते तत्त्यक्त्वा कस्यापि विद्यान्तरस्याभ्यासः कर्त्तव्यः । क्रमश्चायं वक्ष्यते । तथा हि—अल्पवयसां प्रथमद्वितीयवर्गा (भ्यां) व्याकरण १ गणित २ काव्यानि ३ अध्येयानि । तृतीयवर्गेण व्याकरणगणितकाव्यानन्तरं स्मृतेः किं वा न्यायस्याभ्यासः कर्त्तव्यः । चतुर्थवर्गेण वेदान्त-

सांख्यादीनामभ्यासः कर्त्तुं शक्यते। पूर्वोक्ताज्ञाप्तिसंफलीकरणार्थं श्रीमत्पण्डितैर्मिलितैरुपायप्रयोगोऽविलम्बेन कर्त्तव्यः। अपरञ्चाधुनारभ्य व्याकरणसम्बन्धिविद्यार्थिनो गणितकाव्याभ्यासार्थं तत्तच्छालयोरमुकसमये निरूपिते प्रेषयितव्या इति प्रधानोपनिधिडेपोटीशब्दवाच्यपण्डितेनेयं रीतिरनुसारणीया पाठालये।

ता० २५ माह अपरैल सन् १८४४ ईसवी •
सम्वत् १९०१ वैशाख शुक्ल ७।"

( ३ )

"ता० ७ माह मई सन् १८४४ ईसवी श्रीमदध्यक्षजानम्यूरसाहबपण्डितपाकशासनस्याज्ञापनमिदम्।

श्रीः। अद्यारभ्य विद्यालयेऽयं वक्ष्यमाणः क्रमः पालनीयः।

ये ये नायबेति प्रसिद्धाः पण्डितास्ते ते स्वस्वप्रधानपण्डितानामाज्ञाधीना भवितुमर्हन्ति १ विद्यालये च प्रविश्य विद्यार्थिनः प्रथमं नायबानां निकटे अधीत्य तदनन्तरम्प्रधानपण्डितस्य समीपे पठिष्यन्ति २ व्याकरणे चायं क्रमः—प्रथमं छात्रा दुर्गादत्तपण्डितस्य निकटे लघुकौमुदीं संस्कृतमालाञ्च सार्द्धवर्षावधिमभिव्याप्य पठिष्यन्ति ३ तदनन्तरं देवदत्तपण्डितस्य समीपं गत्वा वर्षद्वयपर्यन्तं सिद्धान्तकौमुदीमध्येष्यन्ते ४ शेषे च नारायणशास्त्रिणस्सन्निधाने मनोरमादिमहाभाष्यपर्यन्तानामध्ययनं करिष्यन्ति ५ काशीनाथशास्त्रिणश्च समीपे महाभाष्याध्यायनेच्छवो महाभाष्यं पठितुं शक्नुवन्ति ६ वैयाकरणैः पण्डितैर्यथा सर्वे छात्रा अर्थबोधने शीघ्रमधिकारिणो जायेरँस्तथा यतितव्यम् ७ काव्यनायबपण्डितोऽपि काव्यीयप्रधानपण्डिताज्ञाधीनः स्थास्यति ८ तथा ज्योतिषनायबपण्डितो नन्दरामोऽपि लज्जाशङ्करपण्डितस्याज्ञापालनङ्कर्त्तुमर्हति ९।

अन्यच्च—इत आरभ्य यस्यां यस्यां शालायां कोऽपि छात्रः पठनार्थङ्गच्छति तस्य तत्र तत्र नाम लेखिष्यते १ अथोदाहरणम् यदि देवदत्त एकस्मिन्दिने शालात्रये पठेत् तस्य नाम त्रिःकृत्वो लेखिष्यते २ अपरञ्चैतद्यथा पण्डितानां कालत्रयो वृथा न भवेत् सर्वेषान्नैरन्तर्येण धर्मे प्रवर्त्तेत कर्मशून्यश्चावकाशो न जायेत तथा यतितव्यम् ३ यथा च छात्रा एकस्यां शालायां पठित्वा तदनन्तरं गत्वा नैरन्तर्येण पठेयुः तेषाञ्चापि कालक्षयो न भवेत् कर्मशौन्यन्न जायेत एतादृशः क्रमः श्रीमद्अशिष्टंटसिक्रिटरिणा बन्ध्यः। पण्डितैश्च बहूनाञ्छात्राणां युगपत् पाठो दातव्यः ४ अन्यच्च यदि कोऽपि पण्डितः श्रीमदध्यक्षप्रोक्तानामाज्ञानां सफलीकरणे शैथिल्यं करोति किं वा प्रतिघातं जनयति तस्मिन्नितान्तं श्रीमदध्यक्षस्याप्रसन्नता प्रकाशिष्यते।

## दसखत पण्डित लोगों का

काशीनाथशास्त्रिणा दृष्टम्
नारायणशास्त्रिणा
लज्जाशङ्करशर्मणा दृष्टम्
नन्दलालशर्म्मणा दृष्टम्
बापूदेव शर्मणापि

श्रीश्वरदत्तशर्म्मपण्डितेन मयाध्यक्षपाकशासनस्याज्ञापितकर्म प्रचालितम्।

देवदत्तशर्मणा दृष्टम्
बलदेवशर्मणा दृष्टम्
हीरानन्दचतुर्वेदनिर्वर्णितमिदं मतम्।
श्रीगुलजारशर्मणाऽऽलोकितम्

( ४ )

मया यद् ह्यः आज्ञप्तं तदनुसारेण युष्माभिरध्यापनक्रमबन्धनेऽविलम्बेन यतितव्यम्। प्रत्येकं विद्यार्थिनां वर्गाः कस्यां घटिकायां कस्य कस्य पण्डितस्य समीपे पठनार्थं गमिष्यन्ति इत्येवं क्रमः स्थापनीयः। तथा यस्मिन् यस्मिन् काले प्रत्येकं पण्डिताः कान् कान् विद्यार्थिवर्गान् अध्यापयिष्यन्ति इत्यपि। यथा च सर्वे च्छात्राश्च कर्मशून्यमवकाशं च प्राप्नुयुस्तथा यावच्छक्यं यतितव्यम् ता० २२ मई सन १८४४।

( ५ )

### अष्टमुद्रात्मकमासिकेप्सुभिश्छात्रैर्वक्ष्यमाण-विद्याभ्यासः कर्त्तव्यः

१—कोशसहितव्याकरणे सम्यग्व्युत्पन्ना भवेयुः।

२—कुमाररघुवंशकाव्ये मृच्छकटिकं चन्द्रालोकमन्यं च कमपि सुलभं संस्कृतनिबन्धं पठेयुः। तान् सम्यग्व्याकर्त्तुं च शक्नुयुः।

३—पदार्थविद्यासारं नूतनोदन्तोदोत्समितिहासतमोमणिञ्च पठित्वा पुस्तकमन्तरेण तदर्थविषयकप्रश्नानामुत्तरं दातुं शक्नुयुः।

४—अधुना यावनपुरावृत्तमानसधर्मादिविषयकरचनाः श्रीमदध्यक्षैः कृतास्तदन्तर्गतार्थप्रश्नानामुत्तरं दातुं शक्नुयुः।

५—सामान्यैर्भाषायाः संस्कृतभाषया तथा संस्कृतभाषायाः सामान्यभाषयानुवादं शुद्धतया कर्त्तुं शक्नुयुः।

६—व्यक्तगणितं रेखागणितस्याद्यमध्यायं च सम्यग् जानीयुः॥

**बृहन्मासिकेष्वभिर्वक्ष्यमाणविद्याभ्यासः कर्त्तव्यः**

१—कोशसहितव्याकरणे सम्यग्व्युत्पन्ना भवेयुः।

२—माघनैषधाख्यकाव्ययोरुपयुक्तसर्गान् मुद्राराक्षसमालतीमाधवाख्ये नाटके कुवलयानन्दं च पठेयुस्तानि सम्यग् व्याकर्त्तुं च शक्नुयुः।

३—वेदान्तसांख्यस्मृतिन्यायानामन्यतमं शास्त्रं जानीयुः तन्मध्ये तु न्यायस्याभ्यास आवश्यकः।

४—पदार्थविद्यासारं नूतनोदन्तोदोत्सतमोमणिञ्च पठित्वा पुस्तकमन्तरेण तदर्थविषयकप्रश्नानामुत्तरं दातुं शक्नुयुः।

५—अधुना या यावनपुरावृत्तमानसधर्मादिविषयरचनाः श्रीमदध्यक्षैः कृतास्तदन्तर्गतार्थप्रश्नानामुत्तरं दातुं शक्नुयुः।

६—संस्कृतभाषायाः सामान्यभाषया तथा सामान्यभाषायाः संस्कृतभाषयानुवादं सम्यक्कर्त्तुं शक्नुयुः।

७—बीजगणितरेखागणितस्यादितः षडध्यायान् त्रिकोणमितिं काश्चित् सिद्धान्तोक्तीश्च जानीयुः। कस्यांचिन् नवीनवार्तायां प्रश्ने कृते तदुत्तरं संस्कृतेन विस्तररूपेण च स्वबुद्ध्या दातुं शक्नुयुः।

( ६ )

योऽयमेवं बुधैः सर्वैः सच्छात्राणां तु शिक्षणम्।
ग्रन्थानां लापने शक्तिर्यथा जायेत सत्वरम्॥ १॥
पाठस्य समये च्छात्रान् गुरुरेवं समादिशेत्।
स्वमत्या पाठ्यसन्दर्भान् व्याकरोतु स्वयं भवान्॥२॥
यावन्मात्रव्याक्रियायां शिष्यशक्तिर्न कल्पताम्।
व्याकुर्युर्गुरवस्तावद् बोधयेयुश्च तत्र तान्॥३॥
व्यायामेन विना यद्वद् वपुश्शक्तिर्न जायते।
तद्वत् स्वबुद्ध्या व्याख्यानं विना नो बुद्धिशक्तयः॥
तुम्ब्यादिकसहायेन व्याख्याशक्तिश्चिराद् ध्रुवम्॥४॥
स्वशक्त्यात्प्लुत्य तरणे निमज्ज्योन्मज्ज्य चाचिरात्।
प्लवशक्तिस्तथा बुद्धिः स्वशक्त्या ग्रन्थवर्णने॥६॥
ता० ३ जून सन् १८४४ ईसवी

( ७ )

ता० १२ माह जून सन् १८४४

प्रत्येकं सप्ताहस्यैकस्मिन्नह्नि कावी( व्यी )यपण्डिताभ्यां केवलमितिहासतमोमण्याख्यग्रन्थस्य किं वा नूतनोदन्तोदोत्सस्य पाठः सर्वेभ्यश्छात्रेभ्यो दातव्यः। सप्ताहस्यैकस्मिन्दिवसे ज्योतिषपण्डिताः सर्वेभ्यस्तच्छात्रेभ्यः केवलं पदार्थविद्यासारस्य तथा ज्योतिषचन्द्रिकायाश्च पाठं दास्यन्ति प्रोक्तपुस्तकस्य समाप्तिं यावत्। तदितरदिनेषु च पुस्तकान्तराणाम्। अपरं प्रत्येकं सप्ताहे सर्वैस्तत्कर्मयोग्यैर्विद्यार्थिभिः पञ्चदशानुष्टुप्श्लोकपरिमिता कल्पितकथारूपा किं वा संस्कृतग्रन्थानुवादरूपा रचना सामान्यभाषया कर्त्तव्या पुस्तके च लिखितव्या। सदा च सप्ताहारम्भे तानि पुस्तकानि श्रीमदध्यक्षाय दर्शितव्यानि (?)। इयन्मात्रम् आज्ञापनं प्रकाशितव्यम् (?)॥

( ८ )

यावन्तो लघुकौमुदीपाठका अल्पवयस्काश्छात्रास्तावतां त्रयोदशीअमावास्यापौर्णमासीषु तिथिषु सामान्यभाषायाः पाठो वैयाकरणाद्वितीयनाइबपण्डितकावी (व्यी) यनाइबपण्डिताभ्यां दातव्यः। मुद्राङ्कितपुस्तकीयसुपरिष्कृतसामान्यभाषायाः अध्ययनाद् अल्पवयस्का विद्यार्थिनो नानाशब्दार्थबोधं तथा लौकिकव्यवहारार्थमुपयोगिन्याः स्वस्याः साधारण्याः भाषायाः लेखने पाठने च पाटवं लप्स्यन्ते इति।
ता० १६ माह जून सन् १८४४ ईसवी॥

( ९ )

ता० २२ माह जून सन् १८४४ ईस्वी

वर्त्तमानकाले या नवीना रचना विद्यार्थिभिः क्रियन्ते तास्तैरात्मशक्त्यैव कर्तव्याः। तत्र विद्यार्थिनां सहायतां कर्त्तुं किं वा तेषां रचनाशोधनं कर्त्तुं सर्वेषां पण्डितानां निषिद्धमिति। श्रीमदध्यक्षावलोकनानन्तरन्तु शोधयितु शक्नुवन्ति। यदि तु कस्यचिद् विद्यार्थिनो रचनायां सा तेन स्वयं कृता न वेति शङ्का जायते तदा श्रीमदध्यक्षः स्वस्य साक्षाद् रचनान्तरं कारयिष्यति।

( १० )

अथ श्रीमद्वाराणसेयस्थपाठशालास्थविद्यार्थिनामध्ययनपरिपाटीबोधनमत्र क्रियते। तत्र तावद्विद्यार्थिनः स्वस्वसामर्थ्यानुसारेण त्रिविधा भवन्ति कनिष्ठा मध्यमा उत्तमाश्च। तत्र ये कनिष्ठास्ते वक्ष्यमाणरीत्या शालाद्वये पठेयुः तत्र च ज्योतिःशास्त्रकाव्यव्याकरणानां मध्येऽन्यतमं शास्त्रद्वयमभ्यसेयुः (?) तत्र द्वितीयकाव्यशालायां हितोपदेशरघुवशादिक तथा सप्तमेऽहनि रत्नेश्वरपण्डितयात्रावर्णनभूगालदर्पणभूगोलवृत्तान्ताख्यग्रन्थानामन्यतमं भाषाग्रन्थ पठेयुः एवं ज्योतिषपाठशालायां सप्तमेऽहनि एतद्देशप्रचरितभाषीयपदार्थविद्यासारज्योतिश्चंद्रिकादीनामन्यतमं पठेयुः। एते च सर्वे कनिष्ठा नन्दलालपण्डितनिकटे पठेयुः। परन्तु यदि ते सर्वच्छात्रसमुदायीयतृतीयांशादधिका भवेयुस्तर्हि तन्मध्ये कतिचिल्लज्जाशङ्करपण्डितबापूदेवपण्डितयोर्निकटे गच्छेयुः।

मध्यवर्गीयाश्छात्रा अपि शालाद्वये गच्छेयुः। अर्थात् काव्यव्याकरणज्यौतिषशास्त्राणामन्यतमयोः शालयोर्गच्छेयुः। तत्र रघुवंशकुमाराधिकं( दिकं ) तथा सप्तमेऽहनीतिहासतमोमणिनूत्नोदन्तोदात्सयोरन्यतरं शिक्षेरन्। ज्योतिःशालायाञ्च व्यक्ताव्यक्तरेखागणितादिकं तथासप्तमेऽहनि संस्कृभाषीयपदार्थविद्यासारं ज्योतिश्चन्द्रिकां वा शिक्षेरन्। किञ्च सप्तमेऽहनि काशीनाथशास्त्रिणां निकटे मानसधर्मदीपकादिग्रन्थं सार्धदण्डद्वयमध्ये पठेयुः। परन्तु यदि तत्कालं पठनात् सम्वत्सराभ्यन्तरेण न स ग्रन्थः समाप्स्यतीति संभाव्यते तर्हि [illegible]दंडान् पठेयुः। मानसधर्मादिकमपि तद्वदेव शिक्षेरन्।

किञ्च पूर्वोक्तचरमवर्गद्वयच्छात्राः प्रति सप्ताहे यथामति पञ्चदशश्लोकीपरिमितमपूर्वं किञ्चिद्विरचेयुः-(?) तत्र येऽपूर्वनिर्माणेऽसमर्थास्ते कस्यचिद्ग्रन्थस्य विंशतिश्लोकीमानेनानुवादं कुर्युः तत्र च संस्कृतेन भूगोलदर्पणाख्योऽनुवाद्यः प्रसिद्धो हितोपदेशाख्यश्च प्राकृतेन तत्रापि च संस्कृतप्राकृताभ्यां परिवर्तनेन विरचनानुवादावपेक्षितौ।

सप्ताहीनविरचितानूदितयोर्दर्शनशोधने हीरानन्दपण्डिताः कुर्युः सिकत्तरनायबाख्याश्च तत्तद्विद्यार्थिनां तत्तच्छालासु तत्तद्वेलायां गमने तत्तद्ग्रन्थानामध्ययने च नियोजन कुर्युः किञ्च प्रतिशाल स्वस्ववेलास्थविद्यार्थिनां नामानि तत्तद्वेलाश्च लिखित्वा पत्रं कुड्ये स्थापयेरन् सन् १८४५ तारीख २१ जनवरी"

जे० म्यौर महाशयन १८४५ वत्सरस्य जनवरीमासे स्वाध्यक्षतापदस्य त्यागपत्रं प्रदत्तम्, तत्स्थाने च तदुत्तरमासे वालिस ( Mr. Revd. Mr. Wallis ) महोदयोऽध्यक्षत्वेन न्ययुज्यत। वर्षमेकं यावदेव तत्पदं तेनाधिष्ठितम्। संस्कृतभाषया तस्यापरिचितत्वेन नहि तत्कार्यकालस्य किञ्चिद्वैशिष्ट्यमासीत्।

## डाक्टर जे० आर०बैलण्टाइन महोदयः

( १८४६—१८६१ खी० )

१८४६ वत्सरे जनवरीमासे डा० जे० आर० बैलण्टाइन ( Dr. J. R. Ballantyne ) महोदयोऽध्यक्षपदमारूढः, १८६१ वत्सरपर्यन्तं च तत्पदमलंचकार। तत्कार्यकाले हि विद्यालयो नैकविधां समुन्नतिं क्रमशोऽवाप्नोत्। प्रथम एव वर्षे संस्कृतज्ञानां पण्डितानां मातृभाषारूपेण प्रयुज्यमानया हिन्दीभाषया अपरिचयेनाश्चर्यचकितः स लोकयात्रायां देशसमुन्नतौ च तदुपयोगितामाकलय्य तस्यां भाषायां तेषामभिरुच्यै प्रायतिष्ट। एवमेव च्छात्रेषु लेखनाभ्यासम्प्रत्युदासीनतामालोक्य तद्विषयेऽपि तेषामुत्साहवर्धनाय नितरां प्रयत्नपरो बभूव। एतद्विषयकमध्यक्षस्यादेशपत्रद्वयं विदुषां मनोरञ्जनार्थमधः प्रतिलिपीक्रियते—

( १ )

विद्यार्थियों को उचित है कि जैसा पढ़ने में मन लगावें तैसा लिखने को तुच्छ न जान उसे भली भांति से बनावें अर्थात् उसे अपमान की दृष्टि से न देखें जैसा उच्चारण और वाक्य का है परस्पर योग तैसा पुस्तक और भी लिखने का भी है संयोग क्योंकि जो उत्तम वाक्य का बुरा उच्चारण होय तौ उसके समझने में अति कठिनता होय वरन सुननेवाले को दूर भगाता है और उसके मन को हटाता है इसी रीति से जो उत्तम पुस्तक बुरी लिखी होय तौ उसका आशय मिलना कठिनप्राय आशय खोय जाता है इससे अधिक जो उसके पढ़ने से कष्ट और घिन होती है उसे सब जानते हैं जैसे कोई हलके की बात सुनने में अपने समय को नहीं गँवाता वरन् अधीर्य होय उसको छोड़ जाता है और वक्ता का आशय वक्ता के मन ही में समाता है वैसे ही अधम लिपि का पढ़नेवाला अधीर्य होय आशय खोय घिनकर उसे त्याग करता है और निर्माणकर्ता का अभिप्राय पूर्ण नहीं होता अत्युत्तम लिखना आभूषित वस्त्र के समान है उत्तम लिखना स्वच्छ वस्त्र के प्रमाण है अधम लिपि मलिन वस्त्र का है भान जिसे देख नहीं करता कोई मान इससे अब यह हुआ है प्रमाण कि जो अत्युत्तम लिपि न होय तौ भी उत्तम स्पष्ट लिखना आवश्यक है इस निमित्त लोगों को लिपि सुधारने में अवश्य चित्त लगाना उचित है क्योंकि जो विद्यमान उत्तम रीति से न लिख सकें तो अधम लिपि के कारण उनकी पण्डिताई का आशय कदापि प्रकाश न होगा।

ता० ३ जुलाई सन् १८४६ ईसवी
दशखत प्रिन्सिपल साहब

( २ )

"संस्कृत पाठशाला में विद्यार्थी हिन्दी भाषा प्रायः बहुत अशुद्ध लिखते हैं जो विद्यार्थी पंडित के समान संस्कृत लिख सकता है सो भी हिन्दी भाषा एक गँवार के समान लिखता है और हमारी दृष्टि में यह निपट अयोग्यता है और चाहते हैं कि यह लज्जा का कारण पाठशाला से उठ जाय इस निमित्त यह आज्ञा देते हैं जो लड़के तीसरी व्याकरण शाला में पढ़ते हैं सो प्रति दिवस दश बजे से ग्यारह बजे तक अँगरेजीशालामें आकर हिंदी पंडितकी शालामें पढ़ा करें।"

ता०५ अगस्त सन् १८४६ ईस्वी

परन्तु संस्कृतच्छात्रेषु हिंदीभाषया अध्यासविषये समुत्साहस्य वृद्धये कृतास्तस्य प्रस्तावास्तदात्वे उर्दू भाषायाः समुन्नत्यै अभिरुचि प्रकटयद्भिः शासकैर्नाङ्गीकृताः।

## ऐङ्ग्लो-संस्कृत-विभागः

एवमेव ब्रिटिशजातेः समुन्नतसाहित्येन परिचयप्राप्तये तत्संपर्केण च संस्कृतसाहित्येऽपि नूतनां समुन्नतिमभिलषता तेन उच्चवर्गीयाणां भूष्णूनां छात्राणां कृते ऐच्छिकरूपेण इंग्लिशभाषाध्ययनस्य प्रबन्धार्थमपि चेष्टा कृता। तत एव शासकानामनुमत्या १८४७-४८ वत्सरे ऐङ्ग्लो-संस्कृतविभागस्य स्थापनया इंग्लिशभाषाध्यापनस्य प्रबन्धः प्रथमवारं विद्यालये समजायत। एष एव ऐङ्ग्लो-संस्कृत-विभागः क्रमश उपचीयमानो महाविद्यालयस्येतिहासेऽतिगौरवास्पदं पदमन्वभूत्। तात्कालिकैरधिकारिभिश्चैष विभागो विद्यालयस्य 'अर्वाचीनः प्रगतिशीलश्च विभागः' अमन्यत। न केवलं संस्कृतज्ञानामिंग्लिशभाषाध्ययनमात्रमेव किन्तु प्राच्यप्रतीच्यपाण्डित्ययोः परस्परसंपर्केण समन्वयोऽपि प्रयाजनत्वेनामन्यताधिकारिभिरस्य विभागस्य। एतदभिप्रायेणैव च तत्रानुसमयभेदेन पाश्चात्यस्य साहित्यस्य पदार्थविज्ञानस्य दर्शनस्य मनोविज्ञानस्य च फलानुबन्धिनी पठनपाठनव्यवस्था विदधे। सुप्रसिद्ध बेकन ( Bacon ) महोदयनिर्मितस्य 'नोवुम् ऑर्गैनुम' ( Novuu Organu ) नामकग्रन्थस्य प्रथमद्वितीयविभागयोः संस्कृतेऽनुवादकर्ता पण्डितविट्ठलशास्त्री; अन्ये च तत्सदृशा असामान्याः प्राच्यप्रतीच्यदर्शनविदो विद्वांस उपर्युक्तविभागस्यैव

च्छात्रा आसन् । अग्रे वक्ष्यमाणस्य 'पण्डित' पत्रस्य प्रकाशनमपि अस्यैव विभागस्य समाश्रयेण चिरकालपर्यन्तं प्रावर्तत । अध्यक्षपदानन्तरं द्वितीयस्थानभाजो यथावसरं च प्रायेणाध्यक्षपदमलंकर्तुस्तद्विभागीयप्रधानाध्यापकस्य एकस्मिन्काले ५००-१००-७०० रूप्यकपरिमितेन मासिकवेतनेनैवास्य विभागस्य तात्कालिकं प्राधान्यमनुमातुं शक्यते ।

परं हन्त! १८७७ वत्सरे आर्थिकसंकटदशायां शासकैरेष विभागोऽस्तं यापितः । १८८४ वत्सरेऽस्यैव विद्यालयस्य भूतपूर्वाध्यक्षस्य तदानीं च प्रान्तीयशिक्षाविभागाध्यक्ष-( Director of Public Instruction, U. P. ) पदमधितिष्ठतः श्रीग्रिफिथमहोदयस्य प्रयत्नेन पुनरपि स स्थापितो बभूव। परं द्वितीयवारमुज्जीवितस्यास्य विभागस्य नासीत्प्राक्तन एव महानादरः । ततः प्रभृति साम्प्रतं यावदध्यापकद्वयेन युतोऽसौ विभागः केवलमिंग्लिशभाषायाः प्रारम्भिकाध्यापनमात्रार्थैव वरीवर्त्ति ।

विद्यालयस्य नैकविधायां समुन्नतौ सततं तत्परोऽसौ वैलन्टाइनमहोदयः संस्कृतभाषावैदुष्येऽपि प्रख्यातकीर्तिर्बभूव । न केवलमनेकेषामुत्कृष्टसंस्कृतग्रन्थानामिंग्लिशभाषायामपि तु इंगलिशग्रन्थानां संस्कृतेऽप्यनुवादमकरोत् । संस्कृते इंग्लिशभाषायां च तेन निर्मितो विज्ञानसार-संग्रहो ग्रन्थः (Synopsis of Science) संस्कृतविदुषां कृतेऽतीवोपयोगी । बर्कले ( Berkelay ), बेकन ( Bacon ) मिल ( Mill ) प्रभृतीनां सुप्रसिद्धानामिंग्लिशविदुषां ग्रन्थानधिकृत्य स्वतन्त्ररूपेण तत्तद्ग्रन्थसारसंग्रहरूपेण वा विनिर्मिताः, संस्कृतपण्डितानां कृते च प्रकाशितास्तस्य ग्रन्था अपि विशेषतोऽत्युपयोगिनः । पातञ्जलमहाभाष्यस्य प्रथमं मुद्रितं संस्करणमपि तद्द्वारैव प्रकाशितमासीत् । ततश्च विद्यालयीयप्राच्यप्रतीच्यविभागयोः समुन्नत्यै कृतप्रयत्नानानामध्यक्षाणां परम्परायामसौ प्रथम आसीत् ।




डा० जे० आर० बेलेन्टाइन [ १८४६-१८६१ ई० ]



आर्० टी० एच्० ग्रिफिथ महोदयः

( १८६११-८७८ख्रि० )

फील्ड (J.C. Nesfield) महोदयोऽध्यक्षपदमलंचक्रतुः। एतयोर्मध्ये प्रथमः खलु संस्कृतभाषाया अतीव लब्धप्रतिष्ठो विद्वानासीत्। तेन निर्मितानि ग्रन्थरत्नान्यद्यत्वेऽपि तत्कीर्तिं दिगन्तेषु प्रसारयन्ति। तेन कृतो वैदिकसंहितानामिंग्लिशभाषायामनुवादः केन श्रुतो न भवेत्। वैलन्टाइनमहोदयस्येव तस्यापि प्रभावो महाविद्यालयीयाध्यापकेषु साहित्यिककार्यकरणाय नितरां समुत्साहकरो बभूव। अयमेव प्रभावो मूर्त्तिमानिव 'पण्डित' (अथवा 'काशीविद्यासुधानिधि'-) नामकस्य मासिकस्य संस्कृतमहाविद्यालयमुखपत्रस्य रूपेण १८६६ वत्सरे आविरासीत्। प्राचीनदुर्लभसंस्कृतग्रन्थरत्नानां यथासंभवमिंग्लिशभाषानुवादेन सह प्रकाशनमेवासीदस्य मुख्यमुद्देश्यम्। महाविद्यालयस्याश्रयेण तदध्यापकानां सह योगेन चास्य प्रकाशनं १९१७ वत्सरपर्यन्तं प्रावर्तत।

महाविद्यालयस्येतिहासविषये १८६१ वत्सरादारभ्य १८८० पर्यन्तं न खलु काचिन्निश्चिता सामग्री लिखितं साक्ष्यं वा समुपलभ्यते। अतश्च विभिन्नस्थलेभ्यो यथासंभवं संगृह्यैव वर्णनमत्र किञ्चिल्लिख्यते। एतत्कालाभ्यन्तरे १८६१ तः १८७८ पर्यन्तम् आर्० टी० एच्० ग्रिफिथ ( R. T. H. Griffith ) महोदयः, तदनन्तरं १८७९ पर्यन्तं च जे० सी० नेस-

## द्वितीयकालवैशिष्ट्यम्।

सोऽयं द्वितीयः कालः सर्वस्मिन्नपि विद्यालयीयेतिहासेऽतितरां वैशिष्ट्यमावहति। अस्मिन्नेव काले विद्यालयेन स्थिरता, महती प्रतिष्ठा, लोकप्रियता च प्रथमवारमासादिताः। अस्मिन्नेव काले न केवलं संस्कृतपाठ्यक्रमस्य व्यवस्थामुद्दिश्य, किन्तु संस्कृतपण्डितेषु नूतनपाश्चात्यभाषाविद्ययोः प्रचारार्थम्, उत्कृष्टसाहित्यिककार्यकरणाय समुचितवातावरणसमुत्पत्त्यै च विशेषतः प्रयत्नपरा अभूवन्नधिकारिणः।

एतत्कालिकवृत्तावबोधकसाद्यस्यापर्याप्तत्वं पूर्वमेव निदर्शितमस्माभिः। तथापि दिष्ट्या १७७८ वत्सरात्प्रभृति विद्यालयेऽध्ययनसमाप्त्यवसरे छात्रेभ्यो वितीर्णानां काश्चित्प्रतिलिपय एकस्मिन् प्राचीनवृत्तपुस्तके अद्याप्यवशिष्टा द्वितीयकालेऽनुस्रियमाणस्य पठनपाठनक्रमस्य सामान्येन प्रकारं सूचयन्ति। न केवलं तत्तच्छास्त्रीयाध्ययनाध्यापनपद्धतेरेवोत्कृष्टता, किन्तु कस्मिन्नपि शास्त्रे विशिष्टपाण्डित्यसंपादनात् प्राक् छात्रैरन्येष्वपि उपयोगिविषयेषु योग्यतासंपत्तये तदा प्रयत्यते स्मेत्यपि तत एव प्रतीयते। अत एव तस्मिन् काले विद्यालयात् म० म० पं० गङ्गाधरशास्त्रि—म० म० पं० दामोदरशास्त्रिसदृशा दिगन्तविश्रान्तकीर्त्तयो विशिष्टा विद्वांसः प्रादुरभवन्। म०म०पं० शिवकुमारशास्त्रि–म०म०पं० कैलासचन्द्रशिरोमणि–म०म०पं० बालशास्त्रि–म०म० पं० गङ्गाधरशास्त्रिसदृशा विश्वविश्रुता विद्वांसश्च तदा विद्यालयीयगुणगरिम्णाकृष्टहृदया अध्यापकपदान्यलमकार्षुः। विदुषां मनोऽनुरञ्जनाय काश्चित् प्रमाणपत्रप्रतिलिपयोऽत्र समुद्ध्रियन्ते :—

( १ )

स्वस्तिश्रीमत्सकलगुणालंकृतकाशीस्थराजकीयप्रधानपाठशालायां झोपनाम्नो मनेशर्म्मणः पुत्रः श्रीकीर्तिनाथशर्म्मा मैथिलो नवानीग्रामनिवासी स्वदेशे रघुवंशं सिद्धान्तकौमुदीं चाधीत्याधिकव्युत्पत्तिसंपिपादयिषया पञ्चसप्तत्युत्तराष्टादशशततमे खीष्टशतके प्रविष्टो व्याकरणे मनोरमाशब्दरत्नपरिभाषेन्दुशेखरशब्देन्दुशेखरभूषणमहाभाष्यनवाह्निकानि धर्मशास्त्रे मिताक्षरां शब्दखण्डे व्युत्पत्तिवादशक्तिवादविषयतावादान् न्याये मुक्तावलीं माथुरीपञ्चलक्षणीं वेदान्ते पञ्चदशीमलङ्कारे कुवलयानन्दसाहित्यदर्पणकाव्यप्रकाशान् काव्ये माघनैषधौ चाध्यैष्ट। अधीतेष्वेषु ग्रन्थेषु दत्तोत्तमपरीक्षोऽयमिदानीं पाण्डित्यकार्यकरणे समर्थः सम्पन्न इत्यर्थबोधकमस्मै पत्रं मेधाविने सुशीलाय कुलीनायाभ्यासशालिने नियतोपस्थितिकाय वितरन्ति। शम्। माघ वदि ६ संवत् १९३५।

| | |
|---|---|
| बालशास्त्री | देवकृष्ण शर्मा |
| द्विवेद वस्तीराम शर्मा | वामनाचार्यः |
| कैलासचन्द्र शर्मा | पं० वेङ्कटेश शर्मा |
| पं० शीतलाप्रसाद शर्म्मा | कालीप्रसाद शर्मा |
| शिवकुमार शर्म्मा | राममिश्र शास्त्री |
| वापूदेव शास्त्री | |

( २ )

श्रीमन्महामहिमगवर्नमेण्टसंस्थापितकाशिकराजकीयप्रधानपाठशालायामेकोनसप्तत्युत्तराष्टादशशततमे खीष्टाब्देऽष्टपुत्रोपाह्वबालकृष्णशर्मणः पुत्रो भट्टूशास्त्रिशर्म्माऽध्येतुं प्रविश्य व्याकरणे सिद्धान्तकौमुदीं मनोरमां शब्दरत्नं परिभाषेन्दुशेखरं शब्देन्दुशेखरं धर्मशास्त्रे मनुस्मृतिं मिताक्षरां न्याये तर्कसङ्ग्रहं तर्कदीपिकां मुक्तावलीं सांख्ये तत्त्वकौमुदीं काव्ये रघुवंशं कुमारसम्भवं मेघदूतं किरातार्जुनीयं शिशुपालवधं नैषधचरितं नाटकेऽभिज्ञानशाकुन्तलं साहित्ये जयदेवकृतबृहच्चन्द्रालोकं रसमञ्जरीं रसतरंगिणीं वृत्तरत्नाकरं श्रुतबोधं कुवलयानन्दं साहित्यदर्पणं काव्यप्रकाशं चाध्यैष्ट। अध्ययनसमये च नियतागमनेन विनयेन चाध्यापकान् समतोषयत् सोयं महाकुलीन उत्साहशीलो दत्तोचितपरीक्षश्च पण्डितो जात इत्यर्थबोधकमिदं पत्रमस्मै वितरन्ति।

| | |
|---|---|
| पं० बेचनराम त्रिपाठी | वापूदेव शास्त्री |
| बालशास्त्री | देवकृष्ण शर्मा |
| शीतलाप्रसाद त्रिपाठी | वामनाचार्यः |
| कैलाशचन्द्र शर्मा | राममिश्र शास्त्री |
| पण्डित वस्तीराम शर्मा | कालीप्रसाद शर्मा |
| पं० वेङ्कटेश शर्मा | ढुण्ढिराज शास्त्री |
| पं० शिवकुमार मिश्रः | भवानीप्रसाद त्रिपाठी |

( ३ )

गङ्गाधरशास्त्री मानवल्ल्युपनामक आन्ध्रः पण्डितवरनरसिंहशास्त्रिपुत्रो नगर एव रघुवंशप्रभृतीनि काव्यानि सिद्धान्तकौमुदीं चाधीत्यैकोनसप्तत्यधिकाष्टादशशततमे खीष्टवर्षे काशिकराजकीयपाठशालायां प्रविष्टो मनोरमाशेखरादिसहाभाष्यान्तान् व्याकरणग्रन्थान्, मनुस्मृतिमिताक्षरावीरमित्रोदयदायभाग-

दत्तकमीमांसां धर्मशास्त्रे, साहित्ये च कुवलयानन्द-साहित्यदर्पणकाव्यप्रकाशादिकं, न्यायप्रकरणग्रन्थान् मुक्तावल्यादीन्, व्युत्पत्तिवादशक्तिवादौ शब्दखण्डे, सांख्ये तत्त्वकौमुदीसांख्यप्रवचनभाष्यादि, परिभाषा-पञ्चदश्यादीन् वेदान्तप्रकरणग्रन्थांश्चाधीत्याधीत-शास्त्रेषु प्रतिवर्षं दत्तोत्तमपरीक्षो लब्धबृहन्मासिक-विविधोत्तमपारितोषिकः साम्प्रतमधीतानधीतग्रन्था-ध्यापनाद्यशेषपाण्डित्यकार्यनिर्वाहक्षमः सम्पन्नो वर्ण-नीया चास्य काव्यादिनिबन्धरचना प्रागल्भ्योद्रेकश्च व्याकरणधर्मशास्त्रशब्दखण्डेषु प्रशंसनीयतम इत्येत-दर्थबोधकमिदं पत्रं सुशीलाय कुलीनाय मेधाविनेऽस्मै वितरन्ति ।

बालशास्त्री
बापूदेव शास्त्री
पण्डित वस्तीराम शर्म्मा
वामनाचार्याः
पं० वेङ्कटेश शर्म्मा
देवकृष्ण शर्मा
पं० शीतलाप्रसाद शर्म्मा
शिवकुमार शर्म्मा।
कालीप्रसाद् शर्मा
कैलासचन्द्र शर्म्मा
राममिश्र शास्त्री

John C. Nesfield
Principal,
Benares College,
The 15th January, 1879

## तृतीयः कालः
## ( १८८०--१९१८ )

### डाक्टर जी० थीबो महोदयः ( १८७९-१८८८ ख्रि० )

जर्मनीदेशाभिजनो डा० जी० थीबो ( Dr. G. Thibaut ) महोदयः १८७६ प्रभृति १८८८ पर्यन्त-मध्यक्षपदमलंचकार । ग्रिफिथमहाशयवदसावपि संस्कृतभाषायां निष्णातः । तेनापि निर्मिता ज्यौतिष-दर्शनादिविषयका ग्रन्था अतिप्रसिद्धाः । तदाचरणेन तत्प्रेरणया चापि लब्धोत्साहा म० म० पं० गङ्गाधर-शास्त्रि—म० म० पं० बापूदेवशास्त्रि—म० म० पं० सुधाकरद्विवेदि-सदृशाः प्रसिद्धतमा अध्यापकाः साहित्यसम्पत्तिसमृद्धये एकचित्ताः प्रायतन्त ।



डाक्टर जी० थीबो महोदयः

परन्तु तदीयकार्यकालस्य मुख्यं वैशिष्ट्यं तु १८८० वत्सरे जायमानो राजकीयसंस्कृतपरीक्षाणां प्राथमिकः प्रारम्भ एव । तत्कालपर्यन्तं प्रचलितानां 'वार्षिकपरीक्षाणां' स्थान एवैतासां 'पदवीपरीक्षाणां' स्थापना समजनि । एतासां पदवीपरीक्षाणां पाठ्य-क्रमस्तु नैव नितरां नूतन आसीत् । प्रायेण किञ्चित्का-लात्प्रभृति परम्पराप्राप्त एव पाठ्यक्रमः किञ्चित्परि-शोध्य तदर्थं परिगृहीतोऽधिकारिभिः । तदेवमङ्गी-कृतस्य पाठ्यक्रमस्य विशेषास्त्वेवं संग्रहीतुं शक्यन्ते—

( १ ) गणितस्य, इतिहासस्य ( रामायणमहा-भारतयोराधारेण ), अनुवादस्य च प्रथममध्यमपरी-क्षयोः सन्निवेशः ।

( २ ) प्रायेण सर्वविषयसामान्या एकैव मध्यमा परीक्षा ।

( ३ ) तस्यां च मध्यमपरीक्षायां व्याकरणस्य, धर्मशास्त्रस्य, न्यायस्य, सांख्यस्य, मीमांसायाः, योगस्य, वेदान्तस्य, साहित्यस्य, काव्यस्य, इतिहासस्य

गणितस्य, अनुवादस्य निबन्धस्य च ज्यौतिषच्छात्रवर्जं सर्वेषां कृते आवश्यकत्वेन सन्निवेशः।

( ४ ) मध्यमायां सिद्धान्तकौमुदीविषये एकमेव प्रश्नपत्रम्।

( ५ ) उत्तमपरीक्षायां तत्तच्छास्त्रीयपाठ्यक्रमस्य यथासंभवं सर्वाङ्गीणा पूर्णता।

उदाहरणार्थं तस्यैव पाठ्यक्रमस्य वेदाचार्यव्याकरणाचार्यपरीक्षाग्रन्थाश्चाधो निर्दिश्यन्ते--

## प्रथमापरीक्षाग्रन्थाः।

१--प्रथमदिने, व्याकरणे क ख ग घेतिचिह्निता-नामेकतमो ग्रन्थः परीक्षोपयोगी।

( क ) समासचक्रम्, धातुरूपावली, सुबन्तरूपावली च।

( ख ) लघुकौमुदी।

( ग ) सारस्वतचन्द्रिके।

( घ ) मुग्धबोधः।

२--द्वितीयदिने, न्याये गणिते च--

तर्कसंग्रहो भाषापरिच्छेदो वा। संकलनव्यवकलनगुणनभाजनानि।

३--तृतीयदिने, काव्येतिहासयोः--

रघुवंशस्य सर्गचतुष्टयम् २-५। वाल्मीकिरामायणे प्रथमसर्गः।

महाभारतस्य शीलनिरूपणाध्यायः।

४--चतुर्थदिने, अनुवादे--

सरलसंस्कृतवाक्यानां भाषासु देशभाषीयवाक्यानां संस्कृतेऽवतारश्च।

## मध्यमापरीक्षाग्रन्थाः।

१--प्रथमदिवसे, व्याकरणे धर्मशास्त्रे च--

सिद्धान्तकौमुदी कृदन्तान्ता।

तिथिनिर्णयो, नन्दपण्डितकृता तत्त्वमुक्तावली वा।

२--द्वितीयदिवसे, न्याये सांख्ये च —

सिद्धान्तमुक्तावली सम्पूर्णा। सांख्यचन्द्रिका।

३--तृतीयदिवसे, मीमांसायां योगे वेदान्ते साहित्ये च लौगाक्षिभास्करः, मीमांसापरिभाषा वा। योगचन्द्रिका। वेदान्तसारः। श्रीमद्भगवद्गीता श्रीधरस्वामिकृतटीकासहिता वा। चन्द्रालोकः।

४—चतुर्थदिवसे, काव्येतिहासयोः—

किरातार्जुनीये सर्गत्रयम् १-३। माघस्य सर्गद्वयम् १-२। शाकुन्तलनाटकम्। वाल्मीकिरामायणस्य सुन्दरकाण्डम्, तस्य स्थाने शाश्वतधर्मदीपिका गङ्गाधरशास्त्रिसंकलिता वा।

५—पञ्चमदिवसे, अनुवादे गणिते च—

संस्कृतस्य भाषासु भाषीयवाक्यानां च संस्कृतेऽवतारः। संस्कृतेन यथावत् शास्त्रीयस्य व्यावहारिकस्य च स्वाभिप्रायस्य प्रकाशनम्। लीलावत्याः परिकर्माष्टकम्।

## वेदाचार्य्यपरीक्षायां परीक्षणीयग्रन्थाः।

१—प्रथमदिवसे।

संहिता। ऋग्वेदादीनामेकतमशाखीया भाष्यसहिता सम्पूर्णा।

२—द्वितीयदिवसे।

ब्राह्मणम्। स्वपरिगृहीतशाखीयं सव्याख्यं सम्पूर्णम्।

३—तृतीयदिवसे।

आरण्यकम्। स्वपरिगृहीतशाखीयं सव्याख्यं सम्पूर्णम्।

श्रौतसूत्रम्। तथा

स्मृतिसूत्रम्। तथा

४—चतुर्थदिवसे।

प्रातिशाख्यम्।

पाणिनिव्याकरणम्। स्वरवैदिक्योः कौमुदी च।

५—पञ्चमदिवसे।

निघण्टुः सभाष्यः। शिक्षा सभाष्या। पिङ्गलच्छन्दो भाष्यसहितम्। निरुक्तं तथा।

## व्याकरणाचार्यपरीक्षायां परीक्षणीयग्रन्थाः।

१— प्रथमदिवसे।

सिद्धान्तकौमुदी। सम्पूर्णा।

परिभाषेन्दुशेखरः। तथा

२—द्वितीयदिवसे ।
मनोरमा अव्ययीभावान्ता ।
शब्दरत्नं तथा ।

३—तृतीयदिवसे ।
लघुशब्देन्दुशेखरः । सम्पूर्णः ।

४—चतुर्थदिवसे ।
भूषणम् । तथा
मञ्जूषा । तथा

५—पञ्चमदिवसे ।
महाभाष्यम् । नवाह्निकम-ङ्गाधिकारश्च ।
भाष्यप्रदीपः । तथा
विवरणम् । तथा"

परं १८८७ वत्सरे पुनरपि परीक्षाणां पाठ्यक्रमस्य परिवर्तनमक्रियत । स एव पाठ्यक्रम एकेनैव रूपेण १९१८ पर्यन्तमन्ववर्तत । तदीयवैशिष्ट्य त्वेव संग्रहीतुं शक्यते—

(१) सर्वविषयसामान्याया एकस्या विभिन्न मध्यपरीक्षायाः स्थाने व्याकरणन्यायज्यौतिषविषयभेदेन मध्यमपरीक्षाणां संप्रवृत्तिः ।

(२) मध्यमपरीक्षायां सिद्धान्तकौमुदीविषयकस्यैकस्य पत्रस्य स्थाने षट् पत्राणि, अन्येषां धर्मशास्त्रादिविषयाणां बहिष्कारश्च ।

(३) गणितस्य प्रथममध्यमपरीक्षायामितिहासस्य च मध्यमातो बहिष्कारः ।

(४) उत्तमपरीक्षायां ग्रन्थानां ग्रन्थभागानां च पूर्वापेक्षया परिमाणदृष्ट्याल्पीयस्त्वम् ।

(५) उत्तमपरीक्षाविषयेभ्यो वेदस्य निष्कासनम् ।



डाक्टर ए० वेनसमहोदयः
( १८८८-१९१८ ख्रि०)

डाक्टरथीबोमहोदयस्योत्तराधिकारी डाक्टर ए० वेनिस ( Dr. A. Venis ) महोदयो १८८८तः प्रभृति १९१८ पर्यन्तमध्यक्षपदमध्यतिष्ठत् । संस्कृतभाषायां विशेषतश्च दर्शनविषये निष्णातधीरसौ विदुषां वरेण्यो महाविद्यालये नानाविधां समुन्नतिं विदधच्चिरस्थायिनं स्वप्रभावमजनयत् ।

तस्यैव प्रेरणया राजा मुंशीमाधोलालमहोदयेन १६०५ वत्सरे संस्कृतच्छात्रेष्वनुसन्धानबुद्धेरुदयार्थं 'माधोलालच्छात्रवृत्तयः' स्थापिताः। मनोरमस्य सरस्वतीभवनपुस्तकालयस्थानस्य निर्माणेऽपि तस्यैव प्रभावो निदानमासीत्। १८९० वत्सरादारभ्य तन्निरीक्षणे प्रकाश्यमाना सुप्रसिद्धा 'विजयनगरसंस्कृतग्रन्थमाला' अपि तस्यैव प्रेरणया जनिमग्रहीत्। तत्प्रेरणयैव च सरस्वतीभवनपुस्तकालयाध्यक्षस्य नूतनमेकं पदमपि १९१४ वत्सरे शासकैः संस्थापितमासीत्।*

अस्य खलु कार्यकाले विद्यालयः परमाम्प्रतिष्ठाकोटिमवाप्तवान्। एतस्मिन्हि समये तत्कार्यकालाच्चिराय पूर्वं विद्यालये नियुक्ताः, कालक्रमेणातितरां परिणतप्रज्ञाः, म० म० प० सुधाकर द्विवेदि—म० म० पं० गङ्गाधरशास्त्रिप्रभृतयः सुगृहीतनामानो विद्वद्वरेण्या अध्यापकाः पण्डितपत्रे विजयनगरसंस्कृतग्रन्थमालायां च दुर्लभानि नानाग्रन्थरत्नानि सम्पाद्य प्रकाशयन्तः स्वप्रतिष्ठाशिखरमारूढाः स्वयशोडिण्डिमैर्विद्यालयगौरवं चतुर्दिक्षु अघोषयन् तस्यैव च कार्यकाले संस्कृतराजकीयपरीक्षाणां गौरवं लोकप्रियत्वं च दैनन्दिनवृद्धिमवाप्नोत्। अत एव १९०९ वत्सरे परीक्षाणां कृते नूतनस्य परीक्षासंचालक ( Registrar ) पदस्य स्थापनावश्यकी सञ्जाता।

## चतुर्थः कालः।

( १९१८ तः प्रभृति अद्यापि प्रवर्तते )

१८८७ प्रभृति १६१८ पर्यन्तं परीक्षाणां पाठ्यक्रमः किञ्चित्परिवर्तनं विना एकरूपेणैवान्ववर्त्ततेति पुस्तकात्प्रतिपादितम्। परं तदनन्तरागामिनि अद्यापि प्रवर्तमाने च चतुर्थे कालेऽनेकपरिवर्तनान्युपगच्छतः पाठ्यक्रमस्य तद्विपरीतैवावस्था दृष्टिगोचरतामागच्छति। किञ्च राजकीयसंस्कृतपरीक्षाणां गौरवस्य सर्वप्रियतायाश्च दैनन्दिनी वृद्धिः, डा० वेनिस समयादारब्धा, अद्यापि तथैव प्रवर्तते। ततश्च पाठ्यक्रमस्य परिवर्तनं परीक्षाणां लोकप्रियताया वृद्धिश्चैवास्य चतुर्थकालस्य प्रधानं वैशिष्ट्यम्।

म० म० डॉक्टर गङ्गानाथझ महोदयः



( १९१८-१९२३ ख्रि० )

अस्मिन्हि चतुर्थे काले १९१८ तः १९२३ पर्यन्तं महामहोपाध्याय डा० गङ्गानाथझामहोदयोऽध्यक्षपदमलमकार्षीत्। विभिन्नविषयेषु अनेकोपयोगिनिबन्धानां निर्माणेन अनेकेषां दुरुहसंस्कृतग्रन्थानामिंग्लिशभाषायामनुवादेन च प्रख्यातवैदुष्यप्रकर्षो ह्यसौ महानुभावः। तत्कार्यकालस्य वै परीक्षापाठ्यक्रमे समुचितपरिवर्तनैर्विद्यालयसम्बधिभिरन्यैश्च परिष्कारैर्महद्वैशिष्ट्यं वर्तते। तच्चाधस्तात्प्रपञ्च्यते—

( १ ) प्रतिवर्षमुत्तीर्णाचार्यपरीक्षेभ्यः षड्भ्यश्छात्रेभ्यस्तत्तद्विषयेषु प्रौढपाण्डित्यसम्पादनाभिप्रायेण वर्षत्रयं यावद्दीयमानानां प्रत्येकं विंशतिरूप्यकपरिमितानां विशिष्टाचार्यच्छात्रवृत्तीनां १९२० वत्सरे समुपक्रमः।

( २ ) १६२२ वत्सरे शुक्लयजुर्वेदाध्यापकपदस्य विद्यालये संस्थापना, अत एव च १९२४ वत्सरादारभ्य परीक्षासु तद्विषयस्य सन्निवेशः।

( ३ ) अमुद्रितानां प्राचीनसंस्कृतग्रन्थानां प्रकाशनार्थं सरस्वतीभवनग्रन्थमालायाः ( Sarasvati Bhavana Texts Series ) अनुसन्धानसम्बन्धिनिबन्धानां च प्रकाशनार्थं सरस्वतीभवनानुशीलनपत्रिकायाः ( Sarasvati Bhavana Studies ) १९२० वत्सरादारभ्य विद्यालयतः प्रवर्तनम् ।

(४) दैनन्दिनं विस्तारमापद्यमानानां राजकीयपरीक्षाणां कार्यस्य सौष्ठवेन संचालनार्थं प्रान्तीयसंस्कृतपठनपाठनव्यवस्थासमितेः ( Board of Sanskrit Studies, U.P. ) प्रारम्भः ।

(५) १९२२ वत्सरे तत्कालपर्यन्तं लब्धाङ्कानां किञ्चिदपकर्षे आचार्यपरीक्षार्थिभ्यो दीयमानाया उपाध्यायपदव्या निरासः, षड्भिर्वर्षैः सम्पाद्यमानाया आचार्यपरीक्षायाः प्रत्येकं वर्षत्रयेण पूर्यमाणयोः शास्त्र्याचार्यपरीक्षयोर्विभाजनं चाक्रियत । अस्मिन्नेव वत्सरे चोत्तमपरीक्षापाठ्यक्रमसंशोधनसमितिरेका शासकैरस्थाप्यत । तस्याश्च प्रस्तावानामनुसारेणाधोनिर्दिष्टानि परिवर्तनानि १९२५ वत्सरादारभ्य प्रावर्तन्त—

(१) यथाक्रममेकैकशश्च खण्डपरीक्षासु परीक्षार्थिनां प्रवेशस्य नियमः ।

(२) शुक्लयजुर्वेदस्य शास्त्र्याचार्यपरीक्षयोर्विषयत्वेन स्वीकृतिः ।

(३) शास्त्र्याचार्यपरीक्षयोर्नियतस्य पाठ्यक्रमस्य परिशोधनेन नवीना व्यवस्था । एतद्व्यवस्थानुसारं च पाठ्यक्रमेऽनेकेषामुत्कृष्टप्राचीनग्रन्थानां समावेशः प्रथमवारमक्रियत । यथा वाक्यपदीयस्य व्याकरणे, किरणावल्या न्याये, तत्त्वबिन्दु-तन्त्रवार्तिक-विधिविवेकभावनाविवेकानां मीमांसायाम्, धर्मसूत्र-गृह्यसूत्राणां च धर्मशास्त्रे ।

तदात्वे प्रचलितपाठ्यक्रमस्यैकदेशिताम्, अपेक्षितशास्त्रान्तरज्ञानमनपेक्ष्यैव एकान्तेन तत्तच्छास्त्रेषु वैशिष्ट्यसम्पादनप्रवृत्तिं च सन्नियन्तुम्, तत्तद्विषयेषु प्रौढतरस्य व्यापकतरस्य च पाण्डित्यस्य समवाप्तये आवश्यकानां ग्रन्थान्तराणां समावेशोऽपि तदैव पाठ्यक्रमे विहितः । तद्यथा व्युत्पत्तिवादस्य व्याकरणे, मुहूर्तचिन्तामणेर्वृहज्जातकस्य च ज्यौतिषे । सांख्यविषयकपाठ्यक्रमपरिवर्तनमप्येतदभिप्रायमूलकमेवासीत् ।

एवं च डा० झामहोदयसम्बन्धिकार्यकालस्य मुख्यं वैशिष्ट्यं १८८७ वत्सरात्प्रभृति एकरूपेणैव स्थितस्य पाठक्रमस्य प्रथमवारं परिवर्तनमेव । प्रान्तीयसंस्कृतपठनपाठनसमितेः संस्थापनापि अपरा महती घटना । अस्याः समितेः प्रभावादेवातः प्रभृति नूतनायाः समुन्नतिभावनायाः प्रवेशः पदमलभत राजकीयसंस्कृतपरीक्षासु ।



म० म० पं० गोपीनाथकविराजमहोदयः
(१९२३-१९३७ ख्रि०)

डा० झामहोदयानन्तरं म० म० पं० गोपीनाथ-

कविराजमहोदयः १९२३ प्रभृति १९३७ पर्यन्तमध्यक्षपदमध्यास्त । तस्यापि कार्यकाले विद्यालये परीक्षाविभागे चानेकविधं परिवर्तनं परिशोधनं परिवर्द्धनं च दृष्टिपथमवतरति । तद्यथा—

१९३०, १९३३ वत्सरयोः क्रमेण पुराणेतिहासाध्यापकस्य माध्ववेदान्ताध्यापकस्य च पदं विद्यानुरागिणः श्रेष्ठिवरस्य श्रीगौरीशंकरगोयेनकामहोदयस्य, वर्तमानप्रधानमध्वाचार्याणां च धनसहाय्येन स्थापनामलभत ।

पाठ्यक्रमसम्बन्धिनस्तु विशेषाः १९३१-१९३२ वत्सरयोः प्रवर्तिता अधो निर्दिश्यन्ते—

(१) प्रारम्भिकगणितस्य हिन्दीपाठ्यपुस्तकस्य च समावेशः प्रथमपरीक्षायाम् ।

(२) हिन्दीभाषातः संस्कृते संस्कृताच्च हिन्दीभाषायामनुवादस्य, पञ्चतन्त्रभागानां च मध्यमाद्यखण्डत्रयेषु सन्निवेशः ।

(३) भट्टिविषयकमध्यमायाः स्थाने साहित्यमध्यमायाः स्थापना ।

(४) न्यायमध्यमायाः स्थाने दर्शनमध्यमायाः स्थापना ।

(५) कृष्णयजुर्वेदविषयस्य परीक्षासु, विद्यालये तदध्यापनप्रबन्धाभावेऽपि प्रवेशः ।

(६) शास्त्र्याचार्यपरीक्षयोर्नियतस्य ज्यौतिषविषयस्य फलितगणितभेदेन विभागद्वयम् ।

(७) प्राचीनन्यायस्य स्वतन्त्रतया शास्त्र्याचार्यपरीक्ष्यविषयत्वेन स्वीकारः ।

(८) रामानुजवेदान्तस्य पुराणेतिहासस्य च परीक्ष्यविषयेषु सन्निवेशः ।

## डा० मङ्गलदेवशास्त्री—परीक्षासंचालकः
## ( १९३२ )

१९३२ वत्सर एव तत्कालपर्यन्तमध्यक्षेणैव क्रियमाणस्य दैनन्दिनीं वृद्धिमुपगच्छतः परीक्षासंचालनकार्यस्य संपादनार्थं परीक्षासंचालकस्य (Registrar, Sanskrit College Examinations, U. P., Benares ) पृथगेव पदमस्थाप्यत शासकैः । तस्मिन्पदे च डाक्टर मङ्गलदेवशास्त्री एव न्ययुज्यत । एतत्प्रबन्धानन्तरमेव प्रचलितपाठ्यक्रमविषये विद्यालयेतिहासे प्रायेण प्रथमवारमेव तदर्थं प्रार्थिता वाराणसीस्थास्तद्बहिःस्थाश्च विद्वांसः स्वाभिप्रायान् प्रकटीकृतवन्तः । तत्साहाय्येन सर्वासामपि परीक्षाणां पाठ्यक्रमो विशेषतः क्रमिकपरीक्षानियमानुकूल्येन परिष्कारमगच्छत् । परिष्कृतश्च सः १९३४ वत्सरीयपरीक्षाणां कृते प्रवर्तित आसीत् । तस्मिन्नेव वर्षे व्याकरणशास्त्रे प्राचीनाध्ययनाध्यापनशैल्याः पुनरुज्जीवनाभिप्रायेण प्राचीनव्याकरणविषयस्य शास्त्र्याचार्यपरीक्षयोः समावेशः समजनि । पुराणेतिहासविषयकपाठ्यक्रमस्य तदध्ययनाध्यापनपरम्परानुसारेण परिशोधनमपि तस्मिन्नेव वत्सरेऽजायत । १९३६ वत्सरे जैनदर्शनम्, १९३७ वत्सरे च तुलनात्मकदृष्ट्या दर्शनानामध्ययनप्रवृत्तेः प्रोत्साहनार्थं सर्वदर्शनविषयः शास्त्र्याचार्यपरीक्षयोः प्रवेशमवाप्नुताम् ।

तदेवं विद्यालयेतिहासस्यातितरां विशिष्टे कालेऽध्यक्षपदमधितिष्ठन् नैकशास्त्रानुशीलननिरतः प्रगाढपाण्डित्यः प्रशान्तधीरसौ कविराजमहोदयो सरस्वतीभवनग्रन्थमालायाः सरस्वतीभवनानुशीलनपत्रिकायाश्च सम्पादकत्वमाचरन् स्वयमपि प्राचीनानेकग्रन्थान् अनुसन्धानमूलकानबन्धांश्च प्रकाशयन् विदुषां शासकानां च समहणायाः पात्रं १९३७ वत्सरे स्वाधिकाराद्विरतिमग्रहीत् ।

१९३७ वत्सरादारभ्य तु अस्येतिवृत्तस्य लेखक एव महाविद्यालयस्याध्यक्षपदमधितिष्ठन्नास्ते । ततः प्रभृत्येव शासकानां विशेषाज्ञया परीक्षासंचालनकार्यमपि रजिस्ट्रारपदभाजानेनैव निर्वर्त्यते । एतत्कालिकं वृत्तं वर्तमानकालकोटिपतितत्वेन नास्येतिवृत्तस्य विषयतामवगाहत इत्यत्रैव विरम्यतेऽस्माभिः । स एष—

कालराहुसमाक्रान्त इतिहाससुधाकरः ।
विबुधानां मुदे भूयाद् भूयो यत्नेन रक्षितः ॥

———

# काशिक-राजकीय-संस्कृत-महाविद्यालयीय-परीक्षाणां विस्तारः

अद्यत्वे प्रचलितानां काशिकराजकीयसंस्कृतमहाविद्यालयीयपरीक्षाणां स्थापनाविषये तत्सबन्धिपरम्पराणां विकासविषये च यद्वक्तव्यमासीत् तन्महाविद्यालयेतिहासप्रसङ्गेनैव विस्तरेण पुरस्तात्प्रतिपादितमस्माभिः। तत एवैतदवगन्तुं शक्यते यत्कथं तत्कालपर्यन्तं प्रचलितानां 'वार्षिकपरीक्षाणां स्थान एवैतासां 'पदवीपरीक्षाणां' स्थापना १८८० तमेऽब्दे कृताध्यक्षथीबोमहोदयैः, कथं द्वादशवर्षपरिमिताध्ययनकालस्य परम्परा समुत्पन्ना, कथं च च्छात्राणां प्रथमद्वितीयतृतीयवर्गव्यवस्थापरम्परातः क्रमेण प्रथममध्यमोत्तमपरीक्षाणां समुद्भवस्तदन्तरं चोत्तमपरीक्षाया एव शास्त्र्याचार्यपरीक्षयोर्विभागः समजनि, इत्यादि।

एतासां परीक्षाणां पाठ्यक्रमस्य विकासोऽपि निर्दिष्ट एव पुरस्तात्।

आसां परीक्षाणां स्थापनायाः किञ्चित्कालानन्तरमेव क्रमेणोत्तरोत्तरमाधिक्येन विस्तारः समजायत। तथाहि—

१८८० तमेऽब्दे केवलमेकोनविंशतिश्छात्रा आचार्यपरीक्षायां प्रथमवारं प्रविष्टाः, तेषां च केवलं त्रय एव समुत्तीर्णाः, द्वौ व्याकरणे, एकश्च साहित्ये। एवं १८८१ तमेऽब्दे प्रथमवारमेव प्रथममध्यमपरीक्षयोः प्रविष्टानां छात्राणां मध्ये केवलं षट्त्रिंशदेव सफलतामासादयन्, पञ्चविंशतिः प्रथमायामेकादश च मध्यमपरीक्षायाम्। तदेवं स्वल्पपरिमाहेनोपक्रान्तानां परीक्षाणां क्रमश उत्तरोत्तरं प्रवर्धमानो विस्तारो लोकप्रियता चाधोनिर्दिष्टसारणीमुद्रानाभिः परीक्षार्थिच्छात्राणां संख्याभिः सुतरां हृदयङ्गमो भविष्यतः।

### महाविद्यालयीयपरीक्षासु प्रविष्टानां छात्राणां संख्यानिर्देशः।

| वत्सरः | प्रथमपरीक्षा | मध्यमपरीक्षा | शास्त्रिपरीक्षा (१९२४ वत्सरादेवारब्धा) | आचार्यपरीक्षा | समष्टिः |
|---|---|---|---|---|---|
| १८९० | १०७ | १२४ | | ५३ | २८४ |
| १९०० | १८५ | २५० | | १२१ | ५५६ |
| १९१० | ६४२ | ५४० | | १३० | १३१२ |
| १९२० | १६१९ | १७४९ | | ७०८ | ४०७६ |
| १९३० | ३८२३ | ४५२५ | ९९९ | ३१५ | ९६५९ |
| १९४० | ५४२५ | ७१३५ | २१६१ | ७०२ | १५४२३ |
| १९४२ | ५८९७ | ७८७७ | २१६२ | ८४८ | १६७८४ |

प्रारम्भिकावस्थायां सर्वासामपि परीक्षाणां कृते राजकीयमहाविद्यालय एव केन्द्रत्वेन निरधार्यत। अन्यपाठशालीयाश्छात्राः परीक्षासु प्रवेशार्थमनुमता अपि तस्मिन्नेव केन्द्रे परीक्षार्थमुपातिष्ठन्।

१८८८ वत्सरे शासकानामादेशपत्रेण सर्वाभिरपि राजकीयमर्थसाहाय्यमाप्नुवतीभिः पाठशालाभिः राजकीयपरीक्षाणां पाठ्यक्रम एवानुसर्तव्य इत्येष नियमो व्यधायि।

१८८९ वत्सरे प्रथमाया मध्यमाया आदिखण्डत्रयस्य च परीक्षायाः कृते अन्यान्यपि केन्द्राणि प्रथमवारं स्वीकृतान्यधिकारिभिः। परं मध्यमाचतुर्थखण्डस्य तु परीक्षार्थं पूर्वोक्तमेव केन्द्रं यथापूर्वमवर्तिष्ट। तत्कारणं च व्युत्पत्तिविषये मौखिक-परीक्षैव। १९१८ वत्सरात् प्रभृति तु मौखिकपरीक्षाया अपाकरणात्तुर्यखण्डस्यापि परीक्षान्यकेन्द्रेष्वपि प्रवृत्ता।

चिरकालपर्यन्तं राजकीयविद्यालयेऽधीयानाश्छात्रा एवोत्तम ( आचार्य ) परीक्षायां प्रवेशस्याधिकारिणो बभूवुः। १९११ पर्यन्तमेवैष नियमः प्रावर्ततेति प्रतीयते, तदनन्तरं तु अन्या अपि पाठशाला आचार्यपरीक्षार्थमपि स्वकीयच्छात्रान् प्रेषयितुमधिकारमलभन्त। परमद्य यावदपि शास्त्र्याचार्यपरीक्षयोः केन्द्रं तु केवलं राजकीयविद्यालय एव विद्यते, यद्यपि प्रतिवर्षं

वर्धमानया तयोश्छात्रसंख्यया छात्रसौलभ्यदृष्ट्या-वश्यकमेतत्संजातं यदन्यान्यपि केन्द्राणि स्थाप्येरन् ।

तासामेतासां परीक्षाणामतीव लोकप्रियत्वे प्रमाणं न केवलमुपरिनिर्दिष्टा प्रतिवर्षं प्रवर्धमाना परीक्षार्थीनां संख्यैव, किन्तु परीक्षाकेन्द्राणां परीक्षाभिः संबद्धानां संयुक्तप्रान्तान्तर्गतानां तदन्यप्रान्तान्तर्वर्तिनीनां पाठशालानां चोत्तरोत्तरं वृद्धिमुपगच्छन्ती संख्यापि । तच्चैतदधोनिर्दिष्टसारण्या सुस्पष्टं भविष्यति—

| वत्सरः | केन्द्र-संख्या | परीक्षाभिः संबद्धानां संयुक्तप्रांतीय पाठशालानां संख्या | परीक्षाभिः संबद्धाना-मन्यप्रांतीय पाठशालानां संख्या | संबद्धानां पाठशालानां समष्टिः |
|---|---|---|---|---|
| १९०६ | १३ | ४२ | ११ | ५३ |
| १९१८ | २३ | ३९६ | १२० | ५१६ |
| १९३२ | ३९ | ७४६ | २०२ | ९४८ |
| १९३८ | ४६ | ९२६ | ३२० | १२४६ |

एतासां परीक्षाणां लोकप्रियताया गौरवस्य च वृद्धिमुपलक्ष्य परीक्षाकार्यनिर्वाहार्थं 'परीक्षासंचालक' ( Registrar ) पदस्य स्थापना १९०६ वत्सरे आवश्यकी संजातेत्युपरिष्टात् प्रतिपादितम् । सत्यप्येवं तत्पदमध्यक्ष ( Principal ) पदेन सहैकस्मिन्नेवाधिकारिणि चिराय संसक्तमवर्तत । १८८० प्रभृति १९०८ वत्सरपर्यन्तं तु महाविद्यालयाध्यक्ष एव परीक्षाप्रबन्धकार्यभारमुवाह । परं १९३२ वत्सरे उभे अपि पदे पृथक्कृते अधिकारिभिः, नूतनश्च परीक्षासंचालकपदाधिकारी न्ययुज्यतेत्यपि प्रतिपादितं पूर्वम् ।

१९२३ वत्सरे प्रान्तीयसंस्कृतपठनपाठनव्यवस्थासमितेः संस्थापना संजातेत्यप्युक्तं पुरस्तात् । तस्या एव समितेः १९२७ वत्सरे पुनः संघटनमक्रियत, तदैव चैकस्याः परीक्षासमितेरपि प्रथमतो निर्माणमक्रियताधिकारिभिः ।

# काशिकराजकीयसंस्कृतमहाविद्यालयस्येतिवृत्तम्

( ख्रिस्ताब्द १९३७ प्रभृति अनुस्यूतस्य चतुर्थकालस्य परिशिष्टम् )

ले०—महामहोपाध्यायः नारायणशास्त्री खिस्ते

महाविद्यालयीयेतिहासे १९३७ ख्रिस्ताब्दतः प्रवृत्तस्य वर्तमानकालस्यापि सातिशयं वैशिष्ट्यमस्तीति प्रायेण जानन्त्येव विद्वांसः ।

१४ मार्च १९३७ प्रभृति महामहोपाध्यायकविराजमहोदयैः शारीरास्वास्थ्यवशादवकाशे गृहीते १ सितम्बर १९३२ प्रभृति परीक्षाप्रधानाध्यक्षकार्यं कुर्वाणा डॉ० मङ्गलदेवशास्त्रिमहोदया एव प्रथममस्थायिरूपेण ततः १२ अक्टोबर १९३८ प्रभृति च स्थायिरूपेण प्रधानाध्यक्षपदमलङ्कुर्वन्ति ।

अस्मिन् हि अल्पीयस्यपि समये महाविद्यालये तत्सम्बद्धसंस्थासु च च्छात्राणां हितबुद्ध्या, तेषु मिथः सौहार्दबुद्धिदार्ढ्याय, वर्तमाने छात्रजीवन आगामिनि व्यावहारिकजीवने च तेषां सर्वतोमुखीमुन्नतिं सम्पादयितुं च नैकविधा नूतना व्यवस्थाः प्रवर्त्तिता दृष्टिपथमायान्ति । ताश्च सङ्क्षेपेण अधस्तादुपन्यस्यन्ते—

( १ ) महाविद्यालये मिथः सम्भूय कार्यकरणपद्धतेर्विरहात् परम्पराप्राप्तक्रमानुसारं छात्रस्य स्वगुरुणैव सह सविशेषं सम्पर्को भवति, सतीर्थ्यैश्च सह यथाकथञ्चित् सम्बन्धे भवत्यपि अन्यैरध्यापकैस्तच्छात्रैश्च सह सर्वथा सम्पर्काभावश्छात्राणां मनसि महाविद्यालयस्य विषयेऽभिमानभावं जनयितुमवसरमेव न ददाति । तामेतां परिस्थितिं समालोच्यैव च्छात्राणां विभिन्नवर्गेषु तथा विभागाः कृताः, यथा कस्मिन्नपि विषये नियतग्रन्थान्यतमं पाठयितुं विशेषाज्ञया नियुक्तादेवाध्यापकादुक्तग्रन्थं सर्वे छात्राः पठेयुः । एवं कृते प्रायेण सर्वेष्वध्यापकेषु च्छात्राणां हृदि गुरुबुद्धिरुदेति, समयलाघवं, पुनरुक्तिपरिहारः, परिमितकालेऽपि पाठ्यग्रन्थानां साकल्येनाध्ययनाध्यापनसौकर्यं च भवति । निरुक्ता समयविभागपूर्वकं वर्गीकरणव्यवस्था न केवलं साधारणविषये-

येऽत्रैव, अपि तु तत्तद्विशिष्टविषयेऽपि तथासम्भवं प्रवर्त्तते।

(२) छात्रेषु शैथिल्यपरिहारपुरःसरं कर्त्तव्यपरिपालनबुद्धेरुदयार्थं, विशेषतो वृत्तिभाजां विशिष्टाचार्यवर्गीयाणामन्येषां च तथाविधानां छात्राणां विषये, तेषां नियमेन समुपस्थितिरावश्यकीति नियमः सत्यामावश्यकतायामध्यक्षाज्ञापूर्वकमेवावकाशग्रहणपद्धतिश्च प्रवर्त्तते। किञ्च पूर्वोक्तकक्षान्तर्गतानां छात्राणां विशेषविषयाध्ययने गवेषणाकार्ये च सविशेषमवधानं दीयते। गवेषणादिकार्येषु प्रसक्तानां साधोलालवृत्तिभाजां छात्राणां विशेषानुसन्धानकार्याणि श्रीमद्भिरध्यक्षमहोदयैः स्वयं निरीक्ष्यन्ते। विशिष्टाचार्यच्छात्राणां कृते प्रतिसप्ताहं दिनद्वयं भाषाविज्ञाननिरुक्तवैदिक-वाङ्मयादिविषयानधिकृत्य प्रवचनं च क्रियते।



डा० मङ्गलदेवशास्त्री एम० ए०, डी० फिल्०

साधोलालच्छात्रवृत्तेः प्राचीनं लक्ष्यमनुसृत्यैवैकः साधोलालच्छात्रो महाकविबिह्लणकृतविक्रमाङ्कदेवचरिताख्यैतिहासिकमहाकाव्यस्य सम्यक् पाठशोधनपुरःसरं सम्पादनाय प्रवर्त्तितः।

(३) महाविद्यालये छात्राणां षाण्मासिकी परीक्षा प्रवर्त्तिता। तदेतत् षाण्मासिकपरीक्षाप्रवर्त्तनं महाविद्यालयेतिहासे इदम्प्रथममेव।

(४) अध्यक्षमहोदयानां निरीक्षणे, अध्यापकानां सहयोगेन महाविद्यालये प्रथममेव छात्रपरिषदेका स्थापिताऽस्ति। यद्द्वारा छात्राणां गीर्वाणभाषायां स्वविचारप्रकटने पाटवं समुल्लसति। छात्रपरिषदः समाश्रयेण विशिष्टाचार्यच्छात्राणामन्येषां च तथाविधानां सहयोगेन महाविद्यालयत एका हस्तलिखिता संस्कृतपत्रिका च सञ्चाल्यते, यया छात्रेषु लेखपाटवमुदेति।

(५) विवेचनात्मकप्रवृत्तेः प्रोत्साहनार्थं महाविद्यालयाध्यापकास्तथाऽन्येऽधिकारिणश्च विवेचनात्मकं साहित्यिकं कार्यं कर्तुं प्रोत्साह्यन्ते। तथाविधायाः प्रोत्साहनायाः फलस्वरूपे अध्यक्षमहोदयद्वारा सम्पादिते 'सरस्वतीभवनस्टडीज' नामकपत्रस्य १०मभागे बहवो गवेषणात्मका गीर्वाणवाणीनिबंधाः प्राकाश्यन्त। महाविद्यालयाध्यापकानां 'सरस्वतीभवनस्टडीज' नामके पत्रे गवेषणात्मकगीर्वाणवाणीनिबन्धलेखनमिदम्प्रथममेव।

(६) अस्मिन्नेव काले शिक्षासचिवैर्महाविद्यालयीयपरीक्षापाठ्यक्रमपरिष्काराय विशिष्टानां विदुषां समितिरेका संस्थापिता। यया विदुषामत्यन्तैकदेशिकतानिवारणपुरःसरं व्यापकचतुरस्रपाण्डित्यसम्पादनं जीविकाक्षेत्रविस्तारं च लक्ष्यीकृत्य पाठ्यक्रमो निर्द्धारितः। चिराय विलुप्तप्रायाणां शास्त्राणामुद्धाराय तुलनात्मकदृष्ट्या तेषामध्ययनाय च राजशास्त्र-सर्वन्याय-सर्वदर्शनादिविषयाः पाठ्यक्रमे स्थापिताः। आकरग्रन्थप्रचारार्थं च प्राचीनव्याकरण-जैन-बौद्धदर्शनान्यपि पाठ्यक्रमेऽन्तर्भावितानि। अर्थप्रधानदृष्ट्या वेदाभ्यासाय वेदनैरुक्तप्रक्रियाऽपि पाठ्यक्रमे सत्कृता। पुराणाध्ययनं पूर्वं दार्शनिक्या साम्प्रदायिक्या वा दृष्ट्याऽऽसीत्, इदानीमैतिहासिकदृष्ट्या तदध्ययनं सविशेषं प्रवर्त्तते।

अस्मिन्नेव काले महाविद्यालये हिन्दीभाषाध्यापकनियुक्तिः प्रथममेव जाता। यद्यपि सम्प्रति साऽस्थायिरूपेण वर्त्तते तथाऽपि तस्या उपयोगितां विचार्य सा स्थायिरूपापि सम्पत्स्यत इति सम्भाव्यते।

( ७ ) विषयविशेषे कृतविशेषपरिश्रमान् विशिष्टान् बाह्यान् विदुषः सादरं समाहूय विदुषां छात्राणां च समक्षमवसरेऽवसरे तेषां प्रवचनं कार्यते, येन चिरकालाभ्यासार्जितेन तेषां विशेषज्ञानेनाल्पीयसि काले सर्वेषां लाभो भवति ।

( ८ ) महाविद्यालयीयविद्वत्सु अनुसन्धानकार्यस्य प्रोत्साहनार्थं, तद्द्वारा च संस्कृतज्ञेषु अनुसन्धानप्रवृत्तेरुत्पादनार्थं शासकैः "सारस्वती सुषमा" इति नाम्नो महाविद्यालयादेका संस्कृतपत्रिका प्रकाशनीयेति स्वीकृतमेवाचिरात् । महाविद्यालयस्य सार्द्धशताब्दीपूर्तिमनुलक्ष्य, तस्या एव विशिष्टाङ्कोऽपि प्रकाशितः । यद्यपि पूर्वं 'सरस्वतीभवन स्टडीज्' नाम्ना प्रचलितायाः पत्रिकायाः एवेदं रूपान्तरमस्ति, तथाऽपि पूर्वोत्तरयोरनयोः पत्रिकयोः कियदन्तरं, किञ्चास्यां वैशिष्ट्यमित्यत्र तद्विदामनुभव एव प्रमाणम् ।

( ९ ) महाविद्यालयसंसृष्टे सरस्वतीभवने 'विद्वद्गोष्ठी' नाम्ना विदुषां सभा प्रवर्त्तते, यत्र महाविद्यालयीयानां बाह्यानां च विशिष्टानां विदुषां तत्तद्विषयेषु साङ्गोपाङ्गविवेचनात्मकानि गम्भीराणि प्रवचनानि भवन्ति । यैर्विदुषामन्योन्यज्ञानविनिमयविधया महान् लाभः सम्भाव्यते ।

( १० ) सर्वसाधारणजनोपकारायावसरेऽवसरे सरस्वतीभवने सुलभव्याख्यानमालाया आयोजनमपीदम्प्रथममेव प्रवर्त्तते ।

## काशिकराजकीयसंस्कृतमहाविद्यालयस्य सार्धशताब्दीपूर्तिमहोत्सवे कृतं
# समुचितमभिनन्दनम्

श्री अनन्तराम शास्त्री वेतालः, साहित्याचार्यः

संख्यावत्पुञ्जवश्रीश्रितविततयशोजालशोभाविभास्वत्-
काशीभूषायमाणप्रथितसुरगवीहृद्यविद्यालयस्य ।
पूर्णा सार्धा शताब्दीत्यवसरसुभगोपस्थितैषोत्सवश्री-
स्तामेतामुद्दिशन्ती बुधसदसि कवेर्भारतीयं चकास्तु ॥

### उपक्रमः

'नव्ये भव्ये महेऽस्मिन् सकलमविकलं मङ्गलं सङ्गतं स्या'
दित्येतत्किन्तु वाच्यं, न स लसतु कथं, मङ्गलो यत्प्रयोक्ता
युक्तप्रान्तप्रधानोचितसचिवपदारूढ-'गोविन्दपन्ता'-
ह्यत्तन्वेऽस्मिन्प्रसङ्गे गुणवति भवितोपाधिदानोत्सवोऽपि
अङ्गत्वेनोत्सवस्य त्रिदशजनगवीसेवकोत्साहवृद्ध्यै
तत्सम्मेलनानामिह सुभगतया दृश्यते सन्निवेशः ।
तत्रानर्घ्ये कवीनां कलितसुरगिरामद्य संमेलनेऽस्मिन्
स्वारम्यं द्रष्टुकामः किमपि तदनुगं कौतुकं दर्शयामि ॥
दैवाद्यद्यप्यतिहृद्यां रसिकजननुतां धीरगोष्ठीं प्रविष्टो
नूत्नोत्साहोऽस्मि नाऽहं कविरपि च दधे नो पुरस्कारलिप्साम्
किन्तु स्निग्धानुरोधाद् गुरुपदयुगलीं संस्मरन् भूतपूर्व
स्नेहं विद्यालयीयं प्रकटयितुमनाः किञ्चिदेतद् ब्रवीमि ॥

### भारतमहिमा

पुण्या गङ्गादिनद्यः कलिकलुषहृतः काशिकाद्याश्च पुर्यो
भासन्ते भारते यज्जगति किल यशस्तस्य तल्लयापयन्ति
सौरीं विद्यालयोऽद्य द्युतिमपि च वहन्नेष विद्योतते यत्
सोऽयं प्रत्यक्षलक्ष्यो विलसति महिमा भारतस्योदयाद्रेः

### गीर्वाणवाण्या गौरवम्

पूर्णं गीर्वाणवाण्यास्त्रिभुवनमभितो गौरवं यत्पुरासीद्
दुर्दैवान्मध्यकाले किमपि गतमभूद्यत्पुनर्मन्दभावम् ।
श्रीमद्वाराणसेयप्रथितसुरगवीपाठशालापदेशा-
न्मन्येऽहं तत्त्व तारानुगसुभगरवं माद्यतीवाद्य मूर्तम् ॥

### काशिकराजकीयसंस्कृतमहाविद्यालयः

भूलोकोद्धूतिवाञ्छाकुलविबुधमते भारते भारतेऽस्मिन्
काशीक्षेत्रे पवित्रे सुविदितमहिमा कोऽपि विद्यालयोऽयम्
प्राचीनं कार्यजातं नवमिव कलयन् मोहयन् सज्जनानां
चेतो, राजत्यनन्तोचित-सहृदयतादर्शदर्शीव साक्षात् ॥

### उपसंहारः

अर्वाञ्चः सत्कवित्वोचितसरस-पुरस्कारलब्ध्योदयन्तां
प्राञ्चः स्वान्तं प्रसन्नं विदधतु कवयोऽनेन संमेलनेन ।
श्रीमत्संयोजकानामपि सफलतया श्लाघ्यतां यातु यत्नो
'वेतालानन्तरामो' दितमुचितमिदं सन्मुदे स्तात् कवीनाम्

# संयुक्तप्रान्तीय-संस्कृतपाठशाला-निरीक्षणव्यवस्था ।



विद्यावाचस्पतिः श्रीकाशीराम शर्म्मा ईस्सरः, एम० ए०, विद्यानिधिः
[ यू० पी० प्रान्तीय-संस्कृतपाठशाला-निरीक्षकः ]

वाराणसेय-राजकीय-संस्कृत-महाविद्यालयस्येतिहासो नितरां महत्वपूर्णो मनोरञ्जको मननीयश्च विद्यते संस्कृतप्रणयिनां यत् विगत १५५ वत्सरेषु संस्कृतभाषाया अध्ययनाध्यापनपद्धतिः, परीक्षाप्रणाली च कथं प्रवृत्ता, विकसिता चेति। परं तदङ्गभूततया महाविद्यालयेन सह प्रान्तीय-संस्कृत पाठशालानां सम्बद्धः, राजकीय-साहाय्य-प्राप्तिश्चेत्ययं विषयोऽपि ज्ञातव्य एवेति आयुष्मतः सुप्रभात-सम्पादकस्यानुरोधमूरीकृत्य सुप्रभात-प्रणयिनां मनोविनोदाय सङ्क्षेपत एव सङ्क्षिप्य प्रकाशनाय प्रेष्यते।



१९१४ खिष्टाब्दतः पूर्वं महाविद्यालयीय-परीक्षासु केवलं काशीस्थानां पाठशालानामेव कासाञ्चित् छात्राः सम्मिलिता भवन्तिस्म प्रथमपरीक्षायां मध्यमायां वा। आचार्यपरीक्षासु केवलं महाविद्यालयीया एव च्छात्रा गृह्यन्तेस्म।

१९१४ खिस्ताब्दे तदानीन्तनाध्यक्षेण आर्थरवीनिस-महोदयेन प्रान्तीय-संस्कृत-पाठशालानां निरीक्षणाय सर्वप्रथमं स्व-सहायकरूपेण व्याकरणाचार्यस्य पण्डित ठाकुरप्रसादद्विवेदस्य नियोजनं कृतम्। यतस्तदानीन्तन अध्यक्ष एव प्रान्तीय-संस्कृत-शिक्षा-नियामको ( Superintendent of Sanskrit Studies. U.P.) भवतिस्म; परं कार्यगौरवात् स स्वयं प्रान्तीय-संस्कृतपाठशालानां निरीक्षणं कर्तुमसमर्थ आसीत्। अतएव तत्कार्य-साहाय्यार्थं निरीक्षकपदं स्थापितमभूत्।

१९१४-१९१७ खिस्ताब्दपर्यन्तं डा० वीनिस समये श्रीठाकुरप्रसादद्विवेदाः पाठशाला-निरीक्षणं कुर्वन्तिस्म। तेषां समये केचन विद्यालयाः केवलं मध्यमां परीक्षां दापयितुं लब्धानुज्ञा आसन्। राजकीय-साहाय्यञ्च सहस्रैकपरिमितं प्रतिवर्षमासीत्। निरीक्षकः स्वतन्त्ररूपेण पाठशालानां निरीक्षणं करोतिस्म। निरीक्षण-विवरणञ्च हिन्दीभाषायां विलिख्य अध्यक्षाय समर्पयतिस्म। मध्यमां यावत् स्वीकृतिदानं साहाय्य-प्रदापनञ्चेति निरीक्षकस्य प्रधानं कार्यमासीत्। अध्यक्षस्तु तद्द्वारा केवलं परिचयमेव करोतिस्म।

१९१८ खिस्ताब्दे वेनिस-महोदयानन्तरं डा० गङ्गानाथ-झा-महोदयोऽत्राध्यक्षपदमलमकरोत्। तत्स्थाने च पूर्वनिरीक्षकः पण्डित ठाकुरप्रसाद द्विवेदः प्रयागविश्वविद्यालये न्ययुज्यत। प्रान्तीयशिक्षा-विभागेन चाऽहमांग्ल-संस्कृतविभाग-निरीक्षक-पदादत्र प्रान्तीय-संस्कृतपाठशाला-निरीक्षकपदे नियुक्तः।

मया स्वकार्य-प्रारम्भावसरे पूर्वनिरीक्षकस्य केचन विवरणात्मकाः लेखाः; अध्यक्षस्य वेनिस-महोदयस्य च केचन लेखा आधाररूपेण समुपलब्धाः। तदाधारेणैव मया स्वातन्त्र्येण कार्यारम्भः कृतः।

संस्कृतपाठशालानां योग्यतानुरूपं मध्यमाचार्ययोः परीक्षयोः सम्बन्धः, साहाय्य-प्रदापनं तेषां व्यवस्था-निरीक्षणञ्चेत्येतानि प्रधानकर्तव्यान्यासन्।

एतस्मिन् विषये मया केचन नियमाः, सिद्धान्ताश्च स्वयं निर्मिता आसन्। तदनुसारमेव कार्यं भवतिस्म। मदीय-कार्य-सरणौ नाध्यक्षस्य कदाचिदपि हस्तक्षेपोऽभूत्। १९२१ खिस्ताब्दतः शास्त्रिपरीक्षाऽपि प्रचलिताऽभूत्। तदानीमेव संस्कृत-शिक्षा-परीक्षा-समितेः (Board of Sanskrit Studies. U. P.) अपि स्थापनमभूत्। परन्तु मदीय-कार्य-क्षेत्रे समितेरपि हस्तक्षेपो नासीत्।

पाठशालानां व्यवस्थामालोच्य, तत्रत्यानामध्यापकानाञ्च योग्यतां समीक्ष्य साहाय्यं दीयतेस्म। पाठशालानां साहाय्य-प्रदानमपि सर्वथा मदायत्तमेवासीत्। मया साधारणतया एष नियमः स्थापित आसीत् यदाचार्यकक्षाध्यापकस्य मासिकं वेतनं ४०) मासिकात् न्यूनं न भवेदिति। यत एकस्मिन् विद्यालये ह्याचार्याध्यापको नान्यस्मिन् विद्यालये द्वितीयवारमध्यापयेत्। येन तस्य शक्तिक्षयो न भवेत्। तदानीं ४०) मुद्राभिरध्यापकानां पूर्णः सन्तोषो भवति स्म। तेषां कथनानुसारमेवेयं व्यवस्था सञ्चालिताऽभूत्।

यस्मिन् विद्यालये तदध्यक्षा एतावद्धनं दातुमसमर्था अभूवन्, तत्र मया तावदेव राजकीयं साहाय्यं प्रदीयतेस्म। मम सूचनयैव पाठशालाः मध्यमादिपरीक्षार्थं छात्रान् प्रेषयितुं प्राभवन्। नात्र कस्याप्यन्यस्याधिकारिणा हस्तक्षेपः समभूत्।

एकवारं डा० झा-महोदयेन मदीयेऽधिकारे हस्तक्षेपः कृत आसीत्। तदानीं मया प्रान्तीय-शिक्षाध्यक्षाः (डाइरेक्टर) विज्ञापिता यदेवं नाऽहमस्मिन् विभागे कार्यं कर्तुं शक्नोमि। ततः प्रभृति राजकीय महाविद्यालयाध्यक्षस्य संस्कृत-पाठशालानियामकपदं समवरुद्धमभूत्। ततः प्रभृति मदीयः साक्षात् संबन्धः प्रान्तीयशिक्षा-सञ्चालकेन सहाऽभूत्।

संस्कृत-पाठशालानां नियमनाय, संस्काराय च मया स्व-यात्रासु तत्तत् पाठशालाध्यक्षाः, सञ्चालकाः, अध्यापकाश्च निभृतं प्रतिबोधिता आसन्। न केवलं प्रबन्ध निरीक्षणमेव; अध्यापकानां योग्यता-निरीक्षणं पाठनशैली-निरीक्षणम् आवश्यकतानुसारं शिक्षणमपि क्रियतेस्म। अध्यापकानां योग्यतामालोच्यैव शास्त्र्याचार्य-परीक्षयोरनुमतिर्दीयतेस्म। ग्रामीणपाठशालानां निरीक्षणं कुर्वता मया षड्विंशतिक्रोशात्मको मार्गोऽपि कदाचित् पद्भ्यामेव समुत्तीर्णः। न कदापि कस्यापि यानं स्वीकृतम्। न कदापि कस्यापि पाठशालाध्यक्षस्य, अध्यापकस्य वा गृहे निवासः कृतः।

एकदा मया शिक्षाविभागाध्यक्षो निवेदितो यदहमस्मात् कष्टात् प्रवासकार्यान्मोचनीयः, स्थिरकार्ये च नियोजनीयः। तदा शिक्षाध्यक्षैः पृष्टेन महाविद्यालयाध्यक्षेण डा० झा-महोदयेन लिखितम् "यदस्य कार्यान्तरप्रदाने पुनरत्र स्थाने नैतादृश', परिश्रमशीलः, सत्यनिष्ठः, माननीयो विश्वासार्हश्च निरीक्षको लप्स्यत इति नायमन्यस्मिन् कार्ये विनियोज्यः"—इति।

अतोऽहमत्रैव स्वातन्त्र्येण संस्कृतपाठशालानां सेवां कुर्वन्नवसर ग्रहणमकरवम्।

यदाहमत्रस्थाने समागतस्तदा संस्कृतपाठशालाभ्यः स्वल्पतरमेव साहाय्यं दीयतेस्म। तदपेक्षया यवनभाषा-विद्यालयेभ्यः समधिकं साहाय्यं दीयतेस्म। अनेकधा यवनभाषाशिक्षकैः, निरीक्षकैश्च सह शिक्षाधिकारिणां समक्षे मदीयो विवादः प्रचलतिस्म। एकदा एकस्यां समितौ तैः कथितं यत् "यवनाध्यापकानां जीवनं बहुव्ययसाध्यं भवति, संस्कृतज्ञानान्तु स्वल्पेनैव व्ययेन कार्यं प्रचलति। अतस्तेभ्योऽधिक-साहाय्यदानं वेतन-वृद्धिर्वा व्यर्थैव"। मया समुत्तरितं यत् विंशत्यध्यापकेषु यवनानामेक एव बालको भोजनं निर्मातुं सेवां कर्तुञ्च प्रभवति। परं प्रति संस्कृताध्यापकमेकैकः पाचकः सेवकश्चापेक्षते। यतस्तेषां भोजनं पृथग् भवति। वारत्रयं ते स्नान्ति। सन्ध्यां कुर्वन्ति। तेषां जलाहरणाय पात्रसम्मार्जनायैव च प्रत्येकं सेवक अपेक्षते। अतस्तेषामेव व्ययाधिक्यम्। एवं बहुधा तैः सह शिक्षाधिकारिभिश्च सह संघर्षः समभूत्। सर्वदा मया तेषां मुखमुद्रणं कृत्वा साहाय्य-ग्रहणे प्रयतितम्।

गोरक्षपुरादि-मण्डलेषु मण्डल-समिति ( डिस्ट्रि-

क्ट बोर्ड ) द्वाराऽपि संस्कृतपाठशालानां साहाय्यं लभ्यते । तत्र साहाय्य-प्रदानस्याधारभूतं प्रायः गणित-हिन्दी-धार्मिकशिक्षा-व्यायामादिकं भवति । एकदा निरीक्षणं कुर्वता मया समाकर्णितं यदद्य मण्डल सभायां संस्कृत-पाठशालाभ्यः साहाय्य-प्रदानस्य विरोधो निरोधश्च भविष्यति । तदाकर्ण्याहं दूरतर-मार्गं पादचारेणैव गत्वा मण्डल-समितौ समुपस्थाय संस्कृत-पाठशाला-साहाय्य-प्रदानाय सदस्यैः सह विवादमकरवम् । मया संस्कृत-पाठशालासु गणित-हिन्दी-शिक्षणस्य वैशिष्ट्यं प्रकटीकृतम् । धार्मिक-शिक्षा-विषये मया प्रत्युत्तरितम् यत् संस्कृताध्यापकाः, स्नान-सन्ध्यादिद्वारा सर्वदा धार्मिकमेव कार्यं कुर्वन्ति । तेषां जीवनादर्श एव च्छात्राणां कृते धार्मिकशिक्षां शिक्षयति । प्राणायामासनादिना छात्राणां स्वाभाविको व्यायामो भवति । मदीयं युक्तियुक्तमुत्तरमाकलय्य सर्वैरपि सदस्यैर्निर्विरोधमेव साहाय्यदानं स्वीकृतम् । अस्मिन् कार्ये बाबा राघव दासमहोदयैर्मदीयं साहाय्यं समाचरितम् ।

इत्येवं बहुष्ववसरेषु युक्त्या निर्भीकतया च मया संस्कृत-पाठशालानां साहाय्य-प्रदाने प्रयतमानेन ४६ सहस्रमितं राजकीयं साहाय्यं परिवर्द्धितं यत्कार्य-प्रारम्भकाले प्रायः सहस्राधिकमेवासीत् ।

एतस्मिन् कार्यावसरे बहव एतादृशा अपि समुपलब्धाः पाठशालाध्यक्षाः, अध्यापकाश्च यै राजकीय-साहाय्यस्य महान् दुरुपयोगः कृत आसीत् । परं ते मया निपुणं प्रतिबोध्य परित्यक्ताः, केचन निभृतं भर्त्सिताः, मार्गमानीताश्च । न कस्यापि विप्रियं समाचरितम् । ये केचन कदाचन पाठशालाभ्यः पृथक्कृता अपराधिनस्तैरपि कियत्कालानन्तरं स्वयमेव स्वापराध-क्षमापनपुरस्सरं कृतज्ञतैव स्वीकृता । तेषां चारित्र्यं व्यवस्थापितं शान्त्यैव; न पुनः क्रूरतम-दण्ड-विधानेन ।

एवं १९२९ खिस्ताब्दपर्यन्तमेकादशवर्षाणि यावत् स्वातन्त्र्येण कार्यं कुर्वता मया १९२९ खिष्टाब्दस्य अगस्तमासे निरीक्षण-कार्यादवसरो गृहीतः । साम्प्रतं संस्कृतपाठशालानां संग्रन्थनं सञ्चालनं नियन्त्रणं समयानुसारं परिवर्तनीयतामावहति । मन्ये, शिक्षाधिकारिणो देशकालानुरूपं परिवर्तनं विधाय समुचित-समुन्नति-पथं नेष्यन्ति व्यवस्थामिति विरम्यते ।

---

## प्रकीर्णकम्

—:※:—

### सरस्वती-भवनम्

राजकीय-संस्कृत-महाविद्यालयस्येतिहासे तस्य सरस्वती-भवन-पुस्तकालयो विशिष्टतरं महत्त्वमादधाति । यद्यपि प्राचीनोऽयं पुस्तकालयस्तथापि स्वतन्त्रतयाऽस्य बृहत्तरं सुन्दरतरञ्च भवन-निर्माणं डा० वेनिस-महोदयस्याध्यक्षता-समये समभूत् । यदा ब्रिटिश-सम्राट् पञ्चमो जयोर्जः, युवराजावस्थायां (प्रिन्स ऑफ वेल्स) भारते समागतस्तदानीमेवास्य पुस्तकालयभवनस्य संस्थापनं समभूत् । अस्य वास्तविकं नाम "प्रिन्सेस ऑफ वेल्स-लायब्रेरी" इति वर्तते परं सरस्वती-भवननाम्नैवास्य प्रसिद्धिरभवत् ।



अस्मिन् पुस्तकालये दुष्प्राप-प्राचीन-हस्तलिखित-पुस्तकानां महान् संग्रहो वरीवर्ति । यत्र ५०००० संस्कृत-पुस्तकानि सन्ति । जगतः प्रसिद्धेषु पञ्चषसंस्कृत-पुस्तकालयेष्वेकतमोऽयं पुस्तकालयो वर्तते । मुद्रित-संस्कृत-पुस्तकानामपि संख्या २०००० मिता विद्यते ।

अस्मादेव पुस्तकालयात् प्राचीनतमसंस्कृत-पुस्तकानां प्रकाशनाय सरस्वती-ग्रन्थमालाऽपि प्रकाशिता भवति यत्र महाविद्यालयाध्यक्षाणां सम्पादकत्वे बहुभिर्विद्वद्भिः पुस्तक-सम्पादनं क्रियते ।

अत्रैव गवेषणाकार्यमपि क्रियते छात्रेभ्यः साधोलाल-छात्रवृत्तिर्दीयते । महाविद्यालयाध्यक्षस्य महाविद्यालयीय-परीक्षाणाञ्च कार्यालयोऽत्रैव विद्यते ।

अस्य पुस्तकालयस्याध्यक्षपदमपि महाविद्वद्भिरलं क्रियते । म०म० गोपीनाथ कविराज–महोदयाः, डा० मङ्गलदेवशास्त्रिमहोदयाश्चास्यैव पूर्वं पुस्तकालयस्याध्यक्षा आसन् ।

साम्प्रतमस्य पुस्तकालयस्याध्यक्षाः श्रीमन्तः शिवनाथझारखण्डी–एम्०एस्-सी०–महोदयाः सन्ति । हस्तलिखितपुस्तकालयाध्यक्षाश्च म०म०नारायण शास्त्री खिस्ते महोदयाः सन्ति । इतः पूर्वं म० म० विन्ध्येश्वरी प्रसाद द्विवेदा आसन् । एवमयं पुस्तकालयः संसारस्य सकृतमहापुस्तकालयेष्वेकं स्थानमासादयति ।

अस्मात् पुस्तकालयात् 'सारस्वता-सुषमा नाम्नी पत्रिकाऽपि प्रकाश्यते ।

❀ ❀ ❀

## संस्कृत-एँग्लो-विभागः

अयं विभागोऽप्यस्य विद्यालयस्य वैशिष्ट्यमेव । अस्मिन् विभागे प्राक्तनकालादेव विशिष्टविद्वांसः संस्कृतच्छात्राणामांग्लभाषाशिक्षणाय नियुक्ता आसन् । अस्य प्रभावादेव संस्कृत-विद्वत्सु पाश्चात्यज्ञान-प्रसारः समभूत् । अत्रत्या अध्यापका अपि योग्यतमा अभूवन् । वाराणसेयाः प्रसिद्धा धनिकाः, नागरिका विद्वांसश्च रायबहादुर-बाबू प्रमदादास मित्र-महोदया अध्यापका आसन् । १८६२ तमे खिस्ताब्दे च तैर्महाविद्यालयस्याध्यक्षपदमपि समलंकृतमासीत् । एवमेव १८६८ तमे वत्सरेऽस्य विभागस्य प्राध्यापकेन ए०ई० गफ-महोदयेनापि महाविद्यालयाध्यक्षपदं स्वीकृतमासीत् ।

अस्मिन् विभागे संस्कृतच्छात्रेभ्यश्छात्रवृत्तयोऽपि दीयन्ते । साम्प्रतमस्य विभागस्य प्रान्तीय-इन्टर-मीडियट बोर्ड-संस्थया सम्बन्धे सञ्जाते अद्वितीयोऽयं प्रान्ते समजनि ।



रायबहादुर प्रमदादास मित्रमहोदयः



[ए० ई० गफ-महोदयः]

❀ ❀ ❀

## भगवान्दास-समितिः

युद्धकालात्-पूर्वं यदा प्रान्तीय-शासनं राष्ट्रमहासभाया हस्ते आसीत्तदाऽस्य महाविद्यालयस्य, पाठ्य-विषयस्य च परिष्काराय समिति-द्वयं स्थापितमभूत्। तत्र पाठ्यनिर्द्धारण-समितिः काशीस्थप्रसिद्ध-नेतॄणां



डाक्टर भगवान् दास-महोदयः

विदुषाञ्च डा० भगवद्दास-महोदयानामध्यक्षतायां संघटिताऽभूत्। यत्र प्रातःस्मरणीयाः म० म० डा० प्रमथनाथतर्कभूषण-महोदयाः, म०म०चिन्नस्वामि शास्त्रिणः, श्रीगोपालशास्त्रिणः काशीस्थाः, अन्ये च बहिस्था विद्वांसः सदस्या आसन्। तस्याः समितेर्विवरणमाँग्लभाषायां सुसम्बद्धमासीत्। परं मध्य एव राष्ट्रियाधिकारिणां पदत्यागेन ब्रिटिशशासनस्य युद्धकालीनव्यतिकरे तस्याः समितेर्विवरणं विचाराश्च न जाने कुत्र विलीनाः। तस्याः समितेरादर्शमनुसृत्य तदानीन्तनाध्यक्षेण डा० मङ्गलदेवशास्त्रिमहोदयेन यथासम्भवं पाठ्य-परिवर्तनमपि कृतमासीत्। परं कैश्चन पण्डितैर्व्यक्तिगत-रागद्वेषाभिभूतैः "कांग्रेसीयानामब्राह्मणानामियं संस्कृत-पाण्डित्य-विघातिनी योजनेति" प्रख्याप्यांग्लशासकानां संस्कृतद्रुहां साहाय्येन तस्याः प्रणाल्याः सर्वथा तिरोधानं विधाय पुरातनतरः पाठ्यक्रमः प्रचालितः।

साम्प्रतं पुनः कांग्रेस-शासने प्रवृत्ते संस्कृत-शिक्षाक्रमपरिवर्तनायोपक्रमः प्रचलति। परं यवनोपद्रवादिविविधकारणैरतितरां मन्थरगत्या तदा योजनं प्रचलति।

  

## सम्पादकीयम्--

### अस्माकं विशिष्टांकः

एषमो वर्षस्यान्तिमाङ्कद्वयं काशिक-राजकीय-संस्कृत-महाविद्यालयस्य सार्द्धशताब्दी-महोत्सवमुपलक्ष्य प्रकाशितं सुप्रभात-प्रणयिनां सेवायां समुपसर्पति। यद्यपि यथाभिमतमस्य सम्पादनं न पारितं विविध विध-चिन्ता-सन्तान-वितान-व्याकुलैरस्माभिस्तथापि मनीषिणां मननाय, पुरातत्व-प्रणयिनां प्रमोदाय, शिक्षामर्मविदां समालोचनाय च काचन सामग्री संगृहीता। अत्राङ्के डा० मङ्गलदेवशास्त्रि-लिखितो महाविद्यालयस्येतिहास एव वस्तुतो महत्त्वपूर्णः समालोचनीयश्च विद्यते। लेखकेन महता परिश्रमेण, योग्यतया च तस्य सम्पादनं सुश्रृङ्खलया विहितम्। तत्रापि सर्वेषां कालानां वैशिष्ट्य-प्रदर्शनमस्य लेखकस्य वैशिष्ट्यम्।

अस्येतिहासो विविधाभिर्दृष्टिभिर्महत्त्वमादधाति। प्रथमन्तु भारतवर्षे आँग्लशासनस्य प्रारम्भकालात् सर्वप्रथमः सर्वप्रधानश्चायं महाविद्यालयः साम्प्रतं सर्वासां संस्कृत-पाठशालानां शिरोमणिभूतः। अतोऽनेन सह सार्द्धशतवत्सराणां संस्कृत-शिक्षाया इतिहासो विकासश्च ग्रथितो वर्वर्ति। साम्प्रतं नवीनतम संस्कृतशिक्षाक्रम-निर्माणावसरे प्राचीनेतिहासस्य विकासस्य च पर्यालोचनं स्वभावतः समावश्यकमेव।

अपरञ्च महाविद्यालयोऽयमस्माकं पूर्वजानां प्रातःस्मरणीय-महापुरुषाणां वाग्देवतावतार-भूतानां भारतभूषणायमानानां बहूनां विद्वद्वराणामध्ययनाध्यापन-स्थलतया पुण्यतमं तीर्थस्थानमिव श्रद्धास्पदमिति तस्येतिहासज्ञानमस्माकं कृते परमगौरवास्पदं मननीयं पठनीयञ्च।

अतोऽपि महत्तरं महत्त्वमस्य संस्कृतशिक्षाविकास दृष्ट्या वरीवर्ति। तस्मिन् काले कीदृशः पाठ्यक्रम आसीत्? कथञ्च कदा च तस्य शनैः शनैः परिवर्तनमभूदिति नितरां महत्त्वपूर्णम्। ये खल्वपरिवर्तनवादिनो वदन्ति यत् पाठ्यक्रमे परिवर्तनं न विधेयम्

ते च पश्यन्तु यत् प्रौढपण्डितैरपि समयगतिमभिसमीक्ष्य काले काले कथं परिवर्तनं कृतमभूदिति।

एतदतिरिक्तं पुरातत्त्वविदां मनोवैज्ञानिकानां कृतेऽपि नितरां विवेचनास्पदमिदं यदस्य महाविद्यालयस्य स्थापनावसरे शासकानां कीदृशो मनोभाव आसीत्? जनताया मनोवृत्तिश्च कीदृशी समभूत्?

इत्येतैः कारणैरङ्कस्यास्य प्रकाशनं महत्वपूर्णमासीदेव; तत्रापि प्रथमः प्रमोदावसरोऽयमासीत् यत् १५६ वर्षानन्तरं महाविद्यालयोऽयं जन-सम्पर्काभिमुखः सम्वृत्तः। अस्य प्रथमो वार्षिकमहोत्सवः सम्पन्नः। इदानीं यावद् विद्यालयाऽयं जनतासम्पर्काद् दूर एव राजकीय-गौरवभारं वहन् आँग्ल राजकीय-विभाग इव जनतासम्पर्के स्वकीयां गौरवहानिं मन्यतेस्म।

साम्प्रतं स्वतन्त्रता-सुप्रभाते राष्ट्र-कर्णधाराणां महतां नेतृणां अस्मत्-प्रान्तीय-प्रधानमन्त्रिणां श्रीमन्माननीय-गोविन्दवल्लभपन्त महोदयानां तथा शिक्षा-मन्त्रिणां माननीय-श्रीसम्पूर्णानन्दमहोदयानां सत्प्रेरकतायां प्रथमवारमेवायं सकलजनसमक्षमवातरदिति संस्कृत-प्रणयिनां परमं प्रसन्नतास्थानमासीत्। एभिरेव कारणैस्तस्मिन्नवसरे विशेषाङ्क-प्रकाशनाय समुत्साहः कृत आसीत्। परं सुप्रभातावस्थां स्वीयाञ्चावलोक्य कथमप्यस्य प्रकाशनं जातम्। तदेतदपि संस्कृतज्ञानां प्रमोदायैव भवेदिति सम्भावयामः।

❀ ❀

विश्व-विश्रुतं महाविद्यालयीयं प्राचीनं विद्वत्पञ्चकम्



१—म० म० गङ्गाधरशास्त्री, सी० आई० ई०, २—म० म० कैलाशचन्द्रशिरोमणि भट्टाचार्यः, ३—म० म० दामोदरशास्त्री, ४—म० म० शिवकुमार मिश्रः ५—म० म० तात्याशास्त्री पटवर्धनः।

## भावि-योजना

अस्मिन् [illegible]त्सरे सरस्वती-भवनानुसन्धान-योजनायां पोष्टाचार्य-परीक्षायाञ्च किमपि महत्वपूर्णं परिवर्तनं भवि[illegible]ति। तत्र प्रतिच्छात्रं विंशतिमुद्रामिता विंशतिश्छात्रवृत्त[illegible] सन्ति। एवमेव अनुसन्धान-विभागेऽपि केवलं छात्राः प्रचुरां वृत्तिं लभन्ते। परं तेषां पथप्रदर्शकः कश्चनैकोऽपि योग्यतमः शिक्षको नास्ति। अत अनयोर्विभागयोः परिष्करणमस्मिन् वर्षे भविष्यति।

पोष्टाचार्य-परीक्षास्थाने "विशिष्टाचार्य" परीक्षा प्रचलिता भविष्यति। अत्र कक्षायामध्यनाय विशिष्ट-विदुषामध्यापकानां नियोजनमध्ययन-क्रमश्च सुव्यवस्थितो भविष्यति। इयं परीक्षा वर्षद्वयेन सम्पन्ना स्यात्।

एतदनन्तरञ्च वर्षत्रयं यावदनुसन्धान-कार्यं भविष्यति। अत्रापि शिक्षणाय विशेषज्ञा अध्यापका भविष्यन्ति। वर्षत्रयं यावत् निर्दिष्ट-विषये गवेषणादिकं विधाय निबन्ध-लेखन-पुस्तक-सम्पादनादिद्वारा कृतविद्यः स्नातको "विद्यावाचस्पति"-पदवीं लप्स्यते। इयं पदवी वर्तमान-'डाक्टर'-पदव्याः पर्यायरूपा भविष्यति।

एतदतिरिक्तं सरस्वतीभवन-पुस्तकालयस्य परिवर्द्धनं परिष्करणं तदीय-ग्रन्थमालायाः महत्वपूर्णसम्पादनं कलापूर्णं प्रकाशनं च भविष्यति। शनैः शनैरयं महाविद्यालयः समस्त-एशिया-भूखण्डे भारतीयसंस्कृतेः प्रधानकेन्द्रं स्यादित्ययमधिकारिणामभिप्रायः।

—०❀०—

## राज़कीय-संस्कृत-महाविद्यालयाध्यापक-मण्डलम् ( १९९९ वैक्रमाब्दे )



निषण्णाः—पं० भगवत्प्रसाद मिश्रः, पं० सूर्यनारायण शुक्लः, पं० गोपालशास्त्री नेने, पं० शिवनाथ झारखण्डी, डा० मङ्गल देव शास्त्री, एम्० ए०, डी० फिल्० ( प्रिंसिपल ), पं० बालबोध मिश्रः, पं० गणपति शास्त्री मोकाटे, पं० नारायण शास्त्री खिस्ते, पं० शिवदत्त मिश्रः ।

स्थिताः—पं० करुणापति त्रिपाठी, उमाकान्त झा, पं० गणपतिदेव शास्त्री, पं० विद्याविलास शुक्लः, पं० द्विजेन्द्रनाथ मिश्रः, पं० मुकुन्द शास्त्री खिस्ते, पं० अनन्तशास्त्री फडके, पं० रघुनाथशास्त्री, पं० अनूप मिश्रः, पं० मुरलीधर मिश्रः, पं० अलखनिरञ्जन पांडेयः, श्री वीरेन्द्र अग्निहोत्री ।

## सुप्रभातस्य संरक्षकाः साहाय्यदातारश्च

५०) श्रीमान् जगद्गुरु-शङ्कराचार्यः राजराजेश्वराश्रमस्वामिमहोदयः, शारदापीठम्
५०) श्रीमान् जगद्गुरु-शङ्कराचार्यः अभिनय सच्चिदानन्दतीर्थमहोदयः, शारदापीठम्
१००) श्रीमान् जगद्गुरु-वैष्णवाचार्यः बाबा गोकुलदास महोदयः, शिकारपुरम्
५००) श्रीमान् विमानविहारीलाल सिंह हण्डे-महोदयः, उखरा स्टेट, वर्द्धमानः
२००) श्रीमान् भिषक् शिरोमणिः पण्डित गोवर्द्धनशर्म्मा छांगाणी, नागपुरम्
१००) श्रीमान् पण्डित जगदीशचन्द्र भट्टाचार्यः, बी० ए०, वाराणसी
१००) श्रीमान् चन्द्रवर ईस्सरः, एम० ए०, एल-एल० बी०, बीकानेर
१००) श्रीमान् पण्डित रामलाल शास्त्री, वाराणसी
१००) श्रीमान् किशोरीलाल खन्ना, आनरेरी मजिस्ट्रेट, वाराणसी
१००) श्रीमान् प्रयागदास महोदयः, म्युनिसिपल-कमिश्नर, मिर्जापुरम्
२१) श्रीमान् रेवाशङ्कर मेघजी शास्त्री पण्डितमार्तण्डः, बंबई
२५) श्रीमान् भवानीप्रसाद महोदयः, गुरुकुल-कांगड़ी, हरद्वारम्
२५) श्रीमान् स्वामी विद्यानन्द-मण्डलेश्वर-महोदयः, वाराणसी

### संस्कृतज्ञानां कर्तव्यम्

सुप्रभातं साम्प्रतिके संस्कृत-संसारे सर्वतः समुन्नतिशीलं संस्कृतज्ञानां पक्ष-रक्षण-क्षमं काशीस्थ-पण्डितसभायाः मुखपत्रमस्तीति नात्र किमपि वक्तव्यम्। एतद्धि न केवलं पत्रमात्रमेव। अनेन संस्कृत-शिक्षा-संग्रन्थनादिविषये महत्कार्यमनुष्ठीयते, अनुष्ठास्यते च। अस्य दृढता-सम्पादनाय, नियमित-सञ्चालनाय, सुसम्पादनार्थञ्च महामहर्घता-समयेऽस्मिन् प्रचुरतरं धनं प्रभूताश्च ग्राहकाः समपेक्षन्ते। अस्य सर्वथा साहाय्यं संरक्षणञ्च संस्कृत-प्रणयिनां मुख्यं कर्तव्यम्। अहं सर्वान् संस्कृतविदुषः, संस्कृतपाठशालाध्यक्षान्, संस्कृतप्रणयिनश्चानुरुन्धे यत् आत्मीयताभिमानेनास्य स्वयं ग्राहका भवन्तु, भावयन्तु चान्यानिति—

**काशीराम शर्म्मा, एम० ए०**
[ भू० पू०—इन्स्पेक्टर ऑफ संस्कृत पाठशाला, यू० पी० ]

सम्पादकः—श्रीकेदारनाथ शर्म्मा सारस्वतः, सुप्रभातकार्यालयः, वाराणसी।
प्रकाशको मुद्रकश्च—श्रीगौरीनाथ पाठकः, साहित्याचार्यः, खगेश प्रेस, अगस्त्यकुण्डम्, काशी।

